N] प्राकार-वैर[1]-संपन्नं, रावणाऽन्तःपुरं महत् ॥२५॥ [N
पुण्डरीकाऽवतंसाभिः, परिखाभिः समावृतम्[2] ।
N] द्वार-तोरण[3]-सम्पन्नं, ददर्श स[4] महा-कपिः ॥२६॥ [N
त्रिविष्टप-निभं दिव्यं[5], दिव्य-वादित्र-निस्वनम्[6] ।
N] वाजि-हेषित[7]-सम्पन्नं, नादितं भूषण-स्वनैः ॥२७॥ [N
रथैर् यानैर् विमानैश्च[8], शुभैर् द्रुत-हयैस्तथा[9] ।
N] वारणैश्च[10] चतुर्दन्तैः, राजताऽचल-सन्निभैः ॥२८॥ [N
भूषितं रुचिर-द्वारं[11], अन्यैश्च मृग-पक्षिभिः ।
N] राक्षसाधिपतेर्[12] गुप्तम्, आविवेश कपिर्गृहम्[13] ॥२९॥ [N
सुशुद्ध-जांबूनद-जालवंतम्[14],
मणि-प्रवेकोत्तम-वेदिकान्तम्[15] ।
परार्घ्य-रत्नाकरम् ऋद्धिमन्तं,
२६] स रावणाऽन्तःपुरमाविवेश ॥३०॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे चन्द्रोदय[16]वर्णनं नाम
तृतीयः सर्गः ॥ ३ ॥

---

१. फ अ—०रसंच्छिन्नं ।
२. आ—अलंकृतम् ।
३. ब रा ल१ प्र—०रणमत्युच्चं । ल२ च -०रणमत्युग्रं । अ—०रणसम्यन्तं ।
४. अ—स ददर्श ।
५. फ—रम्यं ।
६. फ—०ऋनादितम् ।
७. फ अ—वाजिहे० ।
८. ब रा ल१ प्र अ च—रथयानैर्वि० ।
९. ब रा ल१ प्र अ च—०भैः कृतह० । फ—हयैश्च गुणवत्तरैः
१०. प्र—ऐरावणैश् ।
११. ब रा ल१ ल२ प्र अ च—०चिरोदारम० । फ—०चिरं द्वा० । प्र —०चिरोदारैर् वनजैः ।
१२. अ—०हं प्रविवेश ।
१३. ब रा ल१ प्र—गृहं कपिः ।
१४. फ ल१ ल२ प्र म—स शुद्ध० । रा—संशुद्ध० । अ—सुतप्त० ।
१५. ब रा—०वेकाभरणाभ्या० । ल२—०प्रभाभिश्च विराजवंतम् । च—नास्ति ।
१६. प्रदोषव० ।

[वं–१२]= [ चतुर्थः सर्गः ] =[दा–६]

१पू] स संक्षिप्याऽऽत्मनः कामं, प्रविश्याऽनुपलक्षितः ।
चिन्तयामास मनसा, मुहूर्तं ध्यानमाऽऽस्थितः । [N
२] कपि-प्रवीरो हनुमान्, राघव-प्रियकाम्यया ॥१॥[1]
[2]कीदृशे बन्धने[2] [3]बद्धा, मुक्ता[3] [4]वा स्वैर-चारिणी[4] । [N
३] काश्च रक्षन्ति राक्षस्यः, कथं-रूपा च मैथिली ॥२॥
[5]न दृष्ट-पूर्वा[5] च मया, मैथिली[6] जनकाऽऽत्मजा । [N
४] इङ्गितैश्चाऽनुमानैश्च[7], मया ज्ञेया भविष्यति ॥३॥
५पू] एतां बुद्धिं तदा कृत्वा, हनुमान् [8]मारुताऽऽत्मजः । [N
प्रविवेश पुरीं [9]रम्यां, समृद्धां राक्षसाऽऽकुलाम्[10] ॥४॥
N] [11]ददर्श च[11] ततो लङ्कां, वायु-पुत्रो महा–बलः । [N
५उ] [12]अन्वियेष तदा[12] सीतां, [13]रामस्य प्रिय-काम्यया ॥५॥[14] [N
[15]शिविकासु विमानेषु, [16]निपतन् पादपेषु च ।[17]

---

१. च—अत आरभ्य 'विभीषणस्य च तत' इत्यन्तः पाठो नास्ति ।
२. ब रा ल$_1$—कीदृशी च वने । प्र— ०शे च वने । ल$_2$—०शे सदने । फ—०शे बंधने ।
३. फ—बद्धां० ।
४. फ—वा स्वैरचारिणीम् । ल$_2$—चेश्वरचा० ।
५. फ—अदृष्टरूपा । म—न दृष्ट-रूपा ।
६. फ—वैदेही ।
७. अ—०नुमानेन ।
८. ल$_2$—०न्पवनात्मजः ।
९. ब रा ल$_1$ प्र अ—लंकां ।
१०. ल$_2$—नास्ति ।
११. ब रा ल$_1$ प्र—०र्शं स । फ ल$_2$ अ—स ददर्श ।
१२. फ—अन्वेषयंस्तदा ।
१३. फ अ—राघव० ।
१४. ल$_2$—नास्ति ।
१५. आ फ अ—स निकामं ।
१६. आ—व्यपतन् । फ अ—न्यपतन् ।
१७. ल$_2$—नास्ति ।

N] विचचार कपिर् लङ्कां, लघु[1]प्रक्रम-विक्रम[2]ः ॥६॥ [१
गृहाद् गृहं राक्ष[3]सानाम्, उद्यानानि च वा[4]नरः ।
६] वीक्ष[5]माणो ह्य्[6] असन्त्रस्तः,प्रासादांश्चापि बुद्धिमान् ॥७॥[१६
आ[7]-प्लुत्य च[8] महा-वेगः, प्र[9]हस्तस्य निवेशनम् ।
७] ततोऽन्यत् पुप्लुवे वेश्म, महापार्श्वस्य वीर्यवान् ॥८॥ [१७
अ[10]थ मेघ-प्रतीकाशं, कुम्भकर्ण-निवेशनम् ।
८] विभीषणस्य[11] च ततः, पुप्लुवे[12] स महा-कपिः ॥९॥ [१८
महोदरस्य च[13] ततो[13], मह[14]ा-कायस्य चैव हि[14] ।[15] [१९पू
९] विद्युज्जिह्वस्य भवनं, जंबु[16]मालेस्तथैव च ॥१०॥ [१९पू
N] वज्रदंष्ट्रस्य च तथा, पुप्लुवे स महा-कपिः ।[17] [१९उ
शुक[18]स्य च महा-वेश्म, सारणस्य[19] तथैव च[19] ॥[20]११॥

---

१. ब रा ल१ अ प्र—०प्राक्रमताथ सः। ल२—०ताथ च । फ—निपस्योत्तमविक्रमः ।
२. ल२—नास्ति ।
३. ल२—वानराणामु० ।
४. फ—रक्षसां ।
५. फ—वीक्ष्यमानो । ल२ प्र अ—वीक्ष्यमाणो ।
६. ह्यसंभ्रान्तः । अ - ऽपि संभ्रान्तः।
७. ब रा ल१ ल२ प्र—आक्रम्य ।
८. फ—स ।
९. प्र—प्रहस्त्यस्य ।
१०. फ—नव ।
११. आ रा—तथा । अ फ—तदा ।
१२. प्र—प्रविवेश ।
१३. ब रा ल१ ल२ प्र—भवनं । फ—च ततः ।
१४. ब रा ल१ ल२ प्र—स जगाम महाकपिः । फ—सुपार्श्वस्यापि वानरः । अ—महावेगस्य चैव हि । च—०स्य चैव हि ।
१५. म—अत आरभ्य 'उपस्थितमसंहार्यै' रित्यन्तः पाठो नास्ति ।
१६. च—जंबमा० ।
१७. ब रा ल१ ल२ प्र—नास्ति ।
१८. फ—शुक्रस्य ।
१९. ब—जगाम हरियूथपः ।
२०. प्र अ—नास्ति ।

१०] ततश् चेन्द्रजितो[1] वेश्म, जगाम हरि-यूथपः ।[2] [२०
विद्युन्मालेः सुमालेश् च, भवनानि ययौ[3] कपिः[4] ॥१२॥
११] रश्मि-केतोश्[5] च भवनं, सूर्य[6]-शत्रोस्[7]तथैव च । [२१
धूम्राऽक्षस्य[8] च संयातो, भवनं मारुताऽऽत्मजः ॥१३॥
१२] विरूपाऽक्षस्य भीमस्य, घसस्य प्रघसस्य[9] च । [२३
शुक-नासस्य[10] वक्रस्य, शठस्य विकटस्य[11] च[11] [12]॥१४॥
१३] ह्रस्व-कर्णस्य[13] दंष्ट्रस्य, भीमाऽक्षस्य च धन्विनः[14] ।[15] [२४
युद्धोन्मत्तस्य मत्तस्य, वज्र-ग्रीवस्य नादिनः[16] [17]॥१५॥
[१४ विद्युदुल्केन्दु-जिह्वानां[18], तथा हस्ति-मुखस्य च । [२५
करालस्य विशालस्य[19], शोणिता[20]ऽक्षस्य शङ्किनः[21] ।
१५] क्रममाणः क्रमेणैव, हनुमान् व्यचरद्[22] गृहान्[23] ॥१६॥ [२६
तेषु तेष्व् अपतद्[24] वीरो, भवनेषु महा-कपिः ।
१६] गृहे [25]गृहे वृद्धि-मतां[25], वृद्धिं[26] पश्यन्ननुत्तमाम् [27]॥१७॥ [२७

---

१. अ—०श्चेन्द्रयुतो । २. ब ल२ प्र—नास्ति । ३. ब—मया । अ—यथा । ४. प्र—नास्ति ॥

५. ब रा ल१ ल२ प्र च—बहु-शत्रोश्च । ६. ल२—सूक्ष्म० । ७. आ—०क्षस्याथ । रा ल२ च—०क्षस्यापि । ८. आ फ ल२ प्र अ च—संपातेर् ॥

९. प्र—प्रसृघस्य । १०. आ—शुकनाभस्य । अ—शंकुनाभस्य । ११. च—च महाकपिः । १२. ब रा ल१ ल२ प्र—नास्ति ॥

१३. आ फ—ह्रस्ववर्णस्य । १४. फ—रक्षसः । १५. ब रा ल१ ल२ प्र—नास्ति । १६. अ—वाजिनः । च—वादिनः । १७. ब रा ल१ ल२ प्र—नास्ति ॥

१८. ब रा ल१ ल२ प्र च—०न्दुजिह्वस्य । १९. आ रा ल१ ल२ प्र अ च—पिशाचस्य । २०. ब ल१—क्षोभिताक्षस्य । रा ल२ प्र—शोभिता० । ल२—शोभिक्षस्य च । २१. आ रा ल१ ल२ अ च—शंकुनः । प्र—चांकुवः । २२ ल२—०न्प्रचरद् । २३. फ—गृहम् । अ—तदा ॥

२४. ब फ रा ल१ ल२ प्र अ च—०ष्वपतन् । २५. अ फ—ऋद्धिमतां वृद्धिं । च—०ष्वात्मवतामृद्धिं । २६. फ—कपिः । २७. ब रा ल१ ल२ प्र—नास्ति ॥

स सर्वेषाम् अति-क्रम्य, भवनानि महा-कपिः ।[1] [२८पू

१७] आससादाऽथ लक्ष्मीवान्, रावणस्य[2] निवेशनम् ॥१८॥

१८पू] प्राकारेणाऽर्क-वर्णेन, महता सु-समा-वृतम् । [२

२९उ] रक्षितं[3] राक्षसैर्[4] भीमैः, सिंहैरिव महा-वनम् ।

समीक्षमाणो[5] नगरीं, परिचक्राम वानरः ॥१९॥ [३

१९] मणि-रत्नौघ[6]-सम्पन्नैस्, तोरणैर् हेम-भूषितैः[7] ।

राजताभिश्च[8] कक्षाभिः[9], स्तम्भैर् हेममयैः[10] शुभैः[10] ॥२०॥ [४

२०] महा-सत्त्वैर् महामात्रैः[11], शूरैश्च[12] कृत-निश्चयैः[12] ।

उपस्थितम् असंहार्यैर्, हय-स्यन्दन-यायिभिः[13] ॥२१॥ [५

२१] सिंह-व्याघ्र-तनुत्राणैर्, दान्त[14]-काञ्चन-राजतैः ।

२२पू] घोषवद्भिर् विचित्रैश्च, सदाऽनुचरितं[15] रथैः ॥२२॥ [६

३९उ] बहु-रत्न-महा[16]-कक्षं, परार्ध्याऽऽसन-भाजनम् ।

N] महा-रथ[17]-समावायं, महाऽऽसव-वराऽमृतम्[18] ॥२३॥ [७

प्रेष्यैश्च परमोदारैस्, तैस्तैश्च मृग-पक्षिभिः ।

---

१. ब रा ल$_1$ ल$_2$ प्र—नास्ति । २. आ—राक्षसस्य ॥

३. ल$_1$ प्र—रक्षितां । ४. ब फ रा ल$_1$ ल$_2$ प्र च—०सैर्घोरैः । ५. ब रा प्र—समीक्ष्यमा० ॥

६. आ—मणिरत्नोप० । ब—०घसंपन्नस्तो० । ७. रा ल$_2$ अ—०हेमभूषणैः । ८. फ—राजतीमिश्च । ९. ब रा ल$_1$ प्र—कक्ष्याभिः । १०. ब ल$_1$ प्र—तैस्तैर्है० । फ—तैस्तु हेमपरिष्कृतैः ॥

११. फ—०महागात्रैः । १२. फ—शुभैः प्रकृतिनि० । १३. ब रा—०यैः स्यन्दनैरनपायिभिः ॥

१४. रा प्र—दन्त । १५. सदानुराचितं ॥

१६. ल$_2$—०हाकक्ष्यं । ब रा ल$_1$ ल$_2$ म प्र च—वज्ररत्नम० । १७. ब रा ल$_2$ म प्र च—महार्हरत्न सं० । ल$_1$—महार्घरत्न सं० । अ—महारथसंबाधं । फ—महदर्थमसंबाधं । १८. फ—०सवपरा० । ब रा ल$_1$ ल$_2$ म प्र अ च—०सनवरा० ॥

४०] विविधैर् बहु-साहस्रैः[1], परि-पूर्णं[2] समन्ततः ॥२४॥ [८
N] विनीतै रक्ष-पालैश्च[3], रक्षिभिश्च[4] समावृतम्[5] ।
४१पू] मुख्याभिश्च वरस्त्रीभिः[6], समन्तात् परिवारितम् ॥२५॥ [९
मुदित-प्रमदं रम्यं[7], राक्षसेन्द्र-निवेशनम् ।
N] सर्वाऽऽभरण-निर्ह्रादैः[8], समुद्रमिव स-स्वनम्[9] ॥२६॥ [१०
N] दिव्येनाऽगुरुणा युक्तं[10], दिव्यैश्च वर-चन्दनैः ।
२२उ] स्वाहाकार-वषट्कारैर्, ब्रह्मघोषैर्निनादितम्[11] ॥२७॥ [N
भेरी-मृदङ्गाऽभिरुतं[12], शङ्ख-घोषाऽभिनादितम्[13] ।[14]
२३] नित्योर्च्चित-महापूजं[15], सदा पर्वसु राक्षसैः[16] ॥२८॥ [१२
२४पू] समुद्रमिव गम्भीरं, पर्जन्यमिव स-स्वनम् । [१३पू
यातुधान-शतैर् गुप्तं[17], नागैर् भोग-वतीमिव[18] ॥२९॥ [N
N] महाऽऽत्मनो महा-वेश्म, महा-सत्वैः सु-रक्षितम् ।
महाजन-समाकीर्णं[19], हंसैः सर इवाऽऽकुलम् ॥३०॥ [१३

---

१. ब रा $ल_1$ $ल_2$ म प्र च–विहितैर्बं० । २. $ल_1$–परिपूर्णा ॥

३. आ फ अ–रत्नपा० । ४. आ–ऋषिभि० । ५. ब फ रा $ल_1$ म प्र–सुसंवृ० । $ल_2$–सुसंस्कृ० । अ–समावृ० । ६. रा–परस्त्रीभिः ॥

७. ब रा $ल_1$ $ल_2$ म प्र च–मुदितं सर्वतो रम्यं । ८. ब रा $ल_1$ $ल_2$ म प्र अ च–त्तराभरण० । फ–०णसंह्रादैः । ९. आ रा–निस्वनं । फ–सुस्वनम् ॥

१०. ब $ल_1$ $ल_2$ प्र च–सिक्तं । रा म–सक्तं । ११. ब रा $ल_1$ म प्र–षैश्च नादि० । फ अ–०षनिना० । च–०षैर्वि० ॥

१२. ब रा $ल_1$ $ल_2$ म प्र–०ङ्गाभियुतं । १३. ब रा $ल_1$ $ल_2$ म प्र अ–०षनिनादि० । १४. फ च–नास्ति । १५. $ल_1$ अ–नित्योद्यत० । $ल_2$–०महापूजां । १६. फ–नास्ति ॥

१७. रा–गुप्तां । १८. फ–नाद्यैश्च सुमहामात्यैः सदा पर्वप्रपूजितम् ॥

१९. फ–महासत्वं जनाकीर्णं । अ–महासत्वजनाकीर्णं । $ल_1$–महाजनैः समा० ॥

२६] वि-राजमानं[1] वपुषा, रथाऽश्व-गज-संकुलम्[2] ।
२९उ] लंका[3]ऽऽभरणमित्येवं, सोऽमन्यत[4] महा-बलः ॥३१॥ [१४
रावणस्य समीप-स्थां[5](?स्था)म्, ततः स समुदैक्षत[6] ।
N] विचरन्[7] हरि-शार्दूलो, राक्षसीर् विकृतेक्षणाः[8] ॥३२॥ [२९पू
शूल-तोमर-हस्तानां[9], शक्ति-मुद्गर-पाणिनाम्[10] । [२९उ
३०] ददर्श विविधान् गुल्मांस्, तस्य रक्षःपतेर् गृहे ॥३३॥
३४उ] रक्त-श्वेत[11]-सितांश्चाऽपि, हरीन् अथ[12] महा-जवान् । [३०पू
N] कुलीनान् रूप-संपन्नान्, ददर्श हरि-यूथपः ॥३४॥
ऋक्षकांस् ताल-वर्णांश् च, शोण-पाटल-रोमकान्[13] । [N
३५] मौल्लिकाऽक्षान्[14] प्रमाणा[15]ऽऽढ्यान्, ह्रस्व-कर्णोष्ठ[16]-नासिकान् ॥३५॥
आरट्टजान्[17] वाह्लिकांश्च[18], काम्बोजान्[19] शुभ-लक्षणान्[20] । [N

---

१. ब रा ल२ म प्र—गृहं विराजद्वपुषा । ल१—गृहं विराजद्वपुषं । च—विराजमानं गृहं वपुषा । २. ब फ ल२ रा म प्र च—गजाश्वरथ संकु० ॥

३. ब फ रा ल१ ल२ म प्र अ च—०णमित्येव । ४. आ—शोभतेति । अ—सोवमन्यत् ॥

५. आ ब रा ल१ ल२ म प्र च—०स्थांस्तत्रासौ । ६. आ ब ल१ ल२ म अ च—समवैक्षत । प्र—समचक्षत । ७. ब रा ल१ ल२ म प्र च—विचित्रां । ८ आ—राक्षसैर्विकृतेक्षणैः । ब रा ल१ ल२ म प्र च—राक्षसान्विकृतेक्षणान् ॥

९. ब रा ल१ ल२ म प्र च—शूलमुद्गरहस्तांश्च । फ च—शूलमुद्गरहस्तानां । १०. ब रा ल१ म प्र च—गदातोमरधारिणः । ल२ च—गदातोमरपाणिनः । फ—शक्तितोमरपाणिनाम् ॥

११. ब रा ल१ म च—रक्तश्वेतां सितां० । ल२—रक्तश्वेतांस्तथा चापि । फ अ—रक्तश्वेतान् सितान् पीतान् । ब—रक्तान्पीतान्सितान् नीलान् । १२. ब रा ल१ ल२ म प्र च—हरींश्चापि । ब—हरींश्च स ॥

१३. ब—०टललोम० । अ—०टलिरोम० । प्र—०टलरूप० । १४. च—मल्लिकाढ्यान् । १५. ब रा ल१ ल२ म प्र च—प्रवालाढ्यान् । १६. आ—हंसवर्णाष्ठनासिकान् ॥

१७. ल२—आरट्टकान् । १८. फ—वाह्लिजांश्च । १९. ब ल२—कांभोजान् । २०. ल२—शुभलक्षमणान् ॥

३६] शुकाऽऽननांश्च तुरगान्, ददर्श कपि-कुञ्जरः ॥३६॥
ततः सु-विहि[1]तान् हृष्टान्, ईषा[2]-दन्तान् सुपुष्टि[2]तान् । [N
३१] कुलीनान् रूप-संपन्नान्, [3]गजान् [4]परगजानु(?रू)जान्॥३७[३१उ
३२पू] नि-ष्ठितान् गज-शिक्षायाम्, ऐरावण-समान् युधि ।
३४पू] हन्तॄ[5]ंश्च पर-सैन्यानां, गृहे तस्मिन् ददर्श सः ॥३८॥ [३२
N] [6]क्षरतश्च [7]महा-मेघान्, [8]स्रवतश्च यथा गिरीन् ।
३२उ] मेघ-स्तनित-निर्घोषान्, [9]दुर्धर्षान् समरे परैः ॥३९॥ [३३
[10]सहस्रं [10]वाजिनस्तत्र, जाम्बूनद-परिष्कृतान् ।
३३] [11]स [11]हेमजालैर् विततांस्, तरुणाऽऽदित्य-संनिभा[12]न् । [३४पू
३७पू] ददर्श राक्षसेन्द्रस्य, रावणस्य नि-वेशने[13] ॥४०॥ [३४उ
शिबिका विविधाऽऽकाराः, स कपिर् मारुताऽऽत्मजः ।
N] लता-गृहाणि रम्याणि, चि[14]त्रशाला-गृहाणि च ॥४१॥ [३५
क्रीडा-गृहाणि दिव्या[15]नि, तथा मणि-गृहाणि च[16] ।
N] [17]कामस्य च[17] गृहं र[18]म्यं, निशा-गृहमनुत्तमम् ।[19] [३६पू०

---

१. रा प्र–स्र विहि० । ल$_1$ ल$_2$ अ च–सुविहितान् । २. फ–निशादन्तान् स्वधिष्ठितान् । अ–निषादन्तान् सुधिष्ठितान् । च–निषादैनाश्च संयु० । म ब प्र रा ल$_1$ ल$_2$–विषादेन च संयुतान् । ३. रा–जनान् । ४. ब रा ल$_2$ म प्र परगजारुजान् । अ च–परगजारुजः ॥

५. रा म प्र–हतॄंश्च ॥

६. ब रा ल$_1$ ल$_2$ म प्र च–गर्जतश्च । फ–क्षरन्तश्च । ७. ब रा ल$_1$ ल$_2$ म प्र अ च–यथा मेघान् ॥

८. आ ल$_1$ प्र–द्रवतश्च । फ अ–श्रवतश्च । ९. फ–सुदुर्धर्षान् सुरैरपि ॥

१०. फ–सहस्रवाहि० । ११. ब रा ल$_1$ ल$_2$ म प्र अ च–हेमजालैरवत० । फ–०लैरवचितां० । १२. ब ल$_2$ म प्र च–०त्यसमप्रभान् । ल$_1$–त्यसुप्र० । १३. आ–निवेशनम् ॥

१४. ल$_2$–यन्त्रशा० ॥

१५. च–चान्यानि । १६. ब रा ल$_1$ ल$_2$ म प्र अ–नास्ति । १७. ल$_2$ च–कामस्य तु । फ–कामगन्तु । १८. फ–दिव्यं । १९. अ–नास्ति ।

ददर्श राक्षसेन्द्रस्य, रावणस्य नि-वेशने ॥४२॥ [३६उ
३७] स मन्दर-तैल[1]-प्रख्यं, मयूर-शत[2]-संकुलम् ।
ध्वज-यष्टिभिर् आ-कीर्णं, ददर्श[3] भवनोत्तमम् ॥४३॥ [३७
३८] अनेक-रथ[4]-संपूर्णं, निधि-जालाऽवतंसकम् ।
३९पू] वीर-निष्ठित[5]-कर्मान्तं, गृहं भूत-पतेरिव ॥४४॥ [३८
४१उ] अर्चिषा चैव[6] रत्नानां, तेजसा रावणस्य च ।
४२पू] विरराज[7] च तद्वेश्म, रश्मिवानिव रश्मिभिः[8] ॥४५॥ [३९
जाम्बूनद-मयान्य् एव, भाजनान्य्[9] आसनानि च ।
४७पू] भूषणानि[10] च[11] शुभ्राणि, ददर्श कपि-कुञ्जरः[12] ॥४६॥ [४०
४७पू] मध्वाऽऽसव[13]-कृत-क्लेदं, मणि-भाजन-सं-कुलम् ।
४३पू] मनो-रमम् अ-सं-बाधं, कुबेर-भवनोपमम्[14] । [४१
४८पू] शोभयन्ति स्म तद्वेश्म, शोभमाना[15] वर-स्त्रियः ॥४७॥ [N

---

ब प्र—अतः परमधिक पाठः · ·

शिविका विविधाकाराः, स कपिर्मारुतात्मजः ।
लतागृहाणि रम्याणि, चित्रशालागृहाणि च ॥

१. आ—मंदरगृहप्रख्यं । २. ब रा ल$_1$ ल$_2$ म प्र च—मयूरस्थान० ३. रा—नास्ति ॥

४. ब ल$_1$ ल$_2$ म प्र च—०रथ-संकीर्णं । अ—०रससंपूर्णं रा—नास्ति । ५. ब रा ल$_1$ ल$_2$ म च—धीरनिष्ठित० फ—चीरन्निशितकर्णान्तं ॥

६—आ—अभिपेदे स । फ—प्रभया चैव । अ—प्रभया वर० । ७. ब रा ल$_1$ ल$_2$ म प्र च—विरराजाथ । ८. ब रा ल$_1$ ल$_2$ म प्र च—रश्मिभी रश्मि-मालिनः । अ—रश्मिभिः सुसमाहितम् ॥

९. ब रा ल$_1$ ल$_2$ म च अ—राजतान्यास० । १०. फ अ—भोजनानि । ११. ब रा ल$_1$ ल$_2$ म प्र अ च—विचित्राणि । फ—च मुख्यानि । १२. ब रा ल$_1$ ल$_2$ म प्र अ च—कपियूथपः । फ—हरियूथपः ॥

१३. आ—०वकृतपदं । १४. ब रा ल$_1$ ल$_2$ म प्र अ—०सदनप्रभम् । अ फ—० भवनप्रभम् । १५. फ अ—यथा स्वर्गं ॥

४४उ] नूपुराणां च घोषेण, काञ्चीनां निनदेन च ।
४५पू] मृदङ्ग-ताल-घोषैश्च[1], घोषवद्भिर् निनादितम्[2] ॥४८॥ [४२
N] प्रासाद-संघात[3]-युतं, क्रौञ्च-सारस-नादितम्[4] । [४३पू
४५उ] कूटाऽऽगार-शतैर् युक्तं, गन्धर्व-नगरोपमम् ॥४९॥ [N
चन्दनाऽगुरु-कर्पूरैर्, दिव्य-धूपैः[5] प्र-धूपितम् ।
N] माल्य-दामभिराकीर्णं, पुष्प-भक्ति-विचित्रितम् ॥५०॥ [N
दिव्य-गन्धाऽवसिक्ताभिर्, दीपिकाभिर्[6] विदीपितम् ।
N] लोकपालान् पराजित्य[7], तत्प्रभाभिरिवोज्ज्वलम्[8] ॥५१॥ [N
N] तुंगानि सौध-वेश्मानि[9], घोषयन्ति वराऽङ्गनाः ।[10]
४८उ] यथा कैलास[11]-शृंगाणि, शतशः किन्नरी-गणाः[12] ॥५२॥ [N
४६पू] [13]स्त्री-वेषैः स्त्री-समाचारैर्, वनिता[14]ऽङ्ग-पयोधरैः ।[15]
N] उत्कृष्ट-नूपुर-रवैः, सरो हंसैरिवाऽऽवृतम्[16][17] ॥५३॥ [N

---

१. ब रा ल१ ल२ म प्र च–०तालघोषेण । २. रा ल२ प्र–घोषय० । ल१–किंकिणीभिश्च ना० ॥

३. प्र–०दसंयतायुक्तं । ४. फ अ–०संकुलम् ॥

५. ब रा ल१ म प्र–दिव्यैर्धूपैश्च धू० । ल२–दिव्यधूपैश्च० ॥

६. अ–०पिकाभिः प्रकाशितम् ॥

७. ब रा ल१ ल२ म प्र च–परित्यज्य ।

८. रा–०भिरिवोज्वलत् ॥

९. आ–घोषैर्वेश्मानि । १०. फ–शोभयान्ति स्म तद्वेश्म शोभमाना वरास्त्रियः । ११. फ अ–कैलाश ।

१२. आ–किंनरीगणः ॥

१३. ब रा ल१ ल२ म प्र–स्त्रीवेशैः स्त्री० । १४. अ–०चारैश्चलिता० ।

१५. अतः परमधिकः पाठः—

म—इतश्चेतश्च धावद्भिर्वृतं वर्षशतैरपि ।
अ—इतश्चेतश्च धावद्भिर्वृतं वर्षवरैरपि ॥

१६. ल२–स रत्नशतसंकुलम् । १७. अ आ–नास्ति ॥

N] इतश् चेतश् च धाव[1]द्भिर्, [1]वृतं वर्ष-धरैर्[2] अपि ।
विनीत-जन-संबाधं, स्त्री-रत्न-सु[3]समाकुलम् ॥५४॥[4] [N
४९] स व्यूढ-[5]कक्षं हनुमान्, प्रविवेश महद् गृहम् । [४३उ
N] रशना-नूपुर[6]-रवैर्, [7]मनो हंसैरिवाऽऽकुलम् ॥५५॥ [N

इत्यार्षे रामायणे सुन्दरकाण्डे [8]लंका-विचयो
नाम चतुर्थः सर्गः ॥४॥

---

१. प्र च्च--०द्भिर्वृतैः । २. ब रा म प्र च्च--विटगणैरपि । ३. ब रा म प्र--क्षीरवशतसंकु० । ४. ल१ल२ अ--नास्ति ॥

५. ब रा--व्यूहकक्ष्यं । फ ल२ म प्र अ--व्यूहकक्षं । ६. आ--राक्ष-सीनूपुर० । ७. आ फ रा ल२ ल२ य प्र अ च्च--सरो ॥

८. फ--वनप्रवेशो । ल२--भवन-विचयो ॥

## [बं-१३]= [ पञ्चमः सर्गः ] =[दा-९]

तस्य[1] तत्र प्र[2](?वि)को(?ष्ट)ष्ठस्य, मध्ये विपुलमायतम् ।
६] ददर्श भवनं[3] श्रेष्ठं, हनूमान् हरि-यूथपः[4] ॥१॥ [१
स मार्गमाणो वैदेहीं, सीतां कमल-लोचनाम् ।[5]
N] वानरः परि-चक्राम, हनूमाञ् छत्रु-सूदनः ॥२॥ [३
३पू] अर्ध-योजन-विस्तीर्णं, साऽर्ध-योजनम् आयतम्[6] ।
N] तद् गृहं राक्षसेन्द्रस्य, बहु-प्रासाद-संकुलम् ॥३॥ [२
चतुर्-विषाणैश्च गजैर्, द्वि-विषाणैस् तथैव च ।
N] परि-क्षिप्तम् असंबाधं, रक्ष्यमाणम्[7] उदाऽऽयुधैः ॥४॥ [५
राक्षसीभिश्[8] च पत्नीभी[9], रावणस्य निवेशनम् ।
आहृताभिश् च विक्रम्य, राजकन्याभिरावृतम् ॥५॥ [६
तं नक्र-मकराऽऽकीर्णं[11], तिमिंगिल-झषाऽऽकुलम् ।
N] वायु-वेग[12]-समुद्धूतं, पन्नगैर् इव सागरम् ॥६॥[13] [७

---

१. फ–तस्यालयं। च अ–तस्यालय०। २. फ अ च–त्रविष्ठस्य। ३. फ रा च ब म प्र $ल_1$ $ल_2$ अ–भवनश्रे०। ४. अ–मारुतात्मजः॥

५. रा ब म प्र $ल_1$ $ल_2$–नास्ति॥

६. आ अ–साग्रयो०। च–साग्रयोजनमायताम्॥

७. आ $ल_1$ $ल_2$–रक्षमा० ब–वक्ष्य०॥

८. च ब म प्र $ल_1$ $ल_2$–राक्षसीभिः। ९. फ–स बहुभी। च ब म प्र $ल_1$ $ल_2$–सपत्नीभी। अ–स बह्वीभी। १ म–नास्ति। हरिताङित इव॥

११. फ–तत्र कर्मकरा०। रा प्र $ल_1$ $ल_2$–उत्कूर्ममकरा०। १२. रा च ब म प्र $ल_1$ $ल_2$–०गसमप्रख्यं। १३. म–नास्ति॥

या[1] च वैश्रवणे लक्ष्मीर्, या चेन्द्रे हरि-वाहने[2] ।
N] सा रावण-गृहे पद्मा[3], नित्यमेवाऽनपायिनी[4] ॥७॥ [८
यादृशं हि कुवेरस्य, यमस्य वरुणस्य च ।
N] तादृशं तद्विशिष्टं वा, तस्य रक्षः-पतेर्[5] गृहम् ॥८॥ [९

[वं-N] ततो ददर्शाऽद्रुत-हेम-जालं, [ दा-७ ]
व्यासक्त-वैडूर्य-सुहेम-जालम्[1] । [१पू
विद्युद्विनद्धं[2] सै[3]-विहंग-जालं, [१[4]
तडिद्विनद्धं[4] स विहंग-जालम्[5] ॥९॥[6] [N
ददर्श नानाविध-वाजि-शाला[7]:, [N
प्रधान-शालाश् च शशांक-शाला: ।
मनोहराश् चाऽपि पुनर् विशाला,
ददर्श वेश्मादिषु चित्र-शाला[8]: ॥१०॥ [२
गृहाणि नानावसु-राजितानि,
देवाऽसुरैश् चाऽपि सु-पूजितानि ।

---

१. प्र—यथा । २. फ ल$_{1}$ ल$_{2}$—हरिवाहणे । ब प्र—हरिवाहिनी । ३. फ—या सा । रा ब म प्र ल$_{1}$ ल$_{2}$—लक्ष्मीर् । ४. च प्र—०वानुयायिनी । ब—०मेवावपा० ॥
५. फ—नाक्रम्यतेगृं० ॥

---

१. च प्र ल$_{1}$ ल$_{2}$—०डूर्यसहेम० । २. ल$_{2}$—विद्युत्पिनद्धं । ३. म—हरिताऽलित इव पादः । ल$_{2}$—नास्ति । ४. ल$_{2}$—तडिद्विरुद्धं । ५. ल$_{1}$ ल$_{2}$—नास्ति पादः । ६. आ फ—अतः श्लोकादारभ्य यावदुपजातिवृत्तं पाठो न दृश्यते । अ—'गृहोत्तमं सुप्रतिपन्नरूपामित्यन्तः पाठो नास्ति ॥
७. प्र—नाना विविधा विशालाः । ल$_{1}$—नानाविधवाजिशालं । ८. रा म—विहंगशालाः । ९. अतः परमधिकः पाठः—
ल$_{1}$—कपिप्रवीरो धृतहस्तताला: (?) ।

सर्वैश्च दोषैः परि-वर्जितानि,
कपिर्ददर्शाऽति-बलाऽर्जितानि ॥११॥　　[३

तानि प्रसन्नानि समाहितानि,
मयेन तत्राऽपि विनिर्-मितानि ।
महीतले सर्व-गुणाऽन्वितानि,
ददर्श लंकाधिपतेर् गृहाणि ॥१२॥　　[४

ततो ददर्शोच्छ्रित-शैल-रूपं,
मनोहरं काञ्चन-चारु-रूपम् ।
रक्षोऽधिपस्याऽऽत्म-बलाऽनुरूपं,
गृहोत्तमं सु-प्रतिपन्न-रूपम् ॥१३॥　　[५

नाना-तरूणां कुसुमाऽवकीर्णं,
गिरेरिवाऽग्रं रजताऽवकीर्णम् ।　　[६उ
नारी-प्रवेकैर् अपि दीप्यमानं,
तडिद्भिर् अंभोदमिवेध्यमानम् ॥१४॥　　[७पू

---

१. प्र—०तिबलाजितानि ॥ | २. व रा च म प्र—स प्रतिपन्न०।

३. अतः परमधिकः पाठः—

च—महीतले स्वर्ग इव प्रकीर्णम् । †
च—प्रक्रीडितैः सूर्यसमानरूपम् ॥ ‡

४. प्र—कुसुमावकीर्णम् । ५. अ—०कैरधि० । ६. प्र ल१, ल२ ब—०दमि-वेद्धमानं । रा—०म्भोदधिमेध्य० । ७. अतः परमधिकः पाठः—

अ च—हंसप्रवेकैरतिवर्धमानं वेश्मान्तमेवाभिसमुह्यमानं ।
च—महाकपिस्तत्र महाविमानं ।
म—मनः प्रवेकैरिव वाह्यमानं ।
श्रियावृतं खे सुकृतं विमानं ।
पुष्पाह्वयं नाम विराजमानं ॥
रत्नप्रवेकैरभिवर्द्धमानम् ॥

---

† ब म—महीतले स्वर्गमिव प्रकीर्णम् ।
‡ म—प्रक्रीडनैस्तूप(?र्य) शतानुकीर्णम् ।

यथा नगाऽग्रं बहु-धातु-पूर्णं, [८[1]

महीभृतं[1] काञ्चन-राजि-पूर्णम् ।

अलंकृतं[2] वृक्ष-वितान-पूर्णं, [९पू

पुष्पैर्[3] वृतं केसर-रत्न-पूर्णम् ॥ १९ ॥

कृतानि वेश्मानि सु-पुष्कलानि,[4]

पुनश् च पद्मोत्पल-केसराणि ।

वनानि[5] चित्राणि[5] मनो-हराणि,[6] [१०

पश्यन् विचित्राणि चचार मारुतिः ॥१६॥[7] [N

कृताश्च वैडूर्य-मया विहंगाः,

रूप्य-प्रवालैश्च पुनश् चिताऽङ्गाः ।

चित्राश् च नाना-वसुभिर् विहंगाः,[9]

पुष्पाऽऽह्वये[10] भक्ति-चिताः कुरंगाः[11] ॥१७॥[१२

---

१. प्र अ–महीभृतां। २. च म–शैलं कृतं। ३. अ–पुष्पैः कृतं ॥

४. च ल₂—सुपुष्कराणि। अतः परमधिकः पाठः—

ल₂ च म—यथा प्रफुल्लानि च पुष्कराणि।

५. अ–नाना विचित्राणि। ६. अधिकः पाठः—

ल₁—मृगाकुलान्यत्र धनावराणि।

७. ब रा ल₁ ल₂ म प्र अ–नास्ति पादः ॥

८. रा–रूपप्रवा० । अ–रुक्मप्रवा०

९. अ–०सुभिर्भुजंगाः। म प्र ल₁–नास्ति पादः। १०. ब–पुष्पाक्षये।

११. अतः परमधिकः पाठः—

रा—द्विजाश्च पक्षार्चितरक्ततुण्डाः। *

च–रक्ताश्च चामीकररक्ततुण्डाः ॥†

रा अ च—प्रवालजाम्बूनदरक्तपक्षाः ।

च—सनीलमावृत्य विजित्य पक्षाः।‡

---

* च—द्विजाश्च पक्षार्चितनक्रतुण्डाः।

अ—शिताश्च पक्षाः शितरक्ततुण्डाः।

† अ—द्विजाश्च चामीकररक्ततुण्डाः।

‡ अ—सनीलमाश्रित्य विहंगपक्षाः। रा–००विजित्स्वा (?)पक्षाः।

नियुध्य[1]मानाश्च गजाः सु-हस्ताः, [१४

तथैव पद्मोत्पल-दाम-हस्ताः [2] । [N

लक्ष्मीस्तथा[3] पद्म-वितान-हस्ता[4], [१४

गृहा[5]ऽन्तरे राजति तस्य[6] संस्था ॥१८॥ [N

इत्थं[7] स तद् गृहम् अभिवीक्ष्य सुन्दरं,

सु-विस्मयं[8] नगमिवं[9] चारु-कंदरम् [10] ।

पुरं च तत् परम-सुगंधि-मंदिरं,

हिमाऽत्यये नगमिव चारु[11]-सुंदरम् ॥१९॥ [१५

ततः स तां कपिर् अवीक्ष्य पूजितां,

वरां पुरीं तदधिप-बाहु-निर्जिताम्[12] ।

ददर्श नो जनक-सुतां गुणा[13]ऽन्वितां,

सु-दुःखितां पति-गुण-वेग[14](?)वर्जिताम् ॥२०॥[१६

---

रा अ च—कामस्य साक्षादिव भान्ति पक्षाः ।

रा अ—कृता विहंगा सुमुखाः सुपक्षाः ।

---

१. ल$_1$ ल$_2$—संयुध्य० । २. प्र—नास्ति पादः । ३. च अ—लक्ष्मीस्तदा । ४. च ल$_1$ ल$_2$ अ—पद्मानिमग्नहस्ता । ५. च अ—गृहांगणे । ६. प्र ल$_1$—तत्र ॥

७. ब—शंयः? । ८. ल$_1$ ल$_2$—सविस्मयं । ९. च—नागमिव । १०. अ—नास्ति पादः । ११. च अ ल$_2$—चारुमन्दिरं । प्र ल$_1$—चारुमन्दरं । अ—अतः परमधिकः पाठः—

ददर्श नानाविध-वेश्म-सुन्दरम् ॥

१२. ल$_1$—०पबाहुवर्जितां। ल$_2$—०पबाहुपालितां १३. च—गुणार्चितां । अ—गुणोन्वितां? । १४. म—०गुणवेगव० । अ—हरिर्बभूवाधिकदुःखदुःखितः ।

ततस्तदा बहुविध-भाविताऽऽत्मनो,
महात्मनः स्वयम्[1] उचिताऽऽर्य-वर्त्मनः ।
अपश्यतोऽभवद् अति-दुःखितं मनो,
वपुष्मतः प्रवि-चरतो महात्मनः ॥२१॥ [१.७

इत्यार्षे[2] रामायणे सुन्दर-काण्डे रावण[3]-भवन-वर्णनं
नाम सर्गः ॥

---

१. च—स्वयमनुविचार्यैव० । ल$_1$—स्वयमुदितार्यैव० । अ—रघुरुचिरार्यैव० ॥ २. रा—श्रीरामायणे । ३. रा म प्र ल$_1$ ल$_2$—भवनवर्णनं । अ—भवनवर्णनो ॥

[बं-N] ४२ख-पृष्ठत उपरि मुख्यपाठः । [दा-९]

वेश्मनस्तस्य मध्यस्थम्, अन्यद् वेश्म विनिर्मितम् ।
दिव्य-निर्यूहे-संकीर्णं, ददर्श हनुमान् कपिः ॥२२॥ [१०
ब्रह्माऽर्थं हि कृतं दिव्यं, दिवि यद् विश्व-कर्मणा ।
विमानं पुष्पकं नाम, सर्व-काम-गमं शुभम् ॥२३॥ [११पू
परेण तपसा लेभे, यत् कुवेरः पितामहात् । [११उ
कुवेराद् ओजसा लेभे, रावणस्तद् गृहोत्तमम् ॥२४॥ [१२
ईहामृग-समा-युक्तं, कार्तस्वर-हिरण्-मयम् । 
सुदृढैर् आवृतं स्तंभैः, प्रदीप्तमिव च श्रिया ॥२५॥ [१३
मेरु-मंदर-संकाशैर्, उल्-लिखद्भिर् इवांऽबरम् ।
कूटाऽऽगारैः शुभांऽऽकारैः,सर्वतः समलंकृतम्॥२६॥ [१४
ज्वलनाऽर्क-प्रतीकाशैः, सु-कृतैर् विश्वकर्मणा ।
हेम-जाल-प्रतिच्छन्नं, रत्न-वैडूर्य-वेदिकम् ॥२७॥ [१५

---

१. ब म-मध्यांतरन्यद् । प्र-वेद्यांतर० । ल१-मध्यांतर० । २. फ-दिव्यनिगूढ० । रा च म प्र ल१ ल२-दिव्यं निगूढं स । ब-दिव्यं निर्गूढं स० अ-दिव्यं निर्ज्जूह० ॥

३. रा-विकृतं । अ-विहितं । ४. च-मं श्रुतम् । अ-सर्वकामफलप्रदं ॥

५. म-यः । ६. ब च फ म प्र ल१-कुवेरात्तेजसा ॥

७. फ अ-ईहामृगगणाकीर्णं । रा च ब म प्र ल१, ल२-चित्रैर्मृगैः समायुक्तं । ८. फ रा च ब म प्र ल१ ल२ अ-कार्तस्वरहिरण्मयैः । ९. च ब म फ ल२ अ-सुकृतैरा० । प्र-सुकृतमा० । सुकृतं चावृ० ॥

१०. रा च म प्र ल१ ल२-शुभाचारैः । आ-शुभागैरः । ब-शुभाधारैः । ११. फ-सर्वशः ॥

१२. च ब म प्र ल१ ल२-सुकृतं वि० । रा-स्वकृतं वि० । १३ फ रा च ब म प्र ल१, ल२-रुक्मवै० ॥

सर्व–रत्न–समा–कीर्णं, तपनीय–विचित्रितम् । [N
जाल-वातायनैर्युक्तं, काञ्चन-स्फाटिकैरपि ॥२८॥ [१६पू
हैमैर् आभरणैः श्लक्ष्णैः, प्रस्तैः सु-समाहितैः ।
इन्द्रनील–महानील–मणि–प्रवर–वेदिकम् ॥२९॥ [१६उ

[बं–N]प्रतप्त-जांबूनद-जाल-चित्रितं, [दा–८]
ददर्श वीरः पर-वीर-हा कपिः । [१उ
तदप्रमेय-प्रतिकार-कृत्रिमं,
स्वयं कृतं साध्विति विश्वकर्मणा ॥३०॥
दिवं-गमं वायु-पथे प्रतिष्ठितं,
व्यरोचताऽऽदित्य-पथस्य लक्ष्मवत् । [२उ
यद् यत् पृथिव्यामभिराम-रूपं,
तत् तत् कृतं भूमि-तलेऽपि तस्य ॥३१॥ [N
नाऽस्फाटिकं नाऽमणिरत्न-पूर्णं,
नाऽराजतं किञ्चिद् अकाञ्चनं वा ।
वनानि शैलाँ नगराणि नद्यः,
सरांसि चित्राणि च काञ्चनानि ॥३२॥ [N
तले बभूवुः स्फटिकाऽन्तराणि,
तस्मिन् विमाने तपसो निधाने ।

---

१. ब–॰रत्नसमुत्कीर्णं । २. फ रा च ब म प्र ल$_1$ ल$_2$ अ–कांचनैः स्फा॰ ॥
३. रा च ब म–हैमैरारोहणैः । प्र–हेमैरारोहणैः । ४. प्र–तीक्ष्णैः । ५. फ–सुसमाहृतैः । ६. इन्द्रनीलसमानील॰ । रा–इन्द्रनीलमयानील॰ ॥

---

१. साधिते । ल$_2$–स्वधिति । २. आ फ अ–भव आरभ्य सर्गसमाप्तिं यावत्पाठो नास्ति ॥
३. च–शैलो । ४. प्र–कंचकानि ।
५. ब म प्र ल$_2$–स्फटिकेवराणि ॥

भूस्तत्र रक्तोत्पल-पत्र-चित्रैः,
कीर्णा[1] स-हेमोत्पल-पत्र-रेणुः ॥३३॥[2] [N

यथा-विधा राज-वरोत्तमांऽगे,[3]
चूडासु चूडा-मणयो वि-भान्ति ।
तथा-विधास्तत्र कृता विमाने,[4]
स्तंभाँश्च[5] जालानि च वेदिकाश् च ॥३४॥[N

स्तंभ-प्रमाणान्य् अविलम्बितानि,
स्तंभानि(?) चित्राण्य् अपि चोत्तमानि ।[6]
तत्राँऽपि[7] वैडूर्य-कृतं विशालं,
यथा स-तारा-गणम् अन्तरिक्षम् ॥३५॥[8] [N

न तत्र किञ्चिन् न कृतं प्रयत्नात्,[9]
न तत्र किञ्चिन् न महाऽर्ह-रत्नम् ।
न तत्र किञ्चिन् न महा-विशेषं,
न ते विशेषा नियताः सुरेष्वपि ॥३६॥ [३

---

१. प्र—कृष्णे । ल१—कृष्णः ।
२. आ अ फ च—अधिकः पादः । खद्योतवर्णश्च सुवर्णरेणुः ॥
३. ल२—०वरोत्तमांगके । ४. ब रा म प्र ल१ ल२—विमान० । ५. च—स्रजश्च ॥

६. अतः परमधिकः पाठः—

च—दामानि पद्मोत्पलचंपकानां ।
प्रसक्तमुल्लोचकृतं सुरम्यं ॥

७. च—तत्रीद्ध । ल२—तत्रास्य ।
८. संदिग्धप्रामाण्यमेतत् पद्यम्। तथाहि स्तम्भादिपदक्लीवत्वमुपेक्ष्यम् ॥
९. ब म प्र ल१ ल२—प्रयत्नं ॥

तपः-समाधान-पराक्रमाऽर्जितं,
मनः-समाधान-विचार-चारितम् ।
अनेक-संस्थान-विशेष-निर्मितं,
ततस्ततः श्लक्ष्ण-विशेष-दर्शनम् ॥३७॥ [४
सुराऽसुराणामपि दुष्प्रधर्षणं,
दुरा-सदं मारुत-वेग-दर्शनम् । [N
महात्मनाम् उग्रतपः कृताऽऽत्मनां,
यशस्विनां पुण्यकृतां यथाऽऽलयम् ॥३८॥ [५उ
विशेषितोच्चासन-संप्रति-ष्ठितं,
वि-चित्र-कूटं बहु-कूट-मण्डितम् ।
मनोभिरामं शरदे (?दि) व(?न्दु) निर्मलं,
महाऽभ्रकूटं विविधाऽभ्र-मण्डितम् ॥३९॥ [६
वहन्ति यत् कुण्डल-शोभिताऽऽनना,
मनो-जवा भूत-गणाः सहस्रशः । [७पू
वसन्त-पुष्पोत्कर-चित्र-दर्शनं,
वसन्त-मासाद् अपि कांत-दर्शनम् ।
स पुष्पकं नाम विमानम् उत्तमं,
ददर्श तद् वानर-वीर-सत्तमः ॥४०॥ [८

इत्यार्षे रामायणे सुन्दर-काण्डे पुष्पकवर्णनं
नाम सर्गः ॥

---

१. रा ल₂-ततः स० । २. ल₁ ०धानपरैः समा० ॥

३. म-दुष्प्रदर्शनं । ४. ब-जरा-सदं । च ल₂-दुराधरं । ५. च-तथालयम् ॥

६. च-विशालतोच्चासनं । प्र-विशेषतो० । ७. रा च प्र ल₁ ल₂-शरदीव । ८. प्र-निर्मितम् ॥

९. रा- ०न्तपुष्पोद्गमचारुद० ।
१०. प्र-ब्राह्मवि० । ल₁-चैव । ११. ब म प्र ल₁-०रमुत्तमः ॥

[बं–१३]        ( ४८श-पृष्ठत उपरि मुख्यपाठः )        [दा–९]

५उ] आरुरोह हरि-श्रेष्ठो, विमानं पुष्पकं शुभम्[1] ॥४०॥ [2][१९उ

N] स[3] तत्र[3] गन्ध(?न्धं)-संयु(?स)क्तं,[4] पान-माल्याऽनुभक्षजम्[5] ।[6]

८उ] दिव्यं संमूर्छितं[7] जिघ्रन्[8], रूपवन्तम् इवाऽनिलम्[9] ॥४१॥ [२०

स गन्धस्तं महा-सत्त्वं, बन्धुर् बन्धुमिवोत्तमम् ।

९] इत एहीत्य्[10] उवाचैनं, तत्र यत्र स रावणः[11] ॥४२॥ [२१

ततस्तां प्रस्थितः शालां[12], ददर्श महतीं शुभाम् ।

१०] रावणेन[13] परा[13]ऽऽक्रांतां, कान्ताम् इव वर-स्त्रियम्[14] ॥४३॥ [२२

मणि-सोपान-विकृतां[15], हेम-जाल-विराजिताम्[16] ।

११] स्फाटिक-प्रावृत-तलां, दन्ता[17]ऽन्तरित-रूपिकाम्[18] ॥४४॥ [२३

मुक्ता[19]-मणि-प्रवालैश्च, रूप्य-चामीकरैर् अपि ।

---

१. फ–महत् । २. रा च ब म प्र ल१ ल२–नास्ति । ३. च ब म ल२ अ–तत्र प्रसक्तो । प्र ल१–तत्र प्रसक्तं । ४. फ–गंधसंसक्तं । च ब म ल२ अ–गंधं तं । प्र ल१–सौगंध्यं । ५. च–पानमन्योन्यभक्षणम् । ब म प्र ल१ ल२–पानमन्योन्यभूषणं । अ–पानमाल्यान्तरिक्षजम् । ६. रा–नास्ति ॥

७. आ–दिव्यसंमूर्च्छनं । ८. च ब प्र ल१–जघ्रौ । ९. फ–उत्पिबन्तमिवा० । आ प्र अ–०न्तमिवानलं । रा–नास्ति ॥

१०. आ–०हीत्युवाचेमं । ११. फ ब अ–रावणम् । १२. ब–शैलां ॥ १३. फ–रावणस्य मनःकान्तां । १४. ब–वनस्त्रि० । १५. रा ब म प्र ल१ ल२–०पानसुकृतां । १६. अ–०लविभूषितां ॥

१७. च–दान्तान्त० । ब म प्र ल१ ल२–धारन्तरित० । १८. फ रा च म प्र ल१ ल२–०रितरूपकां । १९. फ–मुक्ताफलप्र० ॥

१२] विभूषित-मणि-स्तंभां, सुवर्ण-स्तंभ-भूषिताम्[1] ॥४५॥ [२४
समैर् ऋजुभिर्[2] अत्युच्चैः, समन्तात्[3] सु-विभूषितैः (?ताम्) ।
१३] स्तंभैः पक्षैर् इवाऽत्युच्चैः, दिवं[4] संप्रस्थितैर् इव[5] ॥४६॥ [२५
महत्यां[6] कुथयाऽऽस्तीर्णां[7], पृथिवीलक्षणांऽकया ।
१४] पृथिवीम् इव विस्तीर्णां, स-राष्ट्रां[8] हेम-मालया[9] ॥४७॥ [२६
नादितां[10] यन्त्र[11]-विहगैर्, दिव्य-गन्धाऽधि-वासिताम्[12] ।
१५] परार्ध्याऽऽस्तरणैर्[13] जुष्टां, रक्षोऽधि-पति-सेविताम् ॥४८॥ [२७
धूमेनाऽगुरु[14]-धूपानां, विमलां हंस-पांडुराम्[15] ।[16]
१६] चित्रां[17] पुष्पोपहारेण, कल्माषीम् इव[18] सु-प्रभाम् ॥४९॥ [२८
मनः-प्रह्लाद-जननीं[19], कामस्याऽपि प्रमोदिनीम्[20] ।

---

१. फ—सुबहुस्तम्भमंडितां । अ—सुबद्धस्तंभमंडितां । २. आ—०भिरत्युग्रैः । ३. रा ब म प्र ल१ ल२—समेतां च विभूषितां ॥

४. रा च म प्र ल१ ल२—दिवः । ब—दिवि । अ—गिरि । ५. रा च म प्र ल१ ल२—०तैरपि । ६. च—महत् पर० । ७. आ—कुलययास्तीर्णां । अ—कथयाकीर्णां । ८. च—सराष्ट्रगृहमालया ॥

९. फ—सराभ्रग्रहमालया । अ—सुवस्तुगृहमालया । रा म प्र—शालानूपुरमालिनीं । च—शालां नूपुरमालिनीं । ल१—शालं नूपुरशालिनीं । ल२—शालनूपुरशालिनीं । १० आ अ—नादितं । ११. आ फ—यत्र वि० । अ—पुण्यवि० । १२. अ—०धिवासितं ॥

१३. आ—०र्ध्याभरणै० । १४. आ—धूपेना० । १५. रा च ब म प्र ल१—दंतपांडुरां । १६. ल२—नास्ति ॥

१७. रा ब प्र ल१—पूर्णां । म—पूर्णपु० । अ—चित्रपु० । १८. रा च ब म—कल्माषामि० । प्र—कल्माषां सुप्रभामिव । ल१—कलुषां सुप्रभामिव । आ—कल्माखीमि० । १९. आ रा प्र म ल१ ल२ च अ—मनःसंह्लाद० । २०. आ—वालस्यापि प्रमोदिनीं । रा ल१—वर्षस्यापि प्रसादिनीं । अ—चित्तस्यापि प्रसा० । ब—वामस्यापि प्रसा० ॥

१७] हृच्छोक-नाशिनीं दिव्यां, श्रियः[1] संजननीमिव॥५०॥[२९
इन्द्रियाणीन्द्रियाऽर्थैश्च, समं[2] पंचभिर् उत्तमैः ।[3]
१८] तर्पयन्तीं[4] च[4] सततं, सदा[5] रावण-सेविताम्[6]॥५१॥[३०
स्वर्गोऽयं[7] देवलोकोऽयम्[8], इयं सिद्धिः[9] परा भवेत् । [३१
२०] इति संचिंत्य[10] स तदा[10], बहुधा बहु-चिंतया[11] ॥५२॥[N
प्र-ध्यायत[12] इवाऽपश्यत्[12], प्रदीपांस् तत्र काञ्चनान् ।
२१] धूर्तानिव महा-धूर्तैर्, देवनेन[13] परा-जितान् ॥५३॥[३२
दीपानां च[14] प्रकाशेन, श्रिया चाऽतुलया[15] तथा[16] ।
१९] अर्चिभिर् भूषणानां च, तां[17] प्र-दीप्ताम् अमन्यत[17]॥५४॥[३३
N] काञ्चनैर्[18] उद्यतैर् दीपैः, समन्ताद् अवभासिताम्[19] । [N
कपाट[20]-जालैर् विततैर्, उद्वमन्तीं प्रभाम्[21] इव ॥५५॥
N] तां तदा प्राविशद्[22] हृष्टो, हनुमान् पवना[23]ऽऽत्मजः । [N

---

१. आ रा च ब म प्र ल$_1$–श्रेयः सं० २. रा च ब म प्र ल$_1$–समैः । ३. ल$_2$–नास्ति ॥

४. आ च अ–तर्पयामास । प्र–तर्पयन्तीव । ५. फ अ–सद्म । ६. फ अ–रावणसेवितं । आ–रावणसेविनीं । ७. रा ब म प्र ल$_1$ ल$_2$–स्वर्गार्थं । ८. फ–ब्रह्मलोकोयमि० । रा ब म प्र ल$_1$ ल$_2$–देवलोकार्थमि० । ९. फ–सिद्धिः परममा इति । रा ब म प्र ल$_1$ ल$_2$–सिद्धिप्रदा भ० । अ–सिद्धिः परा मता ॥

१०. फ–संचिंतयामास बहु । ११. फ–इति चिंतया । रा च म प्र ल$_1$ ल$_2$–बहु चिन्तयन् । १२. रा ब म प्र ल$_1$ ल$_2$–प्रध्यायन्नेव चापश्यत् । अ–प्रध्यावंत इवा० ॥

१३. रा च ब प्र ल$_1$ ल$_2$–०दैवतैर्न । १४. अ फ–तु । १५. फ–वातु० । प्र–जाज्वल्य० । १६. रा ब म प्र ल$_1$ ल$_2$–तया ॥

१७. फ–संप्रदीप्तोवमन्यते । रा ब म ल$_2$–दीप्तदीप्ताम० । प्र ल$_1$–दीपदीप्ताम० । १८. फ–कांचनैरुज्वलैर्दी० । १९. रा च ब म प्र ल$_1$ ल$_2$–दूरात्प्रणिहितेक्षणः ॥

२०. ल$_2$–कपाटभालैर्० । २१. रा–प्रजामिव । २२. ल$_2$–प्राविशद्धो । २३. फ–मारुतात्मजः ॥

N] निश्शब्द-पद-विक्षेपो, दूरात् प्रणि-हितेक्षणः॥५६॥ [N
ततोऽपश्यत् कुथाऽऽसीनं, नानावर्णाऽम्बर-स्रजम् ।
२२] सहस्रमेव नारीणां, नानावेषं चयं त्विषाम् ॥५७॥ [३४
परावृत्तेऽर्ध-रात्रे तु, पान-निद्रा-वशं गतम् ।
२३] क्रीडिताद् विरतं सर्वं, सुषुपे बहुलं ततः ॥५८॥ [३५
तत् प्रसुप्तं वि-रुरुचे, निश्शब्दाऽम्बर-भूषणम् ।
२४] निश्शब्द-हंस-भ्रमरं, यथा पद्म-वनं महत् ॥५९॥ [३६
तासां संवृत-दंष्ट्राणि, मीलिताऽक्षाणि मारुतिः ।
२५] अपश्यत् पद्म-गन्धीनि, वदनानि स योषिताम्॥६०॥ [३७
२६पू] प्रबुद्धानीव पद्मानि, तासां बुध्वा क्षपाऽत्यये ।
N] पुनः संवृत-पत्राणि, रात्राविव बभुस् तदा ॥६१॥ [३८
इमानि वक्त्र-पद्मानि, नारीणां नेत्र-षट्पदाः ।

---

१. फ रा च प्र म ल१ ल२ अ—॰पदविक्षेपैः । २. रा च प्र म ल१ ल२—दूरप्र॰ । ३. आ अ—॰श्यदथासीनं । रा—॰श्यत्कचाकीर्णं । च—॰श्यत्कथाकीर्णं । ब म प्र ल१ ल२—॰श्यत्कचाकीर्णं ॥

४. आ फ च ब—॰वेषचयस्त्वि॰ म—॰वेषचयं त्वि॰ । प्र—नानावेषं चयस्त्वि॰ । ल१—॰वेशचयस्त्वि॰ । ल२—॰वेशं चयस्त्वि॰ । अ—नानावर्णसमत्वि॰ ॥

५. अ आ—क्रीडित्वा । फ रा ब म प्र ल१ ल२—क्रीडनाद् । ६. अ—उपरतं । ७. आ—तन्नु । ८. आ—हनुमानित्यमन्यत । च ल२—सुषुप्तं बहु॰ । रा म प्र ल२—प्रसुप्तं बहु॰ । अ—सुष्वाप ब॰ । ९. फ—ततः प्रसुप्तं । रा च ब म प्र ल१ ल२—तत्र सुप्तं ।

१०. फ—विरुचिरे । ११. रा ल२—निश्शब्दं वर॰ । ल१—॰ब्दं वरभूषितम् ॥

१२. फ—॰तदन्तानि । रा—संवृत्तदं । अ—॰तदंतानां । १३. फ रा च ब म प्र ल१ ल२—मीलिताक्षीणि ॥

१४. रा म प्र ल१ ल२—पद्मगंधानि । १५. रा—बद्धान् ॥

१६. फ रा ब म प्र ल१ ल२ अ—संहृतप॰ । १७. रा—राजाविव । ल२—रात्राविव । ब—मीलिताक्षीणि । १८. रा म प्र—यथातथा । ल१ ल२—ब—मारुतिः । १९. फ—पद्मवक्त्राणि । २०. फ च ब म प्र ल१ ल२—मत्तषट्पदाः । रा ल२—स तु षट्प॰ ॥

२७] अम्बुजानि[1]इति मन्वाने[2]:(?नाः), प्रार्थयन्ते[3] पुनः पुनः॥६२॥ [३९
इतीऽवाऽमन्यत[4] श्रीमान्[5], उपेत्य[5] स[6] महा-कपिः ।
२८] मेने हि[7] गुणतस् तानि, समानि सलिलोद्भवैः ॥६३॥ [४०
सा तस्य शुशुभे शाला, ताभिः स्त्रीभिर् विराजिता ।
२९] शरदीऽव प्रसन्ना द्यौस्, ताराभिरभिशोभिता[8]॥६४॥[9] [४१[10]
ताभिः परिवृतः शूरः, शुशुभे राक्षसेश्वरः ।
३०] यथा ह्युडुपतिः[11] श्रीमांस्, ताराभिरभि-संवृतः[12] ॥६५॥[13] [४२
याश्च्यवन्त्यम्बरात्[14] तारास्, तत्र[15] मन्ये निराकृताः[15] ।[16]
३१] इमास्ताः सङ्गताः[17] कृत्स्नास्, तत्रामन्यत[18] वै हरिः॥६६॥ [४३
ताराणामिव हि व्यक्तं, महतीनां महाऽर्चिषाम् ।[19]
३२] प्रभा[20] वर्णः प्रसादश्च[20], विरेजुस् तत्र योषिताम्[21] ॥६७॥ [४४
व्यावृत्त-वसनास् तत्र[22], प्रकीर्ण-वर-भूषणाः ।[23]

---

१. फ रा च अ–अंबुजानीव । २. रा–मन्वामः । म प्र ल$_{1}$–मन्वनः । ३. आ–प्रार्थयन्ति । ४. आ–इति चामन्यत । ५. फ–मासीनास्तानुपेत्य । रा ल$_{2}$–श्रीमानुत्प्लुत्य । ब म प्र ल$_{1}$–श्रीमानुपेत्य च । ६. च–सहसा कपिः ॥

७. फ–०ऽथ । ८. च–०भिरिवशो० । ९. अ–नास्ति । १०. अ च–नास्ति ॥

११. फ–ह्यम्बु० । १२. रा ब म प्र ल$_{1}$ ल$_{2}$–०स्ताराभिः परिवारितः । १३. च अ–नास्ति । १४. फ म–याश्च संत्यम्बरे ताराः । च–याश्च्यवन्त्यंवराक्षाराः । १५. फ रा म–०त्ताराः काले काले निराकुलाः । च अ–०त्ताराः काले काले निराकृताः । १६. रा ब प्र ल$_{1}$ ल$_{2}$–नास्ति ॥

१७. आ–संवृताः । १८. अ फ सर्वास्त० । रा च ब म प्र ल$_{1}$ ल$_{2}$–सर्वाः प्रकीर्णाम्बरभूषणाः । १९. रा च ब म प्र ल$_{2}$ ल$_{2}$ अ–नास्ति ॥

२०. फ अ–प्रभावर्णप्रसादाश्च । २१. फ–योषितः । २२. अ–व्यावृत्तिः शिरसस्तत्र । २३. रा च ब म प्र ल$_{1}$ ल$_{2}$–नास्ति ॥

३३] पान-व्यायामे[1]-काले च, निद्राऽपहृत-चेतसः ॥६८॥ [४५
प्रभ्रष्ट-तिलकाः[2] काश्चित्, काश्चिद् उत्कट[3]नूपुराः ।[4]
३४] पार्श्व-गलित-हाराश्च[5], काश्चित् परम-योषितः ॥६९॥ [४६
संमुक्त-रसना[6]ः काश्चित्, काश्चित् प्रस्रस्त-वाससः[7] ।
३५] व्याविद्ध-रसना[8]-दामाः, किशोर्य इव वाहिताः ॥७०॥ [४७
सुकुण्डल[9]-धराश्चाऽन्या, विच्छिन्न-[10]मृदित-स्रजः ।
३६] गजेन्द्र-मृदिता[11]ः फुल्ला, लता इव महावने ॥७१॥[४८
चन्द्रांऽशु-निकराऽऽभाश्च, हाराः कासांचिदुत्कटाः[12] ।
३७] स्तन-मध्ये प्र-सुप्तानां[13], विरेजुर् हंस[14]-संनिभाः । [४९
अपरासां च[15] वैडूर्याः, कादम्बा इव पक्षिणः[16] ॥७२॥

---

३८] हेमसूत्राणि चाऽन्यासां, चक्रवाका इवाऽभवन् । [५०
हंसकारण्डवाऽऽकीर्णाश्[17], चक्रवाकोप-शोभिताः[18] ॥७३॥
N] आपगा इव ता रेजुर्, जघनैः पुलिनैरिव । [५१

---

१. रा ब च म प्र ल१ ल२—०व्यामकालैश्च । २. रा च ब म प्र ल१—निवृत्तति० । ३. ब—काश्चिदुरहृष्टनू० । ४. फ नास्ति ॥

५. रा ब म ल१ ल२—पार्श्वे गलित० । च—पार्श्वैद्ध० ? अ—पार्श्वा-गति० ॥ ६. रा च ब म प्र ल१—मुक्तसारसनाः । ल२—सुकुमारासनाः । अ—मुक्तसंरसनाः । ७. आ—प्रभ्रष्टवा० ॥

८. च—व्यावृद्ध० । आ—आविद्ध० । फ—०द्धरसनामोदाः । रा ब म प्र ल१—निवृद्धर० । ल२—विवद्धर० । ९. फ—०लचया० । १०. च ब म प्र ल१ ल२—विभिन्न ॥

११. रा ब म प्र ल१—०न्द्रमथिता । १२. ल२—नास्ति ॥

१३. फ—तु सुप्तानां । अ—तु सुप्तायां । च—सुषुप्तानां । १४. प्र—०जुर्हेमसं० । १५. फ—नास्ति । १६. ल२—नास्ति ॥

---

१७. फ—० वाकोप कूजिताः । १८. ल२—नास्ति । आ—अत आरभ्य सर्गसमाप्तिं यावत् पाठो नास्ति ॥

किंकिणी-जाल-नादिन्य[1]स् ता हेम-तिल[2]काऽन्विताः ।
[N भाव-ग्राहाः[3] सु[3]-गंभीराः सुप्ता नद्य इवाऽभवन् ॥७४॥[५२
मृदुष्व् अंगेषु कासां-चित् प्रति-रूपं समुच्छ्रि[4]तः(?ताः) ।
३९] तासां बभु[5]र् भूषि[5]तानां शुभा भूषण-राजयः ॥७५॥[५३
अंशुका[6]ऽन्ताश्च कासां-चित् मुख-मारुत[7]-कंपिताः ।
४०] उपर्य् उपरि वक्त्राणां व्या-धूयन्ते पुनः पुनः ॥७६॥[५४
ताः पताका इवोद्धू[8]ता रत्नानां रुचिर-प्रभाः ।
N] नाना[9]-वर्णाः सु-वर्णानां वक्त्र-मूलेषु रेजिरे[10]॥७७॥[५५
ववल्गुश्चाऽत्र कासां-चित् कुण्डलानि महा[11]ऽर्चिषाम् ।
४१] मुख-मारुत-कंपैश्[12] च मन्द-मन्दैः[13] सु[13]-योषिताम्॥७८॥[५६
शर्करा[14]ऽऽसव-गंधैश्[14] च प्रकृ[15]सा सुरभिः शुभैः ।

---

१. अ—०नादिन्यः। २. फ—हेमकनकांकिताः। अ—सहेमकनकांकिताः ॥

३. ब रा च म—भावग्राहोपगंभीराः। अ—हारग्राहापयस्तीरा। प्र—भावग्रैवेप०। ल१—भावग्रावैप०। ४. ब—समुत्हतम्। रा म प्र ल१ ल२ रा—समुत्सृतं। च—समुच्छितम्। अ—समुत्थितम् ॥

५. फ च—बभूवुर्भूषणानीव। अ—ता बभुर्भूषणानीव। ल१ प्र—तासां भर्तुर्भूषितानां। ६. रा च—अंशुकातांश्च। प्र—अंशुकाश्चैव। ७. फ च अ—०तघाट्टिताः। ल१—तकल्पिताः ॥

८. च ब—इवोद्धूताः।

९. ब रा च म प्र ल१ ल२—नानावर्णसु० फ—नानावर्णैश्च व०। १०. फ—भेजिरे। ११. फ—शुभार्चिषां अ—महात्विषां ॥

१२. फ अ—०कम्पैस्तु। १३. फ—०मन्दैस्तु। प्र—०मन्दैश्च। १४. फ—०रावशगन्धेन। रा—रासवंग०। च—०रासवगंधैश्च। प्र—रासवगंधैश्च। अ—कर्करासवगंधीनि। १५. फ—मुखः। च—मुखा। अ—मुखं।

N] तासां वदन-निश्वासैः[1] सिषेवे[2] रावणं[3] तदा[3] ॥७९॥ [५७
रावणाऽऽनन[4]-शंकाश्च काश्चिद् रावण-योषितः ।
N] मुख-वातं[5] स-पत्नीनाम् उपाऽजिघ्रन् पुनः पुनः ॥८०॥ [५८
अत्यर्थाऽऽसक्त[6]-मनसो रावणे[7] काश्चन स्त्रियः ।
N] सु-स्थिरत्वात्[8] स-पत्नीनां प्रीयमाणा[9] बभुस् तदा[9] ॥८१॥ [५९
बाहून् उपनिधायाऽ[10]न्याः परिहारो (?र्यो) प[11]शोभिताः ।[12]
N] अंशुकान्[13]यत्र सूक्ष्माणि[14] प्रमदास् तत्र शिश्रियुः ॥८२॥ [६०
अन्या वक्षसि चाऽन्यस्याः तस्याः काचित् पुनर् भुजम्[15] ।
N] अपरा त्वंकमन्यस्यास् तस्याश्[16] चापि परा[16] कुचौ[17] ॥८३॥ [६१
ऊरु-पार्श्व[18]-कटी-पृष्ठम् अन्योन्यस्याः समाश्रिताः ।
N] परस्पर-निविष्टांऽ[19]ग्यो मद-स्नेह-वशाऽनुगाः ॥८४॥ [६२
एकीभूताश् च[20] ताः सर्वाः सुषुपुस् तत्र योषितः । [६३उ

---

१. ब रा म प्र ल१–सुरभिनि० २. फ–शिखिरे । अ–निषेवे । ३. फ म अ–रावणस्तदा । ४. रा–०णानंदशं । फ–०णाननिश्वासः । ल१–०णाननसक्ताश्च । अ–०णादर्श–संकाशा: ॥

५. फ–मुखान्मुखं । ६. फ–अत्यर्थं शक्त० । ल१ अ–अत्यंतास० । ७. रा च म प्र ल१ ल२–रावणं ।

८. ब–स्वस्थि० । ९. ब–उपाजिघ्रन् पुनः पुनः । फ–०प्रीयमाणा युयुस्तदा । १०. फ–बहून्युपनि० । अ फ–भिन्नाः–बाहूपरिनिधायान्याः । ११. फ अ च–परिहासोप० । १२ ल२–नास्ति ।

१३. रा–०कानीव । १४. फ–तस्तानि । १५ अ–काश्चित् पुनर्ययौ ।

१६. फ रा म प्र ल१ ल२–०श्चाप्यपरा । च–०वाप्यपरा । १७. फ–भुजम् । अ–ययौ । १८. रा–पार्श्वे । म–ऊरूपार्श्वं ॥

१९. ब म प्र ल१ ल२–०निविष्टांगा । अ–०निविष्टास्ता । २०. ब फ रा म प्र ल१ ल२–एकीभूता स्म ॥

N] अन्योन्य-गात्रसंस्पर्शात् प्रीयमाणाः सु-मध्यमाः ॥८५॥[1] [६३पू

अन्योऽ[2]न्य-भुज-सूत्रैस् ताः स्त्री-माला [3]ग्रथिता [4]यथा ।

N] मालेव [5]ग्रथिता [6]तत्र शुशुभे [7]मत्त-षट्पदा ॥८६॥ [६४

लतानां माधवे मासि [8]फुल्लानाम् इव योषिताम् ।

N] अन्योऽन्य-बाहु-ग्रथितं [9]संपन्न-कुसुमोच्चयम् ॥८७॥ [६५

[10]व्यति-चेष्टित-[11]सु-स्कंधं तथाऽक्षि-[12]भ्रमराऽऽकुलम् ।

N] आसीद् वनमिवोद्धूतं स्त्री-[13]वर्णं रावणस्य [14]तत् ॥८८॥ [६६

[15]न चिरेणाऽपि सु-व्यक्तं न(?)तासां योषितां तदा ।

N] [16]विवेकं(?कः)[16]शक्यमा(?आ)रब्धुं भूषणाग्र्यांऽबर-स्रजाम्८९[६७

[17]रावणं [17]सुख-संसुप्तं ताः स्त्रियो विविध-[18]प्रभाः ।

N] [19]ज्वलिताः काञ्चनाऽऽ[20]दीप्ताः [21]प्रैक्षन्ताऽनिमिषा इव॥९०॥[६८

[22]रक्षसां चाऽभवन् कन्यास् [23]तस्य काम-गमास्[24]तदा ।

N] राजर्षि-नृप-दैत्यानां गंधर्वाणां च योषितः ॥९१॥ [६९

१. ल$_1$–नास्ति । २. ब रा म प्र ल$_1$ ल$_2$–०भुजसंवासाः । अ–अन्योन्यं भु० । ३. फ–ग्रंथिता । ४. अ–इव ॥

५. फ–ग्रंथिता । ६. अ–सूत्रैः । ७. ल$_1$–स तु ष० । ब च म प्र–०षट्पदाः । रा–०पदः । ८. फ–फुल्लानां वायुसेवनात् । अ–फुल्लानां वायुसेवितात् ॥

९. ब रा म प्र ल$_1$ ल$_2$–सपत्नीकु० । च–सपत्नकु० । अ–संपूर्णकुसु० । १०. रा ब म प्र ल$_1$–व्यचेष्टत । ल$_2$–व्यत्यचेष्टत । च–व्यतिचेष्टत । ११. ब म प्र ल$_1$–तथा सुष्ठु । रा–यथा सुष्टु । ल$_2$–तत्सर्वं । १२. फ अ–अन्योन्यभ्रम० । ब–यथाक्षिभ्र० ॥

१३. ब–स्त्रीरत्नो । रा च म प्र ल$_1$ ल$_2$–स्त्रीरत्नं । अ–स्त्रीपुरं । १४. रा च म प्र ल$_1$ ल$_2$ अ–तु । १५. फ रा च म प्र ल$_1$ ल$_2$–रुचिरे० । अ–अचिरे० ॥

१६. फ–विवेकराज्यमारब्धं । १७. फ अ च–रावणे सुखसंविष्टे । १८. ब रा च ल$_1$ ल$_2$ म–विबुधप्रियाः । प्र–विबुधस्त्रियः ॥

१९. फ अ–ज्वलंत । २०. फ च अ–काञ्चना दीपाः । २१. फ–प्रेक्षन्ते विशिषा । रा–प्रेक्ष० । अ–प्रेक्षंते निमि० । २२. फ–राक्षसी । २३. ब रा च प्र म ल$_1$–तत्र । २?. फ–कामशर० । च ल$_2$ अ–कामगता० ॥

न तत्र काश्चित् प्रमदाः प्रसह्य
प्रधानं[1]-वीर्येण बलेन लब्धाः ।
न चाऽन्य-कामा न तथाऽन्य-पूर्वा
N] विना वराया जनकाऽऽत्मजायाः ॥२२॥ [७१

न चाऽकुलीना न च[2] हीन-रूपाः
सदाऽन्न-पाना[3] उपचार-युक्ता[4]ः ।
भार्या[5] बभूवुस् तस्य न[6] हीन-सत्त्वा
N] न चाऽपि कामस्य[7] न कामनीयाः ॥२३॥ [७२

बभूव बुद्धिश् च कपीऽश्वरस्य
यद् ईदृशी[8] राघव-धर्म-पत्नी ।
इमा यथा राक्षस-राज-भार्याः
N] सुजातम् अस्यां[9] इवं साधु-बुद्धेः ॥२४॥ [७३

पुनश् च सोऽचिन्तयद् अर्थरूपं[10]
ध्रुवं विशिष्टा गुणतो हि सीता ।
अर्थाय[11] यस्याः[11] कृतवान् दुरात्मा[12]
N] लंकेश्वरः कष्टम् अकार्यम् एतत् ॥२५॥ [७४

इत्यार्षे रामायणे सुन्दर-काण्डे रावणा[13]ऽवरोध-दर्शनं
नाम[14] सर्गः ॥

---

१. अ-प्रसाद० ॥

२. फ-न । ३. फ अ-नादक्षिणा । $ल_2$-सदानमाना० । $ल_1$-सदान्नपानै० । च-नादानपाना० । ४. फ अ-नानुपवीरयु० । च-० नुप० । प्र-०तपचार० । $ल_1$-०रूपचार । $ल_2$-उपचार० ५. फ अ-भार्याभवन्तस्य । च प्र $ल_1$ $ल_2$-भार्याभवंस्तस्य । ६. प्र-च । ७. अ-त्रुटितः पाठः ॥

८. ब प्र म रा $ल_1$ $ल_2$-यन्नेदृशी । ९. फ-०तमस्या इति ॥

१०. अ-०न्तयदन्यरूपं । ११. अ-अन्यायमस्याः । १२. ब रा $ल_1$ $ल_2$ च म प्र-महात्मा ॥

१३ फ अ-अन्तःपुरवर्णनं । च-रावणान्तः पुरविचयो । प्र-रावणवरयोषिद्दर्शनं ॥

१४. म-नाम सप्तमः । $ल_1$-नाम षष्ठः ॥

तत्र[1] दिव्योपमं शुभ्रं स्फाटिकं रत्न-भूषितम् ।

१] अवेक्षमाणो[2] हनुमान् ददर्श परमाऽऽसनम् ॥९६॥[3] [१

७उ] गन्धैश् च परमैर्[4] जुष्टं वर-धूपेन धूपितम् ।

२उ] तस्य चैक-तमे देशे सोऽग्र्य-मालां[5]-विभूषितम् ॥९७॥[6]

३पू] ददर्श पांडुरं[7] छत्रं ताराऽधिपति–संनिभम् । [३

२पू] परमाऽऽस्तरणाऽऽस्तीर्णं[8] रांकवाऽजिन-संवृतम् ॥९८॥

३उ] दामभिर् वर-माल्यानां समंताद् उपशोभितम् । [६

N] बाल-व्यजन-हस्ताभिर् वीज्यमानं[9] समंततः ॥९९॥ [५पू

तस्मिन् जीमूत-संकाशं प्र–तप्तोत्तम-कुंडलम् ।

४] लोहिताऽक्षं महा-बाहुं महा-रंजन[10]-वाससम् ॥१००॥ [७

लोहितेनाऽनुलिप्तांऽगं चन्दनेन सु-गंधिना ।

५] संध्या-रक्तम् इवाऽऽकाशे तोयदं स-तडिद्गुणम्[11]॥१०१॥[८

वृतम् आभरणैर् दिव्यैः सु-दंष्ट्रं काम-रूपिणम्[12] ।

६] स-वृक्ष-वन-गुल्माऽऽढ्यं प्रसुप्तम् इव मन्दरम्[13] ॥१०२॥ [९

---

१. फ–तत्र । २. फ रा च प्र– अवेक्ष्यमानो । म–क्षमानो । ३. ल₂– नास्ति ॥

४. ब–भक्तिभिर्विविधैर्० । ५. फ–सोग्रमाल्यं वि०। अ–साग्र० । ६. ल₂–नास्ति ॥

७. ल₁–पाण्डरच्छत्रं ।

८. ब रा च म प्र ल₁ ल₂– ०मास्तरणं चैव ॥

९. अ–वीक्ष्य० ॥

१०. प्र–महाराजन०। अ–महा-राजत । फ ल₂–महारंज० ॥

११. प्र– ततोद्धुतं ॥

१२. फ–०रूपिनम् । १३. प्र ल₂– मन्दिरम् ।

७पू] क्रीडिताद्[1] विरतं रात्रौ वराऽऽभरण-भूषितम् ।
८उ] प्रियं नैर्ऋत-कन्यानां राक्षसीनां[2] सुखाऽऽवहम् ॥१०३॥ [१०
पानाद्[3] उप-रतं चैव ददर्श स महा-कपिः ।
९] भास्वरे[4] शयने वीरं प्रसुप्तं राक्षसाऽधिपम्[5] ॥१०४॥ [११
निःश्वसन्तं यथा नागं रावणं राक्षसोत्तमम्[6] ।
१२] आसाद्य परमोद्विग्नः सोऽपसर्प्य[7] विनीतवत् ॥१०५॥ [१२
अथाऽऽरोहणम् आसाद्य वेदिकाऽन्तरम् आश्रितं[8](?तः)।
१४] सुप्तं[9] राक्षस-शार्दूलं प्रेक्षते स्म[10] महा-कपिः ॥१०६॥ [१३
शुशुभे राक्षसेन्द्रस्य स्वपतः[11] शयनोत्तमम्[11] ।
१३] गन्ध-हस्तिनि संविष्टे[12] यथा प्रस्रवणं महत् ॥[13]१०७॥ [१४
काञ्चनांऽगद-बद्धौ च ददर्श स महाऽऽत्मनः[14] ।
१५] विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्र[15]-भुजोपमौ ॥१०८॥[16] [१५
ऐरावण-विषाणाऽग्रैर् आपीडित[17]-कृत-व्रणौ[17] ।[18]
१६] वज्रोल्लिखित-पीनांऽसौ[19] नाना-युद्ध[20]-परिक्षतौ ॥१०९॥ [१६

---

१. ब म प्र ल[1] ल[2]—क्रीडना-द्विरतं । २. फ रा च म प्र ल[1]ल[2]—राक्षसानां ॥

३. प्र—०दुपपदं । ४. म ल[1]—भासुरे । ५. अ—राक्षसेश्वरं ॥

६. ब—वानरोत्तमः । ७. फ—शोचन्नर्थं । रा—सोपस (पं) द् । अ—सोपसर्पद् ॥

८. ब—०तरमाश्रितः । ९. ब—सु मे । १०. प्र ल[1] अ—स ॥

११. रा—भुजाविन्द्रध्वजोपमा ।
१२. अ—संश्लिष्टे । १३. रा—नास्ति॥

१४. फ अ—महाकपिः । च—०हसात्मनः । १५. फ—भिन्नाः—०विन्द्र-ध्वजो० । १६. रा—नास्ति ॥

१७. रा च म प्र ल[1]—०तकुच-व्रणौ । १८. अ—ऐरावतविषाणाग्रैरापीडन० १९. ब—०तपीनांगौ । २०. ब—राज्ञे युद्ध-पराक्षतौ । रा—राज्ञो यु० । प्र—राज्ञो-युद्धपराज० ।

१७पू] पीनौ समनु[1]-जातौ तौ[2] संहतौ चलितौ[3]ऽऽयतौ ।
सु-लक्षण-कृतांऽगुष्ठौ स्वंगुलीयै[4]-विभूषितौ ॥११०॥ [१७
N] सं-हतौ[5] परिघाऽऽकारौ करौ[6] करि-करोपमौ ।
१७उ] विक्षिप्तौ[7] शयने शुभ्रे पञ्च-शीर्षाव् इवोरगौ ॥१११॥ [१८
शश[8]-क्षतज-कल्पेन चन्दनेन[9] सु-गंधिना ।
१८] शीतेन[10] च[10] परार्घ्येन[11] स्वनु-लिप्तौ सु[12]-तेजसौ ॥११२॥ [१९
उत्तम[13]-स्त्री-विमृदितौ गन्धोत्तम-निषेवितौ[14] ।
N] यक्ष-पन्नग-गन्धर्व-देव-दानव[15]-भीषणौ ॥११३॥ [२०
स[16] ददर्श[16] कपिस् तस्य बाहू शयन[17]-संस्थितौ ।
N] मन्दरस्याऽन्तरे गुप्तौ[18] महाऽही रुषिताव् इव ॥११४॥ [२१
ताभ्यां स[19] परि-पूर्णाभ्यां भुजाभ्यां राक्षसा[20]ऽधिपः ।
N] शुशुभेऽचल-संकाशः[21] शृंगाभ्याम् इव मन्दरः[22] ॥११५॥ [२२
चूत[23]-पुन्नाग-सुरभिर् वकुलोत्तम-सं-युतः ।
N] मिष्टाऽन्न-रस[24]-संपन्नो नाना-गंध-पुरःसरः ॥११६॥ [२३

---

१. रा–सुम० । अ–संबंध-जातांसौ । फ–०नुजातांशौ । २. फ–हंसमौ । अ–संहितौ । ३. फ अ–लंघितायतौ । ल$_2$–बलतायतौ । ४. ब रा च म प्र ल$_1$ ल$_2$–अंगुलीभिर्विभू० ॥

५. अ–संयतौ । ६. अ–पीनौ । ७. ब रा च म प्र ल$_1$ल$_2$–विस्तीर्णौ॥

८. फ–सम । रा च म प्र ल$_1$ ल$_2$–शशि० । ९. फ–शीतलेन । च अ–शीतेन च । १०. अ च फ–चन्दनेन । ल$_2$–पीतेन च । ११. च–परार्द्धेन । १२. रा च म प्र ल$_1$ ल$_2$–स्वतेजसा ॥

१३. ब–उत्तमौ । १४. ब रा प्र ल$_1$–गण्डोत्तमनिवेशितौ । म–०मनिवेषितौ । १५. ब प्र–०वभूषितौ । ल$_2$–वपूजितौ ॥

१६. रा च ब म प्र ल$_1$ ल$_2$–ददर्श स । १७. ब म रा च प्र ल$_1$ ल$_2$–शयनसंगतौ । १८. ब–सुप्तौ ॥

१९. रा–सु० । २०. फ अ–राक्षसेश्वरः । २१. प्र–च स लंकेशः । २२. अ–मंदिरः ॥

२३. फ–वृतपु० । २४. अ–इष्टानां र० । ब ल$_2$–०रससंपन्नौ ॥

तस्य राक्षस-सिंहस्य निश्चक्राम मुखान्[1] महान् ।
N] शयानस्य विनि-श्वासैः[2] पूरयन्निव तद् गृहम् ॥११७॥ [२४
मुक्ता-मणि-विचित्रेण काञ्चनेन वि-राजिताः[3] ।
N] मुकुटेनाऽर्क-वर्णेन कुण्डलोज्ज्वलिताऽऽननाः॥११८॥ [२५
रक्त-चन्दन-दिग्धेन[4] हार-भारेण[5] शोभिताः[6] ।
N] पीनाऽऽयत-विशालेन वक्षसाऽतिवि-राजिताः[7]॥११९॥ [२६
पांडुरेणाऽऽतप-त्रेण क्षौमेण[9] क्षतजेक्षणाः[10] ।
N] महाऽर्हेण[11] सु-संवीताः[11] पीतेनोत्तम-वाससा ॥१२०॥ [२७
चतुर्भिः काञ्चनैर्[12] दीपैर् दीप्यमानैश् चतुर्-दिशम्[13] ।
N] प्रकाशी[14]-कृत-सर्वाऽगा मेघा[15] विद्युद्[16]-गणैरिव ॥१२१॥ [17] [२९
पाद-मूल-गताश् चाऽपि ददर्श स[18] महा-कपिः ।
N] पत्नीस् ताः प्रिय-भार्यस्य तस्य रक्षः-पतेर्[19] गृहे॥१२२॥[३०

---

१. अ—महान् मुखात् । २. फ अ—च निश्वासः ॥

३. च—विराजिता ॥

४. ब रा च म प्र $ल_1$ $ल_2$—०न दिव्येन । ५. ब प्र $ल_1$—सितहारेण । रा—तारभारेण । च $ल_2$—तारहारोप० । च—तारहारे पा० । ६. ब प्र $ल_1$—दीपिताः । अ—शोभिना । ७. च ०तिविराजता ॥

८. फ—०णापविद्धेन । अ—ग परिविद्धेन । ९. फ—क्षौमेन । १०. फ—०तभेक्षणः । म—०तजेरणु ? ११. फ—सुधीरेण । च—सुसंवीतं ॥

१२. फ—०नैर्दीसैः । १३. च—०प्यमानं । अ च—भिन्ना—०प्यमानाश्च० । १४. फ च अ—०तसर्वांगं । १५. फ च—मेघं । अ—मेघे० । १६. फ $ल_2$—विद्युल्लतै० । च—०ल्लैतरपि ।

१७. अतः परमधिकः पाठः—

अ—ददर्श स महावीरो मातङ्गमिव केसरिः ।
मारुतिर्बलशाली तु सुरराकृत्य विक्रमम् ॥

१८. रा म $ल_1$ $ल_2$ अ—स महात्मनः । प्र—सुमहात्मनः । च—सहसात्मनः । १९. फ—राक्षस्य वै गृहे ॥

शशि-प्रकाश-वदना वर-कुण्डल-भूषणाः ।
२१] आम्लान[१]-माल्याऽऽभरणाः प्रसुप्ता[२] हरि-यूथपः[३]॥१२३॥ [३१
नृत्त-वादित्र-कुशला[४] राक्षसेन्द्र-भुजा[५]ऽङ्क-गाः ।
२२] वराऽऽभरण-संयुक्ताः स[६] ददर्श वर-स्त्रियः ॥१२४॥ [३२
१९उ] वज्र-वैडूर्य-गर्भाणि[७] श्रवणाऽन्तेषु योषिताम् ।
२०पू] ददर्श तापनीयानि कुण्डलान्य् अंगदानि च[८] ॥१२५॥ [३३
तासां चन्द्रोपमैर् वक्त्रैः शुभैर् ज्वलित[९]-कुण्डलैः ।
N] व्यरोचत विमानं तन् नभस् तारा-गणैर् इव ॥[१०]१२६॥ [३४

[वं–१.३] (५६ श–पृष्ठत उपरि मुख्यपाठः ॥ )
अन्या[११] कक्ष-गतेनैव[१२] मृदङ्गेनाऽसितेक्षणा[१३] ।
४३] प्र-सुप्ता[१४] भामिनी[१५] भाति बाल-पुत्रेव वत्सला ॥१२७॥ [३८

१. ब फ रा म प्र ल$_1$ ल$_2$–प्रम्लान० । २. अ फ–ददर्श । ३. फ–हरिपुंगवः ॥

४. फ प्र अ–नृत्यवा० । ५. ल$_1$–भुजंग० । अ–भुजंगमाः । ६. फ च अ–निषण्णास्तत्र ताः स्त्रियः । ल$_1$–वरमाल्याः वरस्त्रियः ॥

७. अ–०र्यगर्भाभिः । ८. ल$_1$–०गदान्यपि ॥

९. ब रा ल$_1$ ल$_2$–शुभैर्वलितकु० ।

१०. अतः परमधिकः पाठः—

अ च–विपञ्चीं च परिष्वज्य प्रसुप्ताऽन्या प्रकाशते ।
महानदी प्रतीर्णेव नारीप्लवसमाश्रिता ॥

११. ब रा म प्र ल$_1$ ल$_2$ अ–एका । १२. आ फ रा च प्र ल$_2$–कक्षाग० । म–कक्ष्यग० । ल$_1$–वक्ष० । १३. आ–मंडूके० । फ–गेण्डुकेनाय० । ब रा च म प्र ल$_1$ ल$_2$–०केनायते० । अ–कटकेनायते० । १४. रा ब म प्र ल$_1$ ल$_2$–सुप्रभा । १५. फ–भाविनी । अ–भाषिणी ॥

पटहं[1] चारु-सर्वाऽङ्गी शेते सं-पीड्य भामिनी[2] ।
४४] चिरेण[3] रमणं[3] लब्ध्वा परि-ष्वज्य[4]एव कामिनी[5] ॥१२८॥ [३९
अन्या वीणां समा-लिङ्ग्य[6] प्रमदा प्रिय-दर्शना । [४० पू
N] निद्रा-वशम् अनु-प्राप्ता स-कान्ता[7] प्रमदा यथा[8]॥१२९॥ [४१ उ
वेणुं[9] काचित् परि-ष्वज्य प्र-सुप्ता तनु-मध्यमा । [N
N] चिरं[10]स्येव समासाद्य पत्नी[11] प्रावासिकं पतिम्[11] ॥१३०॥ [४० उ
N] अन्या कनक[12]-संकाशा मृदु-पीन-पयोधरा ।
४६ उ] मृदङ्गं[13] हि प्रपीड्या[14]ऽशे(?से)सुप्ता कमल-लोचना॥१३१॥ [४२
आलिङ्गेषु[15] पतिं[16] कृत्वा स-मदाः परम-स्त्रियः ।
४७] प्र-विद्ध-वेणु-सङ्गांश्[17] च प्र-सुप्ताः पान-खेदिताः[18]॥१३२॥ [N
भुज-पार्श्वाऽन्तर[19]-स्थेन सु-कक्षेण[20] कृशोदरी ।
४८] पणवेन[21] समा-सक्ता[21] सुप्ता मद-कृत-श्रमा[22] ॥१३३॥ [४३

---

१. आ–पटेन । २. फ–भाविनी । अ–भाषिणी । ३ फ रा च ब म प्र ल$_{2}$ ल$_{1}$–०ण कामिनं । अ–विदेश-कामिनं । ४. आ–०रिष्वज्य च । ५. फ–कामुकी ॥

६. आ–परिष्वज्य । ७. फ–सकामा । ८. फ अ च–इव ॥

९ आ–वेणुं चापि । प्र ल$_{1}$–काचिद्वेणुं । १०. फ–चिरादेव । ११. आ–कामिनी कामिनं प्रियम् ॥

१२. फ अ–भिन्नाः—कनकसंकाशैर्मृदुपीनपयोधरैः । १३. आ–मृदंगानि प्रपीड्योच्चैः । १४. रा ब म प्र ल$_{1}$–मृदंगांश्च प्रपीड्यांगैः ॥

१५. च–आलिंग्य । १६. फ–तनुं कृत्वा । च–सुतलं कृत्वा । १७. फ च–भिन्नाः—०वेणुमन्याश्च । च–वेणुं संप्राप्य । १८. च–काश्च खे युताः ।

१९. रा ब म प्र ल$_{1}$–जपाशांतरस्थं च । ल$_{2}$–श्वान्तरस्थं च । २०. फ–सुकचेन । रा ब–सुकक्ष्येण । २१. फ–पानवेतसमासक्ता । रा म–पणकं काचिदालिंग्य । आ–०वेन समालिंग्य । च ब प्र–पणवं काचिदालिंग्य । २२. फ–कृतमद० । रा च ब म प्र ल$_{1}$ ल$_{2}$–मदविमोहिता ॥

डिण्डिमं परि-गृह्याऽन्यां[1]स् तथैवा[2]ऽऽसक्त-डिण्डिमाः ।[3]
४९] प्रसुप्तास् तरुणा[4](?न्)वत्सान् उपगृह्येव योषितः ॥१३४॥[5] [४४
रसनाम् अप-विध्याऽन्या प्र-सुप्ता भुवि भामिनी[6] ।[6क]
५०] वसन्ते पुष्प-संयुक्ता[7] मालेव परि-मार्जिता[8] ॥१३५॥ [४६
काचिद्[9] आ-लिङ्गनं नारी भुज-संयोग-पीडितम्[10] ।
५१] कृत्वा कमल-पत्राऽक्षी प्र-सुप्ता मद-मोहिता[11] [12]॥१३६॥ [४५
पाणी तथाऽन्या[13] पाणिभ्यां स्तनाऽन्तरम्[14] उपाऽऽश्रितौ ।
५२] उप-गृह्या[15]ऽपरा सुप्ता[16] निद्रा-वशम्[17] उपा-गता ॥१३७॥ [४७
अन्या[18] कमल-पत्राऽक्षी पूर्णेन्दु-सदृशाऽऽनना ।
५३] अन्याम् आलिंग्य सु[19]-श्रोणी प्र-सुप्ता मद-विह्वला ॥१३८॥ [४८

---

१. रा च ब म प्र ल$_1$ ल$_2$—प्रतिगृह्यान्या । आ—परिगृह्यान्या । अ—च परिष्वज्य । २. आ—०डिंडिमा । रा च ब म प्र ल$_1$ ल$_2$—प्रसुप्ता भुवि भामिनी । ३. अतः परमधिकः पाठः—

च—दृष्ट्वा च कपिशार्दूलः तथान्यासक्तडिंडिमा ।

४. आ—०प्ता तरुणीर्वत्समु० । च—०प्ता तरुणवत्समुप० । अ—०प्तास्तरुणा । ५. ब म प्र ल$_1$ ल$_2$—नास्ति ॥

६. आ फ—भाविनी । अ—मानिनी । ६क. ब म प्र ल$_1$ ल$_2$—नास्ति । ७. अ—पुष्पसबला । ८. रा ब म प्र ल$_2$—परमार्चिता ॥

९. आ—काश्चिदा० । ब ल$_1$—काश्चिचा० । १०. रा च स प्र ल$_1$ ल$_2$—भुजसंभोग० । अ—भुजसंगोप० । ११. फ च ल$_1$—पानमो० । १२. रा ब म प्र ल$_1$—नास्ति ॥

१३. प्र ल$_1$ ल$_2$ अ—तथा सु० । १४. आ—०रमुपस्थितौ । अ—०रसमाश्रितौ । १५. आ प्र ल$_1$—उपगृह्या० । १६. ल$_2$—सक्ता । १७. आ—०शपराजिता ॥

१८. फ—कृत्वा । १९. रा च ब म प्र ल$_1$ ल$_2$—सुश्रोणीं ॥

मुरजेषु मृदङ्गेषु पीठिकासु तथैव च[1] ।
६४] शुभाऽऽस्तरण[2]मुख्येषु तथा ता(?ना)लीव(?[3]क)केषु च॥१३९[4][N
तूर्याणि[5] च वि-चित्राणि रावणस्य वर-स्त्रियः ।
N] उप-गूह्य[6] प्र-सुप्तास् ताः पान-निद्रा-वशं गताः ॥१४०॥ [N
नूपुरैश् चाऽपविद्धैश्[7] च वलयैश् चाऽपि शोभितैः ।
N] हारैश् च हरिणाऽक्षीणां प्र-कीर्णैः शोभिता[8] मही । [N
N] स-फेन-बिन्दु-निकरैर् वन-राजी जलैर् इव[9] ॥१४१॥ [N
[स१४]तासाम् एकान्त-संन्यस्ते[10] शयानां शयने[11] शुभे[11] ।
२९] ददर्श रूप-संपन्नां सु-श्रोणीं स कपिः स्त्रियम्[12] ॥१४२॥ [५०
गौरीं कनक-वर्णाऽऽभां इष्टाम् अन्तःपुरेश्वरीम्[13] ।
३०] कपिर् मन्दोदरीं तत्र यौवनोत्तम-शालिनीम्[14] । [५२
ददर्श[15] नील-जलदे[16] ज्वलन्तीम्[17] इव विद्युतम् ॥१४३॥ [N

---

१. आ–वीथिकासु सुमध्यमा । फ–पीडिकासु त० । रा ब म प्र ल$_1$ ल$_2$–तथा तालान्तरेषु च । च–तथा तालान्तकेषु च । २. आ–शुभान्तरेण-मु० । फ–०रणपुष्पेषु । ३. |रु अ–तालीशकेषु । ४. रा च ब म प्र ल$_1$ ल$_2$–नास्ति ॥

५. अ–रूपाणि । ६. च म–उपगुह्य । ल$_1$–उपगृह्य ॥

७. रा–नूपुरैश्चापरास्तैश्च । च–०श्चाविद्धैस्तैः । ८. फ रा ब च म प्र ल$_1$ ल$_2$ अ–शोभते ॥

९. च ल$_2$–०तलैरिव । १०. च ल$_2$–०संन्यस्तैः । ११. च ल$_2$–शयनैः शुभैः ॥

१२. आ–श्रियम् । फ–स्थिताम् । १३. रा–०मिष्टां भर्तुः परेश्वरीम् । ल$_2$ ब–०मिष्टां भर्तुः पुरे० । म प्र ल$_1$–०मिष्टां भर्तुः पुरीश्व० ॥

१४. अ आ फ–शयानां शयने शुभे । १५. रा–शोभंते । च–शोभंती । ब म प्र ल$_1$ ल$_2$–शोभंतीं । १६. रा च ब म प्र ल$_1$ ल$_2$–गलदे नीले । १७. आ–दीप्यतीमिव । रा–ज्वलन्तमिव ॥

३१] मुक्ता-मणि-समायुक्तैर् भूषणैस् तप्त-काञ्चनैः ।
भूषितां[1] भूषयन्तीं[2] तत् स्व-श्रिया[3] भवनोत्तमम्[4] ॥१४४॥ [५१

३२] तां[5] समीक्ष्य[5] महा-बाहुर् हनूमान् पवनाऽऽत्मजः[6] ।
तर्कयामास सीतेति[7] रूप-यौवन-संपदा । [५३

३३] हर्षेण महताऽऽविष्टो ननन्द[8] कपि-यूथपः[9] ॥१४५॥ [५४पू

आ-स्फोटयामास चुचुम्ब पुच्छं[10]
ननर्त[11] चिक्रीड जगौ ववल्ग[12] । [५५पू

स वानराणाम् ऋषभः प्रतीऽतो
ज्ञात्वा नरेन्द्राऽनुगतां[13] च सीताम्[14] ॥१४६॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे अन्तःपुर[15]-वर्णनं
नाम पंचमः[16] सर्गः ॥५॥

---

१. अ–लक्षतां । २. आ–भूषयन्तीव । रा च ब म प्र ल$_1$ ल$_2$–भूषयंती तां । ३. रा च ब म प्र ल$_1$ ल$_2$–सुश्रिया । ४. ल$_2$–भूषणोत्तमं (? मैः) ॥

५. फ–समीक्ष्य स । ल$_1$–तां स वीक्ष्य । ६. फ रा च ब म प्र ल$_1$ ल$_2$–मारुतात्मजः । ७. आ–शीतेति ॥

८. आ–ननद । ९. फ–हरि-यूथपः ॥

१०. आ–चेच्छन् । अ–चेच्छम् । च ब म प्र ल$_1$ ल$_2$–पुच्छम् । ११. ब अ–ननर्द । १२. अ फ–च वल्गुना । च–महाबलः । ब म प्र ल$_1$ ल$_2$–च भूरि । १३ आ ल$_1$–नरेन्द्रस्य । रा म–नरेन्द्रसु० । च प्र ल$_2$–नरेन्द्रेन्द्र० । १४. आ– शीताम् ॥

१५. आ–शीतान्वेषणे रावणान्तःपुरनिचयो । रा–अन्तःपुरस्त्रीवर्णनं । ब–सुन्दरस्त्रीचये स्त्रीवर्णनं । च म ल$_2$–अन्तःपुरविचये स्त्रीवर्णनं । प्र–स्त्रीवर्णनं । अ–नः पुरे स्त्रीवर्णनं । १६. म– अष्टमः । ल$_1$–सप्तमः । आ फ रा च ब प्र ल$_2$ अ–नास्ति ॥

ततम् तु[1] हनुमांश् चिंतां व्यव-धूय[2] व्यव-स्थितः[3] ।[4]

३४] जगाम चिन्ताम्[5] अपरां सीतां प्रति महा-कपिः ॥१॥ [१

अन्येयम् इति संचिंत्य[6] भूयस् ततः स[7] वानरः । [N

३९] पान[8]-भूमौ हरि-श्रेष्ठः सीता-सं-दर्शनोत्सुकः ॥२॥ [N

न रामेण वि-युक्ता[9] सा स्वप्तुम् अर्हति[10] मैथिली ।

३५] न भोक्तुं नाऽप्यलंकर्तुं कुतः पानं निषेवितुम् ॥३॥ [२पू

नाऽन्यं नरम् उप-स्थातुं वासव-प्रतिमोऽपि[11] यः । [२उ

३६] न हि राम-समः कश्चिद् विद्यते त्रिदशेष्व्[12] अपि ॥४॥ N

इति संचिंत्य हनुमान् बुद्ध्या[13] स[13] कपि-कुञ्जरः ।[14]

N] रावणाऽन्तःपुरं भूयो विचेतुम् उप-चक्रमे ॥५॥ [N

---

१. रा च ब म ल१ ल२ अ-ततस्तां। २. रा च ब म प्र ल१ ल२ अ-अवधूय। ३. रा ब म प्र ल१ ल२-च बुद्धिमान् । च-०मुपस्थितः ?। अ-समुत्थिताम्।

४. अतः परमधिकः पाठः —

आ—न प्राप्तं पद्मगन्धं च मुखे तस्याः पुनः पुनः।

५. फ-चापरां चिन्तां ॥

६. च फ अ-निश्चित्य । ७. च फ अ-तु। ८. रा च अ-०भूमिं ॥

९. अ-विरक्ता। १०. फ अ-०प्तुमिच्छति ॥

११. फ रा ब म प्र च ल१ ल२ अ-०तिमो हि सः । १२ अ-०शैरपि ॥

१३. रा-सुबुध्या। च ब म प्र ल१ ल२ अ-स्वबुध्या।

१४. अतः परमधिकः पाठः-

ब म प्र ल१ ल२ अ—अन्येयमिति निश्चित्य भूयस्तत्र तु वानरः।
पानभूमिं हरिश्रेष्ठः सीतासंदर्शनोत्सुकः ॥

क्रीडितेनाऽपराः[1] क्रांताः[1] क्रांता[2] गीतेन चाऽपराः[2] ।
N] नृत्येन[3] चाऽपराः क्रांताः पान-निद्राऽऽहताः पराः ॥६॥ [४
अंगनानां सहस्रेण भूषितेन वि-भूषणैः[4] ।
N] उप-संलाप[5]-शीलेन स्मित-युक्ता[6]ऽभि-भाषिणा ॥७॥ [६
देश-काल-वि-भक्तेन युक्त[6]-वाक्याऽभि-धायिना[7] ।
N] रतोप-रत-संयुतं राक्षसेन्द्रं[8] ददर्श सः[9] ॥८॥ [७
तासां मध्ये महा-बाहुः शुशुभे राक्षसेश्वरः ।
२७] गोष्ठे महति सुप्तानां गवां मध्ये यथा वृषः ॥९॥ [८
स राक्षसेन्द्रः शुशुभे ताभिः परि-वृतस् तदा[10] ।
२८] करेणुभिर् यथा[11]ऽरण्ये [12]परि-कीर्णो महा-द्विपः[13] ॥१०॥ [९
सर्व-कामैर् [14]उपेतां च पान-भूमिं महाऽऽत्मनः ।
४०] ददर्श कपि-शार्दूलस् तस्य रक्षः-पतेर् [15]गृहे ॥११॥ [१०
मृगाणां महिषाणां[16] च वराहाणां च भाग-शः ।
४१] तत्र न्यस्तानि[17] मांसानि पान-भूमौ ददर्श सः ॥१२॥ [११

---

१. च—०तेन पराक्रान्ता । २. फ—क्रान्ता शीतेन चा० । आ च—पानेन विहिता परा । ३. फ—कत्थेन ॥

४. रा च ब म ल१ ल२ अ—विभूषितं । प्र—विभूषितां । ५. अ—उपशीलेन सततं । ६. आ—युक्ता गीतार्थभाषिणा । फ—युक्तशीलाभि० । रा च ब म ल१ ल२—युक्तगीताभि-भाषिणा । प्र—युक्तं गीताभि० ॥

७. आ—०भिधायिनी । रा ब म प्र ल१—०भिभाषिणा । ८. आ—तते विरतिसं० । रा च ब म प्र—रतावरतसं० । ल१ ल२—रतावरतसंयु० । ९ आ—ददर्श हरियूथपः ॥

१०. फ—परिवृतः स्वयम् । अ—परिवृतः स्वपन् । ११. च—०र्यथा रम्यः । १२. म—परिपूर्णो । १३. फ—महागजः । अ—यथा द्विपः ॥

१४. च—०मै कृपतश्च ? । १५. फ अ—०तेर्गृहम् ॥

१६. रा ब म प्र ल२—महिषीणां । च—महिषणी ? । १७. ल१—हस्तानि ॥

रौक्मेषु च[1] विशालेषु भाजनेष्व्[2] अर्ध-भक्षितान् ।
४२] ददर्श कपि-शार्दूलो मयूरान् कुक्कुटांस् तथा ॥१३॥ [१२
वराह[3]-वध्रान्[3] सु-कृतान्[3] दध्ना[4] सौवर्चलै[4]ऽन्वितान् ।
N] अन्यान्[5] मृग-मयूरांश् च हनूमान्[6] अन्व्-अवैक्षत[6] ॥१४॥ [१३
मकरान्[7] विविधान् सिद्धांश् चकोरान्[8] अर्ध-भक्षितान् ।
N] माहिषां[9]श्चैव शूल्यां[5]श्च छागांश्च कृतनिश्चि (?ष्ठ) तान्[10] १५ [१४पू
४३उ] लेह्यम् उच्चाऽवचं पेयं फलानि विविधानि च । [१४उ
४४पू] राग-खाण्डव-संयुक्तान्[11] अव-लेह्यान् ददर्श स[12]: ॥१६॥ [N
हार-नूपुर-केयूरैर्[13] अप[13]-विद्धैर् महा-धनैः । [१५उ
N] पान-भोजन[14]-विक्षिप्तैः फलैश् च वि-विधैर् अपि ॥१७॥
कृत-पुष्पोपहारा[15] भूर्[15] अधिकं पुष्यति श्रियम्[16] । [१६
N] दीप्तैश्[17] च कलधौतैश् च विन्यस्तैः[18] शयना[19]ऽऽसनैः ॥१८॥

---

१. फ रा ब म प्र ल$_1$ ल$_2$ अ–तु । २. च–र्धलक्षितान् । प्र–०नेषु बुभुक्षि० । ल$_1$–नेष्ववभ० ॥

३. फ–वराहे दध्ना सु० । रा ब म प्र ल$_1$ ल$_2$–०हमृगसंयुक्तान् । च–वराहमृगान् सु० । अ–वाराहवृद्धान् सु० । ४. रा ब म प्र ल$_1$ ल$_2$–दधिसौव० । अ आ–०र्चलायुताम् । ५. फ–स्थूलान् । रा म ल$_2$ अ–शून्यान् । च ब ल$_1$–शूल्यान् । ६. रा म च–हनुमान् प्लवगर्षभः । ब प्र–ददर्श कपिकुञ्जरः ॥

७. फ–कुररान् । रा ब म प्र ल$_1$ ल$_2$–कुकरान् । च–कुकलान् । ८ ब–०रानवभक्षि० । ९. फ–०षानेकशूलाश्च । आ–०षानेकशू० । च–०षांश्चैकशू० । प्र–०षांश्चैव कू० । अ–०व सूलांश्च । १०. फ आ–कृतनिश्चितात् । रा ब च म प्र ल$_1$ ल$_2$ अ–०निश्चयः ॥

११. आ फ अ–रागखांडवयुक्तांश्च विलीढान् स । च–०नवलेह्यं । १२. आ–ह ।

१३. रा–०यूरैरुपवि० । अ–०यूरैरपि वि० । १४. रा च ब म ल$_2$ अ–पानभाजन० ॥

१५. आ–०राभूत् सुचिरं । रा म ल$_2$ अ–च्युतपु० । १६. फ च–श्रिया । रा ब–श्रियम् । प्र–त्वियम् । ल$_2$–श्रिया । १७. अ–प्रदीप्तैः । १८. रा च ब म–विन्यस्त० । १९. अ फ रा–शयनाशनैः । ल$_2$–०नासने । अ–शयनादिभिः ॥

पान-भूमिर्[1] विना वह्निं प्र-दीप्तेवोप-लक्ष्यते । [१७
N] बहु-प्रकारैर् वि-विधैर् वर-संस्कार-संस्कृतैः ॥१९॥
मांसैः[2] कुशलै[2]-संसिद्धैः पान-भूमि-गतैः[3] पृथक्[3] । [१८
४५] तथाऽम्ल-लवणोपेतैर्[4] वि-विधै राग-खाण्डवैः ॥२०॥ [१९पू
वासैश् च[6] स्वर्ण-माल्यैश्[6] च विविधैस् तैः पृथक् पृथक् ।
४६] समंताच्[7] छुशुभे[7] भूमिर्[8] माल्यैश्[8] च बहु-सर्ज्जितैः ॥२१॥ [२०
N] राजतेषु च कुंभेषु[9] जांबूनद-मयेषु च ।
४२पू] पानं[10]-श्रेष्ठं[10] तथा[11] भूरि ददर्श कपि[12]-यूथपः ॥२२॥ [२२
N] दिव्याः प्रसन्ना वि-विधाः सुरास् तत्र तथाऽऽसवान् ।
४४उ] शर्कराऽऽसव-माध्वीकान् पुष्पाऽऽसव-फलाऽऽसवान् २३[१९
सोऽपश्यच् छातं[13]-कौंभानि शीधोर्[14] मणि-मयानि च ।
४७] राजतानि च[15] मुख्यानि[16] भाजनानि महा-कपिः ॥२४॥ [२३
हिरण्मयैश् च करकैर्[17] भाजनैः स्फाटिकैर्[18] अपि ।
४८] जांबूनद-मयैश् चाऽन्यैः कलशैर्[19] अपि सं-वृतां[20]॥२५॥ [२१

---

१. आ—पानभूमिं ॥

२. रा च ब म प्र ल$_1$ ल$_2$—मत्स्यैः कुशलिभिः सिद्धैः । अ—मांसैः कुशलिभिः सिद्धै । ३. फ—०गतैरपि । ल$_1$—०भिगतः पृ० । ४. फ—०णोत्वंसै० । ५. फ—रागषांडवैः । रा ब म प्र ल$_2$—०रासवैस्तथा । ल$_2$—०राक्षसैस्तथा ॥

६. फ रा च ब म प्र ल$_1$ ल$_2$ अ—वासैश्चूर्णैश्च मा० । ७. आ रा च ब म प्र ल$_1$ ल$_2$—संतता शुशुभे । ८. रा ब म प्र ल$_1$ ल$_2$—भूमिः पुष्पमाल्यैश्च सज्जितैः । च—भूमिर्बहुमाल्यैश्च सज्जितैः । अ—भूमिं पुष्प० ॥

९. अ—पात्रेषु । १०. अ—पानं श्रेष्ठं । ११. फ—रवौ । १२. फ रा च ब म प्र ल$_1$ ल$_2$—हरियूथपः ॥

१३. च—०च्छातकुंभानि । अ—०च्छीतकुंभानि । १४. फ—श्रीमन्मणिम० । रा ब म प्र ल$_1$—कपिर्मणिम० । ल$_2$—साधुर्मणि० । अ—दिव्यसीधुभृतानि । १५. ल$_2$—स । १६. रा ब म प्र ल$_1$—रम्याणि । च ल$_2$—पुष्पाणि ॥

१७. रा च ब म प्र ल$_1$ ल$_2$—विविधैर्० । १८. रा ब ल$_1$—राजतैर् । प्र—विविधैर् । १९. फ रा च ब म प्र ल$_1$ ल$_2$—करकैरभि० । अ—करकैरपि । २०. फ—संवृतैः । प्र—संवृतान् ॥

४९उ] क्वचिद् अर्धाऽवशेषाणि क्वचित्[1] पीतानि सर्वशः ।
५०पू] क्वचिन् नैव[2] प्र-पीतानि[2] पानानि[3] प्रेक्षते स्म सः[3] ॥२६॥[4] [२४
५२पू] क्वचित् संपृक्त-माल्यानि [5]भाजनान्य् अचलानि[5] च । [२६उ
शय[6]नान्य् अत्र[6] नारीणां शून्यानि[7] वि-विधानि च ॥२७॥[8]
N] परस्परं समा-श्लिष्य काश्चित्[9] सुप्ता वरा[9]ऽङ्गनाः । [२७
काश्चिद्[10] अन्योऽन्य-वस्त्राऽन्तम् अप-कृ[11]ष्योप-गृह्य च ।
N] अभि-सृत्या[12]ऽबलाः सुप्ता निद्रा-बले[13]-परा-जिताः ॥२८॥ [२८

---

१. आ—पश्यन्वै कपिकुञ्जरः । अ—क्वचित्पूर्णा० । २. आ—क्वचित्प्र-भिन्नैः करकैः। फ—क्वचित्प्रभग्नैः करकैः । रा—क्वचिन्नैव प्रदीपानि । ३. आ—क्वचिदारोपितैर्घटैः । च अ—पानानि स विलोकयन् । म—पानान्याप्रेक्षते स्म सः । ल₂—पानानि स व्यलोकयत् । ४. अतः परमधिकः पाठः—

च ल₂—क्वचिद् भक्ष्यांश्च विविधान्* पानानि च क्वचित्क्वचित् † ।
च ल₂—क्वचिदन्नावशेषाणि अपश्यत्-कपि-कुञ्जरः ‡ ।
च ल म प्र ल₁ ल₂—क्वचित्प्रभिन्नैः करकैः क्वचिदारोपितैर्घटैः ॥

५. फ—फलानि विविधानि । रा च ब म प्र ल₁ ल₂—फलानि च जलानि । ६. अ—शयनानि तु । ७. फ—शुभानि । रा च ब म प्र ल₁—सुखानि । ८. ल₂—नास्ति ।

रा—अतः परमधिकः पाठः—

क्वचिदर्धावशेषाणि सोपश्यत्कपिकुञ्जरः ।
क्वचित्प्रभिन्नैः करकैः क्वचिदारोपितैर्घटैः ॥
क्वचित्संपृक्तमाल्यानि फलानि च जलानि च ।

९. रा ब म प्र ल₁—०प्ता वर-स्त्रियः । च—काचित्सुप्ता वरांगना । १०. फ रा च ब म प्र ल₁ ल₂ अ—क्वचिद्० । ११. आ—०स्त्रान्तमव-गूह्यो० । रा च ब म प्र ल₁ ल₂—स्त्रान्तमपकृष्याच० । १२. च ब म प्र ल₁—०त्याबला । १३. आ रा च ब म प्र ल₁ ल₂ अ—निद्रावशपराजिता ॥

---

* अ—क्वचित् क्षीराश्च विविधा । † ब म प्र ल₁—पानानि विवि-धानि च । अ—नान्यानि च क्वचित्क्वचित् । ‡ ब प्र म ल₁—क्वचिदर्धा-वशेषाणि सोपश्यत्कपिकुंजरः । अ—क्वचिदर्धावशेषाणि पश्यं स कपिकुंजरः ।

तासाम् उच्छ्वास-वातेन वस्त्र-माल्यं[1] च गात्र-गम्[2] ।
N] नाऽत्यर्थं[3] स्पंदते चित्रं प्राऽऽप्य मंदम् इवाऽनलम् ॥२९॥ [२९
९३उ] चन्दनस्य च दिव्यस्य शीधोर् मधु-रसस्य च ।
N] कर्पूरस्य तथाऽग्र्यस्य[4] पुष्पस्य वि-विधस्य च ॥३०॥ [३०पू
वि-विधस्यांऽगं[5]-रागस्य वाससो[6] वि-विधस्य च[6] ।[7] [N
N] बभूव मारुतस् तत्र गन्धं वि-विधम् उद् वहन् ॥३१॥ [३०उ
माल्यानां[8] च चन्दनानां[9] धूपानां च[10] स मूर्छितः[10] ।
N] प्र-ववौ सुरभिर्[11] गंधो[11] विमाने पुष्पके तदा[12] ॥३२॥ [३१
श्यामाऽव-दातास् तत्राऽन्याः[13] काश्चित्[14] कृष्ण-वरांगनाः[14] ।
N] काश्चित् काञ्चन-वर्णाऽऽभाः[15] प्रमदा राक्षसाऽऽलये॥३३॥[३२
तासां निद्रा-वशत्वाच्[16] च मर्दनेन[16] च[17] मूर्च्छितम्[18] ।
N] पद्मिनीनां प्र-सुप्तानां रूपम् आसीद् यथैव[19] तत्[20] ॥३४॥ [३३

---

१. ब म प्र ल$_{1}$–वस्त्रं माल्यं । २. आ फ रा ब म प्र अ–गात्रजम् । ल$_{1}$ ल$_{2}$–वस्त्रगम् । ब–सात्रगम् । ३. फ–अंगना ॥

४. रा च ब म प्र ल$_{1}$ ल$_{2}$–तथोग्रस्य । अ आ–तथाग्रस्य ॥

५. फ रा च अ–त्रिविधस्य च माल्यस्य । ६. फ रा अ–ग्रथितस्य शुभैः कैः । च–ग्रथितैश्च शुभैः कैः । ७. ब म प्र ल$_{1}$ ल$_{2}$–नास्ति ॥

८. आ रा च ब म प्र ल$_{1}$ ल$_{2}$ अ–स्नानानां । ९. ल$_{2}$–विविधानां । १०. फ–संविमूर्च्छितः । च–स च मू० । ब–च समन्वितः । अ–चापि मूर्छितं । ११. अ–सुरभिर्वायुः । १२. फ–स्थिते । ब प्र ल$_{1}$–तथा ॥

१३. फ रा च–०दाताः सुप्ताऽन्याः । ब म प्र ल$_{1}$ ल$_{2}$–०दाता सुप्तान्या । अ–०दाता शुक्लान्या । १४. ब म प ल$_{1}$ ल$_{2}$ अ–काश्चित्कृष्णा वरांगना । १५. रा च ब म प्र ल$_{1}$ ल$_{2}$ अ–०नवर्णाग्र्यः ॥

१६. अ–निद्रावशाद्गन्धचन्दनेन । १७. प्र–सु । १८. फ–मूर्च्छिताः । १९. आ प्र अ–०मासीत्तथैव । २०. फ–तु ॥

५४उ] एवं सर्वम् अ-शेषेण रावणाऽ[1]न्तः-पुरं कपिः ।
५५पू] [2]ददर्श [2]स महा-तेजा [3]न ददर्श च [3]जानकीम् ॥३६॥ [३४
५१पू] फलानि [4]चाऽर्ध-शेषाणि माल्यानि वि-विधानि च ।
५२उ] मृदितान्य् अप-[5]विद्धानि गंधवन्ति ददर्श सः ॥३७॥ [6][N
N] बहूंश् च वि-विधान् [7]भक्षान् फलानि विविधानि च ।
५३पू] स्रजश् च विविधाश् चित्राः प्रवि-[8]कीर्णास् ततस्ततः॥३८॥[N
N] निरीक्षमाणश् च ततस् ताः [9]स्त्रियः [9]स महा-कपिः ।
५५उ] जगाम महतीं चिंतां धर्म-[10]साध्वस-शंकितः ॥३९॥ [३५
N] [11]स [11]बुद्ध्या चिन्तयामास कपिर् बुद्धिमतां वरः । [N
[12]पर-दाराऽव-रोधस्य प्र-सुप्तस्य निर्-ईक्षणम् ।
५६] इदं खलु ममाऽत्यर्थं धर्म-लोपं करिष्यति ॥४०॥ [३६
न हि मे पर-दाराणां दृष्टिर् विषय-वर्तिनी ।
५७] [13]अयं [13]चाऽद्य मया दृष्टः पर-[14]दार-परि-ग्रहः ॥४१॥ [३७

---

१ ब०णान्तःपुरे । २. ल२ अ—स ददर्श । प्र—ददर्श सु । ३. रा ब म प्र ल१ ल२—मैथिलीं न ददर्श च । अ च—न ददर्श स जा० । ल२—मैथिलीं न ददर्श सः ॥

४. फ—चावशे० । अ—त्रा विशे० । ५. फ—मृदितान्यपि विद्धानि । ६. रा ब म प्र ल१ ल२—नास्ति ॥

७. ब म प्र ल१ ल२—भक्ष्यान् । ८. रा च ब म प्र ल१ ल२ अ—प्रकीर्णाश्च ॥

९. च—स्त्रियश्च । १०. रा ब म प्र ल१—धर्मविध्वंस० ॥

११. च—सु० । म ल२ अ—स्व० । १२. ब—पुरदा० ॥

१३. फ रा च ब म प्र ल२ अ—अयमद्य । ल१—अथ सोद्य । १४. फ रा—परदाराप० ॥

तस्य प्रादुर् अभूच् चिंता पुनर् एव मनस्विनः ।[1]
५८] निश्चितैकान्तं[2]-चित्तस्य कार्याऽकार्य[3]-प्रदर्शिनः[3] ॥४२॥[4] [३८
कामं दृष्टा मया सर्वा वि-वस्त्रा रावणं[5]-स्त्रियः ।[4]
५९] न तु मे मनसः किञ्चिद् वैकृत्यम्[6] उप-जायते ॥४३॥ [३९
मनो हि हेतुः[7] सर्वेषाम् इन्द्रियाणां प्र[8]-वर्तने ।
६०] शुभाऽशुभास्व् अवस्थासु तच्[9] च मे सु-व्यवस्थितम् ॥४४॥[४०
नाऽन्यत्र हि मया शक्यां[10] वैदेही परि-मार्गितुम् ।
६१] स्त्रियो हि[11] स्त्रीषु[11] दृश्यन्ते सदा[12] हि[12] परि-मार्गणे ॥४५॥ [४१
यस्य सत्त्वस्य या योनिस् तस्यां स परि-मार्ग्यते ।[13]
६२] न शक्या[14] प्रमदा नष्टा[15] मृगीषु परि-मार्गितुम् ॥४६॥ [४२
तद् इदं मार्गितं तावच्[16] छुद्धेन मनसा मया ।
६३] रावणाऽन्तःपुरं सर्वं दृश्यते न च जानकी ॥४७॥ [४३
देव-गन्धर्व[17]-कन्याश् च नाग[18]-कन्याश् च वीर्यवान्[19] ।
६४] अवेक्षमाणो[20] हनुमान् न चाऽपश्यत्[21] तु जानकीम् ॥४८॥ [४४

---

१. रा–नास्ति । २. फ–निष्ठितैः कार्यचि० । च–तिष्ठनकान्त० । ३. आ–कार्यप्रदर्शनश्च यः । च–कार्यै निश्चयप्रदर्शिनाः । ४. रा ब म प्र ल$_1$ ल$_2$–नास्ति ॥

५. फ च अ–विवस्त्राभरणाः स्त्रियः । ६ रा च ब म प्र ल$_1$ ल$_2$–०चिद्वैरूप्यमु० । अ–वैक्लव्यमु० ॥

७. रा–सेतुः । ८. रा च ल$_1$ ल$_2$–प्रवर्तते । ९. फ आ–न च । च रा ब म प्र ल$_1$ ल$_2$–तद्धि ॥

१०. च–शक्यं वैदेहीं । ११. च–गृहेषु । १२. च–सदैव ॥

१३. रा ब म प्र ल$_1$ ल$_2$–नास्ति । १४. आ–शक्यं । १५. अ–दृश्य ? ॥

१६. रा अ–सर्वं ॥

१७. फ–देवदानवक० । १८. अ–यक्षक० । १९. अ–पन्नगाः । २०. आ फ च प्र–अवेक्ष्य० । रा–अवीक्ष० । २१. आ–०न्नचादृश्यत । च ब म ल$_1$ ल$_2$ अ–०पश्यत । प्र–वापश्यत ।

ताम् अ-पश्यन् कपिस्[1] तत्र पश्यंश्[2] चाऽप्य् अपराः स्त्रियः[2] ।
N] अप-क्रम्य ततो दीनः सं-ध्यातुम् उप[3]-चक्रमे ॥४९॥ [४६

भोज्यैः[4] स[4] पौरोगव-शास्त्र-दृष्टैः
पानैर् उदारैश् च वि-रा[5]जमानम् ।
दृष्ट्वा प्र-सुप्तं प्रमदा-जनं तं[6]
N] प्र-हृष्ट-रोमा प्लवगो बभूव ॥५०॥ [N

तम् उग्र-रूपं गिरि-काञ्च[7]नोपमं
प्र-हृष्टम् उत्सिक्तम् अहीर्न[8]-चारिणम् ।
रहो-गतं रावणम् उग्र-दर्शनं[9]
N] ददर्श घोरं हनुमान् महा-कपिः ॥५१॥[10] [N

स शर्वरीं प्रेक्ष्य बहु-प्र[11]याताम्
अ-पश्यमानो जनकाऽऽत्म-जां च ।
स शीघ्र-कारी मतिमान् वि-मानाद्
N] अवाऽऽरुरोह त्वरितोऽथ तस्मात् ॥५२॥ [N

इ[12]त्यार्षे रामायणे सुन्दर-काण्डे सीताऽन्वेषणे पान-भूमि-व[13]र्णनं नाम षष्ठः सर्गः ॥६॥

---

१. रा च ब म प्र ल$_1$ ल$_2$—क्वचित्तत्र । २. रा—पश्यन्नपि वरस्त्रियः । च ब म प्र ल$_1$ ल$_2$—०श्यन्नपि पर० । ३. फ—संध्यानमु० । ल$_1$—संध्यान्तमु० । ल$_2$—संध्यातमु० ॥

४. रा च ब म प्र ल$_1$ अ—भोज्यैश्च । ल$_2$—भोगैश्च० । ५. आ—विरम्यमानः । च—विरम्यमाणां । रा ब म प्र ल$_1$—महासुगन्धैः । फ—विराजमानः । ल$_2$—मनःप्रियैस्तैः । ६. आ—च ॥

७. रा च ब म प्र ल$_2$ ल$_2$ अ—सजलाम्बुदोपमम् । ८. आ—०क्रमहीव चा० । रा च—क्तमभीष्टचा० । ब ल$_1$ ल$_2$—क्तमभीतचा० ।

९. आ—अतः परमधिकः पाठः—दृष्ट्वा प्रसुप्तं प्रमदाजनं तम् ।

१०. आ—अतः परमधिकः पाठः—प्रहृष्टरोमा प्लवगो बभूव ।

११. फ—बहुप्रभाताम् । प्र—बहुप्रयत्ताम् ॥

१२. अ इति श्री । १३. ब प्र ल$_1$ ल$_2$—रावणपानभू० । फ अ—०भूमिवर्णनो० ॥

स तस्य धीरो[1] भवनस्य वानरो
लता-गृहांश् चित्र[2]-गृहान् तदाऽन्तिके ।
जगाम सीतां[3] प्रति दर्शनोत्सुको[4]
६५] न चैव तां पश्यति चारु-दर्शनाम् ॥१॥ [१
स चिन्तयामास ततो[5] महा-कपिः
प्रियाम् अ-पश्यन् रघु-नन्दनस्य ।
ध्रुवं न सीता[6] ध्रियते[7] यथा[8] न मे
६६] वि-चिन्वतो[9] दर्शनम् एति मैथिली ॥२॥ [२
सा राक्षसानां प्र-वरेण[10] बाला
स्व[11]-शील-संरक्षण-तत्परा सती ।
अनेन[12] सद्यः[13] प्रति-रौद्र-कर्मणा[14]
६७] हुता भवेद्[15] आर्य-पथे व्यव-स्थिता[16] ॥३॥ [३

---

१. फ च रा ब म प्र ल ल$_1$ ल$_2$ अ-वीरो । २. अ-त्रेत्रगृ० । फ रा च ब म प्र ल$_2$ ल$_1$ अ-०त्रगृहा-ञ्शिशागृहान् ० । ३. अ-सीतापरि ०। ४ प्र-दर्शनोत्सुकं ॥

५. फ च रा ब म प्र ल$_1$ ल$_2$ अ-महाकपिस्तदा । ६. आ-शीता । ७. रा ब म प्र ल$_1$ ल$_2$ प्रयता । ८. रा च ब म प्र ल$_1$ ल$_2$ अ-तथा । ९. आ ल$_2$-विचि-न्वितो ॥

१०. फ-प्रबलेन । ११. फ रा ब च म प्र ल$_1$ ल$_2$ अ-सुशील । १२. ब-अद्यैत्र । ल$_1$-अद्यापि । १३. रा म ल$_2$-साद्य । १४. अ-परि रौ० १५. आ-न चेदा० । १६. फ-वरे स्थिता । रा च ब म प्र ल$_1$ ल$_2$-वरा स्थिता । अ-परिस्थिता ।

विरूप-रूपा वि-कृता वि-वर्चसो[1]
महाऽऽनना दीर्घ-विरूप-दर्शनाः ।
समीक्ष्य वां[2] राक्षस-राज-योषितो
६८] भयाद् वि-पन्ना जनकेश्वराऽऽत्मजा ॥४॥ [४
सीतां[3]म् अ-दृष्ट्वा त्व[4]नवाप्य पौरुषं
वि-हृत्य कालं सह वानरैश् चिरम् ।
न मेऽस्ति सुग्रीव-समीप-गा मतिः[5]
६९] स[6] तीक्ष्ण-दण्डो बलवान् हि वानरः ॥५॥ [५
सर्ग१५] दृष्टम् अन्तःपुरं सर्वं सर्वा[7] राक्षस-योषितः ।
१] न सीता दृश्यते साध्वी वृथा जातः परि-श्रमः ॥६॥ [६
किं नु[8] मां वानराः सर्वे गतं वक्ष्यन्ति मानिनः[9] ।
२] गत्वा तत्र[10] त्वया वीर किं कृतं[11] पवनाऽऽत्मज ॥७॥ [७पू
३पू] अ-दृष्ट्वा किं प्र-वक्ष्यामि ताम्[12] अहं[12] जनकाऽऽत्मजाम् । [७उ
४उ] ध्रुवं प्रायमुपे[13] (१पै) ष्यन्ति कालस्य[14] वि-निवर्तने[15] ॥८॥ [८

---

१. प्र–विवक्षसो । २. रा च ब म प्र $ल_1$ $ल_2$–वै ॥

३. आ–शीताम्० । ४. फ–ह्यन० । रा च ब म प्र $ल_1$ $ल_2$ अ–प्यन० । ५. फ रा च ब म प्र $ल_1$ $ल_2$ अ–गतिः । ६. फ रा च ब म प्र $ल_1$ $ल_2$ अ–सु ॥

७. अ–दृष्टा ॥

८. च ब म प्र $ल_1$ $ल_2$ अ–किन्तु । ९. अ आ–मामितः । $ल_2$–वानराः । १०. प्र–ततस्तत्र । ११. कृत्वा ॥

१२. च ब म $ल_2$–तानहं । १३. रा म प्र $ल_1$–प्राप्तमुपेक्षन्ते । ब–प्राप्तमुपेक्ष्यन्ति । $ल_2$- प्राप्तमुपेक्षन्ति । १४. रा च ब म प्र $ल_1$ $ल_2$ अ–कालश्च । १५. फ अ–व्यतिवर्तते । रा च ब म प्र $ल_1$ $ल_2$–परिवर्तते ।

३उ] किं मां वक्ष्यन्ति वृद्धास् तु जांबवान् अंगदस् तदा[१] ।
४पू] गतं[३] पारं[२] समुद्रस्य वानरांश्[४] च[४] समा-गताः ॥९॥ [९
७पू] भूयस् तावद्[५] वि-चेष्यामि न यत्र वि-चयः[६] कृतः । [१२
अ-निर्वेदः श्रियो मूलम् अ-निर्वेदः परं सुखम् ॥१०॥
८] अ-निर्वेदो हि सततं सर्वार्थेष्व्[७] अनु-वर्तकः । [१०
करोति सफलं सर्वं जीवितं[९] जीवितेष्व्[१०] अपि ॥११॥
६] तस्माद् अ-निर्वेद-करं यत्नं[८] चेष्टेऽहम्[११] उत्तमम् । [११
N] अ-दृष्टां[१३] हि वि-चेष्यामि[१४] पुरीं[१५] रावण-[१६]पालिताम् ॥१२॥
८पू] आपान-शाला वि-चितास्[१७] तथा[१७] पुष्प-गृहाणि च । [१२
N] भूमी-गृहाश्[१८] चैत्य[१८]-गृहा गृहा[१९]ऽति-गृहका अपि । [१४उ
निष्कुटांऽतर-रथ्याश् च विमानानि च सर्वशः[२०] ॥१३॥ [१३उ
९] उत्पतन् निपतंश्[२१] चाऽपि[२१] तिष्ठन्[२२] गच्छन्[२२] पुनः पुनः ।

---

१. फ–वा । २. रा च ब म फ प्र ल$_1$ ल$_2$ अ–०तथा । ३. रा ल$_2$–गन्तुं । ४. रा च ब म प्र ल$_2$–वानरा वा ॥

५. फ–भूयश्चान्वे० । रा च ब म ल$_1$ ल$_2$–भूयस्तां च । ६. आ–निचयः ॥

७. फ–०र्थेष्वनिवर्तकम् । रा–०र्थेष्वनव० । प्र ब–० र्थेषु निव० । अ–०र्थेषु प्रवर्तकः । ८. फ–यत्नो । रा च ब म प्र ल$_1$ ल$_2$ अ–जंतोः । ९. रा–जीविते । १०. फ–च त्यजेद् । अ–ह्यत्यजेष्व् ॥

११. अ–०वैदयिकं । १२. रा च ब म प्र ल$_1$ ल$_2$–चेष्टेयम्० ॥

१३. रा–अदृष्टो । १४. फ–निवेक्ष्यामि । १५. फ रा ब म प्र ल$_1$ ल$_2$ अ–दिशं । १६. फ अ–वरुणपा० । १७. आ–विचिता तथा । रा च ब म प्र ल$_1$ ल$_2$–विविधास्त० । १८.फ–भूमेर्गृहाः सैन्यगृहा ॥

१९.–फ गृहाणि गृहकान्यपि । च–गृहाश्च गृहका अपि । अ–गृहाऽतिगृहा अपि । २०. ब म ल$_1$ ल$_2$ नास्ति । २१. रा च ब म प्र ल$_1$ ल$_2$ अ–०तान्निष्पतंश्चापि । २२. रा च ब म प्र ल$_1$ ल$_2$ प्रतिगच्छन् ॥

अपा[1]-वृण्वंश् च द्वाराणि कपाटान्[2] अव-घाटयन्[2] ॥१४॥ [१९
१०] प्र-विशन्[3] निष्-पतंश्[3] चाऽपि प्र-पतन्न् उत्-पतन्न्[4] अपि।[4क]
N] अल्पम् अप्य् अव-काशं स[5] वि-चचार महा-कपिः ॥१५॥ [१६
चतुर्-अंगुल-मात्रोऽपि नाऽव-काशः स[6] विद्यते ।
११] रावणाऽन्तःपुरे तस्मिन् यं[7] कपिर् न[7] जगाम सः ॥१६॥ [१७
प्राकाराऽन्तर-रथ्याश् च वेदिकाश्[8] चैत्य-संश्रयाः ।
१३] श्वभ्रांश्[9] च पुष्करिण्यश् च सर्वं तेनाऽव-लोकितम् ॥१७॥ [१८
राक्षस्यो विविधाऽऽकाराः स्व-रूपा वि-कृतांश्[10] च याः।
१४] दृष्टा हनुमता तत्र न त्वेव[11] जनकाऽऽत्मजा[12] [13] ॥१८॥ [१९
रूपेणाऽप्रति-मा लोके सिद्ध[14]-विद्याधर-स्त्रियः[14] [15]।
१५] दृष्टा हनुमता तत्र न त्वेव[16] दशरथ-स्नुषा[17] ॥१९॥ [२०
नाग-कन्या वराऽऽरोहाः पूर्ण-चन्द्र-निभाऽऽननाः ।[18]
N] दृष्टा हनुमता तत्र न साऽदृश्यत[19] जानकी[19] ॥२०॥[20] [२१

---

१. आ–अपावृन्तश्च । रा ब म प्र ल$_1$ ल$_2$–आपानभूमि० । २. आ–०टान्यवघाट्य तु । फ–०टान्येव पाट० । रा ब म प्र–०टान्यवपाट० । ल$_1$ ल$_2$ अ–कवाटान्यवपा० ॥

३. आ–प्रविसन्निपतंश्चापि । अ–प्रविशन्नुत्प० । ४. फ अ–तन्निपत० । ४क. ब म ल$_1$ ल$_2$–नास्ति ॥

५. रा च ब म प्र ल$_1$ ल$_2$–च । फ–श्च । ६ फ ब म प्र ल$_1$ ल$_2$–स्म । ७. रा–वानरो न । च–स कपिर्निर् । अ–यत्र कपिर्न । ब म प्र ल$_1$ ल$_2$–वानरो निर् ॥

८. रा–०काश्चैत्य । च–०काश्चैत्य संश्रयान् ॥

९. आ–शुभ्राश्च । फ अ–शुभाश्च । च–श्वभ्रांश्च ॥

१०. रा च ब म प्र ल$_1$ ल$_2$ अ–विविधाश् । ११. फ–चैव । रा च अ–सा । १२. रा च–दशरथस्नुषा । १३. ब म ल$_1$ ल$_2$–नास्ति ।

१४. फ अ–देवगन्धर्वयोषितः । १५. रा ब म ल$_1$ ल$_2$–नास्ति । १६. आ अ च–सा । १७. रा ब म ल$_1$ ल$_2$–नास्ति ॥

१८. ब ल$_1$ ल$_2$–नास्ति । १९. फ च म अ–सा जनकनन्दिनी । २०. रा ब ल$_1$ ल$_2$–नास्ति ॥

प-मथ्य[1] राक्षसेन्द्रेण देव-कन्या[2] बलाद्[3] हृता[3]: ।[4]
१६] दृष्टा हनुमता तत्र न सा जनक[5]-नन्दिनी ॥२१॥ [२२
सोऽपश्यंस्[7] तां महा-बाहु[8]: पश्यंश्[9] चाऽन्या[9] वर-स्त्रियः ।
१७] वि-षसाद[10] महा-तेजा हनुमान् मारुताऽऽत्मज[11]: ॥२२॥ [२३
उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च ।[12]
N] व्यर्थं[13] वीक्ष्याऽनिल-सुतश् चिंतां पुनर् उपाऽऽगमत्[14] ॥२३॥[15] [२४
१८पू] अव-तीर्य विमानाऽग्रात्[16] हनुमान् मारुताऽऽत्मज[17]: ।[18]
चिंतां[19] च स जगामाऽऽशु[19] शोकोप-हत-चेतन[20]: ॥२४॥ [२८
ध्यात्वा क्षणं ततो भूयो वि-चेतुम् उप-चक्रमे ।
N] हृदि कृत्वा प्र-यत्नं[21] तु[21] प्र-पन्नं[22] भजते विधिः ॥२८॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमच्-चिन्ता-
नाम सप्तमः सर्गः[23] ॥७॥

———

१. फ—प्रमदा । २. रा—राजकन्या । ३. आ—बलोद्धृताः । ४. ब म ल$_1$ ल$_2$—नास्ति । ५. अ—दशरथस्नुषा । ६. फ च—नास्ति ॥

७. रा च ब म प्र ल$_1$ ल$_2$ अ—अपश्यंस्तां । ८. फ—महाप्राज्ञः । ९. रा ब म प्र ल$_1$—पश्यन्नन्या । १०. आ—निषसाद । ११. रा ब म प्र ल$_1$ ल$_2$ अ—पवनात्मजः ॥

१२. ब प्र ल$_1$—नास्ति । १३. म—व्यक्तं । १४. रा म—पुनरुपेयिवान् । १५. ब प्र ल$_1$—नास्ति ॥

१६. रा च म ल$_2$ अ—विमानाच्च । १७. रा च म ल$_2$—पवनात्मजः । १८. ब प्र ल$_1$—नास्ति । १९. फ—चिन्तामुपगतश्चाशु । रा च ब म प्र ल$_2$ अ—चिन्तामुपजगामाशु । ल$_1$—चिन्तामुपजगामासौ । २०. रा च—०हतचेतसः ॥

२१. रा च ब म प्र ल$_1$—प्रयत्नं च । ल$_2$—प्रयत्नं स । अ—पुनर्यत्नं । २२. फ रा च ब म प्र ल$_1$ ल$_2$—प्रयत्नं ॥

२३. फ रा ब म प्र ल$_1$ ल$_2$ अ—सर्गसमाप्तिर्न दृश्यते ॥

स विमानाच्[1] च निष्-क्रम्य प्राकारं[2] हरि-यूथ-पः ।
N] हनूमान् वेगवान् आसी[3](?या)द् यथा विद्युद् घनाद् घनम् ॥१॥ [१
रावणान्तः[4]-पुरं सर्वं वि-चित्य[5] स महा-कपिः । [२पू
न ददर्श[6] ततः[8] सीतां मैथिलीं जनकाऽऽत्म-जाम् ।
N] चन्द्र-लेखाम् इव नवां[7] व्योम्नि नीलाऽभ्र-संवृताम् ॥२॥ [N
तत्र प्रासाद-हर्म्येषु विमान-भवनेषु[9] च[9] ।
N] निष्कुटेषु[10] च[11] रम्येषु तथा[12] सं-जवनेषु[12] च ॥३॥ [N
अ-दृष्ट्वा जानकीं सीतां निरीक्ष्य[13] च[13] मुहुर्मुहुः । [२उ
N] नेह[14] सीतेति हनुमांश् चक्रे बुद्धिं[15] महा-कपिः ॥४॥ [N
कथं हि[16] सीता वैदेही मैथिली जनकाऽऽत्म-जा ।[17]
N] उप-तिष्ठेत[18] वि-वशा रावणं दुष्ट-चारिणम्[19] [20] ॥५॥ [६
नेह स्थास्यति वैदेही राम-पत्नी यशस्विनी ।

---

१. अ–विमानाद्विनि०। २. अ–प्राकाशं। ३. फ–सीतां ॥

४. आ–रावणस्य पुरं। ५. फ–विचिन्वन्। रा च अ–विचिंत्य। ६. रा ब म प्र ल$_1$ ल$_2$–तत्र ददर्श। ७. अ–परां ॥

८. फ–ततः। ९. प्र–०नेष्वथ ॥

१०. अ–निभृतेषु। ११. प्र ल$_1$–सु। १२. फ–तथा सजंव०। रा ब म प्र ल$_1$–तथा सालवनेषु। च ल$_2$–तथा सांजवनेषु। अ–जलजेषु वनेषु ॥

१३. फ–निरीक्षंश्च। १४. फ–नेयं। १५. च–बुद्धिर् ॥

१६. अ–च। १७. फ–नास्ति। १८. च–०तिष्ठेदमस्यै सा। ब–०तिष्ठेदमात्यै सा। म–०तिष्ठेदममला। प्र ल$_2$–०तिष्ठेद्मत्यै सा। ल$_2$–०तिष्ठेदमस्या सा। १९. ब प्र ल$_2$–दुष्टचारिणी। २०. फ–नास्ति ॥

N] अन्यं क्रमिष्ये[1] दुर्[2]-धर्षं काननं[3] प्रमदाऽऽलयम्[3क] ॥६॥ [N
वि-चिंत्य[4] लंकां यत्नेन हनूमान्[5] मारुताऽऽत्म-जः ।
२०] रजन्यां[6] याम-शेषायां[7] प्राकारे नि-पपात ह ॥७॥ [N
स च[8] हृष्टेन मनसा प्राकार-स्थो महा-कपिः ।
N] कोऽसौ[9] सीतेति हनुमांश् चिंतयामास वानरः ॥८॥[10] [N
भूयिष्ठं वि-चिता लंका रामस्याऽनु-रतां[11] प्रियाम्[12] ।[13]
N] न[14] च[14] पश्यामि वैदेहीं सीतां सर्वाऽग-शोभनाम् ॥९॥ [३
पल्वलानि तडागानि[15] सरांसि सरितस् तथा ।
N] नद्यश्[16] चोप-वनाऽन्ताश्[16] च दुर्गाणि धरणी-धराः ॥१०॥[17] [४पू
वि-चितं[18] बहुधा सर्वं न च[19] पश्यामि[19] जानकीम् । [४उ
२४] सीतां कमल-पत्राऽक्षीं रामस्य महिषीं प्रियाम् ॥११॥ [N
न सोऽस्ति[20] भूमिः[21] शैलो वा[21] सरितः काननानि वा[22] ।
२५] यत्र नाऽऽर्या[23] मया सीता मार्गिता चरता महीम् ॥१२॥[N

---

१. रा—क्रमिष्य० । अ—गामिष्ये । २. म—दुर्दर्शं । ३. रा च ब म प्र ल$_1$, ल$_2$—कांचनं । ३क. फ—नास्ति ॥

४. अ आ च—विचिन्त्य । ५. रा च ब म प्र ल$_1$, ल$_2$—हनुमान् । ६. रा ब म प्र ल$_1$, ल$_2$—राजधान्यामशे० । ७. फ—नास्ति ॥

८. रा च ब म प्र ल$_1$, ल$_2$—तु । ९. आ—नेह । १०. फ—नास्ति ॥

११. अ आ—रामस्य चरता । रा म—रामस्यानुगतां । १२. अ—प्रियं । १३. फ—नास्ति ॥

१४. रा म—नैव । च—नावप० । ब प्र ल$_1$, ल$_2$—नानुप० ॥

१५. रा—तडाकानि । १६. आ—नद्योतुप० । अ—नद्युपानं वना० । १७. फ—नास्ति ।

१८. फ रा च ब म प्र ल$_1$-ल$_2$ अ—विचिता वसुधा सर्वा । १९. म—पश्यामि च ।

२०. फ—चास्ति । रा च ब म प्र ल$_1$,ल$_2$ अ—सोऽस्ति । २१. फ रा च ब म प्र ल$_1$, ल$_2$ अ—शैलो भूमिर्वा । २२. प्र ल$_1$,ल$_2$ अ—च । २३. फ—चार्या ॥

इह सं-पातिना सीता रावणस्य नि-वेशने ।
२६] आख्याता गृध्र-राजेन न च पश्यामि मैथिलीम् ॥१३॥[५
क्षिप्रम् उत्-पततो[1] मन्ये सीताम् आ-दाय रक्षसः[2] ।
२७] बिभ्यतो[3] राम[4]-बाणानाम् अंकान् नि-पतिता भवेत्॥१४॥[७
अथवा ह्रियमाणायाः[5] पथि सिद्ध-नि-षेविते ।
२८] नूनं स्फुटितम् आर्याया हृदयं वीऽऽक्ष्य सागरम् ॥१५॥ [८
रावणस्योरु-वेगेन भुजाभ्यां पीडितेन च ।
२९] तथा[6] मन्ये विशालाऽक्ष्या त्यक्तं जीवितम् आर्यया ॥१६॥[९
उपर्य् उपरि सा नूनं सागरं क्रमतस् तदा ।
३०] वि-चेष्टमाना[7] पतिता समुद्रे जानकी[8] ध्रुवम् ॥१७॥ [१०
अहो क्षुद्रेण वा[9] तेन रक्षन्ती[10] शीलम् आत्मनः[11] ।
३१] अवश्यं[12] भक्षिता सीता रावणेन तपस्विनी ॥१८॥ [११
अथवा राक्षसेन्द्रस्य पत्नीभिर् अ-सितेक्षणा ।[13]
३२] अ-दुष्टा दुष्ट-चित्ताभिर् भक्षिता जनकाऽऽत्म-जा॥१९॥ [१२

---

१. रा च ब म प्र ल१ ल२ अ—०मुत्पतितो । २. रा च ब म प्र ल१ ल२ अ—राक्षसः । ३. रा च ब म प्र ल१ ल२ अ—वित्रस्ता । ४. रा म—रावणं दृष्ट्वा साङ्का०। च—रावणं दृष्ट्वा चाङ्का० । ब ल१ ल२—राक्षसं दृष्ट्वा चाङ्का० । प्र— राक्षसान् दृष्ट्वा चाङ्का० । अ—रावणस्याङ्कात् समुद्रे पतिता ॥

५. अ—क्षयमाना० ॥

६. फ च प्र ल१ ल२—मया । अ—भयात् ॥

७. रा म—विवेष्टमाना । ८. रा—जनकात्मजा ॥

९. फ—पापेन । १०. आ फ—रक्षती । ११. रा च ब म प्र ल१ ल२—शीलमुत्तमम् । १२. फ रा च ब म प्र ल१ ल२—अबंधुर् ।

१३. अ—राक्षसेन्द्रस्य पत्नीभिर्दुष्टाभिरसितेक्षणा ॥

अथवा नि-हिता[1] मन्ये रावणस्य नि-वेशने ।
३५] क्वचिल् [2]लालप्यते [3]नूनं पञ्जर-स्थेव सारिका[4] ॥२०॥ [१५
फुल्ल-पंकज-गर्भाऽऽभं [6]शुभ्रं ज्वलित-कुण्डलम् ।
३३] रामस्य चिन्तयन्त्य्[7] आस्यं पंचत्वं[8] कृपणा[9] गता ॥२१॥[10] [१३
हा राम लक्ष्मणेत्येवं हाऽयोध्येति च साऽसकृत् ।
३४] वि-लप्य बहु वैदेही न्यस्त-देहा भविष्यति ॥२२॥ [१४
[11]जनकस्य कुले [11]जाता राम-पत्नी सु-मध्यमा ।[12]
३६] कथम् [13]उत्पल-पत्राऽक्षी रावणस्य वशाऽनु-गा ॥२३॥ [१६
किं[14] [14]नष्टा वा प्र-नष्टा[15] वा मृता वा जनकाऽऽत्म-जा ।
३७] रामस्य प्रिय-भार्यस्य न नि-वेदयितुं [16]क्षमम् ॥२४॥ [१७

---

१. रा च ब–निहतां । म–निहितां । २. रा–क्वचिद्वालपते । म–क्वचिद्विल-पते । प्र ल१–क्वचिल्लालपते । ३. रा ब प्र ल१ ल२ अ–दीना । ४. रा म प्र ल१ ल२ आ–शारिका ५. फ अ–नास्ति ॥

६. आ–शुभ्रं । ७. आ–चिन्तय-द्वक्त्रं । फ–चिन्तयन्नास्यं । प्र ल१ ल२–चिंतयत्यास्यं । अ–ध्यायती वक्त्रं । ८ फ–सेहेलं । अ–सा दैन्यं । ९. आ–कृषिता गता । रा च ब म प्र ल१ ल२–नूनमागता । १०. रा च ब म प्र ल१ ल२ अ–नास्ति ।

अतः परमधिकः पाठः—

अ फ—अथवा निहता मन्ये रावणस्य निवेशने ।
फ—विचेष्टमाना पतिता समुद्रे जानकी भुवम् † ।
फ—क्वचिल्लालप्यते नित्यं‡ पञ्जरस्थेव सारिका ।

११. च–त्रुटितः पाठः । १२. रा ब म प्र ल१ ल२–नास्ति । १३. रा–कथमुत्फुल्लप० । ल१–अथवोत्पल० ॥

१४ फ रा च ब म प्र ल१ ल२ अ–विनष्टा । १५. आ फ अ च म ल१ ल२–प्रणष्टा । १६. आ–क्षमः । फ–क्षणम् । अ–क्षमाम् ॥

---

† अ—जनकात्मजा ।

‡ अ—नूनं ।

निवेद्यमाने[1] दोषः स्याद् दोषः स्याद् अनिवेदने ।
३८] कथं नु[2] खलु कर्तव्यं व्य्-असनं खल्व्[3]-इदं महत् ॥२५॥[१८
अस्मिन्[4] एवं गते[5] कार्ये[6] प्राप्त-कालं क्षमं च किम् ।
N] भवेदिति मतिं[7] भूयो हनुमान् प्रवि (?व्य) चारयन् (?त्) ।२६।[१९
यदि सीताम्[8] अ-दृष्ट्वाऽहं वानरेन्द्र-पुरीम् इतः ।
३९] गमिष्यामि ततः[9] को मे पुरुषाऽर्थो भविष्यति ॥२७॥ [२०
ममेदं[10] लंघनं व्यर्थं सागरस्य महाऽऽत्मनः ।
N] प्र-वेशश् चैव लंकायां राक्षसानां च दर्शनम् ॥२८॥ [२१
किं मां वक्ष्यति सुग्रीवो हरयो वा समा-गताः ।
४०] किष्किंधां समनु-प्राप्तौ किं[11] तौ[11] नर-वराऽऽत्म-जौ ।२९।[२२
गत्वा तु यदि काकुत्स्थं वक्ष्यामि परम् अप्रियम्[12] ।
४१] न सीताम्[13] अधि-गच्छामि[13] ततस् त्यक्ष्यति[14] जीवितम् ॥३०॥ [२३
परुषं दारुणं क्रूरं तीक्ष्णम् इन्द्रिय-तापनम् ।
४२] सीता[15]-निमित्तं दुर्[16]-वाक्यं श्रुत्वा स[17] न[17] भविष्यति ॥३१॥ [२४
तं तु[18] कृच्छ्र-गतं दृष्ट्वा पंचत्व[19]-गत-मानसम् ।
४३] भृशाऽनु-रक्तो मेधावी न[20] भविष्यति लक्ष्मणः[20] ॥३२॥ [२५

---

१. रा म—निवेद्यमानो । प्र ल$_1$—निवेद्यमाना । २. रा म प्र म ल$_1$ ल$_2$—तु । ३. अ—द्विविधं ॥

४. म ल$_1$—तस्मिन्नेवं । अ—अस्मिन्नेवा० । ५. फ रा—विधे । ६. म—कार्यं । ७. च ब प्र ल$_1$ अ—मतिर् ॥

८. आ—शीताम० । ९. रा—तदा ।

१०. फ—यदिदं ॥

११. फ रा च ब म प्र ल$_1$ ल$_2$ अ— तौ वा ॥

१२. आ—परमां प्रियां । १३. आ—शीता० । अ—सीतामवगच्छामि । १४. ब म प्र ल$_1$ ल$_2$—ततस्त्यक्ष्यामि ॥

१५. आ—शीता० । अ—सीतानिमित्ते । १६. च ब म प्र ल$_1$ ल$_2$ अ—दुर्वाक्यं । १७. फ प्र ल$_1$ ल$_2$—न स । अ—०सौ न ।

१८. आ ब ल$_2$—तत्तु । अ—किंतु । १९. आ—पञ्चत्वं गत० । २०. आ—लक्ष्मणो न भविष्यति ॥

वि-नष्टौ[1] भ्रातरौ श्रुत्वा[2] भरतो[3]ऽपि मरिष्यति[4] ।
N] भ्रातॄन् वि-नष्टान् ज्ञात्वा तु[5] शत्रु-घ्नोऽपि न[6] जीवति ॥३३॥ [२६
मृतान् पुत्रान् सम्-ईक्ष्याऽथ ता मरिष्यन्ति मातरः ।
N] कौशल्या[7] च सु-मित्रा च कैकेयी[8] च न संशयः ॥३४॥ [२७
४९पू] हितज्ञश्[9] च सत्य-संधश् च सुग्रीवः प्लवगाऽधिपः[10] ।
४६पू] रामं कृच्छ्र-गतं दृष्ट्वा राजा त्यक्ष्यति[11] जीवितम् ॥३५॥ [२८
दुर्-मना व्यथिता[12] दीना निर्-आनन्दा[13] तपस्विनी ।
४७] पीडिता भर्तृ-शोकेन रुमा[14] त्यक्ष्यति जीवितम् ॥३६॥[15] [२९
वालि-जेन च[16] दुःखेन पीडिता शोक-कर्षिता[17] ।
४८] पंचत्व-गमने राज्ञस् तारा[18]ऽपि न भविष्यति ॥३७॥ [३०
माता-पित्रोर् वि-नाशेन सुग्रीव-व्यसनेन च ।
४९] कुमारोऽप्य् अंगदः[19] कस्माद्[20] धारयिष्यति जीवितम् ॥३८॥ [३१
भर्तृ-जेन तु[21] दुःखेन[22] ह्य् अभि-भूता[23] वनौकसः ।
N] शिरांस्य् अभि-हनिष्यन्ति[24] तलैर् मुष्टिभिर् एव च[25] ॥३९॥ [३२

---

१. प्र-विनष्टं भ्रातरं । २. आ ब रा म-दृष्ट्वा । ३. ब ल१ ल२-भरतो न । ४. आ ब प्र ल१-ल२-भविष्यति । म-मुरिष्यति । ५. फ-श्रुत्वा तु । ब प्र ल१ ल२-विज्ञाय । अ-श्रुत्वा सा । ६. रा च ब म प्र ल१, ल२ अ-मरिष्यति ॥

७. रा ब म ल२-कौसल्या । ८. आ-कैकयी । म-केकयी ॥

९. अ-कृतज्ञः स समर्थश्च । १०. रा म-प्लवगर्षभः । ११. फ-नूनं त्यक्ष्यति । च प्र ल१, ल२-राजा त्यजति । रा म-व्यक्तं त्यजति ॥

१२. म-व्यथिता । १३ अ-निरालम्बा । १४. फ-तारा । १५. रा च ब म प्र ल१-नास्ति ॥

१६. आ फ रा च ब-तु । १७. ल२-परिभूता वनौकसः । १८. रा म-तारा तु ॥

१९. अ-कुमारश्चांगदः । २०. फ-तस्माद्धानयिष्यति । अ-श्रीमान्न धारयति ॥

२१. अ-च । २२. फ-शोकेन । २३. फ-हतिभूता । रा च ब म प्र ल१, ल२ अ-परिभूता । २४. रा म-शिरांसि निहनिष्यंति । ब-शिरांसि च हरिष्यन्ति । च प्र-शिरांसि च हनिष्यंति । २५. ल२-तलैर्मुष्टितलैरपि ॥

सांत्वेना[1]ऽनुम-दानेन मानेन[2] च यशस्विना ।
९०] लालिताः कपि-मुख्येन[3] प्राणांस् त्यक्ष्यन्ति वानराः ॥४०॥ [३३
न[4] वनेषु न शैलेषु[5] नाऽपि रोधस्सु[5] वानराः ।
९१] क्रीडाम् अनु-भविष्यन्ति समेत्य कपि-कुञ्जरैः ॥४१॥ [३४
स-पुत्र-दाराः साऽमात्या भर्तृ-व्यसन-पीडिताः ।
९२] शैलाऽग्रेभ्यः पतिष्यन्ति समेत्य हरि-यूथ-पाः ॥४२॥ [३५
विषस्य[6] भक्षणं वा[7]ऽपि प्र-वेशं ज्वलनस्य[8] वा[9] ।
N] उप-वासम् अथो शस्त्रं प्र-करिष्यन्ति वानराः ॥४३॥ [३६
घोरम् आ-रोदनं[10] मन्ये [11]गते मयि भविष्याति ।
९३] इक्ष्वाकु-कुल-नाशस्य[12] [13]हरीणां भृशम्[14] एव च[14] ॥४४॥ [३७
सोऽहं नैव गमिष्यामि किष्किन्धां न[15]गरीं [15]प्रति ।
९४] न हि[16] शक्ष्याम्य्[17] अहं द्रष्टुं सु-ग्रीवं मैथिलीं विना ॥४५॥ [३८
मय्य् अगच्छ[18]ति वैदेह्यौ[19] धर्माऽऽत्मानौ महा-रथौ ।
N] आशया [20]तौ धा[20]रिष्येते वानराश् च तरस्विनः ॥४६॥ [21][३९

---

१. फ–शांत्वे० । रा ब म प्र ल१ ल२ अ–सांत्वेनाथ० । च–सांत्वेनार्थप्र० । २. फ–दानेन । ३. रा च ब म प्र ल१, ल२ अ–कपिराजेन ॥

४. ल–वनेषु वनशैलेषु । अ–न वनेषु न गिरिषु । ५. ब प्र ल१ ल२–रौद्रः सु ॥

६. फ ब प्र ल१ ल२ अ–विषमुद्बंधनं । ७. फ–चापि । ८. रा ब म प्र ल१, ल२–ज्वलनेपि । ९. फ रा च ब म प्र ल१, ल२–च ॥

१०. ल१–घोरमायोधनं । ११. म–गतिर् । १२. रा च म प्र ल१ ल२–०कुरुनाशार्थं । अ–०कुलनाथाश्च । १३. फ–भृशं नाशो । १४. फ–वनौकसां । अ–भृशनाशनः । रा च ब म प्र ल१–च भृशं तथा । ल२–च भृशं तदा ॥

१५. फ रा च ब म प्र ल१, ल२ अ–नगरीमितः । १६. फ–च । १७. रा प्र ल१, ल२ अ–शक्यास्म्यहं ॥

१८ फ–आगते मयि । च अ–मयि गच्छति । १९. फ–तत्रस्थौ । च अ–चेहस्थे । २०. च–तौ चरिष्येते । आ–धारयिष्येते । २१. रा ब म प्र ल१, ल२–नास्ति ॥

हस्ताऽदो वा मुखाऽदो वा नियतो वृक्ष-मूलिकः ।
N] वानप्रस्थो भविष्यामि ह्य् अदृष्ट्वा कमलेक्षणाम् ॥४७॥ [४०
तस्य बुद्धिर् इयं जाता निपुणस्य विपश्चितः ।
N] राम-संसर्ग-निर्वृत्तौ धर्मिष्ठौ धर्म-संचितौ ॥४८॥ [N
सागराऽनूप-जे देशे बहु-मूल-फलोदके ।
८८] चितां कृत्वा प्रवेक्ष्यामि समिद्धम् अरणी-सुतम् ॥४९॥[10] [४१

---

१ रा—वृक्षमल्लिकः अ—वृक्ष-मूलकः । २. अ—अदृष्ट्वा । ३. ल१ कमलेक्षणः । अ—जनकात्मजाम् ॥

४. रा—॰र्गनिरतो । ब म प्र—॰निर्वृत्तो । ल१—॰र्गनिवृतो । ५. रा ब म प्र ल१ ल२—धर्मिष्ठो । ६. रा ब म प्र ल१ ल२—धर्मसंश्रयः ॥

७. आ—॰रान्तपर्यादे॰। रा ब च ब म प्र ल१ ल२—॰रान्तजले । अ—सागरो रूपदेशेन । ८. अ—भक्ष-मूलफलोपगे । ९. फ—समिद्धशरणा-सुतं । ल१—संसिद्धम॰ । अ—न चेत्प-श्यामि मैथिलीम् ।

१०. अतः परमधिकः पाठः—

रा च ब म प्र ल१ ल२ अ—उपविष्टस्य वा क्षिप्रमिन्द्रियाण्युपरुंधतः† ।
फ रा च ब म प्र ल१ल२अ—शरीरं भक्षयिष्यन्ति श्वापदाः वायसैः सह॥
रा च ब म प्र ल१ ल२—इदमप्यृषिभिर्जुष्टं निर्याणमिति मे मतिः।
अपः सम्यक् प्रवेक्ष्यामि तामदृष्ट्वासितेक्षणाम्‡ ॥

रा च ब म प्र ल२—तावत्पश्यामि† वैदेहीं मैथिलीं जनकात्मजाम् ।
रा च ब म प्र ल२अ—अजातरूपां‡ सुभगां कीर्त्यमानां† यशस्विनीम् ।

---

† फ—क्षिप्रमिंगितं साधयिष्यतः ।

‡ फ अ—अथ सम्यक् प्रवेक्ष्यामि न चेत्पश्यामि मैथिलीम् ।

‡ ल२—रूपसुभगां ।

† फ अ ल२—कीर्तनीयां ।

N] प्र-नष्टां[1] चिर-रात्राय सीताम्[2] अहम् अ-दृष्टवान्[2] । [४४३
तापसो वा[3] भविष्यामि नियतो[4] वृक्ष-मूलिकः[4] ॥५०॥[5]
५८] नाऽहं प्रति-गमिष्यामि ताम् अ-दृष्ट्वाऽसितेक्षणाम् । [४५
पर्णाऽदो वा फलाऽदो वा यदि वा वृक्ष-मूलिकः ।
N] वने धर्मं चरिष्यामि ताम् अ-दृष्ट्वा यशस्विनीम् ॥५१॥[6] [N
ततस् ततो[7] निर्-आशस्य सीताया दर्शनं प्रति ।
N] लंघनं[8] मे भवेद् व्य्-अर्थम् उदधेः[8] शत-योजनम् ॥५२॥ [N
न[9] पुनः[9] प्राति-गच्छामि नि-वसामि[10] वनेष्व्[10] इह ।
N] कायम्[11] आ-दीपयिष्यामि[11] प्र-विशाम्य्[12] अथ-वा जलम्[12] ॥५३॥[13] [N
यदि वा[14] प्रति-गच्छामि सीताम् अनाधि-गम्य ताम् ।[15]
N] अंगदः[16] संहितैः[16] सर्वैर् वानरैर् न भविष्यति ॥५४॥ [४६

---

१. म प्र ल$_1$ ल$_2$ अ—प्रणष्टां । २. आ फ—मम सीतामपश्यतः । ३. अ—वै । ४. रा म प्र ल$_1$ ल$_2$—तामदृष्ट्वा यशस्विनीम् । ५. च ब—नास्ति ॥

६. रा च ब म प्र ल$_1$ ल$_2$—नास्ति ॥

७. आ च अ—ततस्तस्य । ८. फ—लंघनाच्चाभवाच्चिंता वृथेति । आ—लंघनादभवाच्चिंता वृथेति । अ—लंघने चाभवाच्चिंता वृथेति ॥

९. रा ब म प्र ल$_1$ ल$_2$ अ—पुनाश्चित् । च—पुनश्चेत् । १०. म प्र—नास्ति पादः । रा—०सामि वनेष्वहम् । ११. आ—काममादीपयामि स्विद् । रा—कथमादीप० । १२. फ रा च ब म प्र ल$_1$ ल$_2$—प्रविशामि स्विदर्णवम् । अ—संविशे क्वचिदर्णवे । १३. ब म—नास्ति ॥

१४. ल$_2$—न । १५. ब म—प्रथमः पादो नास्ति । अतः परमधिकः पाठः—

ब प्र ल$_1$ ल$_2$—ध्यानशोकपरीतात्मा चिन्तयामास वानरः ।

१६. अ—सोङ्गदः प्रहितैः । ल$_1$— अङ्गदः प्रहितैः ॥

विनाशे सु-महान्[१] दोषो जीवन् प्राऽऽप्नोति[२] यच् छुभम् ।[३]
N] तस्मात्[४] प्राणा हि रक्ष्या वै[४] ध्रुवो जीवित-संगमः॥५५॥[५] [४७
एवं बहु-विधं दुःखं मनसा धारयन्[६] मुहुः ।
N] नाऽध्यगच्छत् तदा पारं शोकस्य कपि-कुञ्जरः॥५६॥ [४८
रावणं तु हनिष्यामि[७] दश-ग्रीवं महा-बलम्[८] ।
N] कामम्[९] अस्तु[१०] हृता सीता प्रेत्यं कीर्तिर् भविष्यति॥५७॥ [४९
अथ चैनं[११] समा-क्षिप्य[१२] उपर्य् उपरि[१३] सागरम् ।
N] रामायोप[१४]-हरिष्यामि पशुं[१५] पशु-पतेर् इव ॥५८॥ [५०
इति चिन्तां[१६] समा-पन्नः[१६] सीताम् अनधि-जग्मिवान्[१७] ।
५९] ध्यान-शोक-परीताऽऽत्मा चिंतयामास वानरः॥५९॥[१८] [५१
यावत्[१९] सीतां[१९] न पश्यामि राम-पत्नीं यशस्विनीम् ।[२०]
N] तावद्[२१] एतां[२१] पुरीं लंकां वि-चिनोमि पुनः पुनः॥६०॥ [५२
संपाति-वचनाच्[२२] चाऽपि रामं यद्य् आनयाम्य्[२३] अहम् ।

---

१. फ—निराशैस्तु महान् । २. आ—प्राप्नोमि । ३. रा ब म प्र ल$_{1}$ ल$_{2}$—नास्ति । ४. फ—तस्मात् प्राणान् हनिष्यामि । च—तस्मात्प्राणाभिर० ५. रा ब म प्र ल$_{1}$ ल$_{2}$—नास्ति ॥

६. फ—धारयन्बहु । रा ब म प्र ल$_{1}$ ल$_{2}$—चिन्तयन्मुहुः । अ—धारयन्महान् ॥

७. फ रा च ब म प्र ल$_{1}$ ल$_{2}$ अ—वधिष्यामि । ८. आ—महाबलः । ९. ल$_{1}$—कामतस्तु । १०. अ—पुष्पा ॥

११. रा च ब म प्र ल$_{1}$ ल$_{2}$—वैनं । १२. अ—समाश्रित्य । १३. रा च ब म प्र ल$_{1}$ अ—ह्युपर्युपरि । १४. प्र—रामस्योप० । १५. फ—रामपत्नीं यशस्विनीम् । ल$_{1}$—पशुं पशुपतिरिव ॥

१६. ल$_{1}$—चिंतासमापन्नः । १७. रा ब म प्र ल$_{1}$ ल$_{2}$—०नधिगम्य ताम् । १८. फ—नास्ति ॥

१९. अ—यावन्न तां । २०. फ—नास्ति । २१. अ—तावदेतत् ॥

२२. फ अ—०नाच्चाहं । रा च ब म प्र ल$_{1}$ ल$_{2}$—०नाच्चेद् । २३. आ अ—यदि नयाम्यहं । रा च ब म प्र ल$_{1}$ ल$_{2}$—यास्यामि नाप्यहं ॥

N] अ-पश्यन् राघवो भार्यां निर्-दहेत् सर्व-वानरान् ॥६१॥ [५३
इहैव नि-यता[1]ऽऽहारो वत्स्यामि नि-यतेन्द्रियः[2] ।
N] मत्-कृते न[3] वि-नश्येयुः सर्वे ते नर-वानराः[4] ॥६२॥ [५४
बं०स०१६]अशोक-वनिका[5] चा[5]ऽपि महती[6] हि[8] महा-द्रुमा ।
४] इमाम् अभि-पतिष्[7]यामि न हीऽयं वि-चिता मया ॥६३॥ [५५
वसून्[9] रुद्रांस् तथाऽऽदित्यान्[9] अश्विनौ मरुतो[10]ऽपि च[10] ।[11]
N] नमस्[12]-कृत्य गमिष्[12]यामि रक्षसां शोक-वर्धनः ॥६४॥ [५६
जित्वा[13] तु[13] राक्षसान् देवीम् इक्ष्वाकु-कुल-नन्दिनीम् ।
N] संप्र-दास्यामि[14] रामाय[14] सिद्धिम्[15] इव मनस्विने[15] ॥६५॥ [५७
स मुहूर्तम्[16] इव[16] ध्यात्वा चिन्तया व्यथितेन्द्रियः ।
N] उद्-अतिष्ठन्[17] महा-बाहुर् हनुमान् मारुताऽऽत्मजः ॥६६॥ [५८
नमोऽस्तु रामाय स-लक्ष्मणाय
देव्यै च तस्यै जनकाऽऽत्म-जायै ।
नमोऽस्तु रुद्रेन्द्र-यमाऽनिलेभ्यो
N] नमोऽस्तु चन्द्राऽग्निर्मरुद्-गणेभ्यः ॥६७॥ [५९

---

१ ल२—निहता० । अ—प्राय-माशिष्ये । २. फ—विजितेन्द्रियः । ३. अ—हि । ४. रा च ब म प्र ल१ ल२— न मत्कृते विनश्येयुर्वानराश्च तथा नराः ॥

५. रा ब म प्र ल१ ल२— ०निकाग्रे च । ६. फ रा च ब म प्र ल१ ल२—महत्तीयं । अ—महती सा । ७. फ—०भिगमिष्यामि ।८. म—नास्ति॥

९. फ—वसन्तु मुनीन्द्रांस्तथा दिङ्ग १०. रा बप्र ल१ ल२—मरुतस्तथा । ११. म—नास्ति । १२. ल१—न मत्कृते विनश्येयुः । म—नास्ति पादः ॥

१३. फ—जित्वाहं । रा च ब म प्र ल१ ल२—जित्वा हि । १४. रा ब म प्र ल१—रामाय संप्रदास्यामि । १५. रा ब मप्र ल१—यथा सिद्धिं तपस्विने । अ—साध्वी-मिह तपस्विनीम् ॥

१६. आ—मुहूर्तमिति । फ अ—मुहूर्तमपि । १७. फ म—उपतिष्ठन् । अ—उपातिष्ठन् ॥

१८. रा—चन्द्रार्कम०॥

स तेभ्यस्[1] तु नमस्-कृत्य सु-ग्रीवाय च मारुतिः ।
N] दिशः सर्वाः समा-लोक्य अशोक-वनिकां प्रति[2] ॥६८॥ [६०
स गत्वा मनसा पूर्वम्[3] अशोक[3]-वनिकां शुभाम् ।
N] उत्तरं[4] चिन्तयामास वानरो मारुताऽऽत्म-जः ॥६९॥ [६१
ध्रुवं[5] तु[5] रक्षो-बहुला[6] भविष्यति[7] जना[8]ऽऽकुला ।
N] अशोक-वनिका दिव्या[9] सर्व-संस्कार[10]-शोभिता ॥७०॥ [६२
रक्षिणश् चा[11]ऽत्र वि-हिता[12] नूनं[13] रक्षन्ति पाद-पान् ।
N] भगवान् अपि सर्वाऽऽत्मा ना[14]ऽतिक्षोभं प्र-वात्य् असौ ॥७१॥ [६३
सं-क्षिप्तोऽयं महा[15]ऽऽत्मा च[15] रामाऽर्थे रावण[16]स्य च ।
N] सिद्धिं मे संवि-धा[17]स्यन्ति देवा[18] ऋषि-गणा[18]म् त्व् इह ॥७२॥ [६४
ब्रह्मा स्वयं-भूर् भगवान् वेदाश् चैव दिशन्तु मे ।
N] सिद्धिम् अग्निश् च वायुश् च पुरु-हूतश् च वज्र-भृत् ।७३।[६५
वरुणः[19] पाश-हस्तश् च वासुं[20] देवश् च चक्र[20]-भृत्[21] । [६६पू

१. फ रा च ब म प्र ल$_1$, ल$_2$ अ—स तेभ्यश्च । ल$_2$—सभ्येभ्यश्च । २. रा म प्र ल$_1$—ययौ ॥

३. फ अ—पूर्वमशोक० । आ—पूर्वमसोक० । ४. ब प्र—भर्तारं ॥

५. रा ल$_2$—इयं च । च—एवं त्वा । ब—एवं तु । अ—ध्रुवं त्वा । ६. रा च ब म प्र ल$_2$—रक्षिबहुला । ल$_1$ अ—रक्षबहुला । ७. च—भविष्यन्ति । ८. अ—वरांगणा । ९. रा च ब प्र ल$_1$ ल$_2$—सर्वा । १०. रा—दिव्या संस्का० । च ब म प्र ल$_2$—दिव्यसंस्का० । ल$_1$—कथं सीताधिगम्यते ॥

११. ल$_1$—० वात्र । १२. फ ल$_1$ ल$_2$—निहिता । १३. रा ब म प्र ल$_1$ ल$_2$—घोरा । १४. रा च प्र ल$_1$ ल$_2$—नातिक्षोभः ॥

१५. आ—महात्म्यं तु । फ—ममांशात्तु । अ—महात्मा तु । १६. स म प्र ल$_1$ ल$_2$—राघवस्य । अ—वानरस्य । १७. अ—संप्रदास्यन्ति । १८. फ रा च ब म प्र ल$_1$ ल$_2$—देवा सार्षिगणा० । अ—सदेवर्षिगणास्त्विह ॥

१९. रा—वरुणश्च ।२०. आ ल$_1$—सोमादित्यौ तथैव च । २१. आ ल$_1$—नास्ति ॥

N] शङ्करः शूल-हस्तश् च सोमाऽऽदित्यौ तथैव च ॥७४॥ [1] [N
अश्विनौ च[2] महाऽऽत्मानौ मरुतः सर्व एव च । [६६उ
सिद्धिं[3] सर्वाणि भूतानि भूतानां चैव यः प्र-भुः ।
N] दास्यन्ति[4] मम ये चाऽन्येऽदृष्टाः[5] पथि गणेश्वराः[6] ॥७५॥ [६७

तद् उन्न्[7]-नसं पाण्डुर-दंतम् अव्रणं
शुचि[8]-स्मितं पद्म-पलाश-लोचनम्[9] ।
द्रक्ष्यामि सीता-वदनं[10] कदा न्व्[11] अहं
N] प्रसन्न-ताराऽधिप[12]-तुल्य-दर्शनम् ॥७६॥ [६८
क्षुद्रेण पापेन नृशंस-कर्मणा
सु-दारुणाऽलंकृत-वेष[13]-धारिणा ।
बलाऽभि-भूता[14] ह्य् अ-बला तपस्विनी[14]
N] कथं नु[15] मे[16] दृष्टि-पथेऽद्य सा[17] भवेत् ॥७७॥ [६९

इत्यार्षे[18] रामायणे[19] सुन्दर-काण्डे हनुमच्[20]-चिन्ता-
नाम अष्टमः सर्गः ॥८॥

---

१. आ ल$_1$—नास्ति ॥

२. फ—तौ । ३. ल$_1$—सिद्धिः । ४. रा ब म प्र ल$_1$ ल$_2$—दास्यन्तु । ५. फ—प्यदृष्टा । रा च ब म प्र ल$_1$ ल$_2$—अदृष्टा । अ—ह्यदृष्टा । ६. फ रा च ब म प्र ल$_1$ ल$_2$ अ—पथिगोचराः ॥

७. फ रा च प्र ल$_2$ अ—तदुल्लसत् । ल$_1$—उपल्लसत् । ८. आ—सुचिस्मि० । फ—शुभास्मि० । ९. आ फ रा अ—पद्मपलास० । १०. आ अ—सीताव० । ११. आ फ च—त्वहं । अ—ह्ययं । १२. अ—०तारापातितु० ॥

१३. आ—सुचारुगालक्षतवेशधा० । रा च ब म प्र ल$_1$ ल$_2$—०णालंकृतवेशधा० । अ—०लंकृतवेगधारि० । १४. आ—वाला-भिभूता ह्य० । अ—०भिभूतातितपास्विनी सा । आ—तपश्विनी । च ब म प्र ल ल$_2$—०यशस्विनी । १५ च ल$_2$ अ—तु । १६. रा च ब म प्र ल$_1$ ल$_2$—सा । १७. रा च ब म प्र ल$_1$ ल$_2$—मे ॥

१८. आ—आर्षेय । १९. रा—श्रीरामायणे । २०. फ रा—एकपुरुषचिन्ता । च ब म प्र ल$_1$ ल$_2$—एकपुरुषचिन्तनं । अ—एष पुरुषचिन्तनं ॥

[बं-१६]= **[नवमः सर्गः]** =[दा-१४]

स[1] मुहूर्तम् इव[2] ध्यात्वा मनसा चाऽधि-गम्य ताम् ।
N] अव[3]-प्लुतो महा-तेजाः प्राकारं[4] तस्य[4] वेश्मनः ॥१॥[5] [१
स[6] तु संहृष्ट-सर्वाऽङ्गः[6] प्राकार-स्थो महा-कपिः ।
१] पुष्पिताऽग्रान् वसंता[7]ऽग्रे ददर्श वि-विधान्[8] द्रुमान्॥२॥ [२
२पू] शालान्[9] अशोकान् भव्यांश् च चम्पकान्[10] मत्त-कोकिलान् ।
N] उद्दालकान् नाग-वृक्षांश् चूतान् कपि-मुखान्[11] अपि॥३॥ [३
अथ धैर्यम् अव-स्थाप्य प्र-मृज्याऽश्रूणि वीर्यवान्[12] । [N
५] व्या-मुक्त[13] इव नाराचः[14] पुप्लुवे[15] वृक्ष-वाटिकाम् ॥४॥[16] [४उ
६पू] स गत्वा वेगवान् वेगाद् हनुमान्[17] मारुताऽऽत्म-जः ।[18]
N] ददर्शाऽशोक-वनिकां पुष्पिताऽशोक-शोभिताम् ॥५॥ [N
६उ] अथाऽऽभ्र[19]-व्रण-संच्छन्नां लता-शत-समावृताम्[20] । [४पू
अशोक-वनिकां स्फीतां[21] प्र-विवेश महा-कपिः ॥६॥[22] [N

---

१. म—सु । २. आ—मुहूर्तमपि । ३. रा म—अवप्लुत्य । ल$_1$—अनुप्लुत्य । ४. फ—सकामान्तस्य । रा च म अ—प्राकारे तस्य । ५. ब ल$_1$, ल$_2$ प्र—चतुर्थः पादो नास्ति ॥

६. फ—स तु सर्वाङ्गसंहृष्टः । ब ल$_1$, ल$_2$ प्र—नास्ति । ७. फ—वसन्नैव । रा च ब म प्र ल$_1$,ल$_2$ अ—वसन्ते च । ८. अ—महतो ॥

९. रा ब ल$_1$, ल$_2$ प्र म अ—सालान् । १०. रा ब ल$_1$, ल$_2$ म—चण्यकान् । ११. रा च ब म प्र ल$_1$, ल$_2$—कपिमुखाननान् । अ—°खान्कपिः ॥

१२. फ अ—वेगवान् । १३. अ—ज्यामुक्त । १४. च—तीरांबु । १५. च—विबुधे । १६. ब ल$_1$, ल$_2$ अ—नास्ति ॥

१७. च—वेगो हनुमान् । १८. रा ब ल$_1$, ल$_2$ प्र—नास्ति ॥

१९. फ अ—°भ्रवनसं° । च—अथ प्रणवसं° । २०. आ च ब ल$_1$, ल$_2$—लताशोकस° । म—लतावृक्षस° । २१. आ—सीतां । २२. रा—नास्ति ॥

७] स प्र-विश्य वि-चित्रां तां विहगैर् अभि-ना[1]दिताम् ।[2]
८पू] राजतैः काञ्चनैश् चाऽपि पाद-पैः सर्वतो वृताम् ।।७।।[3][८
९पू] अ-चिरोदित-सूर्याऽऽभां ददर्श हनुमान् कपिः ।[६उ
N] मनो-हरां दृष्टि-हरां सौगंध्य-घ्राण-हारिणीम् ।।८।। [N
महता[4] प्रांऽशुना चैव सुचित्र-विहितेन च ।
N] प्राकारेणांऽर्बुदा[5]ऽऽभेन सौधेन कृत-मेखलाम् ।।९।।[6][N
गदा-पाणिभिर् एकाग्रैर् आसीनैर् द्वा[7]रि राक्षसैः ।
N] गुप्त[8]-द्वारां मही[9]-द्वाराम् अना-धृष्यां सुरैर् अपि ।।१०।। [N
नील[10]-वर्णैर् द्रुम-शतैर् मेघ-वृन्दैर् इवाऽऽवृताम् ।
N] स्व[11]-बलं तत्[12] समा-श्रि[13]त्य हनुमान् प्र-विवेश ह[14] ।।११।।[N
N] विहं[15]गैर् मृग-संघैश्[15] च वि-चित्रां[16] चित्र[16]-काननाम् ।[६पू
१०पू] वृतां नाना[17]-विधैर् वृक्षैः पुष्पोप[18]ग-फलोपगैः ।

---

१. फ अ–॰गैरमुना॰ । ल$_1$ प्र म–॰गैरतिना॰ । ल$_2$–॰गैरलिना॰ ।

२. रा अ–नास्ति । ३. आ रा च ब म प्र ल$_1$, ल$_2$ अ–नास्ति ।

अतः परमधिकः पाठः —

फ—श्रोत्रहारिरुतैः सर्वैर्† विहगैः संप्रनादिताम् ॥

४. प्र–संहतां । ५. आ फ–॰बुदेनेव । रा च ब ल$_1$, ल$_2$ म–॰बुदेनैव । ६. अ–नास्ति ॥

७. च–द्वार॰ । ८. फ–गुप्तद्वारि । ९. फ–मिव द्वारा॰ ॥

१०. म–लीलव॰ । रा च ब प्र ल$_1$, ल$_2$–॰र्णैं हिमसितैर्मे॰ । फ–॰द्रुमछन्नै॰ । अ फ–॰मेघवगैरिव॰ । ११. रा–सुबलं । १२. अ–स । १३. फ रा–समावृत्य । आ–समसृत्य । १४. फ–च ॥

१५. फ–विहगै॰। रा म–विहगं-मृगसिंहै॰ । च ब मं ल$_1$, ल$_2$ प्र अ–विहंगैर्मृगसिंहै॰। १६. आ रा च ब म प्र ल$_1$, ल$_2$–विचित्रैश्चि॰ । १७. फ–नानावृतै॰ । १८. ल$_1$ पुष्पपूग॰। अ–॰फलोपमैः ।

---

† अ–शब्दैः ।

९उ] कोकिलैर् भृंग-राजैश् च मत्तैर्[१] नित्यं नि-षेविताम् ॥१२॥ [७
१०उ] प्र-हृष्टम्[२] उदिते काले मृग-पक्षि-सुखाऽऽवहे[३] ।
मत्त-बर्हिण[४]-संघुष्टां नाना-द्विज-गणाऽऽयुताम् ॥१३॥ [८
११] मार्गमाणो[५] वराऽऽरोहां राज-पुत्रीम् अ-निन्दिताम् ।[६]
सुख-प्रसुप्तान्[७] विहगान् बोधयामास[८] वानरः ॥१४॥ [९
१२] उत्पतद्भिर्[९] द्विज-गणैः पक्षैः शाखा (ः) समा-हताः[१०] ।
अनेक-वर्णा मुमुचुः पुष्प-वृष्टिं समंततः ॥१५॥ [१०
१३] तत्राऽव[११]-कीर्णः शुशुभे हनुमान्[१२] मारुताऽऽत्म-जः ।
अशोक-वनिका-मध्ये यथा पुष्प-मयो गिरिः ॥१६॥ [११
१४] दिशः सर्वा वि-धावंतं[१३] वृक्ष-खण्ड[१४]-गतं कपिम् ।
दृष्ट्वा सर्वाणि[१५] भूतानि वसंतम् इव मेनिरे[१६] ॥१७॥ [१२
१५] वृक्षेभ्यः पतितैः पुष्पैर् अव-कीर्णा पृथग्-विधैः ।
रराज वसु-धा तत्र प्रमदेव वि-भूषिता[१७] ॥१८॥ [१३
१६] तरस्विना[१८] ते तरवस् तरसा विप्र-कंपिताः ।
पुष्प-वृष्टिं वि-चित्रां तु ससृजुः कपिनाऽऽहताः ॥१९॥ [१४

---

१. फ—मल्लैर्नि० ।

२. फ—०ष्टमुदिता । ३. फ—०पक्षिमहावहे । रा म अ—०पक्षिसमाकुले । ल$_1$—०पक्षिसुखावहैः । ४. फ—मत्तबर्हण ॥

५. ल$_2$—मार्गमाणौ । ६. अ—मार्गमाणः स वैदेहीं राजपुत्रीं यशस्विनीम् । ७. ल$_2$—०प्रसुप्तवि० । ८. फ—वाचयामास ॥

९. रा ब म ल$_1$ ल$_2$—उत्पतंतो द्विजगणाः । १०. रा च ब प्र ल$_1$ ल$_2$—०समाहतैः । म—समाहितैः ।

११. रा प्र अ—तत्राकीर्णः स । म—तत्राकीर्णः स्म । १२. फ रा च ब ल$_1$ ल$_2$—हनूमा० ॥

१३. रा ब म प्र ल$_1$ ल$_2$—व्यधा० । १४. ब ल$_1$ ल$_2$ प्र म—वृक्षषण्ड० । १५. अ—भूतानि सर्वाणि । १६. रा ल$_2$ प्र म—वारिदाः । अ—मन्दिरे ॥

१७. ल$_1$—विहृषिता ॥

१८. रा च—तरस्विनस्ते त० । अ—तरवरतत्र बहवः ॥

१७] निर्-धूत-पत्र[1]-शिखराः शीर्ण-पर्ण-फला[2] द्रुमाः ।
विक्षिप्त-वस्त्राऽऽभरणा धूर्ता इव परा-जिताः ॥२०॥ [१५
१८] हनूमता[3] वेग-वता धूनितास्[4] ते नगोत्तमाः[5] ।
पुष्प-पर्ण[6]-फलान्य् आशु मुमुचुः पुष्प-शालिनः[7] ॥२१॥ [१६
१९] विहंग[8]-संघैर् हीनास् ते स्कंध-मात्राऽऽश्रयाः स्थिताः ।
२० उ] बभूवुर्[9] जङ्गमाः सर्वे मारुतेन[10] विनिर्-धुताः ॥२२॥ [१७
बभूवुर्[11] वेश्या-युवतिर्[12] यथा[12] मृदित-वर्णकाः[13] (?का) ।
२१] नितान्त-शुभ-दन्तौष्ठी[14] नखैर् दन्तैश्[15] च वि-क्षता[15] ॥२३॥ [१८
तथा लांगूल-हस्ताभ्यां चरणाभ्यां समा-हता ।
२२] बभूवाऽशोक-वनिका प्रभग्न[16]-वन-पादपा ॥२४॥ [१९
महा-लतानां[17] दामानि वि-हरंस्[18] तरसा[18] कपिः ।
N] यथा प्रावृषि[19] विंध्यस्य मेघ-जालानि मारुतः ॥२५॥ [२०

---

१. ल$_2$ अ—०तपत्राः । २. ल$_2$—०र्णहताः । ल$_2$ प्र अ—०र्णफलद्रु० ॥

३. ल$_1$ प्र—हनुम० । ४. ल$_2$—निधूतास्ते । अ—चूर्णितास्ते । ५. रा म—महाद्रुमाः । ल$_2$—नगद्रुमाः । ६. आ—पुष्पवर्ण० । च ब म ल$_1$ ल$_2$—पुष्पपत्रफ० । अ—पर्णपुष्पफ० । ७. ब ल$_1$ ल$_2$—पुष्पशाखिनः ॥

८. आ च ब म प्र ल$_1$ ल$_2$—०ङ्गसिंहैर्ही० । रा—०ङ्गमैर्विहीना० । अ—०ङ्गानां शतैर्हीनास्ते । ९. आ च—०वुरगमाः । ब ल$_1$ ल$_2$ प्र—बभुरजंगमाः । अ—०वुस्तरसा । १०. फ—मारुतेनेव नि० । ल$_1$—०तेनापि नि० । अ—०तेनेव निर्द्रुताः ॥

११. आ फ रा ब म प्र ल$_1$ ल$_2$—बभूव । अ—यथैव । १२. फ—युवती यथा । अ—युवती भवेन्० । १३. फ ल$_2$ अ—मृदितवर्णिका । १४. फ—०भवर्णौष्ठी । ल$_1$—०शुकद० । अ—०भकर्णौष्ठी । रा च—०भदंतौष्ठीः । १५. रा ल$_1$—०विक्षिता । अ—०दंतैरिव क्षता ॥

१६. फ रा—प्रभग्ना वन० ॥

१७. आ—महल्लतानां । १८. आ—विहरन् हनुमां । फ प्र—०हरन्नुरसा । १९. रा च ब म ल$_1$—०पवृष्टेः । ल$_2$—०पवृष्टैः ।

स तत्र मणि-भूमिं च राजतीं[1] च मनो-रमाम्[1] ।
२३] तथा[1] काञ्चन-भूमिं च[1] वि-चरन्[2] रुरुचे[3] कपिः ॥२६॥ [२१
२४पू] वापीश्[4] च[4] वि-विधाऽऽकाराः पूर्णाः परम-वारिणा[5] ।
महाऽर्हैर्[6] मणि-सोपानैर् उप-पन्नाम्[7] ततस्-ततः ॥२७॥ [२२
२५] मुक्ता-प्रवाल-सिकता-स्फटिकाऽन्तर-भूषिताः ।
काञ्चनैस् तरुभिश्[8] चित्रैस् तीरजैर्[9] उप-शोभिताः ॥२८॥ [२३
२६] बद्ध[10]-पद्मोत्पल-वनाश्[11] चक्रवाकोप-कूजिताः[11] ।
दात्यूह[12]-रुत-संघुष्टा हंस-सारस-नादिताः ॥२९॥ [२४
२७] दीर्घाभिर्[13] भ्रम-युक्ताभिः[13] शीताभिश्[14] च समंततः ।[15]
N] अमृतोपम-तोयाभिः शिवाभिर्[16] अभि-संस्कृताः[16] ॥३०॥ [२५
लता-गृहैर्[17] अत्र-तता[17] लता-संतान-संवृताः[18] ।[19]
२८] लताऽवतान[20]-गहना करवीर-कृताऽन्तराः[21] ॥३१॥ [२६

---

१. ल$_1$—नास्ति। २. प्र—विरुचन्। अ—प्राविशन् । ३. रा—रचके। प्र—विरुचे ॥

४. अ—वाप्यश्च । ५. अ—०वारिभिः । ६. फ—यथार्हैर्म० । रा च ब म प्र ल$_1$ ल$_2$ अ—महार्ह-मणि० । ७. आ—०नैरुपपन्नैस्त० । रा—०पन्नस्त० । अ—०नै रूपवद्भिस्त० ॥

८. फ—०लसंसिक्ताः स्फा० । रा ब म प्र ल$_1$ ल$_2$—०लवैडूर्यस्फा० । ९. अ—०रुभिरछन्नास्तीर० । ब—०भिश्चित्रै नीराजैरु० ॥

१० रा—बहुपद्मोत्पलवतीश्च० । च ब म प्र ल$_1$ ल$_2$—०त्पलवतीश्च० । अ—शुद्धपद्मोत्पलयुताश्च० । ११. ब ल$_1$ ल$_2$ प्र अ—०कोपशोभिताः ।

१२. रा ब म प्र ल$_1$ ल$_2$—विहंगरुत०॥

१३. ल$_1$—नदीभिर्भ्रममाणाभिः । रा च ब ल$_2$ प्र म—दीर्घाभिर्भ्रममाणाभिः। अ—दीर्घिकाभिः सुयुक्ताभिः । १४. आ अ—शरद्भिश्च । १५. फ—नास्ति । १६. ल$_2$—०भिरपि सं०। म—शिराभिरपि। अ—त्रुटितः पाठः ॥

१७. फ—लताशतैरनुगता । रा च ब म प्र ल$_1$ ल$_2$—०गृहैरवनता । १८. फ—लतासंवृतसंवृताः। १९. अ—नास्ति । २०. फ—लतावनानुग० । रा ब म प्र ल$_1$ ल$_2$—लतावितानग० । च—०नगहने । अ—शाखाशतैरवततं । २१. रा—कवरीकृततान्तराः । अ—रक्कता-न्तरं ॥

तत्रांऽबु-धर-संकाशं[1] प्रवृद्ध[2]-शिखरं महत्[3] ।
२९] विचित्र-कूटैश् च[4] तथा[4] सर्वतः परि-वारितम् ॥३२॥ [२७
३०पू] शिला[5]-गृहैर् अव[5]-ततं नाना वृक्षैः[6] समा[6]-वृतम् ।
N] ददर्श कपि-शार्दूलो रम्यं जगति पर्वतम् ॥३३॥ [२८
३०उ] ददर्श च नगात्[7] तस्मान्[7] नदीं प्र-पतितां[8] भुवि[9] ।
३१पू] अंकाद् इव समुत्-पत्य प्रियस्य कुपितां प्रियाम् ॥३४॥ [२९
N] शैलैर्[10] नि पतिताऽग्रैश् च पाद-पैर् उप-शोभितां[11] ।
धार्यमाणाम्[12] इव क्रुद्धां[13] प्रमदां प्रिय-बन्धुभिः ॥३५॥ [३०
३२] पुनर् आवृत्त[14]-तोयां च[14] ददर्श स महा-कपिः ।
प्र-सन्नाम् इव कान्तस्य कान्तां पुनर् उप-स्थिताम् ॥३६॥ [३१
३३] तस्यांऽदूरात्[15] पद्मिनीः स[15] नाना-पक्षि-गणाऽऽयुताः[16] ।
ददर्श कपि-शार्दूलो हनुमान् मारुतात्[17]ऽऽत्म-जः ॥३७॥[18] [३२
३४] कृत्रिमां स नदीं रम्यां पूर्णां शीतेन वारिणा ।
३५पू] मणि-प्रवर-सोपानां[19] मुक्ता-सैकत-संततां[20] ॥३८॥ [३३

---

१. आ—०रसंकासं । २. फ—प्रसिद्धशिषरं । ३. अ—गिरिम् । ४. आ—०कूटकुसुमैः । अ—०कूटं कुसुमैः ॥

५. फ—०हैरवनतं । रा ब ल₁ प्र म—शिलावृक्षैरवनतैः । च ल₂ अ—०हैरवततैः । आ—शिवागृहै० । ६. फ रा च ब म प्र ल₂ अ—०क्षसमावृतम् । ल₁ – ० क्षसमानतम् ॥

७. आ च—नगात्तस्य । ८. फ अ—निपतितां । ९. फ अ—ततः ॥

१०. ब ल₁ ल₂ प्र म—सालै० । ११. ल₂—०शोभिता । १२. फ अ—वार्यमाणा० । १३. अ—क्रुद्धो ॥

१४. च—०ततोयश्च ॥

१५. फ—तस्यां दूरात्स पद्मिन्यो । आ—०पद्मिनीं स । अ—नद्यश्चैव सपद्मिन्यो । १६. आ—०णायुताम् । रा ब प्र म—द्विजगणायुताः । ल₁—द्विजगणावृताः । १७. ल₁—पवनात्मजः । १८. अ—नास्ति ।

१९. रा च ब म प्र ल₁ ल₂—मणिप्रवालसोपानां । २०. रा ब म ल₁ प्र—मुक्तासौवर्णसं० । च—मुक्तासौवचसं० ल₂—मुक्तासौवर्णसंतमां ॥

वि-विधैर् मृग-संघैश्[1] च वि-चित्रां[2] चित्र-काननाम्[3] । [३४पू
N] पद्मिनीभिश् च चित्राभिः काञ्चनैश् च महा-द्रुमैः ॥३९॥ [N
N] तरुणाऽऽदित्य-संकाशैः शोभितां[4] च प्र-पुष्पितैः[4] ।[5] [N
३५उ] प्रासादैः[6] सु-महद्भिश्[6] च निर्-मितैर्[7] विश्व-कर्मणा । [३४उ
काञ्चनैः कृत्रिमैश् चैव सर्वतः सम्-अलंकृताम् ॥४०॥ [३५
३६] ये केचित् पाद-पास् तत्र पुष्पोपग-फलोपगाः[8] ।
३७पू] स-च्छत्राः[9] स-वितर्दीकाः[10] सर्वे[11] सौवर्ण-वेदिकाः[11] ॥४१॥[12] [३६
तथा[13] वि-चरतस्[13] तस्य वनं[14] तत्[14] पुष्पित-द्रुमम् ।
४०] मार्गमाणस्य[15] वैदेहीं सा व्यतीऽताऽथ[16] शर्वरी[17] ॥४२॥[18] [N

१. आ रा च ब म प्र ल$_1$ ल$_2$ अ-०मृगसिंहैश्च । २. आ-विचितां । ३. रा ब म प्र ल$_1$ ल$_2$-चित्रिताननाम् ॥

४. फ-शोभितां सुप्रफुल्लितां । अ-शोभितां संप्रफुल्लितां । आ-शोभितांसां प्रपुष्पितां । रा-शोभिताभ्यां च पु० । च-शोभिता संप्रपुष्पितां । ५. अ-प्रथमः पादो नास्ति । ६. आ-प्रासादैस्तु म० । च ल$_2$-प्रासादैश्च म० । ७ आ रा च ब म प्र ल$_1$ ल$_2$-निर्मितां ॥

८. ल$_1$-०फलोपगैः । ल$_2$-फलौपमाः । अ-पुष्पोपमफ० । ९. फ म आ-संछन्नाः । अ-सच्छायाः । १०. फ-सविमानीकाः । अ-सविताकांकाः। ११. रा ब म प्र ल$_1$ ल$_2$ अ-सर्वसौवर्णवे० ।

१२. अतः परमधिकः पाठः-

फ—दिव्याभिर्बहुपुष्पाभिर्लताभिर्बहुवेष्टितम् ।
वीज्यमानश्च तत्रासौ मार्गमाणश्च मैथिलीम् ॥
अवेक्षमाणो भूमिं च सर्वतः सोन्ववैक्षत ।
स समृद्धेषु देशेषु समृष्टमणितोरणम् ॥

१३. ल$_1$-तत्रापि च०। प्र-तथा चित्ररथ० । १४. फ-वनान्तात्पु० । ल$_1$-नवं तत्पु० । १५. फ-मार्गमाणश्च । १६. रा अ-व्यतीयाय । १७. अ च-सर्वरी । १८. अतः-परमधिकः पाठः—

फ—षडङ्गवेदविदुषां क्रतुप्रवरशालिनाम् ।
शुश्रुवे ब्रह्मघोषं च तूर्यघोषं च मारुतिः ॥

१९] प्र-सक्ता[1] सु-मुखीऽत्य्-एवं रुदती[2] जनकाऽऽत्म-जा । [दा२६स०
अधो-मुखी वि-लपितुं बाला समुप-चक्रमे ॥२२॥ [१
२०] उन्[3]-मत्तेव प्र-मत्तेव भ्रान्त-चित्तेव भामिनी ।
उपाऽऽवृता किशोरीऽ[4]वं व्य्-अचेष्टत[5] मही-तले ॥२३॥ [२
२१] राघवस्य प्र-मत्तस्य रक्षसा[6] काम-रूपिणा ।
रावणेन प्र-मथ्याऽहं क्रोशन्त्य् अप-ह(?हृ)ता बलात् ॥२४॥ [३
२२] राक्षसी-वशम् आ-पन्ना भर्त्स्यमाना सु-दारुणम् ।
वि-चिन्तयामि[8] दुःखाऽऽर्त्ता नाऽहं शक्ष्यामि[9] जीवितुम् ॥२५॥[10] [४
२३] न हि मे जीवितेनाऽर्थो नैवाऽर्थैर्[11] न वि-भूषणैः ।[12]
वसन्त्या[13] रक्षसां मध्ये विना रामं महा-रथम् ॥२६॥ [५
२४] धिङ्[14] माम् अन्-आर्याम् अ-सतीं याऽहं तेन विना-कृता ।
यन्[15] मुहूर्त्तम् अपीऽच्छामि जीवितुं पाप-जीविकाम्[16] ॥२७॥ [७
२५] जीविते नास्ति मे श्रद्धा सुखे वा तं विना प्रियम् ।[17]
भर्त्तारं सागराऽन्ताया वसुधायाः प्रियं-वदम् ॥२८॥[18] [८

---

१. अ-प्राशक्ता । रा ब ल$_1$ ल$_2$-क्तासुमु० । २. फ म-ब्रवन्ती जन० । अ-०ती जनकात्मजां ॥ ३. च रा ब म ल$_1$ ल$_2$-रुदंती च । ४. आ-०री च । ५. रा-व्यवेष्टत ॥ ६. अ-रक्षिसा कामरूपिणी ॥ ७. आ प्र अ-नास्ति । ८. फ च रा ब म ल$_1$ ल$_2$-व्यचिन्त० । ९. च-शक्नोमि । १०. आ प्र-नास्ति ॥ ११. अ-न वार्थो मे । १२. रा ब म ल$_1$ ल$_2$-नास्ति । १३. रा ब म ल$_1$ ल$_2$-वसंती ॥ १४. अ-दग्धामनार्यामसती । १५. फ-मुहूर्तमपि चेच्छामि । अ-या मुहूर्तमपी० । १६. अ-पापजीवितम् । १७. फ-नास्ति मे जीवितेन सुखं तं विना प्रियम् । अ-नास्ति मे जीवितेनार्थो सुखे वा तं विना प्रियम् । १८. ल$_1$-नास्ति ॥

२६] छिद्यतां[1] भक्ष्यतां[2] वाऽपि शरीरं वि-सृजाम्य् अहम् ।[3]
मा चिरं वि-विधं[4] दुःखं सहेयं प्रिय-वर्जिता ॥२९॥ [९
२७] चरणेनाऽपि सव्येन न स्पृशेयं निशा-चरम् ।
किं[5] पुना रावणं नीचं[5] कामयेयं वि-गर्हितम् ॥३०॥ [१०
२८] प्रत्या[6]-ख्यातं न[6] जानीते आत्मानं[7] नाऽऽत्मनः कुलम् ।
यो नृशंस-प्रभावो[8]ऽयं मां धर्षयितुम् इच्छति ॥३१॥ [११
२९] छिन्ना भिन्ना वि-भक्ता वा दीप्ते वा[9]ऽग्नौ प्र[10]-वेशिता ।
रावणं नोप[11]-तिष्ठेऽहं किं वि-लापेन[12] वा[13] चिरम्[13] ॥३२॥ [१२
३०] ख्यात[14]-प्रज्ञः कृत-ज्ञश् च साऽनुक्रोशश् च राघवः ।
साम्प्रतं[15] निरनु-क्रोशः शङ्के मद्-भाग्य[16]-संक्षयात् ॥३३॥ [१३
३१] राक्षसानां जन[17]-स्थाने सहस्राणि[17] चतुर्दश ।
३२पू] येनैकेन निरस्तानि स मां[18] नाऽभ्यव-पद्यते ॥३४॥[19] [१४
३३उ] वि-राधो दण्डकाऽरण्ये येन राक्षस-पुङ्गवः ।[20]
३४पू] शरेणैकेन नि-हतः स मां ना[21]ऽभ्यव-पद्यते[22] ॥३५॥ [१६
कामं मध्ये समुद्रस्य लंकेयं दुष्प्र-धर्षणा ।
N] न तु राघव-बाणानाम् अ-प्रा[23]ऽऽप्याम् उप-धारये ॥३६॥ [१७

---

१. फ—०न्द्यतां । २. आ—भक्षतां ३. ल$_1$—नास्ति । ४ रा ब म ल$_2$ दारुणैरीरितं । ल$_1$—दारुणं नेदृशं । अ—अचिरं न चिरं ॥ ५. फ अ—रावणं किं । पुनर्नीचं ॥६. आ—प्रत्याख्यातो स । ७. अ—नात्मानं । ८. रा—०भावत्वान्मांध०। फ—प्रधर्षयितुमिच्छ० ॥ ९. ब म ल$_1$—०ऽस्मिन्नौ वा । १०. फअ—प्रदीपिता । ११. अ—रोपतिष्ठेय । १२. फ अ—प्रलापेन । १३. आ फ च रा ब ल$_1$ल$_2$ अ—वाश्चिरम् ॥ १४. अ—यो गुणज्ञः कृ० । १५. फ—संवृतो । अ—संजातो । १६. अ—भात्रसं० १७.—अ सहस्राणि जनस्थाने । १८. फ—मामभ्युपप० । १९. ल$_2$—नास्ति । २०. ल$_2$ अ—नास्ति । २१. अ—नाभ्युपप०। २२. अ—निरुद्धा रावणेनाहं मन्दवीर्येण वीर्यवान् ॥ २३. फ—अप्राप्येत्यवधा०। रा अ—अप्राप्येत्युपधा० ॥

किं[1] नु तत् कारणं येन रामो दृढ-पराक्रमः ।
N] रक्षसाऽप-हृतां भार्याम् इष्टां ना[2]ऽभ्यव-पद्यते ॥३७॥ [१८
३२उ] इह-स्थां मां न जानीते शङ्के लक्ष्मण-पूर्वजः ।
३३पू] जा[3]नन् नहि स[3] तेजस्वी धर्षणां म[4]र्षयिष्यति ॥३८॥ [१९
३४उ] हृतेति योऽपि गत्वा मां राघवाय नि-वेदयेत् । [२०पू
N] सु-महत् तेन कल्याणं कृतं स्याल् लोक-नन्दनम् ॥३९॥[5] [N
गृध्र-राजोऽपि समरे रावणेन नि-पातितः । [२०उ
३५] कृतं तेन महत् कर्म मां तदाऽभ्यव-[6]गच्छता ।
तिष्ठता रावण[7]-द्वन्द्वे वृद्धेनाऽपि जटायुषा ॥४०॥ [२१
३६] यदि माम् ईह जानीयाद् वर्त्तमानां स राघवः ।
अद्य बाणैर् अ[8]पि क्रुद्धः कुर्याल् लोकम् अ-राक्षसम् ॥४१॥ [२२
३७] वि-[10]ध्वंमेच् च[10] पुरीं लंकां शोषयेच् च महोदधिम् ।
रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥४२॥ [२२
३८] ततो निहत-नाथानां राक्षसानां गृहे गृहे ।
यथाऽहम्[11] एवं रुदती प्र-भीतेव[12] पुरी भवेत् ॥४३॥ [२४
३९] वि-नष्टां रक्षसां लंकां कुर्याद् रामः स-लक्ष्मणः ।
४०पू] न[13]हि ताभ्यां श[14]रैः स्पृष्टो मुहूर्त्तम् अपि जीवति ॥४४॥ [२५
४१उ] चिता-धूमाऽऽकुल-पथा गृध्र-मण्डल-सङ्कुला ।

---

१. ल$_1$ ल$_2$–किन्तु किं । २. फ–नाभ्युपप० ॥ ३. रा प्र ब ल$_1$–जानन्नपि स । आ फ–जानन्नपि हि । ४. फ–धर्षयि० । ५. अ–नास्ति ॥ ६. आ फ च रा प्र ब म ल$_1$ ल$_2$–तदाभ्यपग० । अ–तदाभ्यवगच्छत । ७. अ–भिन्नाः–रावणं द्वन्द्वे । आ फ च ब म ल$_1$ ल$_2$–००णयुद्धे ॥ ८. आ–अभिजा० । ९. फ रा म अ–अतिक्रु० ॥ १०. आ–विध्वंसेम ॥ ११. रा प्र–यथाहमेवं । १२. रा प्र–प्रभावेव ॥ १३. फ–स हि । १४. अ–शरैर्दष्टो ॥

४२पू] अ-चिरेण पुरी लंका श्मशान-सदृशी भवेत् ॥४५॥ [२६
नाऽति-दीर्घेण[1] कालेन प्राऽऽप्स्याम्य् एतं[2] मनो-रथम् ।
४३] दुष्प्र-स्थानं[3] समा-ख्याति[3] सर्वेषां हि विपर्य्-अयम्॥४६॥[२७
यादृशानि[4] हि दृश्यन्ते लंकायाम्[5] अ-शुभानि च[6] ।
N] अ-चिरेणैव कालेन भविष्यति हत-प्रभा ॥४७॥ [२८
हते लंका-पतौ पापे[7] रावणे राक्षसेश्वरे ।
N] शोषं[8] यास्यति दुर्-धर्षा प्र-मदा वि-धवा यथा ॥४८॥ [२९
पुण्योत्सव-समृद्धाऽपि दुष्ट-सत्त्वा[9] स-राक्षसा ।
N] वि-नंक्ष्यति[10] पुरी लंका नष्ट-भर्त्री यथाऽङ्गना ॥४९॥ [३०
साऽन्धकारः[11] संमुद्-योगो[11] (?तो) हते राक्षस-पुङ्गवे ।
N] भविष्यति संमुन्-मोक्षो[12] मेघानां शरदीऽव मे[13] ॥५०॥ [३२
यदि नाम स शूरो मां रामो रक्ताऽन्त-लोचनः ।
N] जानीयाद् वर्त्तमानां हि रावणस्य नि-वेशने ॥५१॥[14] [३३
अनेन तु नृ-शंसेन[15] रावणेनाऽधमेन मे[16] ।[17]
N] समयो यस् तु निर्-दिष्टस् तस्य कालोऽति-वर्तते[18] ॥५२॥[३४

---

१. प्र ब म ल$_1$ ल$_2$–तन्न दी० । २. प्र ब म ल$_1$ ल$_2$–प्राप्स्याम्येतन्मनो० । रा–प्राप्स्याम्येस म०। ३. अ–दुष्प्रस्थानो यमाख्याहि ॥ ४. अ–यादृशानां हि । रा प्र ब म ल$_1$ ल$_2$–०शानीह । ५. अ–०यामाशु भामिनि ॥ ६. आ–चापि । प्र–वापि । ७. फ–०क्षसाधिपे । अ–०क्षसाधमे । ८. रा प्र ब म ल$_1$–शोकं या० । अ–शेषं पश्यति ॥ ९. फ–नष्टविध्वस्तरा० । अ–नष्टसन्त्रस्तरा० । १०. फ अ–भविष्यति । ब म ल$_1$ ल$_2$–विनश्यति ॥ ११. आ म–०कारमिवोद्यानं । फ रा प्र ब ल$_2$–०कारमिवोद्योतं । ल$_1$–०कारमिवोद्यंतं । १२. अ–महाशब्दो । १३. अ–खे ॥ १४. ल$_1$–नास्ति । १५. अ–भृशं० । १६. ल$_2$ अ–च । १७. ल$_1$–नास्ति। १८. अ–०लो निवर्तते ॥

अ-कार्यं येन जानन्ति नैर्ऋता: पाप-कर्मिणः ।
N] धं(?घ)र्मस् तेषां महा-क्रूरो भविष्यति हि मां प्रति॥५३॥[३५
नैते धर्मं वि-जानन्ति राक्षसाः पिशिताऽशनाः ।
N] ध्रुवं मां प्रातर्-आशाऽर्थे राक्षसो योजयिष्यति ॥५४॥ [३६
साऽहं कथं भविष्यामि तं वीरं प्रिय-दर्शनम् ।
N] रामं रक्ताऽन्त-नयनम् अ-पश्यन्ती च दुःखिता॥५५॥ [३७
यदि कश्चित् प्र-दाता मे विषस्याऽद्य भविष्यति ।
N] क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥५६॥ [३८
न जाने म्रियते रामः स वा लक्ष्मण-पूर्वजः ।
N] जीवन्तौ तौ न कुर्यातां कथं हि मम मार्गणम् ॥५७॥ [३९
नूनं ममैव शोकेन स वीरो लक्ष्मणाऽग्र-जः ।
N] देवांऽऽतिथेयं शुद्धाऽऽत्मा प्रति-भांति गतोऽनघः॥५८॥[४०
धन्या देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।
N] मम पश्यन्ति ये नाथं रामं राजीव-लोचनम् ॥५९॥ [४१

---

१. अ-मानन्ति । २. रा प्र ब म ल१ ल२-राक्षसाः पिशिताशिनः । आ-०ताः पापकर्म्मणः । अ-०ताः पिशिताशनाः । ३. म-धर्मापेतो । ४. फ-महाध्रातो । रा प्र ब ल१ ल२-महां घातो । ५. अ-नास्ति । ६. आ ब ल१ ल२-नैतद्धर्मं । प्र-नैतद्धर्मे । ७. रा-नैर्ऋताः पापकारिणः । प्र म ल१ ल२-नैर्ऋताः पापकर्मिणः । ८. प्र ल१ ल२ अ-०तराशार्थं ॥ ९. फ अ ल१-सुदुःखिता । १०. अ-भवेदिह । ११. अ-वैवश्वतं दे० । १२. आ अ-प्रियं ते । ल२-म्रियते । १३. अ-च शत्रुघ्नपू० । १४. रा प्र ब म ल१ ल२-न प्रकु० । फ-तौ न कुर्वन्ति । १५. आ रा प्र ब म ल१ ल२-नोर्व्या ॥ १६. ल२-नूनमेव शो० । १७. अ-न । १८. रा प्र ब म ल२ ल२-रामो ल० । १९. अ-०तिथ्यं शुशुद्धात्मा । २०. आ रा प्र ब म ल१ ल२-प्रतीच्छति । अ-प्रतीच्छत । २१. अ-धन्याश्च देवा ग० । २२. फ च-नास्ति । २३. अ-वै नाथं । आ फ च-ये रामं ॥

अथवा नहि तस्या[1]ऽर्थो धर्म-कामस्य धीमतः ।
N] मया रामस्य राजर्षेर् भार्यया[2] परमाऽऽत्मनः॥६०॥ [४२
दृश्यमाने भवेत् प्रीतिर् अ-दृश्ये प्रीति-सौहृदम्[3] ।
N] नाशयन्ति कृत-घ्नांस् तु[4] न रामो नाशयिष्यति॥६१॥ [४३
किं[5] नु मे न गुणाः केचित्[6] किं वा[7] भाग्य-क्षयो हि मे ।
N] याऽहं हीना वराऽर्हेण रामेण विदिताऽऽत्मना ॥६२॥ [४४
श्रेयो[8] मे जीवितान्[9] मृत्युर् वि-हीना[10] या ह्य् अहं ततः ।
N] रामाद् उत्कृष्ट[11]-चारित्राच् छूराच् शत्रु-निबर्हणात् ॥६३॥ [४५
अथवा सक्त[12]-शस्त्रौ तौ वने मूल-फलाऽशिनौ[13] ।
N] भ्रातरौ हि नर-श्रेष्ठौ चरतो[14] वन-गोचरौ[15] ॥६४॥ [४६
अथवा राक्षसेन्द्रेण रावणेन दुर्-आत्मना ।
N] छद्मना घातितौ वीरौ भ्रातरौ राम-लक्ष्मणौ ॥६५॥ [४७
साऽहम् एवं गते काले मर्तुम्[16] इच्छामि सर्वथा[17] ।
N] न च मे[18] वि-हितो मृत्युर् अस्मिन् दुःखे[19]ऽभि-वर्तते ॥६६॥ [४८
धन्याः[20] खलु महाऽऽत्मान ऋषयः सत्य-सङ्गराः[21] ।
N] जिताऽऽत्मानो महा-भागा[22] येषां नास्ति प्रिया[23]ऽप्रियम्॥६७॥[४९

---

१. ल२–तस्यापि । २. प्र ल१ अ–भार्याया: ॥ ३. ल२ प्र–प्रतिसौहृ० । अ–प्रीतिसौरभम् । ४. अ–कृतघ्ना ये ॥ ५. प्र–किं न रामे । ल१–किं रामे न । ६. च रा प्र म अ ब ल२–सन्ति । आ–केचि । ७. प्र–नु ॥ ८. प्र ब ल१–श्रेयान्मे । ९. फ च रा–०तान्मर्तुं । अ–जीवनान्मृत्युः । १०. आ म ल२ अ–विहिना । ११. फ अ–रामादक्लिष्टचा० ॥ १२. फ अ–न्यस्तश० । रा–शस्त्रत्यक्तौ । १३. रा प्र ब म ल१–०लाशिनौ । १४. आ च रा प्र म–चरन्तौ । १५. फ अ–नास्ति ॥ १६. अ–किन्तु कर्तुं । प्र–काले रंतुं । १७. आ च अ–०शः । ल२–०तः । १८. आ–मेऽवहितो मृत्युस्तस्मिन् । १९. रा प्र ब म ल१–दुःखेतिव० । अ–दुखे निव० ॥ २०. अ–धन्याश्च ते । २१. ल२–सत्यसंगताः । २२. अ–महात्मानो । २३. अ––प्रियं प्रि० ॥

प्रियाद्[1] उत्-पद्यते दुःखम् अ-प्रियाद् अधिकं[2] पुनः ।
N] ये प्रियेभ्यो वि-मुक्तास्[3] तान् नमस्-कुर्यान् महाऽऽत्मनः[4] ६८[५०
साऽहं त्यक्ता प्रियेणेहं[5] रामेण विदिताऽऽत्मना[6] । [५१पू
शूरेण प्रिय--भार्येण गुण--ज्ञेन महाऽऽत्मना[7] । [N
N] प्राणांस् त्यक्ष्यामि यास्यामि रावणस्य वशं न तु[8] ॥६९॥ ५१ उ

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि सीता-विलापो
नाम विंशः सर्गः ॥२०॥

---

१. आ–यषां नोत्पद्यते । २. अ–अविकं ततः । ३. अ–वियुक्तानां नमस्यामि । रा प्र ब म ल$_1$ ल$_2$–०नमस्कुर्यां । ४. अ–०महात्मनां । ५ अ–प्रियेणाद्य । ६. अ–०तात्मनः । ७. अ–दढात्मनां । ८. अ–वशो न च ॥ ९. च प्र म ल$_1$ ल$_2$ अ–सीताप्रलापो ॥

## [ वं–२७ ]= [ एकविंशः सर्गः ] =[ दा–२७ ]

N] इत्य्-उक्ताः[1] सीतया घोरा राक्षस्यो[2] रोष-मूर्च्छिताः[2] । [१पू
N] तूर्णम् उत्-पतिता गृह्य शक्ति-शूल-परश्वधान्[3] ।[4] [N
१उ] जग्मुर्[5] अन्यास् तथाऽऽख्यातुं[5] रावणस्य तरस्विनः ॥१॥ [१उ
ततः सीताम् उपाऽऽगम्य राक्षस्यो घोर-दर्शनाः ।
२] पुनः[6] परुष-वाक्याऽर्थम्[6] अन्-अर्थायेदम्[7] अब्रुवन्[7] ॥२॥ [२
हन्तेदानीं तवाऽन्-आर्ये [8]सीते पाप-विनिश्चये ।
३] राक्षस्यो भक्षयिष्यन्ति मांसं[9] तेऽद्य यथा-सुखम्[9] ॥३॥ [३
सीतां ताभिर् अन्-आर्याभिर् दृष्ट्वा निर्-भर्त्सितां[10] तदा ।
४] राक्षसी त्रि-जटा वृद्धा शयाना वाक्यम् अब्रवीत् ॥४॥ [४
आत्मानं खादताऽन्-आर्या न सीतां[11] खादयिष्यथ[11] ।
५] जनकस्य सुताम् इष्टां स्नुषां दश-रथस्य च ॥५॥ [५
स्वप्नो ह्य् अद्य मया दृष्टो दारुणो [12]लोम-हर्षणः ।
६] राक्षसानाम् अ-भावाय भर्तुर् अस्या भवाय च ॥६॥ [६
एवम् उक्तास् त्रि-जटया[13] राक्षस्योऽपाऽस्य मैथिलीम् ।
७] सर्वा एवाऽब्रुवन्[14] भीतास्[14] त्रि-जटां ताम् इदं वचः ॥७॥ [७पू

---

१. आ च ल$_2$–इत्युक्ता । २. फ रा प्र ब म ल$_1$–राक्षस्यः क्रोधमू० । अ–राक्षस्य क्रोधमू० । ३. आ फ च–परस्व० । ४. अ–नास्ति । ५. अ–ययू राज्ञः समाख्यातुं ॥ ६. रा प्र ब म ल$_1$ ल$_2$–परुषं परुषानर्हाम् । फ–पुनः परुषमेकार्थम् । ७. आ–०नर्थो येनेदमब्रु० ॥ ८. अ–शीते । ९. आ फ च अ–मांसमेतद्यथा० ॥ १०. आ–निर्भर्त्स्यतां ॥ ११. अ–शीतां भक्षयिष्यथ ॥ १२. फ रा प्र ब म ल$_1$–रोमह० ॥ १३. अ–त्रिजटाया । १४. अ–एवाब्रुवंती तां त्रि० ॥

अ-शेषं श्रोतुम् इच्छामस् तव दुःस्वप्न-[1]दर्शनम् । [N
८] [2]कीदृशं तु त्वया दृष्टं[2] श्रोतुं कौतूहलं हि नः ॥८॥ [७३
तासाम् एतद् वचः श्रुत्वा त्रि-जटा वृद्ध-राक्षसी ।
९] वक्तुं [3]कृताऽञ्जलि-पुटा तं स्वप्नम् उप-चक्रमे ॥९॥ [८
स-पर्वत-वनां कृत्स्नां [4]ग्रसमानो महीम् इमाम् ।
१०] [5]स्वप्ने रामो मया दृष्टो रुधिरं पी[6]तवान् बहु ॥१०॥ [N
गजदन्त-मयीं दिव्यां शिविकाम् अन्तरिक्ष-गाम् ।
११] युक्तां नाग-[7]सहस्रेण स्वयम् आ-स्थाय राघ[8]वः ॥११॥ [९पू
N] स्वप्ने चाऽद्य मया दृष्टा सीता शुक्लाऽम्बराऽऽवृता ।
[9]सागरेण परि-क्षिप्तम् आ-[10]रुह्य श्वेत-पर्व[10]तम् ।
१२] रामेण सं-गता सीता भास्करेण [11]यथा [11]प्रभा ॥१२॥ [१०
इहोप-यातः काकुत्स्थः सीतया सह भार्यया । [१७
१३] लक्ष्मणेन सह भ्रात्रा वि-माने पुष्पके स्थितः ॥१३॥ [१८पू
राघवश् च मया दृष्टश् [12]चतुर्-दन्ते महा-गजे[12] ।
N] आ-[13]रूढः शैल-सं[14]काशे वि-चरन् सह भार्य[15]या ॥१४॥ [११
ततस् तौ नर-शार्दूलौ दीप्यमानौ स्व-ते[16]जसा ।
N] शुक्ल-माल्याऽम्बर-धरौ जानकीं [17]प्रत्य् उप-स्थितौ ॥१५॥ [१२
ततस् तस्य नगस्याऽग्राद् आकाश-स्थस्य दन्तिनः ।

---

१. फ—°प्नमातुराः । २. अ—कीदृशः स त्वया दृष्टः ॥ ३. फ अ—नद्धांजलि° ॥ ४. प्र—ग्रस्यमानां । ५. प्र—स तु । ६. फ च रा प्र ब म ल$_1$ ल$_2$—पातवान् ॥ ७. आ—नगस° । ८. ल$_2$—रावणः ॥ ९. फ—समुद्रेण । १०. रा प्र ब म ल$_1$ ल$_2$—आरोहंश्चैव पर्वतं । आ—°रुह्य स्वेत° । ११. फ च रा प्र ब म ल$_1$ ल$_2$—प्रभा यथा ॥ १२. फ च रा प्र ब म ल$_1$ ल$_2$ अ—चतुर्दन्तं महागजं । १३. अ—आरूढं । १४. फ च रा प्र ब म ल$_1$ ल$_2$—°संकाशं । १५. फ च रा प्र म ब ल$_1$ ल$_2$ अ—लक्ष्मणः ॥ १६. अ—सुतेजसौ । १७. अ—समुप° ॥

N] भर्त्रा[1] परि-गृहीतस्य जानकी[2] स्कन्धम् आ-प्लुता ॥१६॥ [१३
भर्त्तुर्[3] अङ्कात् समुत्[4]-पत्य ततः कमल-लोचना ।
N] चन्द्र-सूर्यौ[5] मया दृष्टौ[6] पाणिना परि-मार्जती ॥१७॥ [१४
ततस् ताभ्यां कुमाराभ्याम्[7] आ-स्थितोऽसौ[8] गजोत्तमः ।
N] सीतया च विशालाऽक्ष्या लंकां पर्यभि-तः स्थितः ॥१८॥ [१५
पाण्डुरर्षभ-युक्तेन रथेनाऽष्ट[9]-भुजः स्वयम् ।
१४] शुक्ल-माल्याऽम्बर-धरो लक्ष्मणेन समा[10]-गतः ॥१९॥ [१६पू
वि-मानात् पुष्पकाद् अद्य रावणः पतितो[11] मया ।
१५] कृष्यमाणः[12] स्त्रिया दृष्टो[12] मुण्डः पीताऽम्बरो हि[13] सः[13] । [३५
१८उ] उष्ट्रेण च मया दृष्टः प्र-यातो दक्षिणां दिशम् ॥२०॥[14] [N
समाजश्[15] च मया दृष्टो गीत-वादित्र-नृत्यवान्[16] ।
१९] बिभ्रतीं[17] रक्त-माल्यानि रक्षसां रक्त-वाससाम्[18] ॥२१॥[19] [४५
लंका चेयं[20] पुरी कृत्स्ना गज-वाजि-रथा[21]ऽऽकुला ।
२०] सागरे पतिता दृष्टा[22] मग्न-गोपुर[23]-तोरणा ॥२२॥ [४६

---

१. अ—भ्रात्रा । २. ल$_2$—पानिना परिमार्जती । फ च—०की स्कन्धमास्थिता । रा प्र ब म ल$_1$—०की स्कन्धमागता । अ—०की स्कन्धमास्थितः ॥ ३. अ—भुर्त्तुर् । ४. च रा प्र ब म ल$_1$ ल$_2$—समुत्सृज्य । ५. ब म ल$_1$ ल$_2$—०सूर्योपमा । ६. फ अ—दृष्टौ ॥ ७. अ—०रीभ्यां । ८. फ—०स्थितः स ॥ ९. अ—०थेनोरुभज स्त्र० । १०. च रा प्र ब म ल$_1$ ल$_2$—सहागतः ॥ ११. च—पातितो । १२. च—कृष्णमाल्यानुलेपनः । १३. अ रा प्र ब म ल$_1$ ल$_2$—हसन् । १४. प्र ल$_1$—नास्ति ॥ १५. ल$_2$—त्रुटितः पाठः । १६. रा ब ल$_1$ ल$_2$ अ—०नृत्तवान् । म—०त्रनिस्वनः । १७. अ—बिभ्रती । १८. अ अ—०वाससम् । १९. प्र—नास्ति ॥ २०. अ—वेयं । २१. रा प्र ब म ल$_1$ ल$_2$—०समाकुला । २२. फ च ल$_2$ अ—दृष्ट्वा । २३. च ल$_2$—मग्ना गो० । फ अ—मग्नप्राकारतो० ॥

पीत्वा तैलं प्र-नृत्यन्त्यः[1] प्र-हसन्त्यो महा-स्वनाः[2] ।
२१ ] लंकायां भस्म-रूपायां सर्वा[3] राक्षस-योषितः ॥२३॥ [४८
कुम्भ-कर्णाऽऽदयश् चेमे[4] सर्वे राक्षस-पुङ्गवाः ।
२२] पीतैश्[5] च[5] वसनैर् दृष्टाः क्रीडन्तो गोमये ह्रदे॥२४॥ [४९
श्वेतं[6] पर्वतम् आ-रूढस्[6] त्व् एक एव विभीषणः । [N
२३] चतुर्भिः सचिवैः सार्द्धं राक्षसैर् अनिलाँ[7]ऽऽदिभिः॥२५[४४उ
अप-सर्प्पत पश्यध्वं[8] श्रुत्वा खलु[9] स[9] राघवः ।
२४] घातयेत् परमाऽमर्षी सर्वान् आ-गम्य[10] राक्षसान् ॥२६॥ [५०
प्रियां बहु-मतां[11] भार्यां[11] वन-वासेऽप्य् अनु-व्रताम्[12] ।
२५] भर्त्सितां त्रासितां[13] वाऽपि[13] राघवो नाऽनु-मंस्यते ॥२७॥ [५१
तद् अलं क्रूर-वाक्यैर्[14] वः[14] सान्त्वम्[15] एवाऽभि-धीयताम्[15] ।
N] अभि-याचत वैदेहीम् एतद् हि मम रोचते ॥२८॥ [५२
२९उ] यस्या[16] ह्य् एवं[16]-विधः स्वप्नो दुःखितायाः प्र-दर्श्यते[17] ।
सा दुःखैर् बहुधा[18] मुक्ता[18] श्रियं[19] प्राप्नोत्य्[20] अन्-उत्तमाम्[20] २९॥[५३

---

१. अ–प्रतप्ताश्च । २. अ–०श्वनाः । ३. अ–सर्वरा० ॥ ४. फ रा प्र अ–चैव । ५. आ–रा प्र ब ल१ ल२ अ–पीतैर्निव० ॥ ६. फ–श्वेतपर्व० । अ–श्वेतं पर्वतमासाद्य । ७. रा म–०सैरनला० ॥ ८. प्र म ल१ ल२–नश्यध्वं । ९. प्र म ल१ ल२ अ–स खलु । १०. ल१ ल२ अ–आगत्य । ११. फ–०मता भार्या । १२. फ–०व्रता । १३. फ–त्रासिता चापि ॥ १४. अ–०वाक्यैश्च । १५. आ–शीलमेवा० । फ–शान्त्वमेवा० । च रा ल१–सान्त्वमेवं विधी० । प्र अ–सान्त्वमेव विधी० ॥ १६. रा–यथा एवंविधः । प्र ब म ल१ ल२–०स्या एवंविधः । १७. प्र ब म ल१ ल२–०प्रदर्शितः । १८. ब म ल१ अ–बहुभिर्मुक्ता । १९. फ ब म ल१–प्रियं । २०. ब म ल१–पश्यत्यनंतरम् । आ अ–०प्नोत्यनुत्तमम् ॥

३०] भर्त्सिताम् अभि-याचध्वं[1] राक्षस्यः किं वि-वक्षया[2] ।
३१पू] राघवाद् हि भयं घोरं राक्षसानाम् उप-स्थितम् ॥३०॥ [५४
प्रणि-पात[3]-प्रसन्ना हि मैथिली जनकाऽऽत्म-जा ।
N] अलम् एका[4] परि-त्रातुं राक्षसीर् महतो भयात् ॥३१॥ [५५
३१उ] अपि चाऽस्या विशालाऽक्ष्या न किञ्चिद् उप-लक्षये[5] ।
वि-रूपम्[6] अथ चाऽङ्गेषु[7] यत् सूक्ष्मम् अपि लक्षणम्[9] ॥३२॥ [५६
३२] छाया वै-गुण्यम् आ[10]-याति यतो[11] दुःखम् उप स्थितम् ।
३३पू] अ-दुःखा[12]ऽर्हाम् इमाम् देवीं न[13] क्लेशयितुम् अर्हथ[13] ॥३३॥ [५७
अर्थ-सिद्धिं तु वैदेह्याः पश्याम्य् अहम् उप-स्थिताम् ।[14]
३४] राक्षसेन्द्र-विनाशं च वि-जयं राघवस्य च ॥३४॥ [५८
२६पू] निमित्त-भूतम् एतत् तु श्रोतुम् अस्या महत् प्रियम् ।
२७पू] स्फुरत्[15] पश्यामि नयनं पद्म-पत्रम् इवाऽऽयतम् ॥३५॥ [५९
२६उ] ईषच्[16] च हृषितो ह्य् अस्या[16] दक्षिणोऽतिप्र[17]-दक्षिणः ।
अकस्माद् अथ[18] वैदेह्या बाहुर् एकः [19]प्र-वेपते ॥३६॥ [६०

---

१ च रा प्र ब ल$_1$ ल$_2$—०मपि या० । अ—०मुपया० । म—तत्सीतामभिया० । आ—०मपि याचत्वं । २. अ—किंचिदक्षयम् ॥ ३. अ—प्रणिपत्य प्र० । ४. आ फ रा प्र ब म ल$_1$ ल$_2$—आर्ता ॥ ५. आ—०लक्षयेत् । अ—०लक्ष्यते । प्र—०मंस्यते । ६. आ फ—विरुद्धमपि । अ—विरुद्धयापि । ७. च—त्वाङ्गेषु । ८. अ—सुसू० । ९. रा म—किंचन । प्र—गम्यते । ब ल$_1$ ल$_2$—जायते ॥ १०. अ—आख्याति । ११. आ फ च रा प्र ब म ल$_1$ ल$_2$—यातो । १२. ल$_1$—०खार्ताम् । १३. आ फ च प्र ल$_1$ ल$_2$ अ—नियतां सत्यस्थिताम् ॥ १४. रा ब म—नास्ति ॥ १५. अ—सुरत् ॥ १६. रा प्र ब ल$_1$ ल$_2$—एष चादूषितो । आ—ईषच्च दूषितो । फ रा—ईषच्च दूषितोप्यस्याः । १७. प्र ब ल$_1$ ल$_2$—०क्षिणायाः प्रद० । १८. फ अ—एव । ल$_1$—एष । १९. अ—०हुमेकं स्म वे० । ल$_1$—०कः प्रकम्पते ॥

२८] करेणु-हस्त-प्रतिमः[1] सव्यश् चोरुः स[2]-वेपथुः ।
२९पू] देव्याः सूचयतीऽवाऽस्या राघवं स्थितम्[3] अग्र-तः॥३७॥[६१
पक्षी[4] च[5] शाखा-निलयः[5] प्र-हृष्टः[5]
पुनः पुनश् चोत्तम-सान्त्व[6]-वादी ।
सुखाऽऽगतां[7] वाचम् उदीरयन्[8] वै[9]
३९] प्रत्या-गमं दर्शयतीऽव[10] काकः ॥३८॥ [६२

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि त्रिजटा[11]-स्वप्न-दर्शनं
नामैकविंशः सर्गः ॥२१॥

---

१. अ–०स्तप्रमितः । २. अ–प्रवे० । ३. फ–पुरतः स्थितम् ॥
४. फ म अ–पक्षीव । ५. आ रा प्र ब ल$_1$ ल$_2$–शाखालयनः प्र० ।
फ अ–शाखालयगः प्रकामं । ६. आ च ब ल$_1$ ल$_2$–०मशान्तवादी ।
रा म–०मशान्तिवादी । ७. आ–०गता । च–मुखाग० । ८. अ फ–
०रयानः । च–०रयित्वा । अ–रयंश्च । ९. फ–चोदय० । अ–नोदय० ।
१०. फ–हृष्टः ॥ ११. ब–त्रिजटायुः स्व० । रा म–०टास्वप्नो नाम ॥

सा राक्षसेन्द्रस्य वचो वि-चिन्त्य[1]
तद् राक्षसीनां च वचः सु-तीक्ष्णम् ।
सीता[2]ऽपि तत्रास यथा वनाऽन्ते
१ ] सिंहाऽभि-पन्ना गज-राज-कन्या ॥ १ ॥ [१

सा राक्षसी-मध्य-गता च[3] भीरुर्
वाक्यैर् भृशं रावण-तर्जिता[4] च ।
कान्तार-मध्ये वि-जने वि-सृष्टा
२] बालेव कन्या वि-ललाप सीता ॥ २ ॥ [२

सत्यं तु चेदं[5] प्र-वदन्ति लोके
नाऽकाल-मृत्युर् भवतीऽति तज्ज्ञाः[6] ।
यत्राऽहम् एवं परि-भर्त्स्यमाना[7]
३] जीवामि किञ्चित् क्षणम्[8] अल्प-पुण्या ॥३॥ [३

सुखाद्[9] वि-हीनं बहु-दुःख-पूर्णम्
इदं तु[10] नूनं हृदयं स्थिरं[11] मे ।
वि-दीर्यते यन् न सहस्र-धाऽद्य[12]
४] वज्राऽऽहतं शृङ्गम् इवाऽचलस्य[13] ॥४॥ [४

---

१. फ ब अ–निशम्य । २. फ म अ–सीता वित०॥ ३. फ–सुभीरुर् । च रा प्र ब म ल$_1$ ल$_2$–०तापि भीरुर् । अ–तु भीरुर् । ४.आ–०णपालिता ॥ ५.आ–तथेदं । फ–यथेदं । ६. रा प्र ब म ल$_1$–विज्ञाः । ७. रा प्र–परितर्ज० । ब म ल$_1$–परितर्ज्य० । ८. रा प्र ब म ल$_1$ ल$_2$–कृपणाल्प० ॥ ९. रा ब म ल$_1$–सुखैर् । १०. फ ब–हि । ११. ल$_2$–स्थितं । १२. अ–०धा यद् । १३. ल$_2$–इवाबलस्य ॥

शेषं त्व् इदानीं मम नास्ति नूनं
वध्या[1]ऽहम् [1]अद्याऽप्रिय-दर्शनस्य ।
भावं न [2]चाऽस्याऽहम् अनुप्र-दातुम्
५] अलं [3]द्विजो ब्रह्म यथाऽन्त्य-जाय ॥५॥ [५
नूनं ममाऽङ्गान्य् [4]अ-चिराद् अन्-आर्यः
शस्त्रैः शितैश् छेत्स्यति राक्षसेन्द्रः ।
तस्मिन्न् अना-गच्छति [5]लोक-पाले
६] गर्भ-स्थ-जन्तोर् इव [6]शल्य-हर्ता ॥६॥ [६
दुःखं [7]किलेदं मम दौर्-मनस्यं
मासौ [8]चिरायाऽर्धं गमिष्यतो द्वौ[9] ।
[10]वध्यस्य बन्धे हि यथा [11]निशाऽन्ते
७] राजाऽप-[12]कर्तुस् त्व् इह तस्करस्य ॥७॥ [७
हा राम हा लक्ष्मण हा सुमित्रे
हा राम-मातः सह मे जनन्या ।
[13]एषा वि-पद्ये भृशम् [14]अल्प-पुण्या ।
८] महाऽर्णवे नौर् इव [15]वायु-नुन्ना ॥८॥ [८

---

१. फ च–०हमस्याप्रि० । रा–यथाहमद्या० । ब–धन्याहमद्या० । ल१ ल२–दध्याहमद्या० । २. फ च–वास्याह० । ३. फ–द्विजो वेदमथान्त्यजस्य । ब–द्विजैर्ब्रह्ममथान्त्यजस्य ॥ ४. च रा ब म ल२–०ङ्गानि चिराद् । प्र–०ङ्गानचिराद् । ५. फ अ–लोकनाथे । ६. आ–शल्यहर्त्तुः ॥ ७. फ रा प्र ब म ल१ ल२ अ–च नेदं । ८. आ–चिरस्याधिग० । ९. आ–च । अ–वै । १०. आ–बद्धस्य वंधैर्हि । च अ–बद्धस्य वद्धस्य । ११. आ–निसान्ते । १२. आ–०पहर्तुस् । अ–राज्यापहर्त्तुम्॥ १३. आ–एषाभिपद्ये । १४. अ–अल्पभाग्या । १५. आ–वातरुग्णा । फ च अ– वातरुग्ना ॥

तौ धारयन्तौ हि मृगाऽधिपस्य
सत्त्वं च रूपं च नरेन्द्र-पुत्रौ ।
नूनं वि-नष्टौ मम कारणाय[1]
९] सिंहर्षभौ द्रावू इव वैद्युतेन[2] ॥९॥ [९
नूनं स कालो मृग-रूप-धारी
माम्[3] अल्प-भाग्यां लुलुभे तदानीम् ।
मोहान् मया तत्र तु तौ नि-युक्तौ
१०] रामाऽनुजो लक्ष्मण-पूर्वजश् च ॥१०॥ [१०
हा राम सत्य-व्रत दीर्घ-बाहो
हा पूर्ण-चन्द्र-प्रतिमान--वक्त्र ।[4]
हा जीव-लोकस्य हितं[5] प्रियां स्वां
N] वध्यां[6] न मां वेत्स्यसि[7] राक्षसानाम्[8] ॥११॥ [११
अन्-अन्य-दैवत्यम्[9] इदं क्रमाच्[10] च
भूमौ च शय्या नि-यमश् च धर्मे ।
पति-व्रतत्वं[11] च ममाऽफलं[12] स्यात्
N] कृतं कृत-घ्नेष्व् इव मानुषाणाम् ॥१२॥[13] [१२
मोघो[14] हि धर्मश् चरितो मयाऽयं[15]

१. फ–कारणात्तु । २. च रा प्र ब म ल$_1$ ल$_2$–वैकृतेन ॥ ३. च रा ब म ल$_1$ ल$_2$–ममाल्पभाग्याल्लुलुभे । अ–ममाल्पभाग्यं लु० । ४. फ–हा राम पूर्णेंद्वतिरूपवक्त्र । ५. आ–हितः प्रयातो । च रा प्र ब म ल$_1$ ल$_1$–०त प्रियाद्य । ६. फ च प्र–बद्धां । ब म ल$_1$ ल$_2$–वश्यां । ७. आ फ च प्र रा ब अ–वेत्स्यति । ८. म–राक्षसीनाम् ॥ ९. फ च अ–०न्यदेवत्वमिदं । १०. आ–क्रमाश्च । म–क्षमा च । ११. म–पतिव्रतात्वं । १२. आ–नं मेऽफलं । १३. रा ब प्र ल$_2$–नास्ति । ल$_1$–अतः श्लोकादारभ्य सर्गसमाप्तिं यावत्त्रुटितः पाठः ॥ १४. च रा प्र ब म–मिथ्या । १५. च प्र म–मया तु । आ रा ब–मया यत् ।

तथैक[१]-पत्नीत्वम् इदं निर्-अर्थम्[२] ।
यत्[३] त्वां न पश्यामि कृशा वि-वर्णा
N] हीना त्वया सं-गमने[४] निर्-आशा ॥१३॥ [१३
पितुर् नि-देशान्[५] नियमाद् वि-हीनो
वनान् नि-वृत्तश् चरित-व्रतश् च ।
स्त्रीभिस्[६] तु मन्ये[६] वि-पुलेक्षणाभिः
N] सं-रंस्यसे[७] वीत-भयः[८] कृताऽर्थः । [१४
अहं तु राम त्वयि जात-कामा
सदा[९] वि-नाशाय[९] नि-बद्ध[१०]-भावा ॥१४॥
स्वयं[११] चरित्वा च[११] तपो व्रतं च
N] त्यक्ष्यामि[१२] धिग् जीवितम्[१२] अल्प-भाग्या[१३] । [१५
विषस्य दाता न[१४] च मेऽस्ति[१४] कश्चित्
शस्त्रस्य वा वेश्मनि रावणस्य ॥१५॥
शोकाऽभि-तप्ता बहु-धा वि-चिन्त्य
N] दीनाऽथ[१५] वेण्य्-उद्ग्रथनं गृहीत्वा । [१६
उद्बद्ध[१६]-वेण्य्-उद्ग्रथनेन शीघ्रम्
अहं गमिष्यामि यमस्य मूलम् ॥१६॥ [१८

---

१. अ फ च रा प्र–०कपत्नित्वम् । २. ब म ल$_1$ अ–निरर्थकम् । ३. अ–या । ४. आ–०मनान्निराशा ॥ ५. अ–नियोगान्नियमावि० । ६. म–स्त्रीभिश्च म० । च रा प्र ब ल$_2$–०भिस्तु मध्ये । ७. फ–संरंम्यसे । प्र–संरक्ष्यसे । अ–संरंस्यते । ८. आ–वीतभयं ॥ ९. फ अ–चिरं वि० । च रा ब प्र म ल$_2$–निवासाय । १०. प्र ल$_2$–निबद्धकामा । ११. अ–मोघं चरि० । फ–स्वयं चरित्वाथ । १२. फ–०मिचिज्जीवि० । च–त्यक्ष्याम्यहं जी० । १३. अतः परमधिकः पाठ :—म–सा जीवितं क्षिप्रमहं त्यजेयं विषेण शस्त्रेण शितेन वापि । १४. फ–तु न मेस्ति । अ–न तु मेऽत्र । १५. फ च रा प्र ब म ल$_2$ अ–सीताथ ॥ १६. ब–तद्बद्धवे० ।

इतीऽव सीता बहु-धा वि-लप्य
N] सर्वाऽऽत्मना रामम् अनु-स्मरन्ती[1] ।
प्र-वेपमाना परि[2]-शुष्क-वक्त्रा
नगोत्तमं पुष्पितम् आ-ससाद ॥१७॥ [१७
उप-स्थिता सा मृदु-सर्व-गात्री
N] शाखां[3] गृहीत्वा तु[4] नगोत्तमस्य । [१९
तस्यास् तु रामं परि-चिन्तयन्त्या[5]
११पू] रामाऽनु[6]-जं स्वं च कुलं शुभाऽङ्ग्याः[7] ॥१८॥
शुभानि सर्वाणि तथा[8] बहूनि
N] सत्योचितानि प्र-वराणि लोके ।
प्रादुर् निमित्तानि तदा[9] बभूवुः
११उ] पुरा[10] वि-शुद्धानि सु-लक्षणानि[11] ॥१९॥ [२०

इत्यार्षे रामायणे सुन्दर-काण्डे[12] सीता-विलापो
नाम द्वाविंशः सर्गः ॥२२॥

---

१. आ-अनुस्मरती ॥ २. ब $ल_2$-प्रविशु० । ३. प्र-शिखां । ४. फ अ-०त्वाथ ॥ ५. आ-परिचिन्त्ययन्त्या । ६. $ल_2$-रामाग्रजं । ७. आ च रा प्र ब म $ल_2$-शुभायाः । अ-शुभाग्या । ८. फ अ-तदा । ९. आ च रा प्र ब म $ल_2$-तथा । १०. फ-पुरापि सिद्धानि । अ-पुरो विशु० । ११. $ल_1$ $ल_2$-सलक्ष्मणानि ॥ १२. फ-०काण्डे दिग्विजये सी० । रा म-०काण्डे लंका-पर्वणि सी० ॥

तथा-गतां च[1] व्यथिताम् अ-निन्दितां[2]
व्यू अपेत-हर्षां परि[3]दीन-मानसाम् ।
त[4]दा निमित्तानि शुभानि भेजिरे
१२] न[5]रं श्रिया जुष्टम् इवोप-जीवि[6]नः ॥१॥ [१

तस्याः शुभं वाम-मराल-पक्ष्म
राजीववत् कृष्ण-विशाल-शु[7]क्रम् ।
प्रा[8]ऽस्पन्दतैकं नयनं सु-केश्या
वाताऽऽ[9]हतं पद्मम् इ[10]वाऽभि-ताम्रम् ॥२॥ [२

१३] भुजश् च चा[11]र्व्-आयत-पीन-वृ[11]त्तः
पराऽर्घ्य-कालाऽगुरु-चन्दना[12]ऽर्हः ।
अनू-उत्तमेनाऽध्यू-उषितः प्रियेण
प्राऽवेपताऽस्याः सु-चिरेण वा[13]मः ॥३॥ [३

१४] गजेन्द्र-हस्त-प्रतिमश् च पीनः
तयोर् द्वयोः सं-ह[14]तयोः सु[14]-जातः ।[15]
प्राऽऽस्पन्दमा[16]नः पु[17]नर् ऊरुर् अ[17]स्या
१५] रामं पुरस्तात् स्थितम् आ-चचक्षे ॥४॥ [४

---

१. आ अ फ–'च' इति 'गतां' इत्यतः पूर्वं क्रमव्यत्यत इव पठितः। २. च स प्र ब म ल२–तथागतां सुव्यथितां सुदीनां। ल१–अत आरभ्य सर्गसमाप्तिं यावत्त्रुटितः पाठः। ३. रा म–०र्षामतिदी०। ल२–०र्षां परदी०। अ–०तसत्त्वां परिदी०। ४. च रा प्र ब ल२–तथा। ५. रा प्र ब म ल२–जयश्रिया। ६. फ–इवोपशोभा॥ ७. आ च रा ब म ल२–०युक्तं। ८. ल२–अस्पन्द०। ९. फ अ–मीनाहतं। १०. फ च ल२ अ–इवातिता०। ११. फ–दिव्याभरणोपयोग्यः। अ–त्राभेतरपी०। ब म ल२–चार्वंचितपी०। १२. आ–०नाभः। १३. अ–चारु। १४. आ च रा प्र ब म ल१–०योश्च जा०। १५. वं–अस्य पादस्य स्थाने "पीतोरुरेकः सुशुभः सुजातः" इति पठति। १६. रा–०न्दमाना। १७. आ–कनकावदातः। अत्र पद्ये शाखान्तरसंमेलनापेक्षः शोधः द्र०॥

मुखं[1] पुनर् हेम-समान-वर्णम्
ईषद्-रजो-ध्वस्तम् इवाऽमलाऽक्ष्याः ।
वामः[2] स्थितायाः शिखराऽग्र-दत्याः
N] किञ्चित् स्तनोऽस्पन्दत[3] चारु-गात्र्याः[4] ॥५॥ [५
एतैर् निमित्तैर् अपरैश् च सीता[5]
सन्[6]-नोदिता प्राग् अपि साधु-सिद्धैः[7] ।
वाताऽऽतप-क्लान्तम् इवाऽप-कृष्टं[8]
१६] वर्षेण[9] बीजं[10] प्रतिसं-जहर्ष[11] ॥६॥ [६
तस्याः पुनर् विम्ब-फलाऽधरौष्ठं[12]
सुभ्रू[13]-अक्षि केशाऽन्त-मराल-पक्ष्म ।
वक्त्रं बभासे सित[14]-चारु-दंष्ट्रं
१७] राहोर् मुखाच् चन्द्र[15] इव प्र-मुक्तः[15] ॥७॥ [७
सा वीत-शोका[16] व्यप-नीत-तन्द्रा[17]
शान्त-ज्वरा[18] हर्ष-विशुद्ध-सत्त्वा ।
अशोभताऽऽर्या वदनेन सु-भ्रूः
१८] शीतांऽशुना रात्रिर् इवोदितेन ॥८॥ [८

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि[19] सीता-निमित्त-दर्शनो[20]
नाम त्रयोविंशः सर्गः ॥२३॥

---

१. फ अ-शुभं । २. फ.-वासः । ३. आ-अनोस्यन्दत । फ-तदास्रंसत । च-स्तनौ स्यन्दत । अ-तदास्यन्दत । रा प्र ब म-स्तनोऽस्यन्दत । ४. ल$_2$-रामपत्न्याः ॥ ५. फ अ-सुभ्रू । ६. प्र ब म ल$_2$ अ-संबोधिता । ७. फ च-साधुसिद्धैः । ८. ल$_2$-०पक्लिष्टं । अ-इवाप्रहृष्टं । ९. प्र-वर्षं च । १०. आ-वीतप्र० । ११. फ-नास्ति ॥ १२. आ-०धरौष्ठ्यां । १३. रा-सुभ्र० क्षिके० । १४. अ-शितचा० । १५. आ-चन्द्रमिव प्रमुक्तम् ॥ १६. म-वीतलोका । १७. अ-०तनिन्द्रा । १८. आ-शान्तद्धरा ॥ १९. फ च प्र ब ल$_2$ अ-त्रुटितः पाठः । २०. प्र ब म ल$_2$ अ-सीतायाः शुभनिमि० । फ च-०त्तदर्शनं ॥

## [वं—२९ ]= [ चतुर्विंशः सर्गः ] =[दा—३०]

हनूमान्[1] अपि वि-क्रान्तः सर्वं शुश्राव तत्त्व-तः ।
१] सीतायास् त्रि-जटायाश् च राक्षसीनां च तर्जितम्[2] ॥१॥[१
अवेक्षमाणस्[3] तां देवीं देवताम् इव नन्दने ।
२] ततो बहु-विधां चिन्तां चिन्तयामास वानरः ॥२॥[२
यां कपीनाम् अनेकानि[4] प्र-युतान्य् अर्बुदानि च ।
३] दिक्षु सर्वासु मार्गन्ते सेयम् आ-सादिता मया ॥३॥[३
चारेण[5] तु सु-युक्तेन शत्रोः शक्तिम् अभीऽऽप्सुना[6] ।
४] मूढेन चरता तावद् अवेक्षितम् इदं मया ॥४॥[7][४
राक्षसानां नि-वेशाश् च पुरी चेयम्[8] अवेक्षिता ।
५] राक्षसाऽधिपतेर् अस्य[9] प्र-भावो रावणस्य च[10] ॥५॥[५
युक्तं तस्याऽप्रमेयस्य सेयं(?सत्त्वं) सत्त्ववता(?तो)[11]मया ।
६] समा-श्वासयितुं सीतां पत्युर्[12] दर्शन-काङ्क्षिणीम् ॥६॥[६
N] अहम् आ-श्वासयाम्य् एनां पूर्ण-चन्द्र-निभाऽऽननाम् ।

---

१. ल$_2$ अ—हनु० । २. फ ल$_1$—गर्जितम् । अ—तर्जनम् ॥ ३. आ च—अवेक्ष्य० । फ अ—अवेक्षमाणस्तामेव ॥ ४. फ—सहस्राणि अयु० । अ—अनीकानि सहस्राण्यर्बुदा० ॥ ५. आ—चारेणापि सु० । फ—०ण तु सुगुप्तेन । म—०ण सुप्रयुक्तेन । ६. फ म—अवेक्षता । ७. रा प्र ब ल$_2$—नास्ति ॥ ८. फ—चेयं निरीक्षिता । ९. प्र—०तेस्तस्य । १०. फ—तु ॥ ११. 'सेयम्' इति काऽपि पुरातनी विकृतिः । तु० दा वं—उभयत्रादौ सकारस्य विद्यमानत्वं मूलत एवाऽसावेवमिति प्रतिभाति । तथाहि, दा—सर्वस०, वं—सत्यम्, इति च पाठौ भवतः । एवं वं—'सत्यवतः' इति पठति । १२. अ ब—भार्या पत्युर् । फ—भार्या पतिद० ॥

अ-दृष्ट-[1]दुःखा दुःखस्य नह्य् अन्तम् अधि-[2]गच्छति॥७॥ [७
७] यदि ह्य् अहम् इमाम् एवं शोकोप-हत-चेत[3]नाम् ।
८पू] अन्-आश्वास्य गमिष्यामि दोषवद्[4] गमनं भवेत् ॥८॥[5] [८
गते हि मयि तत्रेयं राज-पुत्री यशस्विनी ।
N] परि-त्राणम् अ-विन्दन्ती जानकी जीवितं त्यजेत्॥९॥ [९
८उ] मया स[6] च[6] महा-बाहुः पूर्ण-चन्द्र-निभाऽऽननः ।
समा-[7]श्वासयितुं योग्यः सीता-दर्शन-लालसः ॥१०॥ [१०
९] निशा-चरीणां प्रत्य्-अक्षं न[8] क्षमं प्रति-भाषणम् ।
कथं नु खलु कर्त्तव्यम् इदं[9] कृच्छ्र-गतो ह्य् अहम् ॥११॥ [११
१०] अनेन रात्रि-शेषेण यदि नाऽऽश्वास्यते[10] मया ।
सर्वथा नास्ति सन्देहः परि-त्यक्ष्यति[11] जीवितम् ॥१२॥ [१२
११] रामश् च यदि पृच्छेन्[12] मां किं मां सीताऽब्रवीद् वचः ।
१२पू] किम् अहं तं [13]प्रति-ब्रूयाम् अ-संभाष्य सु-मध्यमाम्॥१३॥[१३
१३उ] सीता-सन्देश-रहितं माम् इतस् त्वरया गतम् ।
निर्-दहेद् अपि काकुत्स्थः क्रुद्धस् तीक्ष्णेन चक्षुषा॥१४॥ [१४
१४] यद्य् अना-श्वास्य[14] गच्छामि [15]शोकेनाऽभिनि-पीडिताम् ।
१५पू] [16]प्राऽऽप्त-दोषो भविष्यामि दोषश् चाऽकथने महान्॥१५॥[N

---

१. रा म—०ष्टदुःखां । प्र—०ष्टपूर्वा । ब ल२—०ष्टपूर्वां । २. रा म—अधिगच्छतीं ॥ ३. अ—०तचेतसाम् । ४. आ— दोषं बहुमते भ० । ५. अतः परमधिकः पाठः —म—तस्मादाश्वास्य वैदेहीं गन्तव्यं न त्वदृष्टया ॥ ६. फ अ—च स । ७. आ—समास्वा० ॥ ८. रा प्र ब म ल२—न वक्तुं प्रतिभाति मे । अ—मयास्या अभिभा० । ९. आ च रा प्र ब म ल२ अ—इति ॥ १०. अ—नास्वस्यते । ११. आ—परित्यजति ॥ १२. फ—वा पृच्छेत् । १३. फ रा प्र ब म ल२ अ—प्रेयं ब्रू० ॥ १४. आ—यथानास्वास्य । १५. रा—शोकेन यदि नि० । ब—०नातिनि० । १६. ब म ल२—प्रायो दोषी ॥

यदि नाम[१] गमिष्यामि भर्तारं राम-कारणात् ।
N] वृथा[२] गमनम् इत्य्-एव तस्य राज्ञो[२] भविष्यति ॥१६॥ [१५
१५उ] अन्तरं[३] च समा-साद्य[३] राक्षसीनाम् इह[४] स्थितः ।
शनैर् आ-श्वासयिष्यामि[५] सं-ताप-बहुलाम् इमाम्॥१७॥ [१६
१६] अहं[६] ह्य् अ-विदितश्[६] चैव वानरश् च वि-शेषतः ।
१७पू] वाचं चोदीरयिष्यामि मानुषीं[७] च सु-संस्कृताम्[७] ॥१८॥ [१७
N] यदि चैवाऽभि-धास्यामि संताप-बहुलाम् इमाम् ।[८]
१८पू] रावणं मन्यमाना [९]मां[१०] सीता भीता भविष्यति ॥१९॥ [१८पू
अवश्यम् एव वक्तव्यं[११] मानुषं वाक्यम् अर्थवत् ।
N] मया सान्त्वयितुं शक्या नाऽन्यथेयम् अ-निन्दिता॥२०॥[१९
१७उ] सेयम्[१२] आ-लोक्य[१२] मे रूपं जानकी भाषितं तथा ।
N] रक्षोभिस् त्रासिता पूर्वं भूयम् त्रासं गमिष्यति ॥२१॥ [२०
१८उ] ततो जात-परि-त्रासा शब्दं कुर्यात्[१३] तपस्विनी[१३] ।[१४]
जानीते हि[१५] विशालाऽक्षी रावणं काम-रूपिणम् ॥२२॥ [२१
१९] सीतया हि कृते शब्दे सहसा राक्षसी-गणः ।
नाना प्र-हरणो घोरः समेयाद् अन्तकोपमः[१६]॥२३॥ [२२

---

१. फ— चेद् योजयिष्यामि । अ—नोद्योजयिष्यामि । २. फ—ऽयर्थमागनन्तस्य ससैन्यस्य भ० । अ—ऽयर्थं गमनमित्येवं तस्य राज्ञो ॥ ३. फ—०रं त्वहमा० । ल$_२$—अनन्तरं स० । ४. ल$_२$—अहं । ५. अ—आस्त्रास०॥ ६. अ—अणु ह्यतितनुश् । च रा प्र ब म ल$_२$ अ—अहं ह्यतितनुश् । ७. फ च रा ब ल$_२$ अ प्र ल$_१$—मानुषीमेव सं० । म—मानुषीमिव सं० ॥ ८. रा प्र ल$_२$—वाचाभि० । ब ल$_१$—त्रा नाभि० । ९. फ अ—नास्ति । १०. प्र—सा ॥ ११. च रा ब म ल$_१$ ल$_२$—वदता ॥ १२. फ—अन्यथालोक्य ॥ १३. फ म—कुर्यान्मनस्विनी । १४. च रा प्र ब ल$_१$ ल$_२$—नास्ति । १५. प्र—जानकीयं वि० । ब—जानाति हि ॥ १६. फ.—नानाप्रहरणोपेतो मामुपेयान्न संशयः । च—नानाप्रहरणा घोराः समग्रादन्तकोपमाः । रा प्र ब म ल$_१$ ल$_२$—नानाप्रहरणा घोरा समग्रा अन्तकोपमाः ॥

२०] ताश्[1] च मां संपरि-क्षिप्य[2] सर्व-तो[2] वि-कृताऽऽननाः ।
वधे च[3] ग्रहणे चैव कुर्युर्[4] यत्नं यथा-बलम्[4] ॥२४॥ [२३
२१] ततः शाखाः प्र-शाखाश् च स्कन्धाश् चोत्तम-शाखिनाम् ।
२२पू] दृष्ट्वा[5] विपरि-धावन्तं[5] भवेयुः[6] परि[6]-शङ्किताः ॥२५॥ [२४
मम रूपं च[7] सं-दृश्य[7] वने वि-चरतो[8] महत्[9] ।
N] राक्षस्यो भय-संत्रस्ता[10] भवेयुर् वि-कृताऽऽननाः ॥२६॥ २५
२२उ] ततः कुर्युः समा-ह्वानं राक्षस्यो रक्षसाम् अपि ।
राक्षसेन्द्र-नियुक्तानां राक्षसेन्द्र[11]-निवेशने[11] ॥२७॥ [२६
२३] ते शूल-शर-निस्त्रिंशाः[12] पाश-तोमर-धारिणः[13] ।
२४पू] आ-पतेयुर् वि-मर्देऽस्मिन् वि-विधाऽऽयुध[13]-पाणयः ॥२८॥ [२७
सं-क्रुद्धस्[14] तेषु रक्षःसु वि-धमन्[14] रक्षसां[15] बलम् ।
N] शक्नुयां न[16] तु सं-प्राप्तुं[16] परं पारं महोदधेः ॥२९॥[17] [२८
हिंसा-रुचिर्[18]-त्वान् मां हिंस्युर् इमां वा[19] जनकाऽऽत्म-जाम् ।

---

१. अ—ततो । २. फ—०रिप्रेक्ष्य । च रा प्र ब म $ल_1$ $ल_2$—०रिज्ञाय सर्वाश्च । ३. फ—वा । ४. अ—कुर्याद्यत्नं यथा तथा । $ल_2$—०त्नं महाब० ॥ ५. फ—०दृष्ट्वापि प० । $ल_1$—मामभिधा० । ६. फ रा प्र ब म $ल_1$,$ल_2$ अ—भवेयुर्भयश० ॥ ७. अ—स्वसादृशं । रा प्र ब $ल_1$ $ल_2$ अ—स्वसदृशं । ८. फ म—च चरितं । ९. अ—महान् । १०. फ—अ—०वित्रस्ता ॥ ११. फ—मम संप्रति शातने ॥ १२. अ—०स्त्रिंशाविविधायुधपाणयः । १३. फ—वेगेनाविघ्नकारिणः । अ—वेगेन विघ्नकारिणः ॥ १४. फ—संरुद्धैस्तैस्तु रक्षोभिर्विधमन् । अ—संरब्धैस्तैस्तु रक्षोभिर्विचिन्वन् । $ल_1$—०सु विदलन् । १५. फ $ल_1$—राक्षसं बलं । ब म—राक्षसोब० । १६. $ल_1$—नियतं प्रा० । १७. अतः परमधिकः पाठः—अ—मां वा गृह्णीयुराप्लुत्य† बहवः शीघ्रकारिणः । स्यादियं निगृहीतार्था‡मम च ग्रहणं भवेत् ॥ १८. च प्र $ल_2$—अतिक्रुद्धाश्च । रा ब म $ल_1$ अ—अभिक्रुद्धाश्च । १९. रा ब म $ल_1$ $ल_2$ अ—च ।

---

† च रा ब प्र म $ल_2$—गृह्णीयुराक्रम्य । $ल_1$—गृह्णीयुरुद्यम्य । ‡ च—निगृहीतार्थं ।

२८] वि-[1]पन्नं [1]स्यात् ततः [2]कार्यं राम-सुग्रीवयोर् [3]इदम् ॥३०॥ [३०
[4]प्र-देशे नष्ट-मार्गे [4]च राक्षसैः परि-वारिते ।
N] सागरेण परि-क्षिप्ते [5]दुर्गे वसति जानकी ॥३१॥ [३१
वि-[6]ध्वस्ते वा गृहीते वा [7]रक्षोभिर् मयि सं-युगे ।
२६] नाऽन्यं पश्यामि रामस्य [8]सहायं कार्य-साधने ॥३२॥ [३२
वि-मृशन् नैव पश्यामि यो हते मयि वानरः ।
२७] शत-योजन-विस्तीर्णं लंघयेत् [9]तु महोदधिम् ॥३३॥ [३३
३०पू] कामं हन्तुं समर्थोऽस्मि [10]सहस्राण्य् [10]एव रक्षसाम् ।
२९उ] न तु [11]शक्ष्यामि सं-प्राप्तुं परं पारं महोदधेः ॥३४॥ [३४
स-[12]संशयानि [12]युद्धानि सं-शयो मे न रोचते ।
३१] [13]कश् [13]च निःसं-शयं [14]कार्यं कुर्यात् [14]प्राज्ञः स-संशयम् ॥३५॥ [३५
३२पू] एष दोषो महान् हि स्यान् मम सीताऽभि-भाषणे ।[15]
N] प्राण-त्यागस् तु वैदेह्या भवेद् अन्-अभि-भाषणे ॥३६॥[16] [३६
[17]सन्तोऽप्य् अर्था वि-[17]नश्यन्ति देश-काल-विरो[18]धिनः ।
N] वि-क्लवं दूतम् आसाद्य तमः सूर्योदये यथा ॥३७॥ [३७
अर्थाऽनर्थाऽन्तरे बुद्धिर् नीता [19]वाऽपि न शोभते ।

---

१. फ–विपरीतं । २. रा प्र ब म ल$_1$ ल$_2$ अ–कर्म । ३. अ–इति ॥ ४. फ अ–उद्देशे नष्टमार्गेस्मिन् । ५ फ–गुप्ते ॥ ६. अ फ–विशस्ते । ७. च प्र ल$_1$ ल$_2$–क्षोभिते । ८. फ अ–सखायं । ल$_2$–साहाय्यं ॥ ९. फ च ल$_1$ ल$_2$–लंघयेच्च । अ–लंघयेत ॥ १०. फ च प्र ब ल$_2$–सहस्राण्यपि । अ–सहस्राणि च । ११. फ रा म ल$_2$ अ–शक्यामि । ल$_1$–त्रुटितः पाठः ॥ १२. फ–असत्यानि च । रा प्र ब म ल$_1$–संशयेपि हि युद्धेषु । ल$_1$–संशयानि च । १३. अ–कथं । १४. फ अ–कुर्यात्प्राज्ञः कार्यं । रा–कार्यं प्राज्ञः कुर्यात्ससं० ॥ १५. अतः परमधिकः पाठः–म–राक्षसैः सह मे युद्धं भवेत् सीताभिभाषणे । १६. ल$_2$–नास्ति ॥ १७. ल$_1$–त्रुटितः पाठः । १८. फ–०विरोधिताः । रा प्र ब म ल$_1$ अ–०विरोधतः । १९. रा ब म ल$_1$ चापि । प्र–अपि ।

N] घातयन्ति[1] हि कार्याणि दूताः पण्डित-मानिनः ॥३८॥ [३८
न वि-नश्येत् कथं[2] कार्यं वैक्लव्यं न कथं भवेत् ।
N] लंघनं[3] च[3] समुद्रस्य कथं[4] नु न वृथा[4] भवेत् ॥[5]३९॥ [३९
३२उ] कथं नु खलु मे वाक्यं शृणुयान् नोद्विजेत[6] च ।
इति सं-चिन्त्य मतिमांश्[7] चकार हनुमान् मतिम्[8]॥४०॥ [४०
३३] रामम् अ-क्लिष्ट-कर्माणं सं-बद्धम्[9] अनु-कीर्तयन् ।
३४उ] नैनाम्[10] उद्वेजयिष्यामि तत्-सर्व[11]-गत-मानसम् ॥४१॥ [४१
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदिताऽऽत्मनः ।
N] शुभानि धर्म-युक्तानि वचनानि सम्-अर्थयन् ॥४२॥ [४२
श्रावयिष्यामि सर्वाणि मधुरं मधुराऽक्षरम् ।
N] श्रद्धास्यति यथा[12] हीऽयं तथा सर्वं समा[13]-दधे ॥४३॥ [४३
३४पू] पतिं च[14] परि-शृण्वन्ती चिरस्य पुरुषर्षभम् ।
N] व्यक्तं[15] पद्म-पलाशाऽक्षी प्र-हृष्ट-हृदया भवेत् ॥४४॥ [N
N] एवं सं-कीर्तयतो (?यंतं) मह्यं (?मां) रघु-वंश-विवर्धनम् ।[16]
३५उ] पश्यन्ती चाऽग्रतो व्यक्तं नोद्विग्ना[17] मे भविष्यति ॥[18]॥४५ [N

---

१. अ-पात० ॥ २. ल२ अ-इदं । ३. ल१-त्रुटितः पाठः । ४. म-वृथा तु न कथं । अ-कथं न च वृथा । ५. ब ल२-नास्ति ॥ ६. फ अ-नोद्विजेति । आ च रा-नोद्विजेत ॥ ७. फ अ-हनुमांश्चकार मतिमान् । च ब ल२-०र हनुमान्कपिः ॥ ८. ल१-त्रुटितः पाठः । ९. आ च-स्वधर्मम् । फ प्र म ल२ अ-सम्बन्धम् । १०. रा-नैताम् । ल१-नैतम् । ११. प्र ब म ल२-सर्वं ग० । ल१-०तमानसा ॥ १२. रा-तथा चेयं । १३. आ च-समादहे ॥ १४. फ अ-हि । १५. अ-युक्तं ॥ १६. आ फ च प्र ब ल१ ल२ अ-नास्ति । मूलस्य म-कोशमात्रावशेषितत्वात् प्रस्ताविंत शोधनं सम्यगव-धेयम् । १७. म-हि । १८. रा ब ल२-नास्ति ॥

इति स बहु-विधं महाऽनु-भावो
मनुज-पतेः प्रमदाम् अवेक्ष्य(?क्ष)माणः ।
मधुरम् अ-वितथं जगाद वाक्यं
N] द्रुम-विटपाऽन्तरम् आ-स्थितो महाऽऽत्मा ॥४६॥ [४४

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-विकल्पो
नाम चतुर्विंशः सर्गः ॥२४॥

---

१. फ प्र–अवेक्षमान ॥ २. फ–०ण्डे दिग्विजये ह० । रा ब म–०ण्डे लंकापर्वणि ह० ।

ऐवं[1] बहु-विधां[2] चिन्तां चिन्तयामास[3] वानरः ।
१] श्रावयन्[4] मधुरं वाक्यं वैदेह्या व्या-जहार ह ॥१॥ [१
२पू] राजा दश-रथो नाम रथ-कुञ्जर-वाजिमान्[5] । [२पू
N] चक्रवर्त्ति-कुले जातः पुरन्दर-समो बले[6] ॥२॥[7] [N
२उ] पुण्य-शीलो महा-कीर्त्तिर् ऋजुर् आसीन् महा-यशाः । [२उ
अ-हिंसारतिर्[8] अ-क्षुद्रो घृणी सत्य-पराक्रमः[9] ॥३॥
३] मुख्यश् चेक्ष्वाकु-वंशस्य राज्य-लक्ष्मी-विवर्द्धनः[10] । [४
पार्थिव-व्यञ्जनैर्[11] युक्तः पृथु-श्रीः पार्थिवर्षभः ॥४॥
४] पृथिव्यां[12] चतुर्-अन्तायां त्रि-श्रुतः सुख-दः सुखी ।
N] धर्म्म-शीलो वदान्यश् च प्रिय-वाची जितेन्द्रियः ॥५॥[13] [N
तस्य पुत्रो गुण-ज्येष्ठस् तारा[14]ऽधिप-निभाऽऽननः ।
५] रामो नाम विशेष-ज्ञः श्रेष्ठः सर्व्व-धनुष्मताम् ॥६॥ [६
रक्षिता स्वस्य वंशस्य जनस्य[15] परि-रक्षिता ।

---

१. फ च प्र ल$_1$ ल$_2$—एतद् । २. म अ—०विधं चित्रं । ३. फ—चिन्तयित्वा स वा० । ल$_1$ल$_2$—चिन्तयित्वा महाकपिः । ४. फ—संश्रवे । रा प्र ब म ल$_1$ल$_2$—प्रस्तावम० ॥ ५. फ रा प्र ल$_1$ अ—०वाजिनाम् । च ल$_2$—०वाजिवान् । ६. ब—बली । ७. फ अ—नास्ति ॥ ८. फ—०रतिराजेन्द्रो । अ—०तिरक्रुद्धो । ९. प्र ब म ल$_1$ ल$_2$—०परायणः । १०. आ फ अ—लक्ष्मीवां श्रीवि० । च रा—राजा ल० । ब म—राजल० । ११. ब ल$_1$ ल$_2$—पृथिवन्द्रो जनैर् ॥ १२. आ—पृथिव्याः चतुरन्तायाः । फ—०व्यां सागरान्तायां । ल$_2$—व्यां चतुरन्तानां । १३. अ—नास्ति ॥ १४. रा प्र ब म ल$_1$ ल$_2$ अ—तारापतिनि० ॥ १५. च—जनकस्य प० । फ अ—स्वजनस्य च र० । रा प्र ब म ल$_1$ ल$_2$—जनकस्य च र० ॥

६] रक्षिता जीव-[1]लोकस्य धर्म्मस्य च परं-तपः ॥७॥ [७
तस्य सत्याऽभि-सन्धस्य [2]वृद्धस्य वचनात् पितुः ।
७] स-भार्यः [3]सह च [3]भ्रात्रा वीरः प्र-व्रजितो वनम् ॥८॥ [८
तस्य तत्र महाऽरण्ये मृगयां परि-धावतः ।[4] [९पू
८] रावणेन हृता भार्या मिथिलाऽधि-पतेः सुता ॥९॥ [N
यथा-[5]वर्णां यथा-रूपां यथा-[6]लक्ष्मवतां [7]वराम् ।
N] अश्रौषं सा त्वम् अद्याऽऽर्यै दृष्टा मे[8] नाऽत्र सं-शयः॥१०॥[१५
जन-स्थाने वधं श्रुत्वा [9]हतौ च खर-दूषणौ ।
९] त्वम् अ-मर्षाद् इहाऽऽनीता रावणेन दुर्-आत्मना॥११॥ [१०पू
शृणु वैदेहि रामस् त्वां [10]पतिः [11]कौशल्यम् अब्रवीत् ।
१०] देवरश् चाऽपि [12]ते शूरः कौशल्यं वाक्यम् [12]अब्रवीत्॥१२॥[13] [N
विररामैवम् उक्त्वा [14]तु स [14]वचो मारुताऽऽत्म-जः ।
११] जानकी चाऽपि तच् छ्रुत्वा जहर्ष च ननन्द च ॥१३॥ [१६
[15]ततः [15]सा वक्र-केशाऽन्ता सु-केशी केश-संवृता ।
१२] उन्-[16]नाम्य वदनं [17]भीरुः [18]शिंशिपां समुद्-ऐक्षत ॥१४॥ [१७

---

१. च प्र म ल$_1$ ल$_2$–स्वस्य वंशे । रा ब–स्वस्य लो० ॥ २. ल$_2$ अ–बद्धस्य । ३. ब ल$_1$ अ–सह भ्रात्रा च । ल$_2$–सह सुभ्रात्रा । ४. ल$_2$ अ–नास्ति ॥ ५. अ–०रूपं । ६. आ फ च रा प्र ब–०लक्ष्मवि तां । च ल$_1$ ल$_2$–०लक्ष्मीवतां । ७. रा प्र ब म ल$_1$ ल$_2$ अ–शुभाम् । ८. आ–सत्यम् । रा प्र ब म ल$_1$ ल$_2$–सा तथा दृष्टा मया त्वं ॥ ९. रा प्र–हत्वा । १०. आ–प्रति । ११. फ–कुशलं । १२. च–कौशल्यं शूरस्ते वा० । रा ब–ते वाक्यं शूरः कुशलमब्र० । म अ–वीरं कुशलं लक्ष्मणोब्र० । १३. प्र ल$_1$ ल$_2$–नास्ति ॥ १४. फ–स निर्वचो । प्र–स वचो वै । ल$_1$–तु स वचनं । अ–तां स वचो वै॥ १५. प्र–तत्तस्य । १६. प्र–तत्तस्य । १७. आ च रा ब प्र ल$_1$ ल$_2$–सीता । १८. आ–०सिंसिपां । म ल$_1$ ल$_2$–शिंशपां ॥

सा तिर्यग् ऊर्ध्वं च तथा ह्य् अधस्तान्
निर्-ईक्षमाणा तम् अ-चिन्त्य-रूपम् ।
ददर्श पिङ्गाऽधिपतेर् अमात्यम्
N] वाताऽऽत्म-जं सूर्यम् इवोदय-स्थम् ॥१८॥[१९

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-दर्शनं
नाम पञ्चविंशः सर्गः ॥ २५ ॥

---

१. आ–हि । २. आ–॰माणोत्तमरूपचिंत्यम् । फ अ–॰णा–मचिन्त्यबुद्धिम् । ३. अ–इवाचलस्थम् ॥ ४. रा ब–॰ण्डे लंकापर्वणि ह॰ । ५. फ–सर्गसमाप्तिर्न दृश्यते ॥

ततः शाखाऽन्तरे लीनं त्रस्ता चलित-मानसा । [२पू
१३] सा ददर्श कपिं तत्र प्र[1]-श्रितं प्रिय-वादिनम् ॥१॥[2] [२पू
सा[3] तु दृष्ट्वा कपि[3]-श्रेष्ठं वि[4]-नीतं विटप[4]-स्थितम् ।
१४] मैथिली चिन्तयामास स्वप्नोऽयम् इति भामिनी[5] ॥२॥ [७
सा तं सम्-ईक्ष्या[6]ऽथ भृशं वि-संज्ञा
गताऽऽसु-कल्पेव बभूव सीता ।
चिरस्य प्रज्ञां प्रति-लभ्य चैव
१५] वि-चिन्तयामास विशाल[7]-नेत्रा ॥३॥ [९
स्वप्नो मयाऽयं वि-कृतोऽद्य दृष्टः
शाखा-मृगो[8] धिङ् मम भाग-धेयम् ।
स्वस्त्य् अस्तु रामाय स-लक्ष्मणाय
पित्रे तथा मे जनकेश्वराय[9] ॥४॥ [१०
स्वप्नस्[10] तु नाऽयं नहि मेऽस्ति[11] निद्रा
भयेन शोकेन च पीडिताया[12]ः ।
सुखं हि[13] मे नास्ति यतोऽस्मि हीना
१६] तेनेन्दु[14]-बिम्ब-प्रतिमाऽऽननेन ॥५॥ [११

---

१. ल₂ अ-प्रसृतं । २. ब-ददर्श प्रसृता सीता वानरं प्रियवादिनम् ॥ ३. फ-दृष्ट्वा च तं क० । अ-सा तु दृष्ट्वा हरिश्रेष्ठं । ४. आ फ-विनीतवदुप० । ५. फ अ-विस्मिता ॥ ६. फ-ईक्ष्यैव । ७. फ-विलोल० ॥ ८. आ-०मृगोयं । ९. फ अ-जनकाय राज्ञे ॥ १०. आ-स्वप्नस्त्वयं किं । ११. आ च रा प्र ब-मेऽद्य । १२. रा-पीडितात्मा । १३. रा म-च । १४. फ रा प्र ब म ल₁ ल₂-तेनैव पूर्णेन्दुनिभाननेन ॥ अ-तेनेन्दुपूर्णप्र० ॥

अहं हि तस्याऽद्य मनो-भवेन

सं-पीडिता तद्-गत-सर्व-भावा ।

वि-चिन्तयन्ती संततं[1] तम् एव

१७] रूपं च[2] पश्यामि तथा शृणोमि ॥६॥ [१.३

मनो-रथः स्याद् इति चिन्तयामि

तथाऽपि बुद्ध्या न[3] वि-तर्कयामि ।

किं कारणं तस्य हि[4] नास्ति रूपं

१८] व्यक्त-स्वरूपं[5] च वदत्य् अयं माम् ॥७॥ [१.४

नमोऽस्तु वाचस्-पतये स[6]-वज्रिणे

स्वयं-भुवे चाऽपि हुताऽशनाय च ।

अनेन चोक्तं वचनं[7] ममाऽग्रतो

१९] वनौकसा यच्च[8] तथाऽस्तु नाऽन्यथा ॥८॥ [१.५

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि सीता-विषादो[9]

नाम षड्विंशः सर्गः[10] ॥ २६ ॥

---

१. फ-सयितं । २. फ अ-न चैव ॥ ३. नु । ४. अ-च । ५. फ-०सरूपं । ब-०सुरूपं । फ ब अ-भिन्नाः-०स्वरूपश् ॥ ६. आ-०तये स्तु व० । फ-सु० । ७. आ-यदि मे । च रा प्र ब म $ल_1$ $ल_2$-यदितो ममाग्रे । ८. च रा प्र ब म $ल_1$ $ल_2$-तच्च ॥ ९. रा-सीताचिन्तनं । १०. $ल_1$-इति सुन्दरकाण्डे सीतानुचिन्तनं नाम सर्गः । फ प्र ब म $ल_1$-नास्ति ॥

अब्रवीत्[1] स महा-तेजा हनूमान् मारुताऽऽत्म[2]-जः ।
शिरस्य्[3] अञ्जलिम् आ-धाय[3] सीतां मधुरया गिरा ॥१॥
का[4] त्वं कमल पत्राऽक्षि[4] श्यामा[5] कौशेय-वासिनि[6] ।
द्रुमस्य शाखाम् आ-लम्ब्य तिष्ठसि त्वम् अ-निन्दिते ॥२॥
किम् अर्थं तव नेत्राभ्यां वारि स्रवाति शोक-जम्[7] ।
पुण्डरीक-पलाशाभ्यां विप्र-कीर्णम् इवोदकम् ॥३॥
का त्वं भवसि रुद्राणां मरुतां वा वराऽऽनने ।
का वसूनां वराऽऽरोहे देवता प्रति-भासि मे ॥४॥
अथ चन्द्रमसा[8] हीना पतिता वि-बुधाऽऽलयात्[9] ।
रोहिणी[10] ज्योतिषां[10] श्रेष्ठा त्वम् अ-निन्दित-लोचने ॥५॥
रोषाद् वा यदि वा मोहाद् भर्त्तारम् अ-सितेक्षणे ।
वसिष्ठं कोपयित्वेह सं-प्राप्ता त्वम्[11] अरुन्धती ॥६॥
क्व नु पुत्रः पिता भ्राता भर्त्ता वा ते सु-मध्यमे ।
अस्माल् लोकाद् अमुं लोकं गतं[12] त्वम् अनु-शोचसि ॥७॥
व्य्-अञ्जनानि तु[13] ते यानि लक्षणानि[14] तु[15] लक्षये ।

---

१. फ–तामब्रवीत्पुनर्धीमान् । अ–तामब्रवीत्ततो धीमान् । च रा प्र ब म ल१ ल२–तामब्रवीत् म० । २. च–पवना० । ३. अ–शिरसांजलिमादाय । च प्र ल१–०लिमादाय ॥ ४. फ–सा त्वं कमलपत्राक्षी । रा ब प्र–सा त्वं क० । अ–सा त्वं पद्मपलाशाक्षि । ५. रा ब प्र–श्यामे । ६. फ–०वाससी ॥ ७. रा ब म–शोभने । ८. च–चन्द्रसमा । ९. च–वसुधा० । रा प्र ब ल१–वसुधालयम् । ल२–वसुधातलम् । अ–विपुलालयं । १०. फ रा ब प्र म ल१ ल२–ज्योतिषां रोहिणी ॥ ११. आ अ म–त्वमरुन्धति । प्र–त्वमनिन्दिते । ल१ ल२–त्वमनिन्दिते ॥ १२. फ रा ब म– गता । प्र ल२ ल२–गत्वा ॥ १३. फ अ–च । १४. रा–लक्ष्म० । १५. फ–हि ॥

महिषी भूमि-पालस्य राज-कन्याऽसि मे मता ॥८॥
सुराणाम् अ-सुराणां च[1] नाग-गन्धर्व-रक्षसाम् ।
यक्षाणां किं-नराणां च[2] का त्वं भवसि शोभने[3] ॥९॥[4]
रावणेन जन-स्थानाद् बलात् प्र-मथिता यदि ।
सीता त्वम् असि भद्रं ते तत्त्वम्[5] आ-ख्याहि भामिनि[6] ॥१०॥[7]
सा तस्य वचनं श्रुत्वा राम-कीर्तन-हर्षिता ।[8]
उवाच वाक्यं वैदेही[10] हनूमन्तं द्रुमाऽऽश्रितम्[9] ॥११॥
दुहिता जनकस्याऽहं वि-देहस्य महाऽऽत्मनः ।
सीतेति नाम्ना[11] तस्याऽहं भार्या[11] रामस्य धीमतः ॥१२॥[12]
वत्सरान्[13] द्वादश पुरा राघवस्य नि-वेशने ।
भुञ्जाना मानुषान् भोगान् सर्व-काम-फलान्[14] बहून्[14] ॥१३॥
ततस् त्रयोदशे वर्षे राज्ये त्वम्[15] इक्ष्वाकु-नन्दनम्[15] ।
अभि-षेचयितुं राजा सोपाध्यायोऽकरोन् मतिम् ॥१४॥
तस्मिन्[16] सं-भ्रियमाणे[16] तु राघवस्याऽभि-षेचने ।
कैकेयी नाम भर्त्तारं देवी[17] वचनम् अब्रवीत् ॥१५॥
न पिबामि न खादामि प्रत्य्-अहं तव[18] भोजनम् ।
एवं मे जीवितस्याऽन्तो रामो यद्य् अभि-षिच्यते ॥१६॥

---

१. फ अ—वा । २. फ रा ब म ल$_1$—वा । ३. फ अ—शंस मे । ४. प्र—नास्ति ॥ ५. फ अ—तन्मम० । ६. फ भाविनि । म—शोभने । ७. रा ब प्र ल$_2$ ल$_2$—नास्ति ॥ ८. अ—सा च तस्य वचः श्रुत्वा रामकीर्तनकर्षिता । ९. अ—०मुपस्थितम् । फ रा ब ल$_1$ ल$_2$—द्रुमाश्रिता ॥ १०. फ—वैदे० । ११. रा—नाम्नास्मि भद्रन्ते भा० । म—नामास्मि भद्रन्ते पत्नी । अ—नाम्ना विख्याता भा० । १२. ल$_2$—नास्ति । १३. अ—वत्सरा । १४. रा ब प्र ल$_1$ ल$_2$—०फलांस्त्वयम् ॥ १५. फ च—नेक्ष्वाकुनन्दनः । रा ब प्र म ल$_1$ ल$_2$—चेक्ष्वाकुनन्दनः ॥ १६. ल$_2$—०न् संभूयमाने । अ—अस्मिन् संभ्रि० । १७. ब—०रमिदं । १८. फ—मम । च रा ब प्र म ल$_1$ ल$_2$—न च । अ—पानभो० ॥

यत् तद् उक्तं त्वया[1] वाक्यं[1] प्रीत्या नृ-पति-सत्तम ।
तत्[2] ते न[2] वि-तथं कार्यं वनं गच्छतु राघवः ॥१७॥
स राजा सत्य-वाग् देव्या वर-दानम् अनु-स्मरन् ।
मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरम् अ-प्रियम् ॥१८॥
ततस् तु[3] स्थविरो राजा सत्य-धर्मे[4] व्यव-स्थितः ।
ज्येष्ठं यशस्विनं पुत्रं रुदन्[5] राज्यम्[6] अयाचत[6] ॥१९॥
अभि-षेकात् प्रियतरं श्रुत्वा स वचनं पितुः ।
मनसा पूर्वम् आ-साद्य वाचं[7] प्रति[7]-गृहीतवान् ॥२०॥
दद्यान् न प्रति-गृह्णीयान् न ब्रूयात् किञ्चिद् अ-प्रियम् ।
अपि जीवित-हेतोर् हि रामः सत्य-पराक्रमः ॥२१॥
स वि-हायो[8]त्तरीयाणि महाऽर्हाणि महा-यशाः ।
वि-सृज्य मनसा राज्यं जनन्यै[9] मां[9] समा-दिशत् ॥२२॥
साऽहं तस्याऽग्रतस् तूर्णं प्र-स्थिता चीर-वासिनी[10] ।
न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते ॥२३॥
प्राग् एव महा-भागः सौमित्रिर् मित्र-नन्दनः ।
पूर्व-जस्या[11]ऽनु-यात्राऽर्थं द्रुम-चीरैर् अलङ्कृतः ॥२४॥
ते वयं भर्तुर् आ-देशात्[12] प्राग् एव तु[12] दृढ-व्रताः[13] ।
प्र-विष्टाः स्मो दुरा-धर्षं वनं गम्भीर-दर्शनम् ॥२५॥
वसतो[14] दण्डकाऽरण्ये तस्याऽहम् अ-मितौजसः ।

---

१. फ—त्वया कार्यं । ल$_1$—पुरा वाक्यं । २. अ—तद्धै न । फ—न त्वया ॥ ३. फ—च । अ—तं । ४. आ फ—०धर्मव्य० । अ—०धर्मव्यवस्थितम् । ५. अ—रामं । ६. फ—वाक्यमभाषत । ७. फ—वाच: प्र० । च रा अ—वाचा प्र० । ब प्र म ल$_1$ ल$_2$—वाचा परिगृ० ॥ ८. फ—विवाहोत्त० । ९. आ—जनन्यौमी । फ—जनन्यै तत् ॥ १०. आ—०वाससः । म—०वासनी । ११. च—०जस्य तु या० । रा—०जस्य च या० ॥ १२. फ अ—०देशं बहु मत्वा । रा ब प्र म—०देशं प्रा० । १३. ल$_2$—महाव्रताः । १४. आ—वसन्तो ।

रक्षसाऽप-हृता भार्या रावणेन दुर्-आत्मना ॥२६॥
द्वौ मासौ तेन मे कालो जीविताऽनु-[1]ग्रहे कृतः ।
ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस् त्यक्ष्यामि जीवितम् ॥२७॥
रावणो वि-कृताऽऽकारो [2]राक्षसोऽति-[2]भयंकरः ।
समुद्र-पारो दुष्-[3]प्राऽऽपः कालः परि-[4]मितश् चै मे ॥२८॥

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-वाक्यं
नाम सप्तविंशः सर्गः ॥२७॥

---

१. आ–०नुग्रहः । २. फ–०सो हि भयानकः । अ–०तिभयानकः ।
३. फ–दुष्प्राप्यः । ४ ल$_2$–पारणितश्च ॥ ५. फ–सर्गसमाप्तिर्नास्ति ॥

[वं-३१]= **[अष्टाविंशः सर्गः]** =[दा-N]

तस्यास् तद् वचनं श्रुत्वा हनूमान् हरि-यूथ-पः ।
२५] दुःखं[1] दुःखाऽभि-भूताया वाक्यम् उत्तरम् अब्रवीत्॥१॥
त्वां मार्गमाणा रामाऽर्थे[2] क्लिश्यन्ते[3] दिक्षु[4] वानराः ।
N] तैस्[5] तैस् तपोभिर् नि-यमैः[5] सिद्धिं मुनि-गणा इव ॥२॥[6]
रघूणां च हरीणां च प्राणास् त्वयि समा-हिताः ।
N] सा त्वं दिष्ट्या[7] मया दृष्टा[8] नास्ति धन्यतरो मम॥३॥[6]
अहं रामस्य सं-देशाद् देवि[9] दूतः समा-गतः ।
२६] वैदेहि कुशली रामस्[10] त्वां च[10] कौशल्यम् अब्रवीत् ॥४॥[6]
दाता भोक्ता प्र-हर्त्ता च श्रेष्ठो लोके धनुर्-धरः ।
यो ब्राह्मम् अस्त्रं दैवं च[11] वेद वेद-विदां-वरः ।
N] स त्वां दाशरथी रामो देवि कौशल्यम् अब्रवीत् ॥५॥
लक्ष्मणश्[12] च[12] महा-तेजा भर्त्तुस् तेऽनु-चरः प्रियः ।
२७] कृतवान्[13] शोक[13]-सन्तप्तः शिरसा तेऽभि[14]-वादनम् ॥६॥
सा तयोः कुशलं देवी वीरयोर्[15] नर-सिंहयोः ।
N] श्रुत्वा[16] संहृष्ट-सर्वाऽङ्गी हनूमन्तम् अथाऽब्रवीत् ॥७॥

---

१. ब प्र म ल$_1$ ल$_2$–महादुःखाभि० ॥ २. च–रामार्थं । ३. ल$_2$–दृश्यन्ते । अ–क्लिश्यन्ति । ४. प्र–ऋक्षवा० । ५. च रा प्र ब म ल$_1$ ल$_2$–क्षुत्तृष्णाभ्यां परिश्रान्ता । ६. फ–नास्ति ॥ ७. अ–दृष्टा मया दिष्ट्या । ८. रा म अ–मया ॥ ९. ब–देव । १०. ब–रामः स त्वां ॥ ११. फ–तु ॥ १२. फ–लक्ष्मणस्तु । १३. आ–कृतवां शो० । फ–कृतवांश्छोक० । १४. आ फ–चाभि० ॥ १५. फ–निशम्य । १६. फ अ–प्रीतिसं० ॥

[1]कल्याणं तत्र गाथेयं लौकिकी प्रति-भाति मे ।
N] [2]ऐति जीवन्तम् आनन्दो नरं वर्ष-शताद् अपि ॥८॥
ततः संजात-विश्रम्भा[3] सीता शशि-निभाऽऽनना ।
तया समा-गतश् चाऽपि हनुमान् प्रीतिमान् बभौ ।
N] परस्परेण चाऽऽ[4]लापं वि-श्व[5]स्तौ तौ प्र-चक्रतुः ॥९॥
[6]तस्यास् तु वचनं श्रुत्वा हनुमान् [7]मारुताऽऽत्म-जः ।
N] सीतायाः शोक-दीर्णायाः[8] समीपम् उप-चक्रमे ॥१०॥
यथा समीपं सीताया हनुमान् उप-सर्पति ।
N] तथा राव[9]णं इत्य् एवं सा सीता पर्य्-अशङ्कि[10]तं ॥११॥
अहो धिक् किं कृतम् इदं [11]कथितं हि यद् अद्य[11] मे ।
N] रूपाऽन्तरम् उपाऽऽगम्य स[12] एवाऽयं हि[12] रावणः॥१२॥
ताम् अ-शोकस्य शाखां तु मुक्त्वा सा शोक-कर्षिता ।
N] भ[13]यात् त[13]स्याऽनवद्याऽङ्गी धरायां सम्उपाऽऽविशत्१३॥
अवं[14]दत् स[14] महा-बाहुस् ततस् तां जनकाऽऽत्म-जाम् ।
N] सा चैवं भय-स[15]न्त्रस्ता भूयो नैवाऽभ्य्उद्-ऐक्षत ॥१४॥
तं दृष्ट्वा वन्द[16]मानं तु सीता चन्द्र-निभाऽऽनना ।

---

१. आ–०व गाथे च । फ–कल्याणी वनगा० । २. फ रा–पति-जी० । आ–प्रतिजी० ॥ ३. फ–०विश्वासा । ४. ब $ल_1$ $ल_2$–वाचाल्यं । प्र–वाचालं । ५. आ–०स्तौ तु । अ–विश्रब्धौ तु ॥ ६. फ अ–तस्या-स्माद् । प्र $ल_1$ $ल_2$–ततस्तद् । ७. फ अ–हरियूथपः । ८. फ–०तसायाः ॥ ९. फ–दृष्ट्वा विशालाक्षी सीता तं । आ च–रावणमित्येव । १०. आ–अभि० ॥ ११. फ रा ब म $ल_1$ $ल_2$–यदद्य कथितं हि । १२. अ–सर्वे-थायं हि । म $ल_1$ $ल_2$–स एवायाति । १३. फ–भयत्रस्तानं० ॥ १४. फ–अवन्दत । १५. फ अ–भयवित्रस्ता ॥ १६. आ–वन्दमानस् । फ–वन्द्यमानस् । म–वर्धमानं ।

३३] अब्रवीद् दीर्घम् उच्छ्वस्य[1] वानरं मधुर-स्वरम्[2] ॥१५॥

मायां प्र-विष्टो मायावी यदि त्वं रावणः स्वयम् ।

३४] [3]सं-तापयसि[3] मां भूयः सं-तप्तां तन् न शोभनम् ॥१६॥

३६उ] चि[4]त्तं जिहीर्षसे यत् त्वं[4] न[5]दी-कूलम् इवाऽम्भसा[5] ।

अहो स्वप्नस्[6] तु सुख-दो यो[6]ऽहम् एवं-विधा[7] हृता[7] ।

३८] प्रेषितं नाम[8] पश्यामि राघवेण[9] वनौकसम्[10] ॥१७॥

स्वप्ने[11]ऽपि यद्य् अहं[11] वीरं राघवं सह-लक्ष्मणम् ।

३९] पश्येयं न वि-षीदेयं स्वप्नो[12] मम न[12] मत्सरी ॥१८॥

नो[13]ऽहं स्वप्नम् [14]इमं मन्ये स्वप्ने दृष्ट्वा हि वानरम् ।

३७] न शक्योऽभ्युद्-अयः प्राप्तुं प्राप्तश् चाऽभ्युद्-अयो मया १९॥

किं तु मे चित्त-मोहो[15]ऽयं भवेद् वात-गतिस् त्व् इति[15] ।

४०] उन्-मादो वा विकारो वा स्याद् वे[16]यं मृग-तृष्णिका ॥२०॥

अथवा नाऽयम् उन्-मादो मोहोऽप्य्[17] उन्माद[17]-लक्षणः ।

४१] सं-बुद्ध्ये चाऽहम् आत्मानम् इमं चाऽपि वनौकसम् ॥२१॥

इत्य्-एवं बहु-धा बुद्ध्वा संप्र-धार्य बलाऽबलम् ।

४२] रक्षसां काम-रू[18]पाणां मन्ये[18] तं राक्षसाऽधिपम् ॥२२॥[19]

---

१. आ—उत्स्वस्य । २. आ—चिन्तय नु वचः । अ—०रस्व०राम् ॥ ३. ब प्र ल$_1$ ल$_2$ अ—उन्मादयसि ॥ ४. रा ब प्र ल$_1$ ल$_2$—त्वं चेज्जिहीर्षसि पुनः । अ—स्थितजिहीर्षसेऽनार्य । फ—०र्षसेऽनार्य । ५. रा ब प्र म ल$_1$ ल$_2$—संतप्तां तन्न शोभनम् । ६. फ—स्वप्नस्य सुखतो योहं । अ—स्वप्नस्य सुषता याहं । ७. आ—चिरादूहृता । फ—चिराकृता । प्र अ—०धा हता । ८. अ—तत्र । ९. अ ब म—भिन्नाः—रावणेन । १०. अ—०कसाम् ॥ ११. फ—स्वप्नेप्यहं यदा । १२. फ—स्वप्नेऽपि मम म० ॥ १३. ब—अहो । १४. प्र—अहं ॥ १५. फ—०मोहस्संभवेद्वातगतिः स्वयम् । च रा ब प्र ल$_1$ ल$_2$—०तिस्त्वियं । १६. फ च अ—इदं ॥ १७. आ—०हो ह्युन्मा० ॥ १८. फ म अ—०रूपत्वान्मेने । १९. च—नास्ति ॥

४३उ] एवं बुद्धिं ततः[1] कृत्वा सीता सा तनु-मध्यमा ।
४३पू] अजिज्ञासत्[2] ततो[2] भूयो वानरं जनकाऽऽत्म-जा ॥२३॥[3]
सीतायाश्[4] च मतं[4] बुद्ध्वा हनूमान् हरि-यूथ-पः[5] ।
४५] श्रोत्राऽनुकूलैर् वचनैस् तथ्यैस् तां प्रत्य्[6]-अनन्दयत्[6] ॥२४॥
स[7] च[7] विग्रह-वान् धर्मः साधुः सत्य-परिश्रयः ।
४६] परि-त्राता च[9] सर्वस्य[9] सर्व-भूत-हिते-रतः ॥२५॥
बलवान् मातरिश्वेव महेन्द्र इव दुर्-जयः ।
४७] आदित्य इव तेजस्वी लोक-कान्तो यथा शशी ॥२६॥
राजा सर्वस्य लोकस्य रामो वैश्रवणो यथा ।
४८] वि-क्रमेणोप[10]-पन्नश् च यथा विष्णुर् महा-यशाः ॥२७॥
सत्य-वादी मधुर-वाग् देवो वाचस्-पतिर् यथा ।
४९] रूपवान् सु-भगः श्रीमान् कन्दर्प इव मूर्तिमान् ।
क्रोध-स्थाने[11] प्र-हर्त्ता च श्रेष्ठो लोके धनुष्मताम्[12] ॥२८॥
५०] बाहु-च्छायाम् अव-ष्टभ्य[13] यस्य लोको[13] महाऽऽत्मनः ।
N] देवा इव महेन्द्रस्य[14] मोदन्ते वि-गत-ज्वराः ॥२९॥
[15]तं तादृशम्[15] अना-धृष्यं देवानाम् अपि दुर्-जयम् ।
N] महेन्द्र[16]-सदृशं शौर्ये क्षमया[16] ब्रह्मणा समम् ॥३०॥[17]

---

१. फ-तथा । २. ब-भिन्नाः—जिज्ञासंती तदा । ३. च-नास्ति ॥ ४.फ-सीतायास्त्वेव तद् बु० । अ-सीतायास्तु म० ॥ ५. फ च अ-मारुतात्मजः । ६. अ-समहर्षयत् । फ च रा ब म-प्रत्यहर्षयत् ॥ ७. फ च रा ब म अ-यः स । ८. फ ब म-०रिश्वः । अ-०पराक्रमः । ९. अ-प्रदाता च । फ-च दाता च ॥ १०. आ रा च ल, अ-०मेनोप० ॥ ११. फ अ-स्थाने क्रोधप्र० । १२. फ अ-महारथः । च-धनुर्धरः ॥ १३. अ-समाश्रित्य यस्य लोको । १४. ब-समुद्रस्य ॥ १५. अ-न तादृश्यं । १६. फ-पराक्रमे विष्णुसमं क्षमायां ॥ १७. अ-कोषेऽत आरभ्य “ आदित्य इव तेजस्वी ” इत्यादित्यक्तः पाठः पठितः ॥

अप-कृष्याऽऽश्रमात् तं तु मृग-रूपेण राघवम्[1] ।
N] येना[2]ऽप-नीता शून्ये त्वं[2] फलं द्रक्ष्य[3]ति तस्य सः[3] ॥३१॥
N] कुपितो रावणं सङ्ख्ये घातयिष्यति वीर्यवान् ।
५१३] रोष[4]-मुक्तैः शरैस् तीक्ष्णैर्[4] ज्वलद्भिर् इव पावकैः ॥३२॥
तेनाऽहं प्रेषितो दूतस् त्वत्-सकाशम् इहाऽऽगतः ।
५३] त्वद्-वियोगेन दुःखा[5]ऽऽर्त्तः स त्वां कौशल्यम् अब्रवीत् ३३॥
लक्ष्मणश् च महा-तेजाः सुमित्राऽऽनन्द-वर्[6]धनः ।
५४] अभि-वाद्य महा-बाहुः स त्वां कुशल[7]म् अब्रवीत्[7] ॥३४॥
रामस्य च सखा वीरः सु-ग्रीवो नाम वानरः ।
५५] राजा वानर-मुख्यानां स त्वां कौशल्यम् अब्रवीत् ॥३५॥
नित्यं स्मरति रामस्[8] ते सु-ग्रीवश् च स-लक्ष्मणः[8] ।
५६] दिष्ट्या जीव[9]सि वैदेहि राक्षसी-वशम् आ-गता ॥३६॥
न चिराद् द्रक्ष्य[10]से रामं[10] लक्ष्मणं च महा-रथम् ।
५७] मुख्यं[11] वानर-कोटीनां सु-ग्रीवं च महौजसम् ॥३७॥
अहं सु-ग्रीव-सचिवो हनूमान् नाम वानरः ।
५८] दूतोऽहं राज-सिंहस्य रामस्याऽक्लिष्ट-कर्मणः ॥३८॥
त्वत्-सकाशम् अनु-प्राप्तो रामस्या[12]ऽऽदेशतो ह्य्[12] अहम् ।
५९] प्र-विष्टो नगरीं लंकां लङ्घयित्वा महोदधिम् ॥३९॥[13]

---

१. फ–रावणः । २. फ च रा–शून्ये येनापनीतासि । अ–सीता येनापनीतासि । ३. आ प्र म ल१ ल२–द्रक्ष्यसि तस्य च । अ–द्रक्ष्यसि त० ॥ ४. फ–रोषप्रयुक्तैरिषुभिः ॥ ५. फ–शोकार्तः ॥ ६. अ–०वर्धनिः । ७. प्र म ल१ ल२ अ–कौशल्यमब्र० ॥ ८. फ–रामस्त्वां सुग्रीवः सहल० । अ–रामश्च सु० । ९. फ–०ति ॥ १०. फ अ–०सि पतिं । ११. फ च अ–मध्ये । आ–मुखं ॥ १२. फ–रामवाक्यप्रचोदितः । च–रामवाक्यप्रदेशितः । १३. अ–नास्ति ॥

मूर्ध्नि[1] दत्त्वा पद-न्यासं रावणस्य दुर्-आत्मनः ।
६०] त्वां द्रष्टुम् उप-यातोऽहं त्वम्[2] आ-श्रित्य पराक्रमम् ॥४०॥
नाऽहम् अस्मि तथा देवि यथा त्वम्[2] अव-गच्छसि ।
६१] वि-शङ्का भव वैदेहि श्रद्धेहि वदतो[3] मम ॥४१॥
तं पुष्प-वर्षैर् अभि-वृष्यमाणं[4]
महा-बलं तत्र तदा नि-षण्णम् ।
कुतूहलाद्[5] हर्ष-परिप्लुतांऽत्री[6]
सीताऽप्य्[7] अगच्छत्[8] त्वरिता समीपम् ॥४२॥

इत्यार्षे रामायणे सुन्दर-काण्डे[9] हनुमद्-भाषणं[10]
नामाऽष्टाविंशः सर्गः ॥२८॥

---

१. फ च अ—कृत्वा मूर्ध्नि ॥ २. फ अ—माम् । ३. अ—वचनं ॥ ४. आ—वर्षमाणं । च रा प्र ब—०र्ष्यमानं । ५. फ—कौतू० । ६. फ—०तांगी । ७—ब प्र म ल$_1$—सीताभ्यग० । ८. फ—हरीशं । अ—हरिं तं ॥ ९. फ—०ण्डे दिग्विजये ह० । १०. ल$_2$—०मत्संभाषणं । अ—०मतो भाषणो ॥

तां तु राम-कथां श्रुत्वा वैदेही वानरर्षभम् ।
१] उवाच वचनं तत्त्वम्[1] इदं मधुरया गिरा ॥१॥[१
क्व ते रामेण सं-सर्गः कथं जानासि लक्ष्मणम् ।
२] नराणां वानराणां च कथम् आसीत् समा-गमः ॥२॥ [२
यानि रामस्य लिङ्गानि तानि मे वद[2] वानर ।[3]
N] तानि भूयः समा-चक्ष्व न मां[4] शङ्का समाविश (?शे)त् ३॥[5] [३
कीदृशं तस्य सं-स्थानं रूपं रामस्य कीदृशम्[6] ।
३] कथम् ऊरू कथं बाहू लक्ष्मणस्य च शंस मे ॥४॥ [४
एवम् उक्तस् तु वैदेह्या हनूमान् मारुताऽऽत्म-जः
४] ततो रामं यथा-तत्त्वम् आ-ख्यातुम् उप-चक्रमे ॥५॥ [५
जानन्ती[7] बत[8] वैदेहि दिष्ट्या मां परि-पृच्छसि ।
५] भर्त्तुः कमल-पत्राऽक्षि सं-स्थानं लक्ष्मणस्य च ॥६॥[9] [६
यानि[10] रामस्य लिङ्गानि[11] लक्ष्मणस्य च यानि वै[12] ।
N] लक्षितानि विशालाऽक्षि तानि मे[13] शृणु तत्त्व-तः ॥७॥[14] [७
रामः कमल-पत्राऽक्षः सर्व-भूत-मनो-हरः । [८पू
N] गुणवान् शील-सम्पन्नः सर्व-भूत-हिते रतः ॥८॥[15] [N

---

१. अ- सीता त्विदं । २. फ च प्र ब म ल$_{1}$ ल$_{2}$ अ—लक्ष्मणस्य च । ३. अतः परमधिकः पाठः—आ—मुखमूरू कथं बाहू लक्ष्मणस्य च वानर ॥ ४. फ च—मां शोकः । प्र ल$_{2}$—मे शङ्का । म—मे शोकः । ५. रा—नास्ति ॥ ६. ल$_{1}$—कीर्तनं ॥ ७. फ—जानाना । अ—जानासि । ८. फ—बत दिष्ट्या मां वैदेहि । अ—तावदिष्टया तं वैदेहि । ल$_{1}$—०हि दृष्ट्या मां । ९. अ—नास्ति ॥ १०. फ—देवि । ११. च प्र ब म ल$_{1}$ ल$_{2}$—चिह्नानि । १२. फ—मे । १३. फ—वै । १४. रा अ—नास्ति ॥ १५. फ—०तमनोहरः । म ल$_{1}$ ल$_{2}$—सर्वलोकहि०॥

रूप-दाक्षिण्य[1]-सम्पन्नः प्रांऽशु[2]ः स जनकाऽऽत्म-जे । [८उ
N] तेजसाऽऽदित्य-सङ्काशः क्षमया पृथिवी-समः ॥९॥
बृहस्पति-समो बुद्ध्या यशसा वासवोपमः ।
N] रक्षिता स्वस्य वंशस्य स्व[3]-जनस्य च रक्षिता ॥१०॥[4] [१०पू
रामो भामिनि सर्वस्य चतुर्-वर्णस्य रक्षिता ।
N] मर्यादानां[5] च[6] लोकस्य कर्त्ता स्थापयिता विभुः ॥११॥ [११
७उ] अर्चिष्मान् अर्चितो[7]ऽत्यर्थं ब्रह्मचारि-व्रते स्थितः ।
८पू] साधूनाम् उपचार-ज्ञः प्रचार-ज्ञश् च कर्म्मणाम् ॥१२॥ [१२
६उ] राज-विद्या-विनीतानां ब्राह्मणानाम् उपाऽऽसिता ।
N] श्रुतवान् शील[8]-सम्पन्नो वि-नीतश् च परन्तपः ॥१३॥ [१३
ऋ[9]जुर् वेद[10]-विनीतश्[11] च वेद-विद्भिः[11] सु-पूजितः ।
९] धनुर्-वेदे च वैदेहि[12] वेदाऽङ्गेषु च नि-ष्ठितः[12] ॥१४॥ [१४
वि-पुलां[13]ऽसो महा-बाहुः कम्बु-ग्रीवः शुभाऽऽननः ।
१०] गूढ-जत्रु[14]ः स ताम्राऽक्षो रामो नाम जनैः श्रुतः ॥१५॥[१५
८उ] दुन्दुभि-स्वन-निर्घोषः स्निग्ध-वर्णः प्र-तापवान् ।
समः सम-विभक्ताऽङ्गो गुरु[15]र् गूढ-शिरोऽस्थि-कः ॥१६॥ [१६
११] चतुष्-किष्कुश् चतुर्-दण्डो[16] द्विः-शुक्लो दश-पद्मवान् । [१८उ
षड्-उन्नतो दश-बृहंस् त्रिभिर् व्य्-आप्नोति राघवः ॥१७॥[N

---

१. फ–गुणवान् रूपस० । २. च ब प्र म ल, ल₂–प्रांशुश्च ॥ ३. फ अ–धर्मस्य च परन्तपः । ४. च–नास्ति ॥ ५. आ–०दातीव । ६. फ अ–हि सः । च रा प्र ब म ल, ल₂–च सः ॥ ७. च रा प्र ब म ल, ल₂–०श्चोयं । ८. ल₂–राजराजो वि० । ९. रा–श्रुत० । १०. अ–यजुर्वेद० । ११. फ प्र ल, ल₂ अ–वेदविद्भिश्च । १२. फ च रा प्र ब म ल, ल₂–वेदे च वे० । आ–०ङ्गे च विनिष्ठितः । च–०ङ्गे च प्रतिष्ठितः । अ–सर्वाङ्गे वेदेषु च सुनि० ॥ १३. च म–०लांशो । १४. आ रा ब म ल, ल₂–०जानुः । १५. फ–गूढो ॥ १६. आ–चतुर्दंष्ट्रो ॥

१२] त्रि-वलीवा(?मा)न् त्रि-नीतश् च चतुर्-गन्धस् त्रि-कालवित् १८पू
त्रि-त्रिकस् त्रि-प्रलम्बश् च महाऽऽस्यो घन-निःस्वनैः १८[१७पू
१३] चतुः-कृष्णश् चतुर्-लेखः षोडशाऽर्त्तः चतुः-समः । [N
चतुर्दश-सम-द्वन्द्वैः पञ्च-स्निग्धोऽष्ट-वंशवान् ॥१९॥ [१९पू
१४] भ्राता वै-मात्रिकश् चाऽस्य सौमित्रिर् अ-पराजितः ।
१५पू] अनु-रागेण रूपेण गुणैश् चाऽपि तथा-विधः ॥२०॥ [२२
स तु धर्म्म-रतः श्रीमान् सं-ग्रहाऽनु-ग्रहे रतः ।
N] नि-यतः सर्व-लोकानां सर्व-काल-प्रियं-वदः ॥२१॥ [N
रावणेनाऽप-नीतां त्वां श्रुत्वा दीनस् तु राघवः ।
१७] अन्व्-इष्टवांस् तदा शूरो जन-स्थानं ततस्-ततः ॥२२॥ [N
त्वाम् एव मार्गमाणौ तौ वि-चरन्तौ वसुं-धराम् ।
१८] ददृशाते च सु-ग्रीवं पूर्व-जेनाऽव-रोपितम् ॥२३॥ [२४
प्रस्थे च ऋष्य-मूकस्य रम्ये पादप-संकुले ।
N] भ्रातुर् भयाऽऽर्त्तम् आ-सीनं सु-ग्रीवं शुभ-दर्शनम् ॥२४॥ [२५
वयं तु कपि-राजानं सु-ग्रीवं सत्य-सङ्गरम् ।
N] परि-चार्याऽऽस्महे राज्यात् पूर्व-जेन परा-जितम् ॥२५॥ [२६

---

१. फ–०लीत्रिविनतिश्च । ब–०लीत्रिभिर्विहीनश्च । अ–०लीवांस्त्रि-विनतः । २. अ–त्रिवक्रस् । ३. अ–०स्योष्ठहनुस्वनः ॥ ४. फ–०शाक्तः । ५. अ–०मद्वंद्व । च रा प्र म $ल_1$ $ल_2$–०समाद्वन्द्वः । ६. फ–स्नेहोष्टवं० । ब–सूक्ष्मोष्टवं० । प्र–०ष्टवेश० ॥ ७. अ–०कस्तस्य । ब–चास्य च वैमात्रः । ८. अ ब–०त्रिश्चाप० ॥ ९. फ अ–०परः । १०. अ–०लोक० ॥ ११. च–तथा । रा प्र ब म $ल_1$ $ल_2$–ततः । १२. फ–०स्थाने ॥ १३. अ–अद्राक्षं कपिराजानं । अ–अद्राष्टां कपिराजानं । च–अद्रष्ट्वा ते च सु० । १४. च रा प्र म $ल_1$ $ल_2$–०रम्यया । १५. च रा प्र म–प्रिय० ॥ १६. च ब अ–प्रिय-दर्शनम् । रा प्र म–०वं हि तत्परम् । १७. च रा ब प्र अ–०चार्यास्महे । १८. च रा प्र ब अ–०जेनावरोपितम् ॥

ततस् तौ[1] चीरं[2]-संवीतौ धनुः-प्रवर-धारिणौ ।
N] ऋष्य-मूकस्य शैलस्य रम्यं देशम् उप[4]-स्थितौ ॥२६॥ [२७
तौ मार्गमाणौ नृ-वरौ वनं गम्भीरम् ओजसा ।
N] सु-ग्रीवो दूरतोऽपश्यत् सह तैर्[5] वानरर्षभैः ॥२७॥ [N
स[5] तौ[6] दृष्ट्वा नर-व्याघ्रौ धन्विनौ वानरर्षभः ।
N] अभि-प्लुतो गिरेस् तस्य शिखरं[7] भीम-विक्रमः ॥२८॥ [२८
ततः स शिखरे तस्मिन् वानरेन्द्रो व्यव-स्थितः ।
N] तयोः समीपं माम् एव प्रेषयामास स-त्वरम्[8] ॥२९॥[9] [२९
ताव् अहं पुरुष-व्याघ्रौ सुग्रीव-वचनात् प्रभू ।
N] रूप-लक्षण-सम्पन्नौ कृताऽञ्जलिर् उप-स्थितः ॥३०॥[10] [३०
तदाऽस्मि राघवेणोक्तः[11] शोकाऽऽर्त्तेन महाऽऽत्मना ।
N] हरणं तव वैदेहि राक्षसेन दुर्-आत्मना ॥३१॥[12] [N
तौ परिज्ञात-तत्त्वाऽर्थौ मया प्रीति-समन्वितौ ।
N] पृष्ठम्[13] आ-रोप्य[13] तं देशं प्राऽऽपितौ पुरुषर्षभौ[14] ॥३२॥ [३१
नि-वेदितं[15] च तत्त्वेन सु-ग्रीवाय महाऽऽत्मने ।
N] तेषाम् अन्योऽन्य-संवादाद्[16] भृशं प्रीतिर्[16] अजायत ॥३३॥ [३२
तत्र तौ प्रीति-सम्पन्नौ हरीऽऽश्वर[17]-नरेश्वरौ ।
N] परस्पर-कृताऽऽश्वासौ कथया पूर्व-वृत्तया ॥३४॥ [३३
तं[18] तथाऽऽश्वासयामास सु-ग्रीवं लक्ष्मणाऽग्र-जः ।

---

१. प्र ब ल$_1$ ल$_2$—तु । २. ब म—धीर० । ३. फ—नास्ति । ४. फ—उपागतौ ॥ ५. प्र—तौ वानरर्षभौ ॥ ६. म—तौ तु । ७. आ—शिषरं । च रा प्र ब म—शिषरे ॥ ८. आ—सत्वरः । ९. ल$_1$—नास्ति ॥ १०. ल$_2$—नास्ति ॥ ११. आ—०वेनोक्तः । १२. च रा ब प्र ल$_1$ ल$_2$ अ—नास्ति ॥ १३. फ—पृष्ठेनासेप्य । १४. अ—च नरर्षभौ ॥ १५. फ अ—०दितौ । १६. अ फ—०संलापाद् । आ—संबादाद्दुशती रजा० ॥ १७. ब प्र म ल$_1$ ल$_2$—नरेश्वरहरीश्वरौ ॥ १८. आ फ रा—०सान्त्वयामास । अ—ततश्च सान्त्व० ।

N] स्त्री-हेतोर् [1]वालिना भ्राता निर्-[2]अस्तम् उग्र-तेजसा[2] ३५ [३४
तवा[3]ऽऽर्थं हरणं तस्मै सौमित्रिर् [4]अति-वीर्यवान् । [N
N] लक्ष्मणो वानरेन्द्राय सु-ग्रीवाय [5]न्य्-अवेदयत् ।।३६।। [३५उ
स श्रुत्वा वानरेन्द्रस् तु लक्ष्मणेनेरितं वचः ।
तथाऽऽसीन् निष्-प्रभोऽत्य्-अर्थं ग्रह-[6]ग्रस्त इवोडु-राट्[7] । [३६
N] स तस्याऽनाशयच् छोकं रामस्याऽक्लिष्ट-कर्म्मणः ।।३७।। [N
३२पू] ततस् ते गात्र-शोभीनि [8]हृताया राक्षसेन तु ।
N] यान्य् आभरण-जातानि वि[9]-क्षिप्तानि मही-तले ।।३८।। [३७
तानि सर्वाणि सं-हृत्य रामाय हरि-[10]यूथ-पः ।
N] सं-[11]हृष्टो दर्शयामा[11]स गतिं तु न विदुस् त[12]वे ।।३९।। [३८
३२उ] तानि रामाय दत्तानि [13]मयैवोप-हृतानि च ।
N] [14]स्वन-वन्ति वि[14]-कीर्णानि [15]तस्मिन् विहत-चेतसि[15] ।।४०।। [३९
तान्य् अङ्के दर्शनीयानि कृत्वा [16]बहु-विधं त[16]दा ।[17]
३३] [18]हृदि देवि प्र-काशं[18] मे [19]देहीऽति[19] [20]करुणं चि[20]रम् ।[17] [४०
N] [20]परि-देवितम् [21]आर्येण शोकोप-हत-चेत[22]सा ।।४१।।[23] [N

---

१. फ—वलिना । २. आ—निरस्तोऽमितते० । रा प्र ब म ल२—अमितौजसम् । फ—गुरुतेजसा ॥ ३. आ फ—०र्थे । ४. फ—अथ वी० । ५. आ अ—निवे० ॥ ६. फ—ग्रहाक्रान्त । ७. प्र—इवोडुपं । म—इवेन्दुराट् ॥ ८. आ—रक्षसा ह्रियमाणया । ९. फ अ—निक्षि०॥ १०. फ रा प्र ब म ल२—०पाः । ११. फ च रा प्र ब म ल१ ल२—संहृष्टा दर्शयामासुः । १२. फ—तथा ॥ १३. प्र ल१ ल२—०यैवाप० । १४. फ अ—स्वनवन्त्यवकी० । १५. रा प्र ब म ल१ ल२—ततो विपुलचेतसा । १६. आ—स बहुवित्तदा । १७. प्र—नास्ति । १८. फ च—देवि देवप्रकाशेन । अ—तेन देवप्रकाशेन । रा म ल१ ल२—देवि दे० । आ—०वप्रकाशोथ । १९. आ च—देवीति । फ—देवेन । अ—देवेति । २०. फ अ—परिदेवितम् ॥ २१. आ—प्रत्यदेवयदाविष्टः । २२. फ—पर्यदेवयदाविष्टः । फ—०चेतनः । आ—तत्रोपहतचेतनः । २३. प्र अ—नास्ति ॥

पश्यतस् तस्य रुदतस् तप्यतश् च पुनः पुनः ।
N] प्राऽज्वालयन् दाशरथेस् तानि शोक-हुताऽशनम्॥४२॥ [४१
शोचितं सु-चिरं तेन दुःखाऽऽर्तेन महाऽऽत्मना ।
३४] मया स वि-विधैर् वाक्यैः कृच्छ्राद् उत्थापितः पुनः ४३॥[४२
तानि दृष्ट्वा महाऽर्हाणि दर्शयित्वा मुहुर् मुहुः ।
N] राघवः सह-सौमित्रिः सु-ग्रीवम् उप-तापयेत् ॥४४॥ [४३
तवाऽदर्शन-जेनाऽऽर्ये राघवः परि-तप्यते ।
३५] महता ज्वलता नित्यम् अग्निनेवोच्च-पर्वतः ॥४५॥ [४४
त्वत्-कृते मदनश् चैव शोकश् चिन्ता च राघवम् ।
३६] तापयन्ति महाऽऽत्मानम् अग्न्य्-आगारम् इवाऽग्नयः ४६॥[४५
तवाऽदर्शन-जेनाऽऽर्ये शोकेन च वि-चाल्यते ।
३७] महा-भूमि-चलेनैव शिला-धातु-सखोऽचलः ॥४७॥ [४६
तानि रम्याणि पश्यन् स काननानि महान्ति च ।
३८] रतिं न विन्दते रामस् त्वाम् अ-पश्यन् नृपाऽऽत्म-जे ४८॥[४७
सहितौ राम-सुग्रीवाव् उभाव् अकुरुतां ततः ।
N] समयं वालिनं हन्तुं तौ तवाऽन्वेषणाय च ॥४९॥ [४९

---

१. आ फ अ—पश्यतस्तानि । प्र—पश्यतो रुदतस्तस्य । २. फ—तस्य तच्च । आ—तव तस्य । ३. फ—दर्शयतस् ॥ ४. आ—यथा । ५. फ—च ॥ ६. फ—उपपादयत् । म ल$_{1}$—उदपादयत् । अ—उपतापयत् । ७. ल$_{2}$—नास्ति ॥ ८. ल$_{1}$—तावद्दर्शन० । ९. आ ल$_{1}$—चतुर्भिः प० । म—चतुर्भिः परिताप्यते । १०. फ—०नेवाग्निप० । च रा प्र ब म ल$_{1}$—नेव हि प०॥ ११. आ—०गाराय चाग्नयः । १२. अ—नास्ति ॥ १३. प्र—०जेनापि । १४. म—परिचा० । अ—तु वि० । १५. आ—०तुरिवाचलः । ल$_{1}$—०तुमथोचलः॥ १६. अ—नृपात्मजः । ब म—०श्यन्ननिन्दिते । १७. अतः परमधिकः पाठः—म अ—स त्वां मनुजशार्दूलः क्षिप्रं द्रक्ष्यति राघवः । समित्रबान्धवं हत्वा रावणं जनकाऽऽत्मजे ॥ १८. अ—तदा० ।

ततो नि-हत्य तरसा रामो वालिनम् आहवे ।
सर्वर्क्ष-हरि-सैन्यानां[1] सु-ग्रीवम् अकरोत् पतिम् ॥५०॥ [५१
राम-सुग्रीवयोः सख्यं देव्य् एवं सम्-अजायत ।
N] हनुमन्तं च मां विद्धि तयोर् दूतम् इहाऽऽगतम् ॥५१॥ [५२

इत्यार्षे रामायणे[2] सुन्दर-काण्डे[3] सीता-सम्भाषणो
नामैकोनविंशः सर्गः ॥२९॥[4]

---

१. फ अ—०रिसिंहानां ॥ २. रा प्र—त्रुटितः पाठः । ३. म ल$_2$—०न्ते लंकापर्वणि सी० । ४. फ अ—सर्गसमाप्तिर्नास्ति ॥

स राज्यं प्राप्य सु-ग्रीवः समा-नीय हरीऽऽश्वरान्[1] ।
२१] त्वद्-अर्थे प्रे(?प्रै)षयत् सर्वान् दिशो दश महा-बलान्[2] ॥१॥ [५३
आ-दिष्टा वानरेन्द्रेण सु-ग्रीवेण[3] महाऽऽत्मना ।
N] अद्रि-राज-प्रतीकाशाः सर्व-तः प्र-स्थिता महीम् ॥२॥ [५४
अङ्गदो नाम लक्ष्मीवान् वालि-सूनुर् महा-बलः ।
N] प्र-स्थितः कपि-शार्दूलस् त्रि-भाग-बल-संवृतः ॥३॥ [५६
वि-चित्य दक्षिणाम् आशां स-शैल-वन-काननाम् ।[4]
N] गिरि-जालाऽऽवृतां दुर्गां प्रायम् तेन वि-चिन्महे ।[5]
२२उ] त्वां देवि राघवस्याऽर्थे [6]सर्व-तो मृगयामहे ॥४॥ [N
तेषां [7]नो विप्र-नष्टानां विन्ध्ये पर्वत-सत्तमे । [५७पू
क्षुधाऽऽर्त्तानां बिले [8]कोऽपि तृषाऽऽर्त्तानां तदा सताम् ।[9] [N
N] भृशं शोक-परीतानाम् अहो-रात्र-गणा गताः ॥५॥ [५७उ
ते वयं कार्य-नैराश्यात् कालस्याऽति-क्रमेण च ।
N] भयाच् च कपि-राजस्य [10]कालाऽतिगम-शङ्कया ॥६॥ [५८
वि-चीय [11]गिरि-दुर्गाणि नदी-[12]प्रस्रवणानि च ।
N] अना-साद्य पदं देव्याः प्राणांस् त्यक्तुम् उप-स्थिताः । [N
२३उ] ततस् तस्य गिरेर् मूर्ध्नि वयं प्रायम् [13]उपाऽऽस्महे ॥७॥ [N

---

१. आ—महाहरीन् । २. च रा ब म $ल_1$ $ल_2$ अ—०बलः ॥ ३. आ—०न । ४. म—दक्षिणां दिशमास्थाय प्रेतराजेन पालिताम् । ५. फ च रा प्र ब $ल_1$ $ल_2$ अ—नास्ति । ६. आ—सर्वे ते । फ अ—सर्वे वै । प्र $ल_1$ $ल_2$—त्वां देवि ॥ ७. फ—तु । अ—वै । ८. आ—कस्मिंस्तृषा० । ९. फ अ—क्षुधितानां निरासानां वने कस्मिंश्चिदासताम् ॥ १०. आ—कालान्तरविशं० ॥ ११. फ—गुल्म० । १२. आ—प्रश्रा० ॥ १३. प्र $ल_1$—उपास्थिताः ॥

अथ नः पर्वते विन्ध्ये निर्-आशानाम् अ-निन्दिते । [N
२४] भृशं शोकाऽर्णवे मग्नः पर्य्-अदेवयद् अङ्गदः ॥८॥ [६०उ
तव नाशं च वैदेहि वालिनश् च तथा वधम् ।
२५] प्रायोप-वेशम् अस्माकं वि-नाशं च जटायुषः ॥९॥ [६१
तेषां नः स्वामि-सन्देशे[1] निर्-आशानां मुमूर्षताम् ।
N] कार्य-हेतोर् इवोपेतैः[2] शकुनिश् चेदम् अब्रवीत्[3] ॥१०॥ [६२
गृध्र-राजस्य सोदर्यः संपातिर् नाम वीर्यवान् । [६३पू
२६] यवीयान्[4] केन मे भ्राता हतः कं[5] च वि-नाशितः॥११॥ [६४पू
शशंस चाऽङ्गदस् तस्मिन्[6] जन-स्थाने महद्[7]-वधम् ।
२७] राक्षसेनाऽति-कायेन त्वां च तत्राऽप-वाहिताम् ॥१२॥ [६५
जटायुषश् च सम्पातिर् वधं श्रुत्वाऽति-दुःखितः ।
२८] त्वाम् आ-चष्ट वराऽऽरोहे वसन्तीं रावणाऽऽलये॥१३॥[६६
तस्य तद् वचनं श्रुत्वा सम्पातेः प्रीति-वर्द्धनम्[9] ।
N] अङ्गद-प्रमुखास् तूर्णं ततः[10] संप्र-स्थिता वयम् ॥१४॥[६७
त्वद्-दर्शन-कृतोत्साहा हृष्टाः पुष्टाः[11] प्लवं-गमाः ।[12]
विन्ध्याद् उत्-पत्य सं-हृष्टाः सागरस्योत्तरं गिरिम्॥१५॥[13][६८
अथाऽहं हरि-सैन्यस्य सागरं प्रेक्ष्य सीदतः ।[12]
२९] त्वद्-दर्शन-कृतोत्साहः पुप्लुवे शत-योजनम् ॥१६॥ [७०
इयं लंका मया रात्रौ दृष्टा वै राक्षसाऽऽकुला ।

---

१. आ-सन्देशान्निरा० । २. आ-विहस्येतत् । ३. अ-०निवैं तदाब्र० ॥ ४. अ-जवी० । ५. अ-कस्मिंश्च कारणे ॥ ६. प्र-०दश्चासौ । म ल१ ल२ अ-०दस्तस्मै । ७. आ-महाव०॥ ८. आ-श्रुत्वैव दुः० ॥ ९. अ-०नः । १०. अ-नगेशं प्र० ॥ ११. ल१-धृष्टाः । १२. अ-नास्ति । १३. क्रिया साकांक्षत्वं त्विह द्र० । अत्र दा-'विन्ध्यादुत्थाय संप्राप्ताः सागरस्यान्त-मुत्तरम्' इति पठति ॥

N] [1]रावणश् चा[1]ऽपि सं-हृ[2]ष्टस् त्वं[2] च शोकेन पीडिता[3] ॥१७॥ [७१
N] कुञ्जरो नाम वैदेहि गिरीणाम् उत्तमो गिरिः ।
४०उ] तस्माद् गच्छति गो-कर्णं पर्वतं केसरी[4] हरिः ॥१८॥ [८०
स[5] तु देवर्षिभिर् जुष्टं[5] पिता मम महा-कपिः ।
४१] तीर्थं नदी-पतेः पुण्यं शङ्ख-सादनम् उत्-तमम् ॥१९॥ [८१
तस्यां[6]ऽहं क्षेत्र-जः[6] पुत्रो जातो वातेन मैथिलि ।
४२] हनुमान् इति वि-ख्यातो लोके स्वेनैव कर्म्मणा ॥२०॥ [८२
वि-श्वासाऽर्थं तु[7] ते देवि[7] भर्त्तुर् उक्ता मया गुणाः ।
४३] यथा मां त्वं कपिं व्यक्तं [8]मन्येथा जनकाऽऽत्म-जे ॥२१॥ [N
एतत् ते सर्वम् आ-ख्यातं यथा-वृत्तम् अ-निन्दिते ।
N] अभि-भाषस्व मां देवि दूतो दाशरथेर् अहम् ॥२२॥ [N
तं मां राम-कृताऽऽदेशं त्वन्-निमित्तम् इहाऽऽगतम् ।
N] सुग्रीव-सचिवं देवि बुद्ध्यस्व पवनाऽऽत्म-जम् ॥२३॥ [N
[11]हतो गजो येन च[11] शङ्ख-सादने
कपि-प्रवीरेण महर्षि-नोदनात् ।[12]
[13]तत्स् तु[13] वायु-प्रभवोऽस्मि मैथिलि
N] प्र-भावतस् तत्-प्रतिमोऽस्मि वानरः ॥२४॥ [८९
प्र-ब्रूहि सर्वं [14]हृदि यत्[14] स्थितं ते
[15]मां वा[15]ऽचिरेण त्वम् अ-निन्द्य-रूपे ।

---

१. अ–रावणोपि च । २. च–संहृष्टस्त्वां । ३. आ–०तः । अ–०ताम् ॥ ४. आ–केशरी ॥ ५. आ–०र्षिनिर्दिष्टः । प्र–मत्तदेव० । ६. फ–तस्य केसरिणः ॥ ७. फ–च वैदेहि । रा ब ल₁–तु वै देवि । अ–तु वैदेहि । ८. अ–मन्यस्व ॥ ९. च–त्रुटितः पाठः । १०. रा प्र ब म ल₁ ल₂–जनकात्मजे ॥ ११. अ–हतेऽसुरे संयति । १२. च–त्रुटितः पाठः । रा प्र ब ल₁ ल₂–नास्ति । १३. रा प्र ब म ल₁ ल₂–अहं तु । अ–तस्यान्वये वा० । १४. फ–भिन्नाः हृदयस्थितं । १५. आ–मां वै चि० । फ–मा भैश्चि० ।

यावद् ब्रवीम्य् उग्र-जवेन गत्वा[1]
N] प्रियं प्रिया तेऽधि-गतेति रामम् ॥२५॥[2] [N

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि सीता-दर्शने
हनुमद्-वाक्यं नाम त्रिंशः सर्गः[3] ॥ ३० ॥

---

१.—फ—प्रियं प्रियं ते ह्यधिगम्य । २. रा प्र ब ल$_1$ ल$_2$—नास्ति ॥
३. ल$_1$—इति सुन्दरकाण्डे हनुमद्वाक्यं नाम सर्गः । फ—०काण्डे उद्योगपर्वणि स तितासम्भाषणं नाम । प—०दर्शने हनुमद्भाषणं नाम ॥

स[1] शोकाऽऽर्त्ताम् अ-शोक-स्थो ददर्श हनुमान् कपिः ।
१] वि-मुक्तां किं-नरेणेव किं-नरीं जनकाऽऽत्म-जाम् ॥१॥ [N
तां नि[2]-शाम्य विशालाऽक्षीं क्षितौ क्षिति-रजश्-चिताम् ।
२] वाष्प-सन्दिग्धया वाचा पुनर् वचनम् अब्रवीत् ॥२॥ [N
दूतोऽहम् अन्-अवद्याऽङ्गि लंकां प्राप्तो नृपाऽऽज्ञया ।
३] त्वद्-अर्थं प्रेषितस् तेन राघवेण महाऽऽत्मना ॥३॥ [N
सा तस्य वचनं श्रुत्वा मानुषस्येव भाषितम्[3] ।
४] अकरोत् कपिम् आ-श्रित्य न वि-षादं न वि-स्मयम् ॥४॥ [N
तथा ब्रुवाणं वैदेही वानरं रावणे[4]-क्षये ।
५] नाऽभ्य्-अभाषत शोकेन हर्षेण च जडी-कृता ॥५॥ [N
स मुहूर्त्तात् कपि-श्रेष्ठो हनुमान् मारुताऽऽत्म-जः ।
६] नि-पत्य चरणौ मूर्ध्ना कीर्त्तयामास राघवम् ॥६॥[6] [N
समुद्र इवाऽक्षोभ्यो हिमवान् इव निश्-चलः[7] ।

१. फ-शोकार्त्तां तामशो० । रा प्र ब म ल$_1$ ल$_2$ अ-०र्त्तामशोकार्हां ॥ २. आ-तान्निशम्य । फ च-तन्निशाम्य ॥ ३. आ-भाषतः ॥ ४. रा ब-रावणालये । ल$_1$-रावणे क्षये । ५. अ-शास्त्रकोविदः । ६. अतः परमधिकः पाठः—फ रा प्र च ब अ म ल$_1$ ल$_2$-यशसा तपसा चैव वीर्येण[1] च[1] विशां पतिः । युक्तो योगवतां श्रेष्ठः स त्वां कौशल्यमब्रवीत् ॥ ७. च रा प्र ब म ल$_1$-चञ्चलः ।

१. च-तपसां । रा प्र ब म ल$_1$ ल$_2$-च सतां ॥

८] सत्य-धर्म इवाऽकम्प्यः स त्वां कौशल्यम् अब्रवीत् ॥७॥[1] [N
भूयेश्[2] चाऽपि महा-तेजा हनुमान्[3] मारुताऽऽत्म-जः ।
N] अब्रवीत् प्र-श्रितं वाक्यं सीता-प्रत्यय-कारणम् ॥८॥ [N
कुशली देवि काकुत्स्थः[4] सर्व-शस्त्र-भृतां-वरः[5] ।
N] गुरोर् आ-राधने युक्तो लक्ष्मणश् च सु-लक्षणः ॥९॥ [७४
तस्य कार्यवतो देवि भर्तुस् तव[6] हिते रताः ।[6] [७५पू
N] मुखम्[7] आ-लोकयन्त्य् अन्ये हरयः सङ्ग-चारिणः ॥१०॥[N
मत्-सहायाः परे वीरा वेलायां[8] समव-स्थिताः[9] ।[N

---

१. अतः परमधिकः पाठः— च रा प्र ब म ल१ ल२ अ-प्रियो यस्य च सौमित्रिः सौमित्रेश्चैव[1] यः प्रियः । सुहृद्वा[2] वानरेन्द्रस्य स त्वां कौशल्यमब्रवीत् ॥ भ्राता कनीयान् रामस्य सुमित्रा येन सुप्रजा[3] । प्रणम्य शिरसा पादौ स त्वां कौशल्यमब्रवीत् ॥ पितृवत् पश्यते रामं त्वां च पश्यति मातृवत् । यो नित्यमरविन्दाक्षि स त्वां कौशल्यमब्रवीत् ॥ तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः । मुमोच दुःखिता सीता शोकोष्णं[4] नेत्रजं जलम् ॥ अशोभन्त ततश्चास्या[5] नेत्राभ्यामश्रुबिन्दवः । फुल्लाभ्यामिव पद्माभ्यां पतन्तस्तोयबिन्दवः[6] ॥ सापमृज्यायते[7] नेत्रे कराभ्यां करुणावती[8] । उपपन्नैरभिज्ञानैर्दूतं[9] तमवगच्छती ॥ च रा प्र म ल१ ल२—सर्गसमाप्तिर्दृश्यते ॥ २. ल१—अन्यश् । ३. फ—हनू० ॥ ४. अ—ते भर्ता सर्वलोकहिते रतः ॥ ५. आ—सर्वहि० । ६. अ—नास्ति । ७. च रा प्र ब म ल ल अ—लोकम् ॥ ८. आ—सुवले स० । अ—लाघवं समुपस्थितम् । फ—०यां समुपस्थितम ।

---

१. ल१ ल२—०त्रेश्चापि । २. च ब म ल२ अ—यो नाथो । ल१—वित्राता ॥ ३. अ—सुव्रता ॥ ४. रा प्र ब म ल ल१ ल२—०त्थं । ५. च रा प्र प्र म ल१ ल२—पतंतोस्या । ६. च रा प्र ब म ल१ ल२ अ—प्रसन्नास्तो० ॥ ७. ब म—साप्रमृ० । अ—०मृज्य ततो । ८. रा ब—०पते । ल२—०यती । ९. रा ब म—तं चाधिगच्छती । ल१ ल२—तं चाभ्यगच्छत । अ—तमकरोच्छत: ॥

N] अहम् एकस्[1] तुं सं-प्राऽऽप्तः सम्पाति-वचनाद् इह ॥११॥ [७५उ
मयेयम्[2] अ-सहायेन चरता काम-रूपिणा ।
N] दक्षिणा दिक् समा-क्रान्ता देवि त्वाम्[3] अनु[4]-मार्गता ॥१२॥ [७६
दिष्ट्याऽद्य हरि-सैन्यानां त्वन्-नाशम् अनु-शोचताम् ।
N] अप-नेष्यामि सं-तापं तवाऽभि-गमनाद् अहम् ॥१३॥[5] [७७
दिष्ट्याऽहं वानरान् सर्वान् हरीणाम् ईश्वरं च तम् ।
N] दृष्टा देवीऽति वक्ष्यामि दृष्ट्वा रामं च साऽनु-जम्[6] ॥१४॥ [N
दिष्ट्या च[6] न व्य्-अर्थम्[7] इदं मम सागर-लङ्घनम् ।[8] [७८पू
राघवश्[9] च महा-वीर्यः क्षिप्रं त्वाम् अभि-पत्स्यते ।[10]
N] स-मित्र-बान्धवं हत्वा रावणं राक्षसाऽधिपम् ॥१५॥ [७९
सुवर्णस्य सुवर्णस्य सुवर्णस्येह[11,12] सुन्दरि ।[13]
N] प्रेषितं रामचन्द्रेण सुवर्णस्याऽङ्गुलीयकम् ॥१६॥[14] [N
राम-नामाऽ[15]ङ्कितं चेदं दिव्यं पश्याऽङ्गुलीयकम् । [दा३६,२उ
N] समा-श्वसिहि भद्रं[16] ते[16] क्षीण-दुःख-फला ह्य् असि ॥१७॥ [३पू
गृहीत्वा प्रेक्षमाणा तद् भर्तुः कर-विभूषणम् । [४पू
N] मुमोच हर्ष-जं वारि स-व्रीडितम् अधो-मुखी ॥१८॥ [N

---

१. फ—एव सुसं० ॥ २. अ—मयैवम् । ३. अ—त्वामेव मा० ॥ ४. आ—दिव्यर्क्षहरिसिंहानां । च रा ब म अ—दिष्ट्यार्क्षहरिसिंहानां । ५. अ—नास्ति ॥ ६. च—०नुगम् ॥ ७. फ—नानर्थकम् । ल२—न चाव्यर्थम् । ८. अतः परमधिकः पाठः—फ च रा ब प्र म ल१ ल२ अ—अद्य प्राप्स्याम्यहं दिष्ट्या त्वद्दर्शनकृतं यशः । तदाश्वसिहि भद्रन्ते क्षीणदुःखासि मैथिलि ॥ फ—यशसा तपसा चैव वीर्येण च विशांपतिः । ९. फ—राघवः स । १०. च रा प्र ब म ल१ ल२—नास्ति । ११. फ प्र ल१ ल२—०र्णस्य च । रा ब—०र्णस्यैव । १२. आ फ—भाविनि । रा ब प्र ल१ ल२—मैथिलि । १३. च म अ—नास्ति । १४. अ—नास्ति ॥ १५. अ—रामरामा० । १६. प्र ल१ ल२—वैदेहि ॥

---

१. च रा प्र ब म ल१ ल२—अहं प्राप्स्यामि दिष्ट्याद्य । अ—प्राप्स्याम्यद्य त्वहं दिष्ट्या । २. च रा ब प्र म ल१—भामिनि ॥

तच् छ्रुत्वा मधुरं वाक्यं सीता राम-गुणाऽन्वितम् ।
नेत्राभ्यां कृष्ण-साराभ्यां मुमोचाऽऽनन्द-जं जलम् ।[1]
N] भर्त्तारम् इव सं-प्राऽऽप्य[2] जानकी मुदिताऽभवत् ॥१९॥ [४उ
चारु तद् वदनं तस्यास् ताम्र-शुक्लाऽसितेक्षणम् ।
N] हर्षोद्-अग्रं बभूवाऽथ राहु-मुक्त इवेन्दु-राट् ॥२०॥ [५
ततः सा[3] ह्रीमती[3] बाला भर्त्तृ-व्यसने[4]-कर्षिता ।
N] रुदती शोके[5]-हर्षाभ्यां मुदिता[6] वाक्यम् अब्रवीत् ॥२१॥ [N
कुशली यदि काकुत्स्थः किं तत्[7] सागर-मेखलाम् ।
N] न निर्-दहति कोपेन युगाऽन्ताऽग्निर् इवोत्थितः ॥२२॥ [१३
अथवा शक्ति[8]-मन्तौ तौ सुराणाम् अपि नि-ग्रहे[9] ।
N] ममैव तु न दुःखानाम् अस्ति मन्ये विपर्य्-अयः ॥२३॥ [१४
सा[10] राम-सङ्कीर्तन[10]-नष्ट-शोका
रामस्य[11] शोकेन[11] समान-शोका ।
शरन्--मुखे साऽम्बुद-चन्द्र-लेखा
N] निशेव सा राज-सुता बभूव ॥२४॥ [४७
[12]हते रिपौ वीत-भया[13] यथा शची[14]
भवेत्[14] प्र-तीता सुर-राज-विक्रमैः ।
तथैव सा वायु-सुतेन हर्षिता
N] बभूव सीता परि-पूर्ण-मानसा ॥२५॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमत्सीता-समागमेऽङ्गुलीय-प्रदानं नामैकत्रिंशः सर्गः ॥ ३१ ॥

---

१. ब—नास्ति । २. अ—संप्राप्त ॥ ३. अ—साध्वी सती ॥ ४. फ—भर्त्तुः शोकेन क॰ । ५. आ—कामह॰ । ६. फ—हृषिता ॥ ७. फ च रा प्र ब ल१ ल२ अ—न । म—नु । ८ फ—शक्तिवन्तौ । ९. आ—विग्रहे ॥ १०. रा प्र ब म ल१ ल२—रामस्य संकी॰। आ—॰॰न जातशोका। ११. अ—सा रामशो॰ । १२. फ॰ हतेषु दैत्येषु भयाद् । १३. च प्र ब म ल१ ल२—यथाभवत् । रा—भवेत् । १४. च रा प्र ब म ल१ ल२—शची ॥ १६. रा—उत्तरकाण्डे । १७. फ रा प्र ब म ल१—॰ण्डे अंगुलीयप्रदानं । ल२—॰लीयदर्शनं । अ—दर्शनो ॥

१९पू] सा तु वि-श्वासिता तेन हेतुभिश् चोप-दर्शिता[1] ।
१४उ] उप-पन्नैर् अभि-ज्ञानैर् दूतं तम् अव-गच्छती[2] ॥१॥ [N
१५उ] अ-तुलं चाऽऽगता[3] हर्षं प्र-हर्षेणैव[4] भामिनी ।
वाष्प-संरुद्ध-नयना कपिं तं समुद्-ऐक्षत ॥२॥[5] [N
१६] सा[6] दृष्ट्वा च हनूमन्तं वि-नीतं संहताऽञ्जलिम् ।[5]
N] मुमोचाऽऽनन्द-जं वाष्पं गद्गदं मधुराऽक्षरम् ॥३॥ [N
वाष्प-सन्दिग्धया वाचा शोक-हर्ष-विमिश्रया ।
१७] उवाच वचनं[7] चेदं हरिं हरिण-लोचना ॥[5]४॥ [N
यजेयं[8] देवताः काले यस्याऽर्थे प्लवगोत्तम ।
१८] दिष्ट्या मे ध्रियते[9] भर्त्ता दिष्ट्या ध्रियतं(?ते)लक्ष्मणः॥५॥[N
परि-तुष्टा चिरं[10] श्रुत्वा राम[11]-कौशल्य-संकथाम् ।
१९] लक्ष्मणस्य च वीरस्य प्र-शशंस[12] च[12] मारुतिम् ॥६॥ N
कपे त्वाम् अभि-नन्दामि चिरं जीव सुखी भव ।
२०] साऽनु-जः कुशली भर्त्ता येन मेऽद्य नि-वेदितः ।
२१पू] बलेन यशसा चैव वर्धस्व प्रजया[13]ऽपि च ॥७॥ [N
कपिं चैव हनूमन्तं वि-नीतवद् उप-स्थितम् ।

---

१. फ-चैव सांत्वनैः । च-०देशिते । रा प्र ब म ल१ ल२-०दोशितैः ।
२. फ च रा ब अ-०च्छत । प्र म ल१-चाध्यगच्छत । ल२-चाधिगच्छति ॥
३. ल२-सा गता । अ-च गता । ४. फ-हर्षेणैव च । अ-०र्षेण च । ५. अ-नास्ति । ६. फ-दृष्ट्वा च तं । ७. च-वाक्यं । ८. च ब प्र म ल१ ल२-यजेदं । ९. च रा प्र ब म ल१ ल२-ध्यायति ॥ १०. प्र ब म ल२-चिरात् । ल१-प्रियं । ११. म ल१-सीता कौ० । १२. च रा ब म ल१ ल२-०शंसाथ ॥
१३. च रा प्र ब म ल१ ल२-प्रभयापि ॥

N] परि-तुष्टा प्रियं श्रुत्वा प्र-शशंस पुनः पुनः ॥८॥ [६उ
२१उ] विक्रान्तस् त्वं समर्थस् त्वं प्राज्ञस् त्वं वानरोत्तम ।
येनाऽयं रक्षसां वासस् त्वयैकेन प्र-धर्षितः ॥९॥ [७
२२] शत-योजन-विस्तीर्ण (?:) सागरो मकराऽऽलयः ।
विक्रम-श्लाघनीयेन क्रमता[1] गोष्-पदी-कृतः ॥१०॥ [८
२३] न हि त्वां प्राकृतं[2] मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति[3] सं-त्रासो रावणान् नाऽपि[3] सं-भ्रमः॥११॥ [९
२४] अर्हसि[4] त्वं[5] कपि-श्रेष्ठ मया समभि-भाषणम् ।
परीऽऽक्ष्य[6] प्रेषितस् तेन रामेण विदिताऽऽत्मना ॥१२॥ [१०
२५] प्रेषयिष्यति मेधावी[7] न रामो ह्य् अ-परीऽऽक्षितम् ।
२६पू] परा[8]-क्रमम् अ[9]-विज्ञाय मत्-सकाशं विशेष-तः॥१३॥ [११
अ-विन्ध्यो नाम मेधावी राक्षसो धर्म्म-सम्मतः ।
N] तद्-वाक्याद् अव[10]-गच्छामि राम-सुग्रीवयोर् अहम् ॥१४॥ [N
सख्यं वालि-वधं चैव सु-ग्रीवैश्वर्यम् एव च ।
N] कपि[11]-राघव-सम्बन्धात् त्वां च दूतम् अवैम्य् अहम् ॥१५॥[N
२६उ] दिष्ट्या च कुशली रामो धर्माऽऽत्मा धर्म-वत्सलः ।
२७पू] लक्ष्मणश् च महा-तेजाः सुमित्राऽऽनन्द-वर्द्धनः॥१६॥ [१२
N] कच्चिन् नाऽन्य-मना रामः कच्चिन् मां तारयिष्यति ।[12] [२३उ
२९पू] कच्चित् पुरुष-कारं[13] च[13] कुरुते पार्थिवाऽऽत्म-जः॥१७॥[14] [१६उ

---

१. अ—रमता ॥ २. फ—वानरं मन्ये प्राकृतं । ३. म ल$_1$ ल$_2$—०णादपि । अ—०णान्नास्ति ॥ ४. फ अ—०से च । ५. फ अ—यदसि ॥ ६. फ अ—दुर्द्धर्षौ । ७. अ—०क्रमं स वि० ॥ ८. फ च रा प्र ब म अ—वृद्धसं० ल$_1$ ल$_2$—युद्धसं० । ९. ल$_1$ ल$_2$—अधिग० ॥ १०. रा प्र ब म ल$_1$ ल$_2$—कपे राघ० ॥ ११. फ च अ—कच्चिन्न परितप्यते । १२. इतोऽग्रे फ च अ—उत्तराणि कच्चिन्निति च मू० पा० १८—शोत्तरार्ध-१९—शपूर्वार्धभूताविह पठन्ति । १३. आ—०षकाराय । फ अ—०षकारेण । १४. च—नास्ति ॥

२७उ] कच्चिन् न व्यथते रामः कच्चिन् न परि-तप्यते ।
उत्तराणि तु कार्याणि कुरुते पुरुषोत्तमः ॥१८॥[1] [१५
२८] कच्चिन् न दीनः सं-भ्रान्तः कार्येषु न वि-मुह्यति ।
N] कच्चिन् नोत्ता इवोग्रेण भारेण परि-षीदति[2] ॥१९॥[3] [N
२९उ] द्वि-विधं[4] त्रि-विधोपायम् उपायं कच्चिद् आ-स्थितः ।[5]
वि-जिगीषुश्[6] च हृष्टश् च[7] कच्चित् कर्माणि चोच्छ्रितः ॥२०॥ [१७
३०] यस् तु नाऽऽरभते किञ्चिन् नरो दैव-परायणः ।[8]
क्षिप्रं भवति निर्-द्रव्यः पलाऽयन-परायणः ॥२१॥ [N
३१] कच्चिन् मित्राणि लभते मित्रैश्[9] चाऽभ्युप[10]-गम्यते ।
कच्चित् कल्याण-मित्रैश्[11] च[11] मित्रैश्[12] चाऽपि[12] पुरस्-कृतः २२ [१८
३२] कच्चिद् आ-शास्ति देवानां प्रसादं पार्थिवाऽऽत्म-जः ।
कच्चित् पुरुष-कारं च दैवं च प्रति-पद्यते ॥२३॥ [१९
३३] कच्चिन् न[13] वि-गत[14]-स्नेहो वि-वासान्[15] मे नरर्षभः ।
३४पू] कच्चिन् मां व्यसनाद् अस्मात् सु-घोराद् उद्-धरिष्यति[16] ।
३८उ] धक्ष्यते सायकैश्[17] चैनां त्वयि प्रति-गते पुरीम्[18] ॥[19] २४॥ [N
३४उ] सुखानाम् उचितो नित्यम् अ-सुखानां च नोचितः[20] ।

---

१. प्र—नास्ति । अत्र मूपा० १७-शपूर्वार्धान्त्यं टि० द्र० । २. च रा ब प्र म ल१ ल२—०परिपीडितः । ३. फ अ—नास्ति ॥ ४. फ—त्रिविधं । ५. रा—नास्ति । अतः परमधिकः पाठः—आ रा ब म ल१ ल२—अविनाशीव हृष्टश्च कच्चित्कर्माणि चोच्छ्रितः । ६. अ—०षु प्रकृष्टश्च । ल१—०षु च धृष्टश्च । ७. फ च म अ—न च दैवपरायणः । रा प्र ब ल२—न च दोषपरायणः ॥ ८. अ—देवे प० ॥ ९. ब प्र म ल१ ल२—नास्ति । १०. फ च रा प्र ब म ल१ ल२ अ—चाप्युप० । ११. अ—०ण वा रामो । १२. ल२—मित्रैरपि ॥ १३. रा—०न्नावग० । १४. फ—०स्नेहः प्रवा० । १५. प्र ल१ ल२—मेदिनीपतिः । अ—०साच्च नर० । १६. फ अ—०रात्तारयिष्यति । १७. म—०कैर्लंकां । १८. आ म—पुनः ॥ १९. च रा प्र ब ल१ ल२ अ—नास्ति ॥ २०. आ—नोचितम् ।

दुःखम् उत्तरम् आ-साद्य कच्चिद् रामो न शोचति ॥२५॥[1] [२१
३५] मन्-निमित्तं च मानाऽर्हः कच्चित् तापेन रा[2]घवः। [२३पू
N] ब[3]हु-शः खि[3]द्यते वीरः सोऽद्य भूमि-पतेः सुतः ॥२६॥ [N
३६उ] यदि जीवति काकुत्स्थः किम् अर्थं रावणाऽऽलयम्[4]।
न निर्-दहति कोपेन युगाऽन्ताऽग्निर् इवोत्थितः ॥२७॥ [N
३७] किम् अर्थं मर्षयति मां रिपु-संस्थाम् अरिं-दमः।
३८पू] न रावण-विनाशाय प्र-यत्नम् उप-तिष्ठ[5]ते ॥२८॥ [N
कच्चित् स नाथो मम राज-पुत्रः
सर्वस्य लोकस्य च लोक[6]-नाथः।
मां वीर[7]-नाथां बलवद्[7]-गृहीताम्[8]
३९] अ-नाथवद् वे[9]त्स्यति चिन्तयानः ॥[10]२९॥ [N
कच्चिन्न[11] न[11] तत्[12] सोम[12]-समान-वर्णं
तस्याऽऽननं पद्म-समान-ग[13]न्धम्।
मया विना शुष्यति शोक-दीनं[14]
४०] जलाऽत्यये पद्मम् इवाऽऽतपेन ॥३०॥ [२८
धर्म्मोप-देशात् त्य[15]जतश् च राज्यं
मां चाऽप्य् अ[16]रण्यं नयतः प[16]दातेः।
नाऽऽसीद् व्यथा तस्य न भी[17]र् न शो[17]कः

---

१. च रा प्र ब ल१ ल२—नास्ति ॥ २. फ—मोहितः। ३. फ ब—अल्पमायास्यते। च रा प्र ब म ल१ अ—अल्पमायस्यते ॥ ४. च—॰ये॥ ५. च रा प्र ब म ल२ अ—॰तिष्ठति ॥ ६. फ अ—धर्मनाथः। ७. अ—चाथ रामो बलवान्। ८. ल१—अत आरभ्य सर्गसमाप्तिं यावत्त्रुटितः पाठः। ९. आ—वेत्स्यति। फ—तप्यति शोकदीनः। १०. अ—लङ्कां प्रविश्यानय शोकदीनाम् ॥ ११. आ—कच्चित्तु। १२. अ—तत्पद्मस॰। १३. फ च अ—॰नगंधि। १४. म—॰दीनाम् ॥ १५. म—॰तः स्वरा॰। फ—॰श्च राष्ट्रम्। १६. म अ—॰रण्ये नयतः पदातिं। १७. म—भीतिशोकः।

४१] कच्चित् तु धैर्याद् यतते[1] यथावत् ॥३१॥ [२०

न तस्य माता न पिता नै[3] चाऽन्यः

स्नेहाद् वि-शिष्टोऽस्ति मया समो वा ।[२०पू

स्नेहाद् अ-मर्षाच् च समं निमित्तात्[4]

N] न व्याधिम् ऋच्छत्य्[5] अमराऽधिपाऽऽभः[6] ॥[2]३२॥[N

श्रुत्वा[7] त्व् असौ माम् इह वर्तमानां

वि-क्रम्यते[8] कच्चिद् अ-दीर्घ-कालात्[9] ।[N

तावद् ध्य् अहं दूत जिजीविषेयं[10]

४२] यावत् प्रियस्य[11] शृणुयां प्र-वृत्तिम् ॥३३॥[२०उ

कच्चिन् महाऽऽत्मा न परा-जिताऽऽत्मा

कच्चिन् न दैवं कुरुते प्र-माणम् ।

मनो हि यस्योद्-वहतीऽव भारं[12]

N] तस्याऽग्रतो दैवम् अनुप्र-याति ॥३४॥ [N

उक्तः स परुषं[13] पूर्वं मूर्खया प्रेरितो[14] मया ।

४३] गतो राम-गतं[15] मार्गे[16] कच्चिज् जीवति लक्ष्मणः ॥३५॥ [N

कौशल्यायास्[17] तथा देव्याः कच्चित् सह सुमित्रया ।

N] अभीऽऽक्ष्णं श्रूयते[18] तत्र कुशलं भरतस्य च ॥३६॥ [२२

४४पू] कच्चिच् छृणोति[19] कौशल्या सुमित्रा वाऽप्य् अनामयम्[20] ।

---

१. फ म–म्रियते । २. रा प्र ब ल$_2$–नास्ति ॥ ३. च–तथान्ये । ४. आ–०निमित्तम् । ५. आ–इच्छेद् । ६. म–०धिपोपि ॥ ७. रा प्र म ल$_2$–श्रुत्वाप्यसौ । ८. रा ब प्र अ–विक्रमते । ९. आ रा प्र ब अ–०कालम् । १०. आ–तावद्धि दूत प्रजिजीविषेयं । ११. ल$_2$–प्रियस्य यावत् ॥ १२. अ–भावम् ॥ १३. अ–पूर्वं परुषं । १४. फ–प्रेषितो । १५. रा प्र ब ल$_2$–०रामगतिं । १६. च–मार्गात् । १७. म ल$_2$–कौस० । १८. आ–श्रुणुते ॥ १९. फ–०च्छूयत कौशिल्या । अ–०च्छूयेति । म ल$_2$–०च्छूयत कौसल्या । २०. फ–०मया ।

N] कच्चिद् धर्मेण शासन्तं[1] स्तुवन्ति भरतं प्रजाः[2] ॥३७॥ [N
४४३] कच्चिद् अक्षौहिणी-युक्तो[3] भरतो[4] वाऽप्य् अ-[5]मर्षितः ।
ध्वजिन्या मन्त्रिभिर् गुप्तः क्षिप्रम् एष्यति मत्-कृते[6] ३८ [२४
४५] वानराणां पतिः श्रीमान् सु-ग्रीवः कच्चिद् एष्यति ।
N] मत्-कृते हरिभिः सार्द्धं वृतो दन्त-नखाऽऽयुधः ॥३९[7] [२५
कच्चित् स लक्ष्मणः श्रीमान् सुमित्राऽऽनन्द-वर्द्धनः ।
४६] अस्त्र-विच् छर-जालेन रक्षांसि प्र-[8]मथिष्यति ॥४०॥ [२६
रौद्रेण[9] कच्चिद् अस्त्रेण रामेण नि-हतं[10] युधि ।
४७] द्रक्ष्यामि रावणं क्षुद्रं स-गणं रण-मूर्द्धनि ॥४१॥ [२७
कच्चिद् रामो महा-बाहुः शोकेन महताऽऽवृतः[11] ।
N] अ-पक्षः[12] पक्ष-वान् [12]व्योम विहङ्ग इव चोर्ध्व[13]-पतेत् ॥४२॥ [N
[14]इतीऽव चेदं[14] वचनं महाऽर्थं[15]
कपि-प्रवीरं मधुराऽर्थम् उक्त्वा ।
श्रोतुं पुनस् तस्य वचो[16] यथोक्तं[16]
N] रामेण[17] रम्यं[17] वि-रराम रामा ॥४३॥ [३१

[18]इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि हनूमत्समागमे सीता-वाक्यं
नाम द्वात्रिंशः सर्गः ॥३२॥

---

१. अ–संयुक्तं । २. फ अ–नराः ॥ ३. अ–०णीं भीमां । फ–०णीभिर्मा । ४. फ–भरतश्चाप्यम० । ५. आ–तत्कृते । ६. प्र–मद्वते ॥ ७. अ–त्रुटितः पाठः ॥ ८. च–प्रसमिष्यति । रा प्र ब म ल$_2$–शमयिष्यति ॥ ९. अ–क्रुद्धं । १०. फ–पतितं । रा–मृतं तं । अ–निहतं ॥ ११. आ–०वृतः । १२. फ–अपश्यत्पक्षिवद् । आ–अपक्षपक्ष० । अ–०क्षः कच्चिदाकाशे वि० । १३. फ–योत्पतेत् । प्र–चोत्सृजे । अ–नापतेत् ॥ १४. फ अ–इत्येव देवी । प्र–इत्येव चे० । १५. म–महार्हम् । १६. फ–यथावदुक्तम् । १७. आ–रामेण राम । फ–रामार्थमग्र्यं । अ–रामार्थयुक्तं ॥ १८. रा–इत्यार्षे । अ–इत्यार्षे रामायणे ॥

एवम् उक्तः[1] शुभं वाक्यं सीतया मारुताऽऽत्म-जः ।[2]
१] इदं मधुरया वाचा प्रत्य्-उवाच कृताऽञ्जलिः ॥[3]१॥ [N
न तावद् देवि [4]जानीते त्वाम् इह-स्थां स राघवः । [३३पू
२] धक्ष्यते सायकैस्[5] त्व् आशु लंकां प्रति-गते मयि ॥२॥ [N
वि-ष्टम्भयित्वा बाणौघैर् अ-गाधं वरुणाऽऽलयम् ।
३] करिष्यति रिपोर्[6] लंकां प्र-सह्य हत-राक्षसाम् ॥३॥ [३५
९उ] त्वाम् एव तु विशाला[7]ऽक्षि रामो ध्यायति निश्-श्वसन् ।
स्वप्तु-कामस्य रामस्य निद्रा नैवोप-[8]जायते ॥४॥ [N
१०] न भक्षयति मांसानि न[9] देवि मधु सेवते[10] । [४१पू
शयानः स्थण्डिले शय्यां भक्तम् अश्नाति चाऽष्टमे ॥५॥ [N
११] न च कामान् न सं-रम्भान् न भयान् नाऽर्थ-गर्धतः[11]।[12]
आ-हारम् आ-हारयते प्राऽऽप्ते काले तथाऽष्टमे ॥६॥ [N
१२] मतिमान् अपि काकुत्स्थो वीरश्[13] चाऽपि वि-शेषतः ।
त्वद्-वियोगज-शोकेन वि-क्लवं[14](?च)सम(?म्)-पद्यते[15] ॥७॥ [N

---

१. आ प्र—उक्त्वा शुभं वाक्यं सीता । २. ल१—अत आरभ्य सर्ग-समाप्तिं यावत्त्रुटितः पाठः । ३. फ—इदं मधुरमारेभे वक्तुं वचनमुत्तमम् ॥ ४. फ—वै विजानाति । ५. रा—०केनाशु । प्र ब म ल२ अ—०कैराशु ॥ ६. प्र ब म ल२—पुरीं ॥ ७. फ अ—०लाक्षिमनुध्या० । ल२—०लाक्षीं रामो । ८. फ—निद्राप्यभिजायते ॥ ९. रा ब म ल२—दधिमध्वादि नैव च । १०. फ—रात्रिं नयति सर्वदा । च रा प्र ब म ल२—नक्तम् ॥ ११. आ—०र्थगृद्धितः । १२. अ—न कामान्न च संरम्भात्त्रया हीनो रघूत्तमः ॥ १३. आ—वीर एव । १४. आ फ—विक्लवः । १५. आ फ प्र—०समद्यत ॥

१३] न शौर्ये नाऽस्त्र[1]-कौशल्ये नाऽपि ज्ञाने महा-मतिः ।
सम्पदं[2] विन्दते देवि[2] त्वद्-गतेनाऽन्तर्-आत्मना ॥८॥ [N

१४] वि-लपन् सततं भीरुः शोचंश्[3] च[3] बहु-धा भृशम्[4] ।
जीवितं निन्दते नित्यं कुले जन्म च सर्वदा[5] ॥९॥ [N

१५] धिङ्[6] ममाऽस्त्राणि[6] दिव्यानि धिग् वीर्यं धिक् परा-क्रमम् ।[7]
धिग्[8] जन्म मे कुले[8] तेषाम् इक्ष्वाकूणां महाऽऽत्मनाम् ॥१०॥ [N

१६] यत्र मे रक्षसा भार्या प्राणैर्[9] इष्ट-तमा प्रिया[9] ।
हृताऽव-मन्य[10] तृणवत्[11] कृतं[11] मे सर्व-था कुलम् ॥११॥ [N

१७] नैव दंशान् न मशकान् नाऽन्यांश्[12] चैव[12] सरीसृपान् ।
राघवो[13]ऽपनयेद् गात्रात्[13] तव नाम-व्रतं चरन् ॥१२॥ [४२

१८] नित्यं ध्यान-परो रामो नित्यं शोक[14]-परायणः ।
नित्यं चिन्तयते[15] चाऽपि त्वद्-गतेनाऽन्तर्-आत्मना ॥१३॥ [४३

१९] नित्यं[16] निद्रा-वशो[16] रामः सुप्तो[17]ऽपि पुरुषर्षभः[18] ।
सीतेति मधुरां वाणीं व्या-हरन् स्म वि-बुध्यते ॥१४॥ [४४

---

१. ब—नापि कौ० । अ—०ल्ये न रात्रौ न च भोजने । फ—नास्त्रशस्त्रे च न गतौ न च भोजने । २. फ—सुखं विन्दति वैदेहि । च अ—०दं संविदते । रा ब प्र म ल$_2$—संबुध्यते ॥ ३. आ—शोकश्च । ४. आ—कृतम् । रा प्र ब म ल$_2$—तथा । ५. अ—निन्दते ॥ ६. फ—धिग्मां शस्त्राणि । रा—धिङ्नामास्त्राणि । ७. अ—नास्ति । ८. आ—धिक् जन्म कुले । फ—धिग्धिग्जन्म कुले ॥ ९. फ—प्राणैः प्रियतरा सती । अ—प्राणैरपि गरीयसी । १०. आ—हृता च मन्ये । च—०वमानाच्च तृ० । रा प्र ब म ल$_2$—वमानात् । ११. ल$_2$—तृणवद्धतं ॥ १२. आ—नान्यांश्चैव । रा ब म ल$_2$—न्वन्यांश् । आ—नान्यांश्चापि । १३. फ च रा प्र ब म ल$_2$—०वो वारयत्यङ्गात् ॥ १४. च—ध्यानप० । रा प्र ब म ल$_2$—जपप० । १५. अ—चिन्तापरश् ॥ १६. फ—त्वामेव चिन्तयन् । १७. म ल$_2$—सुप्तो हि । १८. फ—प्रतिबुध्यते ॥

२०] दृष्ट्वा फलं[1] वा पुष्पं वा[1] यच्[2] चाऽन्यत् स्त्रीमनो-हरम्[2] ।
बहु-शो हा प्रियेत्य्-एवं[3] निःश्वास-बहुलोऽब्रवीत्[4] । [१९

२१] हा जानकीऽति निश्-श्वस्य वाष्प-पूर्ण-मुखोऽभवत्[5]॥१५॥[6] [N
त्वाम् एव ध्यायति[7] सदा[7] विशालाऽक्षि स राघवः ।

N] क्षिप्रं मा[8]ऽऽप्स्यसि वैदेहि रामं पद्म-दलेक्षणम् ॥१६॥ [N
स एव नित्यं बहु-शो वि-चिन्त्य
त्वाम् एव सीतेत्य् अभि-भाषमाणः ।
धृत-व्रतो राज-सुतो महाऽऽत्मा

N] तवोप-लम्भाय कृत-प्रयत्नः ॥१७॥ [४६
उदितम् अपि निशासु वीऽऽक्ष्य चन्द्रं
प्रकृति-सुखं[9] च सु-शीतलां[9]ऽशु-जालम् ।
मदन-वश-गतो वि-हाय निद्रां

२२] नयति[10] गिरिं नयनैः[10] शशाऽङ्कम् अस्तम् ॥१८॥ [N

इत्यार्षे[11] रामायणे सुन्दर-काण्डे[11] हनुमद्-वाक्यं
नाम त्रयस्त्रिंशः[12] सर्गः ॥३३॥[13]

---

१. फ—पुष्पं फलं वापि। च रा प्र ब म ल$_2$—फलं तु पु०। २. आ फ—यद्वान्यस्त्री० । ३. आ—०शोकं प्रियो नित्यं । ४. फ—०बहुलस्तदा । ५. फ—हा सीतेत्यनवद्याङ्गि हा ममाद्भुतदर्शने । ६. अ—नास्ति ॥ ७. अ—सततं ध्याति । ८. आ—क्षिप्रमाप्स्यसि ॥ ९. च रा ब म ल$_2$—सुखशीत० । प्र—च सुशीतलोज्ज्वलम् । १०. आ—०ति च न० । ११. ल$_2$—इति सुन्दरकाण्डे । १२. म—षट्त्रिंशः । १३. अ—इत्यार्षे रामायणे सीतासमनुरागवर्णनं नाम सर्गः ॥

सीता तद् वचनं श्रुत्वा पूर्ण-चन्द्र-निभाऽऽनना ।
१] हनूमन्तम् उवाचेदं धर्म्मार्थ-सहितं वचः ॥१॥ [१
अमृतं विष-सम्पृक्तं[1] त्वया वानर भाषितम् ।
२] यच् च नाऽन्य-मना रामो यच् च शोकेन[2] बाध्यते॥२॥[२
ऐश्वर्ये वा सु-विस्तीर्णे व्य्-असने वा सु-दारुणे ।
३] रज्ज्वेव पुरुषो बद्धः कृताऽन्तेनोप-नीयते ॥३॥ [३
विधिर् नूनम् अ-संहार्यः प्राणिनां प्लवगोत्तम ।
४] सौमित्रिं मां च रामं च व्य्-असनैः[3] पश्य मोहितान्॥४ [४
शोकस्याऽस्य कदा पारं राघवोऽधि-गमिष्यति[4] ।
५] प्लवमानः परि-श्रान्तो[5] हता(?त-)नौः सागरे यथा॥५॥ [५
राक्षसानां वधं कृत्वा घातयित्वा च रावणम् ।
६] लंकाम् उन्-मूलितां कृत्वा कदा द्रक्ष्यति मां पतिः ॥६॥ [६
स वाच्यः सं-त्वरस्वेति[6] यावद् एव न पूर्यते ।
७] अयं सं-वत्सरः कालस् तावद् हि मम जीवितम् ॥७॥ [७
वर्त्तते दशमो मासो[7] द्वौ तु शेषौ[8] प्लवं-गम ।
८] रावणेन नृ-शंसेन समयोऽयं[9] कृतो मम ॥८॥ [८
९] विभीषणेन च[10] भ्रात्रा मम निर्-यातनं प्रति ।
१०पू] अनु-नीतः स्वयं तेन[11] न च तां कुरुते[12] मतिम् ॥९॥ [९

---

१. च ब म-०संसृष्टं । रा ल१ ल२-संमृष्टं । अ-संयुक्तं । २. फ च प्र म ल१ ल२-शोकपरायणः॥ ३. म-०ने । ४. रा ब प्र म ल२-नास्ति ॥ ५. आ-समग्रः । अ-अत्यन्तं । ६. रा प्र ब म ल१ ल२-मम वाक्येन । आ-संवत्सरश्चेति ॥ ७. ल१ ल२-मासौ । ८. प्र-मासौ । ९. फ-समयो यः ॥ १०. फ-सौम्येन । ११. फ-भ्रात्रा । १२. फ-कृतवान् ॥

मम प्रति-प्रदानं हि[1] रावणस्य न रोचते ।

११] राघवं मार्गते संख्ये[2] मृत्यु[3]-काल-वशं गतः ॥१०॥ [१०

विभीषण-सुता ज्येष्ठा[4] नन्दा नाम महा-कपे ।

१२] तया ममैवम्[5] आ-ख्यातं मात्रा प्र-हितया[6] स्वयम् ॥११॥ [११

अ-विन्ध्यो[7] नाम मेधावी विद्वान् राक्षस-पुङ्गवः ।

१३] धृतिमान् शीलवान् वृद्धो रावणस्य सुसं-मतः[8] ॥१२॥ [१२

रामात् क्षयम् अनु-प्राप्तं रक्षसां प्रत्य्-अवेदयत् ।

१४] न च तस्यां[9]ऽपि दुष्टाऽऽत्मा शृणोति वचनं हितम् ॥१३॥ [१३

आ-शंसामि[10] हरि-श्रेष्ठ क्षिप्रं[11] मां प्राऽऽप्स्यते पतिः[11] ।

१५] अन्तर्-आत्मा हि मे शुद्धस् तस्मिंश् च बहवो गुणाः[12] ॥१४॥ [१४

उत्साहः पौरुषं सत्त्वम् आ-नृशंस्यं कृत-ज्ञता ।

१६] वि-क्रमश् च प्र-भावश् च सन्ति वानर राघवे ॥१५॥ [१५

चतुर्दश सहस्राणि राक्षसानां जघान यः[13] ।

१७] जन-स्थाने विना भ्रात्रा शत्रुः कस् तस्य नोद्-विजेत्[14] ॥१६॥ [१६

न स शक्यस् तुलयितुं व्य्-असने[15] पुरुषर्षभः[16] ।[16]

१८] अहं तस्याऽनुभाव-ज्ञा शक्रस्येव यथा शची ॥१७॥ [१७

---

१. फ—०पादनं तस्मै । २. म—संख्यं । ३. फ—मृत्युं का० ॥ ४. अ—ज्येष्ठा कन्या नदी नाम विभीषणसुता कपे । ५. फ—ममैतद् । ६. फ—प्रेषितया ॥ ७. ल$_2$—अवध्यो । ८. च ब म ल$_2$—सुसंगतः । प्र—वशं गतः ॥ ९. अ—तस्यातिदु० ॥ १०. आ—आशंसेहं । ११. फ अ—क्षिप्रमेष्यति राघवः । १२. च रा प्र ब म ल$_1$ ल$_2$—नास्ति ॥ १३. फ—सः । १४. रा प्र ब म ल$_1$ ल$_2$—गण्यते । १५. रा ब म ल$_2$—०नेन नरर्षभः । प्र—वानरर्षभः । १६. फ—नासौ चालयितुं शक्यो धैर्यतः पुरुषर्षभः । ल$_1$—विजेतुं न स शक्यस्तु रावणेन नरर्षभः ॥ अ—इत आरभ्य २३—शश्लोकं यावत् पाठो नास्ति ॥

शर-जालांऽशुभिः शूरः कपे राम[1]-दिवाकरः ।
१९] वि-धमिष्यति[2] स क्षिप्रं तद् रावण-तमो महत् ॥१८॥[3] [१८
इति सं-भाषमाणां[4] तां रामाऽर्थे शोक-कर्षिताम् ।
२०] अश्रु[5]-सम्पूर्ण-वदनाम् उवाच हनुमान् कपिः ॥१९॥ [१९
श्रुत्वा मम वचो देवि क्षिप्रम् एष्यति राघवः[6] ।
N] चमूं वि-कृष्य[7] महतीं हर्यृ-ऋक्ष-गण-संकुलाम् ॥२०॥ [२०
तत्र यद्य् अन्तरा मृत्युर् यदि देवाः[8] सहाऽसुराः[9] ।
N] स्थास्यन्ति युधि रामस्य स तान् अपि वधिष्यति ॥२१॥ [N
तवाऽदर्शन-जेनाऽऽर्ये शोकेन समभि-प्लुतः ।
N] न शर्म लभते रामः सिंहाऽर्दित इव द्विपः ॥२२॥ [N
दुर्दुर-द्धरेण च ते[10] देवि शपे मूल-फलेन वा ।
N] मलयेन च विन्ध्येन मेरुणा मन्दरेण च ॥२३॥[11] [N
यथा[12] सु-नयनं वल्गु बिम्बोष्ठं चारु-कुण्डलम्[13] ।
N] क्षिप्रं द्रक्ष्यसि रामस्य[14] पूर्ण-चन्द्र-निभाऽऽननम्[15] ॥२४॥ [N
N] क्षिप्रं द्रक्ष्यसि वैदेहि रामं प्र-स्रवणे[16] गिरौ ।
२४३] शत-क्रतुम्[17] इवाऽऽसीनं नाक-पृष्ठस्य मूर्द्धनि ॥२५॥ [N

---

१. आ–रामो दि० । २. ल$_1$–विजेष्यति । ३. आ–दिधिक्षति स तु क्षिप्रं रावणः प्रभवत्तमः । च रा प्र ब म ल$_2$–वधिष्यति स तु क्षिप्रं रावणं नरपुङ्गवः ॥ ४. आ–संभाषमानान्तु । च रा प्र ब म ल$_1$ ल$_2$–संजल्पयमानां तां । ५. रा प्र ल$_1$–अस्रुसं० । म–अम्बुसं० । ६. आ–द्रक्ष्यति राघवं ७. आ–प्रकृष्य । प्र ब म–विकृष्टां । ल$_1$ ल$_2$–प्रकृष्टां ॥ ८. ल$_1$–वा स्म । ९. आ–महीसुरा० ॥ १०. च–शपे केशरिणं । ११. रा प्र ब म ल$_1$ ल$_2$ नास्ति ॥ १२. रा ब म–सीते । १३. फ–बिम्बोष्ठं चारुकुण्डलमण्डितम् । रा ब म–बिम्बौष्ठं चा० । १४. फ–मुखं । १५. म ल$_1$ ल$_2$–०निभं मुखम् । अ–निभानने ॥ १६. आ–प्रश्र० । १७. फ–शक्रतुल्यम् ॥

N] अथवा मोक्तयिष्यामि दुःखाद्[1] आशु सुहृज्-जनान् ।
पृष्ठम्[2] आ-रोह मे देवि मा भूत् कालस्य[3] पर्ययः ॥२६॥[4] [२१
२५] त्वय्य् अहं पृष्ठ-लीनायां सं-तरिष्यामि सागरम् ।
३९ड] शक्तिर् अस्ति हि मे वोढुं लंकाम् अपि स-काननाम् ॥२७॥ [२२
अहं त्वां वक्र-केशाऽन्ते रामायाऽद्यैव[5] भामिनि ।
२१] प्राऽऽपयिष्यामि देवेभ्यो हव्यं हुतम् इवाऽनलः ॥२८॥ [२३
द्रक्ष्यस्य् अद्यैव वैदेहि राघवं सह-लक्ष्मणम् ।
२२] व्यवसाय[6]-समायुक्तं दैव-युक्तेन[6] कर्मणा ॥[7]२९॥ [२४
त्वद्-दर्शन-कृतोत्साहम् आश्रम[8]-स्थं महा-बलम् ।
२४] पुरं-दरम् इवाऽऽसीनं नग-राजस्य मूर्द्धनि ॥३०॥ [२५
पृष्ठम् आ-रोह[9] मे देवि मा वि-शङ्कस्व[10] शोभने ।
२५] योगम् अन्व्-इच्छ रामेण शशाऽङ्केनेव रोहिणी ॥३१॥ [२६
N] स्व[11]-कान्तिर् इव चन्द्रेण सूर्येणेव[12] महा-प्रभा[12] ।
२६पू] मत्-पृष्ठम् अधि-रोह[13]स्व तर[14] शोक-महाऽर्णवम् ॥३२॥ [२७
न हि मे सम्प्र-यातस्य त्वाम्[15] इतो नयतोऽम्बरे[15] ।
२७] अनु[16]-गन्तुम् अमी[16] शक्ताः सर्वे लंका-निवासिनः ॥३३॥ [२८

---

१. फ अ–दुःखार्तामसु० । आ–दुःखाद्वा ससु० । २. रा स–पृष्ठमारुह । प्र–क्षिप्रमारोह । ल$_1$ ल$_2$–क्षिप्रमारुह । ३. फ–०लविपर्ययः । ४. च–त्रुटितः पाठः । ५. फ–समासाद्यैव भाविनि । अ–०याद्यैव भाविनि । ६. च रा प्र ब म ल$_2$–व्यवसायमिवासह्यं । अ–०दैव-प्रोक्तेन । ७. ल$_1$–नास्ति ॥ ८. अ–आगमस्थं ॥ ९. प्र ब म ल$_1$–आरुह । १०. च–त्रिशंक सुशोभने । फ अ–विचारय शो० ॥ ११. फ–स्वका० । १२. ब ल$_1$ ल$_2$–०णेवातपप्रभा । १३. फ–०रुह्य त्वं । १४. ल$_1$ ल$_2$–रत्न-शोकं । आ–रत्नकोशं । १५. अ–त्वां गृहीत्वा वरानने । च–इत आरभ्य ३४-शश्लोकं यावत् त्रुटितः पाठः । १६. आ–अनुगन्तुं न ते । रा ब प्र म ल$_1$ ल$_2$–अनुगन्तुमिमे । अ–अनुगन्तुं गतिम् ॥

यथैवम् इह सं-प्राप्तस् तथैव हि न संशयः ।[1]
२८] यास्[2]यामि पश्य वैदेहि त्वाम् उद्यम्य विहाय[3]सि ॥३४॥ [२९
अथ चेत् संशयो देवि मम पृष्ठो[4]ऽधि-रोहणे ।
२९] नृ-पक्षि[5]-मृग-जातीनां कस्य रूपं करोम्य् अहम् ॥३५॥ [N
मैथिली तु ह[6]रि-श्रेष्ठं भीमं भीम-पराक्रमम् । [३०पू
३०] अब्रवीत् सां[7] शुभं वाक्यं वाक्य-ज्ञा वाक्य-कोविदम् ॥३६॥ [N
तद् वानर-वचः श्रुत्वा जानकी जल-जेक्षणा । [N
N] ईषद्-उत्थित-सर्वाऽङ्गी हनूमन्तम् अथाऽब्रवीत् ॥३७॥ [३०उ
हनुमन् दूरम् अध्वानं कथं मां वोढुम् अ[9]र्हसि ।
N] तद् ए[10]वं खलु ते मन्ये [11]कपित्वं हरि-यूथ-प ॥३८॥ [३१
कथम् अल्प-शरीरस् त्वं माम् इतो नेतुम् इच्छसि ।[12]
३१] सकाशं मानवेन्द्रस्[13]य भर्तुर् मे प्लव-गर्षभ[14] ॥३९॥ [३२
३२] सीतायास् तद् वचः श्रुत्वा हनुमान् प्लवगोत्तमः ।
चिन्तयामास लक्ष्मीवान् देव्या पारि-भवं कृतम् ॥४०॥ [३३
N] न मे जाना[15]ति सत्त्वं प्र-भा[16]वं वा[16]ऽसितेक्षणा ।
३२उ] तस्मात् प[17]श्यतु वैदेही[17] यद् रूपं परमं मम ॥४१॥ [३४
N] दर्शयामास वैदेह्याः स्व-रूपम् अ[18]रि-मर्दनः । [३५उ

---

१. फ–यथैवाहमनुप्राप्तस्तथैवाहमसंशयः । २. प्र म ल$_1$ ल$_2$–नयामि । ३. फ रा ब–विहायसा ॥ ४. आ–पृष्ठस्य रोहणे । ५. फ–भूयक्षमृग० । च रा–नृयक्षमृग० ॥ ६. फ–हनूमन्तं । ७. अ–अब्रवीच्च ॥ ८. रा–उवाच ह ॥ ९. फ अ–इच्छसि । १०. प्र ब म ल$_2$–तदेतत् । ल$_1$–त्रुटितोऽयं पादः । ११. ल$_1$ अ–कपि त्वदनुवस्थितम् ॥ १२. ल$_1$–नास्ति । १३. अ–मनुजे० । १४. आ–भर्तुः प्लवगसत्तम । १५. ल$_1$ ल$_2$ अ–०जानासि । १६. आ–प्रभावमसि । च प्र ब म–रूपञ्चैव शुचिस्मिता । १७. रा प्र ब म ल$_1$ ल$_2$–त्वं पश्य वैदेहि ॥ १८. ०पं परम० ।

स[1] तस्मात् पादपाद् धीमान्[1] आ-प्लुत्य[2] प्लवगोत्तमः ॥४२॥
३३] ततो वर्द्धितुम्[3] आ-रेभे सीता-प्रत्यय-कारणात् । [३६
विन्ध्य-मन्दर-संकाशो[4] बभौ दीप्ताऽनल-प्रभः ॥४३॥
३४] अग्रतो व्यव-तस्थे[5] स सीताया वानरर्षभः[6] । [३७
N] हरिः पर्वत-संकाशस् ताम्र-वक्त्रो महा-बलः ॥४४॥
N] वज्र-दंष्ट्र-नखो[7] भीमो वैदेहीम् इदम् अब्रवीत् । [३८
स-पर्वत-वनोद्देशां सा[8]ऽद्रि-प्राकार-तोरणाम् ।
३५] लंकाम् आपि स-नागाऽश्वां[9] नेतुं वै शक्तिर् अस्ति मे ॥४५॥ [३९
तद् अव-स्थाप्यतां बुद्धिर्[10] अलं देवि वि-वक्षया[10] ।
३६] वि-शोकं कुरु वैदेहि राघवं सह-लक्ष्मणम् ॥४६॥ [४०
तं दृष्ट्वाऽचल-संकाशम् उवाच जनकाऽऽत्म-जा ।
३७] पद्म-पत्र-विशालाऽक्षी मारुतस्यौरसं सुतम् ॥४७॥ [४१
तव सत्यं (ऽत्त्वं) बलं चैव सं-जानामि महा-कपे ।
३८] वायोर् इव गतिं चैव तेजश् चाऽग्नेर् इवाऽद्भुतम् ॥४८॥ [४२
प्राकृतः कः कथं चेमां भुवम्[11] आ-गन्तुम् अर्हति ।
३९] उदधेश् चाऽप्र-मेयस्य पारं वानर-पुङ्गव ॥४९॥ [४३
जानामि नयने[13] शक्तिं गमने[12] चाऽपि तेऽनघ ।

---

१. प्र–तत्तस्मात् पादपाच्छ्री०। फ–तस्माद्देशात्तदाप्लुत्य । रा प्र ब म ल$_2$–०त् पादपाच्छ्रीमान् । २. फ–निपत्य । च ल$_1$ ल$_2$–उत्प्लुत्य ॥ ३. रा प्र ब म ल$_1$ ल$_2$–वृद्धत्वमा०। ४. अ–०काशं । ५. च रा प्र ब म ल$_1$ ल$_2$–व्यवतिष्ठन्त्याः । ६. रा प्र ब म ल$_1$ ल$_2$–वानरोत्तमः ॥ ७. फ–दंष्ट्रावक्रनखो । च रा प्र ब म ल$_1$ ल$_2$–वज्रदंष्ट्राननो । ८. फ–बद्धप्रा० । अ–साट्टप्राकारगोपुरम् । ९. फ–०नागां च ॥ १०. रा प्र ब म ल$_1$–बुद्धिर्मम सागरलङ्घने । ल$_2$–बुद्धिं म० । फ–०वि दिदृक्षया ॥ ११. फ अ–भूमिमा०। १२. फ अ–गमने । १३. फ–नायितुं मां महाकपे । रा ब म ल$_1$–गमनेऽपि च । अ–नयने चापि ।

४०] अवश्यं सम्प्र-धार्या[1] ते कार्य-सिद्धिर् निर्-आमया ॥५०॥[2] [४४
अ-सह्यं[3] मे कपि-श्रेष्ठ त्वया गन्तुं विहायसा ।
४१] वायु-वेग-सवेगस्य वेगो मां मोहयेत्[4] तव[5] ॥५१॥ [४५
अहम् आकाशम् आ-पन्ना ह्य् उपर्य्-उपरि सागरम् ।
N] प्र-पतेयं हि ते पृष्ठाद् भयाद् वेगेन गच्छतः ॥५२॥ [४६
पतिता सागरे चाऽहं तिमि-नक्र-झषाऽऽकुले ।
४२] भवेयम् आशु वि-वशा यादसाम्[6] अन्नम् उत्तमम्[7] ॥५३॥ [४७
ततो मां पतितां तत्र हरि-श्रेष्ठ महाऽर्णवे ।
N] भक्षयेयुः प्रति-भयाद् ग्राहाः सागर-वासिनः ॥५४॥ [N
न शक्ष्यामि[8] त्वया गन्तुं[9] सर्व-शत्रु-विनाशन ।
N] कलत्र-वति संदेहस् त्वय्य् अपि स्याद् अनन्तरम् ॥५५॥ [४८
ह्रियमाणां[10] तु मां दृष्ट्वा राक्षसी[11] भीम-विक्रमाः ।
N] अनु-गच्छेयुर् आ-दिष्टा रावणेन दुर्-आत्मना ॥५६॥ [४९
तैः संम्यग् आ-वृतैः[12] क्रुद्धैः[13] शूल-मुद्गर-पाणिभिः ।
N] भवेस् त्वं संशय-प्राऽऽप्तो मया वीर कलत्र-वान् ॥५७॥ [५०
साऽऽयुधा बहवो व्योम्नि राक्षसास् त्वं निरा-युधः ।
N] कथं शक्ष्यसि[14] सं-यातुं[15] मां चैवं[16] परि-रक्षितुम् ॥५८॥ [५१
युध्यमानस्य रक्षोभिस् ततस् तैः क्रूर-कर्मभिः ।

---

१. फ—०र्यांशु । २. च रा प्र ब म ल$_1$ ल$_2$—नास्ति ॥ ३. फ—अशक्यं मे कपिवर । ४. फ—मोहयेद् ध्रुवम् । ५. फ—प्रयाणे वेपनं याता ॥ ६. फ—निरालम्बा ह्यनुत्तमम् । ब—०साम्भक्ष्यमुत्तमम् ॥ ७. फ—जलभवा । ८. फ—शक्यामि । च रा प्र ब म ल$_1$ ल$_2$—शक्नोमि । ९. रा प्र ब म ल$_1$ ल$_2$—यातुं ॥ १०. फ—०माणाञ्च । ११. च—०सीर्भी० । १२. फ अ—सम्परिवृतः । म—संपरावृतः । १३. ल$_2$—क्रुद्धः ॥ १४. रा प्र ब म—शक्नोसि । १५. ल$_1$ ल$_2$—मां यातुं । संयतेः पर्यायत्वेन संयातेरयं प्रयोगो द्र० । १६. अ—चापि ॥

N] प्र[1]-पतेयं हि ते[1] पृष्ठाद् भयाऽऽर्त्ता कपि-सत्तम॥५९ ॥ [५२
अथ[2] रक्षांसि भीमानि महान्ति बलवन्ति च ।
N] कथंचित् सं-पराये त्वां नयेयुः[3] कपि-कुञ्जर[4] ॥६०॥ [५३
अथवा युध्यमानस्य पतेयं पृष्ठतश्[5] च[5] ते ।
N] पतितां च[6] नयेयुर् मां[6] राक्षसा भीम-विक्रमाः ॥६१॥ [५४
मां वा हरेयुस्[7] त्वत्-पृष्ठात् ते[8] वि-शसेयुर् अथाऽपि च[9] ।
N] अ-व्यवस्थौ च दृश्येते युद्धे जय-पराजयौ ॥[9]६२॥ [५५
अहं वा यद् वि-पद्येयं रक्षोभिर् अति-पीडिता[10] ।
N] त्वत्-प्रयत्ने हरि-श्रेष्ठ किं भवेद् हि[11] प्र-योजनम् ॥६३॥ [५६
कामं त्वम् अपि पर्य्-आप्तो नि-हन्तुं सर्व-राक्षसान् ।
N] गन्तुं समीपं रामस्य मत्[12]-तो हीयेत[12] राघवः ॥६४॥ [५७
माम् आ-दाय हि रक्षांसि नयेयुर् अ[13]-बलां कश्चित् ।[14]
N] यत्र[15] मां नाऽभि[15]-जानीयुर् हरयो न[16] च[16] राघवः ॥६५॥[17] [५८
[18]मयि जीवति श्रेयः स्याद्[19] राघवस्य महाऽऽत्मनः । [६०पू
N] तस्मिन्न् इक्ष्वाकु-वंशस्य प्राणाः संसक्ता[19] महाऽऽत्मनि[20] ॥६६ [N
अ-प्राऽऽप्नुवन्[21] मां काकुत्स्थः प्राणान् अपि परि-त्यजेत् ।
N] रामं नि-पतितं दृष्ट्वा न भवेल् लक्ष्मणो ध्रुवम् ॥६७॥ [N

---

१. फ—संप० । प्र म ल१ ल२—प्रपेतयमहं ॥ २. आ—अभि र० ॥ ३. ल२—जयेयुः । ४. रा ब प्र म ल१—कपिसत्तम । ५. आ—विमुखस्य । ६. रा प्र ब म ल१ ल२—मां नयेयुस्ते ॥ ७. रा प्र ब म ल१ ल२—हरेयुः । आ फ च—०त्वद्धस्ताद्वि० । ८. च रा प्र ब म ल१ ल२—विषमेयुर् । फ च—विषमे युध्यतोऽपि वा । ९. ब—नास्ति ॥ १०. फ अ—अभिगर्जिता । अ—०वर्जिता । ११. आ—विप्र०॥ फ अ—तुप्र० । १२. फ—स किं प्रीयेत । रा प्र ब—ततो हीयेत॥ १३. फ—अथवा । १४. च—त्रुटितः पाठः। १५. फ—तत्र मां नावि०। १६. आ—०यः क्वापि । फ—०यो वापि । १७. अ—नास्ति॥ १८. आ—मम जीवितमापन्नं । प्र ब—ल१ ल२—मम जीवितमज्ञाय । १९. आ फ च रा प्र ब—सक्ता । २०. आ—ममात्मनि ॥ २१. आ—०यान् ॥

धर्माऽऽत्मा भ्रातरौ श्रुत्वा वैवस्वत-गतिं गतौ ।
N] कथं जीवेन् महा-तेजा भरतो भ्रातृ-वत्सलः ॥६८॥ [N
तेषां प्राण-विपर्यासे किं शेषं स्यान् महाऽऽत्मनाम् ।
N] शत्रुघ्नस्य महा-बाहोस् तथा राज-कुलस्य च[2] ॥६९॥ [N
तौ निर्-आशौ ममाऽर्थायै[3] शोक-सन्ताप-कर्षितौ ।
N] सह[4] सर्वर्त्त-हरिभिस् संजेतां[5] प्राण-संग्रहम् ॥७०॥ [६१
एवम् अन्यतराऽभावे मम[6] चेह तवाऽपि वा ।
N] अदर्शनं[7] गुणोदर्के न तेऽहम् पृष्ठम् आ-रुहे ॥७१॥[8] [N
तस्य धर्म-प्रधानस्य पत्न्या रामस्य वानर ।
४३] पृष्ठे पुं-नामधेयस्य न युक्तम् अधि-रोहणम् ॥७२॥[9] [N
न[10] युक्तो गात्र-संस्पर्शः पुरुषस्य ममाऽनघ ।
४४] भर्त्तुः शक्तिं पुरस्[11]-कृत्य रामाद् अन्यस्य वानर ॥७३॥[12] [६२
यद् अहं गात्र-संस्पर्शं रावणस्य बलाद्[13] गता ।[14]
४५] अन्-ईशी[15] किं करिष्यामि अ-नाथा[16] वि-वशा ह्य् अहम् ७४॥ [६३
किन्तु रामो दश-ग्रीवम् इह हत्वा स-राक्षसम् । [६४पू
सत्त्व-ज्ञो राक्षसानां[17] च रघु-वंश-विवर्द्धनः ।
४७] इतो युक्तो हि मां नेतुं लक्ष्मणेन समं[18] वि-भुः ॥७५॥[19] [N

---

१. फ–०वशं । अ–०पुरं । २. फ च–वा ॥ ३. आ–०र्थे ये । ४. अ–सर्वर्क्षहरिभिः सार्द्धं । ५. च रा प्र ब म ल, ल₂–त्यजेथाः ॥ ६. रा प्र ब म ल₁–तव चैव ममापि । अ–तव चेह ममापि । ७. फ–अनेवक्ष्य गु० । ८. ल₂–नास्ति ॥ ९. फ अ–मया ॥ १०. ब ल₁ ल₂–त्रुटितः पाठः । ११. म–तिरस्कृत्य । १२. रा प्र ब ल₁ ल₂–नास्ति ॥ १३. आ–वशं । १४. रा प्र ल₁ ल₂–नास्ति । १५. फ–अनेन । आ–आनीता । १६. अ–विनाथा । १७. फ–रक्षसामन्तः । १८. फ–सह प्रभुः । १९. रा प्र ब म ल₁ ल₂–नास्ति ॥

श्रुतश्[1] च दृष्टश्[1] च[1] मया[2] परा[2]-क्रमो
महाऽऽत्मनस् तस्य रणाऽवमर्दिनः[3] ।
न देव-गन्धर्व-भुजङ्ग-राक्षसा
N] भवन्ति रामेण समा हि सं-युगे ॥७६॥ [६५

सम्[4]-ईक्ष्य तं[4] सं-यति[5] चित्र-कार्मुकं
महा-बलं वासव-तुल्य-विक्रमम्[6] ।
स-लक्ष्मणं को वि-षहेत राघवं
N] हुताऽशनं दीप्तम् इवाऽनिलेरितम् ॥७७॥ [६६

स-लक्ष्मणं राघवम् आजि-वर्द्धनं[7]
ककुद्मिनं मत्तम् इव व्यव-स्थितम् ।
सहेत को वानर-मुख्य सं-युगे
N] युगाऽन्त-सूर्य-प्रतिमान् शरान्[9] क्षिपन्[9](?म्)७८॥[६७

[10]त्वं मे कपि-श्रेष्ठं[10] स-लक्ष्मणं पतिं
स-यूथपं क्षिप्रम् इहोप-पादय ।
चिराय रामं प्रति शोक-कर्षितां[11]
४८] कुरुष्व मां वानर हर्ष-संयुताम् ॥७९॥ [६८

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-वाक्यं[12]
नाम चतुस्त्रिंशः[13] सर्गः ॥३४॥

---

१. फ-श्रुताश्च दृष्टाश्च । २. प्र ब म ल१ ल२-महापराक्रमो । फ-०या पराक्रमा । ३. रा प्र ब म ल१ ल२-०मर्दने ॥ ४. आ-समीक्षितुं । ल२-समाहितं । ५. फ अ-संप्रति । ल२-स्वपंति । ६. फ-०कार्मुकम् । ७. फ-आयिसज्जिनं । ८. फ-नवं गजं । अ-कः कुञ्जरं । ९. आ-समाक्षिपन् । फ च रा प्र ब म ल१ ल२-क्षिपन् शरान् ॥ १०. फ-क्षिप्र त्वमेकं हि । ११. फ-०पूरिताम् ॥ १२. फ-हनुमत्सम्भाषणो । फ रा प्र ब म-सीताहनूमत्संवादो । ल१ ल२-हनुमत्सीतासम्वादो । १३. ल१ ल२-षड्त्रिंशः ॥

## [वं-३६]= [पंचत्रिंशः सर्गः] =[दा-३८

ततः स कपि-शार्दूलः शाल[1]-ताल-शिलाऽऽयुधः ।
१] सीताम् उवाच तच् छ्रुत्वा वाक्यं वाक्य-विशारदः[2] ॥१॥[१
अनु[3]-रूपं त्वया देवि भाषितं प्रिय[4]-दर्शने ।
२] सदृशं[5] स्त्री-स्वभावस्य साध्वीनां नियमस्य च ॥२॥ [२
स्त्रीत्वान् न त्वं समर्था वै[6] सागरं व्यति[7]-वर्तितुम् ।
३] माम् अधि-ष्ठाय विस्तीर्णं शत-योजनम्[8] आयतम् ॥३॥ [३
द्वितीयं कारणं यच् च ब्रवीषि प्रिय-दर्शने[9] ।
४] रामाद् अन्यस्य नाऽर्हामि सं-स्पर्शम् इति जानकि ॥४॥ [४
तवैतत्[10] सदृशं वाक्यं पत्न्यास् तस्य[11] महाऽऽत्मनः ।
५] का ह्य् अन्या त्वाम्[12] ऋते देवि ब्रूयाद्[12] वचनम् ईदृशम् ॥५॥ [५
श्रोष्यतीऽदं स काकुत्स्थः सर्वं[13] निरव-शेष-तः[13] ।[14]
६] चेष्टितं यत् त्वया देवि[15] भाषितं च ममाऽग्र-तः॥६॥ [६
कारणैर् बहुभिर् देवि राम-प्रिय-चिकीर्षया ।
७] स्नेहात् प्रस्कन्न[16]-मनसा मयैतत् समुदा-हृतम् ॥७॥ [७

---

१. प्र म ल$_1$ ल$_2$—साल० । अ—हनुमान्मारुतात्मजः । २. फ—धर्मार्थसहितं वचः । ३. अ—युक्त० । ४. फ—शुभ० । ५. अ—ईदृशी ॥ ६. फ च—हि । ७. च—व्यप० । ८. आ—सागरं शतयोजनम् ॥ ९. फ अ—कमलेक्षणे ॥ १०. रा ब—न चैतत्स० । म—एतत्ते स० । अ—एतत्ते देवि सदृशं पत्युस् । ११. आ—रामस्य । १२. च ल$_1$—त्वदृते ब्रूयाद्वदेद् । रा म—त्वदृते ब्रूयात्सीते । प्र—त्वामृते ब्रूयात्सीते ॥ १३. प्र—सर्वदा ते विचेष्टितम् । ल$_1$—सर्वं सन्तस्तवेप्सितम् । १४. अ—नास्ति । १५. फ—धन्यं ॥ १६. फ—प्रस्कन्द० । रा म—प्रसन्न० । प्र ब ल$_1$ ल$_2$ अ—प्रक्लिन्न० ॥

लंकायां दुष्प्र-वेशत्वात् दुस्-तरत्वान् महोदधेः ।
N] सामर्थ्याद् आत्मनश् चैतन्[2] मया संमुदा-हृतम् ॥८॥[3] [८
यदि नोत्सहसे [4]गन्तुं मया सार्द्धम् अ-निन्दिते ।
९] अभि-ज्ञानं प्र-[5]यच्छ त्वं जानीयाद् [6]राघवो हि यत् ॥९॥ [१०
उवाच [7]वचनं चेदं[8] वाष्प-गद्गदिताऽक्षरम् ।
१०] एवम् उक्ता हनुमता सीता सुर-सुतो[9]पमा ॥१०॥ [११
इदं श्रेष्ठम् अभि-ज्ञानं ब्रूयाम् तथ्यं मम प्रियम् ।[10]
३१] शैलस्य चित्र-कूटस्य पादे [11]पूर्वोत्तरे तदा ॥११॥ [१२
तापसाऽऽश्रम-वासिन्या(?:)माऽऽ[12]श्रयं मूल-फलाऽ[13]शने।
३२] [14]यत् सिद्ध-सम्मते देशे मन्दाकिन्याम् अ-दूरतः ॥१२॥ [१३
तेषूऽपवन-[15]खण्डेषु नाना-पुष्प-सुगन्धिषु ।
३३] वि-[16]हृत्य सलिल-क्लिन्ना त[16]वाऽङ्केऽहम् उपाऽऽविशम् ॥१३॥ १४
मनःशिला-मयं भाले तिलकं मे कृतं त्वया ।
३४] तदा दाशरथेस् तावद् [17]एवं चिह्नं ब्रवीमि ते[18] ॥१४॥ [N

---

१. आ-०यां । २. फ च रा प्र म ल१ ल२ अ-चैव मयैतत् सं० । ३. अतः परमधिकः पाठः—च रा प्र म ल१ अ-इच्छामि त्वां समानेतुमद्यैव रघुनन्दने । गुरुस्नेहेन भक्त्या च न त्वया समुदाहृतम् ॥ ४. फ-यातुं । ५. म ल१ ल२ अ-प्रतीच्छ । ६. फ-०वो यथा । म-०वो यत् । ल१ ल२-हि तम् । अ-०वोपि यत् । ७. फ अ-हनुमन्तं सा । रा प्र ब म ल१-वचनं मन्दं । ८. आ फ अ-०वुद्धथिता० । ९. आ-सुरतोपमा ॥ १०. फ-इदं चैवाप्यभिज्ञानं ब्रूयास्त्वं दयितं मम । ११. ल१-पूर्वतरे ॥ १२. रा प्र ब म ल१ ल२-प्राप्तं । अ-प्राप्य । १३. आ-०फलोदके । रा प्र ब म ल१ ल२ अ-०फलोदकं । १४. अ-तत् ॥ १५. आ-तस्योपवन-गूढेषु । १६. आ-विहिता सलिलक्लिन्ना शचीकेहम् ॥ १७. रा ब म-एकं । १८. म ल१ अ-ब्रवीषि मे ।

तुष्यन्तीऽवं[1] प्र-हृष्टेन तदाऽहं[2] लालिता त्वया[3] ।
N] पर्यायेणैवं[4] सुप्ता च तवाऽङ्के लक्ष्मणाऽग्र-ज ॥१५॥ [N
रोहिन्[5]-मांस[5]-विभक्तं मे वायसः[6] परि-खादति[7] ।
३५] तदाऽहं[8] लोष्टम् उद्यम्य वारयामि[9] स्म वायसम्[9] ॥१६॥ [१५
रोषयन्न्[10] एवं[10] काको मां[11] तत्रैव परि-पीडयन्[12] ।
३६] न[13] चाऽप्य् उपाऽऽरमन् मांसं भक्षयन्[13] बलि-भोजनः ॥१७॥ [१६
उत्-कर्षन्त्याश्[14] च वसनं क्रुद्धायास्[14] तस्य पक्षिणः ।
३७] कृष्यमाणे[15] च वसने त्वयोपेक्षिता[16] कृता मयि ॥१८॥ [१७
त्वयाऽव-हसिता चाऽहं क्षतात्[17] परम-लज्जिता[17] ।
३८] भक्ष्य-गृद्धेन[18] काकेन वि-कृता[19] त्वाम् उपाऽऽगता[20] ॥१९॥ [१८
आसीनस्य च ते[21] श्रान्ता[21] पुनर् उत्सङ्गम् आऽविशम् ।
३९] रुदती[22] च[22] प्र-हृष्टेन त्वयाऽहं[23] लालिता[23] पुनः ॥२०॥ [१९

---

१. आ म अ–तुष्यतीव । २. अ–त्वयाहं । आ–तदा संला०। ३. अ–पुनः। ४. आ–०नैव । फ अ–०येन प्रसुप्ता । ल१–खण्डितः पाठः ॥ ५. फ म अ–रोही मांसं वि० । ल१–खण्डितः पाठः । ६. च रा प्र ब ल२–०से । ७. अ–प्रति० । आ फ–परिखादितः । ८. फ अ–तमहं । प्र–तदहं । ९. प्र–वारयामास वायसम् । रा–वारयामि सविस्मयम् । फ अ म–वारयामि स्म सर्वशः ॥ १०. फ–रोदयन्नेव । रा–रोषवानिव । प्र ब म–रोषवानेव । अ–रोषयत्येव । ११. च रा प्र ब म ल१ अ–मे । १२. च रा ल१ प्र म अ–०डीयते । ब–पर्यडीयत । १३. फ–तच्चाप्यपहरन्मांसं प्रसह्य ॥ १४. रा प्र ब म ल१–०त्याश्च वसनं क्रुद्धायां । १५. ब प्र म ल१ ल२–भ्रममाणे । अ–आकृष्यमाणे । १६. रा प्र ब ल१, ल२–त्वया प्रहसितं । १७. फ–क्रुद्धा विपरिधावती । ब प्र ल१–०मतर्जिता । १८. आ–क्षतात् गृ०। फ–भक्ष गृ०। च प्र–भक्ष्यसृद्धेन । रा ब–भक्ष्यदृष्टेन । १९. आ–तुदन्ती । च रा प्र ब म ल१ ल२ अ–रुदती । २०. फ–०गमम् ॥ २१. आ–विस्रस्ता । २२. आ–०तीव । २३. अ–त्वया संला० ॥

वाष्प-पूर्ण-मुखी दीना चक्षुषी परि-मा[1]र्जती ।[२०पू
N] परि-श्रान्ता च सुप्ता च राघवाऽङ्के सुखं ह्य् अहम् ॥२१॥
पर्यायेण च सुप्तस् त्वं ममाऽङ्के भरताऽग्र-ज ।[२१
N] ततः सुप्त-विशुद्धां मां तवोत्सङ्गात् समुत्-थिताम् ॥२२॥
N] वायसः पुनर् आ-गम्य वि-ददार स्तनाऽन्तरे ।[२२
४१पू] लक्षितो[2]ऽहं त्वया तत्र वायसेन प्र-कोपिता ॥२३॥ [२०उ
आशी-विष इव क्रुद्धः [3]श्वसन् वाक्यम् अभाष[3]थाः ।[२५उ
नखाऽग्रैः केन ते भीरु स्तनयोर् [4]अन्तरं क्षतम् [5]।
N] कः क्रीडति स-रोषेण पंच-वक्त्रेण भोगिना ॥२४॥ [२६
निर्-ईक्षमाणश् च [6]ततो वायसं तम् अपश्यथा[6]ः ।
N] नखैः स-[7]रुधिरैस् तीक्ष्णैर् माम् एवाऽभि-[8]मुखं स्थितम् ॥२५॥ [२७
पुत्रः किल स शक्रस्य वायसः पततां वरः ।
N] धराऽन्तर-गतः शीघ्रः पवनस्य गतौ समः ॥२६॥ [२८
ततस् तस्मिन् महा-बाहो क्रोध-संरक्त-लोचनः ।
N] वायसेऽकुरुथाः क्रूरां मतिं मतिमतां वर ॥२७॥ [२९
४१उ] तस्योद्-हृत्य त्वयेषीका क्षिप्ता च[9] वर-पाणिना ।
४२पू] [10]ब्रह्मणोऽस्त्रेण सं-धाय स(?सा) प्र-जज्वाल वै तदा ॥२८॥ [३०
N] चिक्षे[11]पाऽथ प्र-दीप्तां [11]ताम् इषीकां वायसं प्रति ।[३१पू
४२उ] अनु-षक्तम् [12]तया काको जगाम वि-विधां गतिम् ।
खे [13]पतन् स [13]इमांल् लो[13]कान् भयाद् अनु-चचार ह ॥२९॥ [३२

---

१. रा प्र ब ल$_2$ अ—०मार्जिता । ल$_1$—०मार्जता ॥ २. प्र—लालिताहं । अ—उपेक्षिताह ॥ ३. आ—श्वसन्वाक्यमभाषित । च—०वाक्यमभाषताः । ४. आ—अन्तरे । ५. ल$_1$—नास्ति ॥ ६. फ—तदा वायसमवेक्ष्य च । ७. अ—सरुधिरस्तीक्ष्णैर् । ८. आ अ—०मुखे ॥ ९. आ—वरदपा० । १०. ब म—ब्रह्मणास्त्रे० ॥ ११. आ—स तां प्रदीप्तां चिक्षेप । १२. फ—तदा । प्र म—त्वया । १३. आ—खेऽपतत्स इमं लोकम् ॥

४३] यः स[1] वर्षति पर्जन्ये डीयते पृषतां[2]ऽन्तरे ।
४४पू] तस्यैषीकां[3] त्वया क्षिप्ता[3] छायेवा[4]ऽन्व्-अपतद् द्रुतम्[4] ॥३०॥ [N
N] स[5] पित्रा[5] च परि-त्यक्तः सुरैः सर्वैश् च वायसः ।
४४उ] परि-क्रम्य स लोकांस् त्रींस् त्वाम् एव शरणं गतः ॥३१॥ [३३
N] तं त्वं नि-पतितं भूमौ शरण्यः शरणाऽऽगतम् । [३५पू
परि-घूर्णं[6] वि-पन्नं[7] च[7] तं त्वम् आ-गतम् उक्तवान् ॥३२॥
४५] अ-मोघोऽयम् इषुर् मुक्तः किम् अङ्गं शातयामि ते । [३६
४६पू] तेनैकं नयनं त्यक्तं तद् इषीकाऽभ्य्-अशातयत्[8] ॥३३॥ [३७पू
स ते तथा नमस्-कृत्य राज्ञे दशरथाय च ।
N] त्वया वीर वि-सृष्टः सन् प्रति-पेदे स्वम् आलयम् ॥३४॥ [३८
४६उ] मत्-कृते काक-मात्रेऽपि ब्राह्मम् अस्त्रम् उद्-ईरितम् ।
कस्माद् यो मां हरेत् तस्य त्वं क्षमेथा मही-पते ॥३५॥ [३९
४७] एवम् अस्त्र-विदां[9] श्रेष्ठः[9] सत्त्व-वान् बल-वान् अपि ।
४८पू] किम्-अर्थम् अस्त्रं दिव्यं[10] च[10] न योजयसि राघव ॥३६॥ [४२
४९उ] न देवा न च गन्धर्वा नाऽसुरा न मरुद्-गणाः ।
राघवस्य[11] रणे वेगं शक्ताः [12]सर्वे सम्-आसितुम् ॥३७॥ [४४
५०] तस्य वीर्यवतः कश्चिद् यद्य् अस्ति मयि सं-भ्रमः[13] ।
किं त्वं न सायकैस् तीक्ष्णैः क्षयं नयसि राक्षसान् ॥३८॥ [४५
५१] भ्रातुर् आ-देशम् आ-दाय लक्ष्मणो वा परं-तपः ।

---

१. प्र ब ल$_1$ ल$_2$–स्म । २. च रा प्र ब म ल$_1$ ल$_2$–वृहदन्तरे । अ–वृषभान्तरे । ३. फ–०षीकन्त्वया क्षिप्तं । ४. म–छायेवानुगता ज्वलन् । अ–वायुवेगाः पतत्रिणः । ५. प्र ल$_2$–तदैव । म–शक्रेण ॥ ६. फ–परिडीनो । प्र ब म ल$_1$ ल$_2$ अ–परिद्यूनं । ७. फ–विपन्नश्च । रा प्र ब म ल$_1$ ल$_2$ अ–विषण्णश्च ॥ ८. आ–०काभ्यसांतयन् ॥ ९. ल$_1$–०मिदं श्रेष्ठं । १०. फ च रा प्र ब म ल$_1$ ल$_2$ अ–रक्षस्सु ॥ ११. फ च रा प्र ब म ल$_1$–तव राम । १२. फ–प्रतिसमा० ॥ १३. अ–संग्रहः ॥

कस्य हेतोर् न मां वीरः परि-त्रायेत[1] सु-व्रतः ॥३९॥ [४६
५२] यदि तौ पुरुष-व्याघ्रौ वाय्व्-अग्नि-सम-तेजसौ ।
सुराणाम् अपि [2]दुर्-द्धर्षौ किम्-अर्थं माम् उपेक्षते[2]ः ॥४०॥ [४७
५३] ममैव दुष्-कृतं किञ्[3]चिन् महद् अस्ति न संशयः ।
समर्थाव् अपि [4]तौ यस्माद् उपेक्षेते परं-तपौ ॥४१॥ [४८
५४] स वाच्यो राघवः श्रीमान् पूर्ण-चन्द्र-निभाऽऽननः ।
प्रणाम[5]-पूर्वं सौहार्दात् समा-गम्य सुहृत्-प्रियः ॥४२॥ [N
५५] कुरुष्व त्वं महोत्साहं [6]कृपां मयि नरर्षभे[6] । [४०पू
४९पू] आनृ-शंस्यं परो धर्म्मस् त्वत्-त एव [7]श्रुतो मया॥[8]४३॥ [४१
[9]जानामि त्वां महोत्साहं महा-सत्त्वं महा-बलम् ।[10][४२पू
५६] महेष्वासं महा-प्राज्ञं महा-वेगम् अरिं-दमम् ॥[11]४४॥ [N
[12]अपार-पारम् अ-क्षोभ्यं गाम्भीर्ये सागरोपमम् । [४३
५७] कौशल्या लोक[13]-गोप्तारं सुषुवे [14]त्वां [15]मनस्विनी ॥४५॥
५८पू] तं मद्-अर्थे सुखं [16]पृच्छेः शिरसा चाऽभि-[17]वादयेः ॥४६॥ [५६
५९उ] सं-चयं सर्व-रत्नानां प्रियाश् च [18]परमाऽङ्गनाः ।
[19]ऐश्वर्यं हि [20]विशालायाः पृथि[20]व्या योऽवाऽमन्यत॥४७॥[५७

---

१. च प्र ब म ल१ ल२—०त्रायति राघवः। रा—०त्रायेत राघवः। अ—०त्रायति सर्वतः॥ २. च—दुर्धर्षौ किमर्थं मामुपेक्षितः। ३. फ—मन्ये। ४. रा प्र ब म ल१—यौ द्वौ मामुपेक्षेथां (तां)। फ—तौ यन्मां नावेक्षेत सुदुःखितौ॥ ५. फ—प्रणम्य॥ ६. फ ल१—महासत्वं महाबलम्। अ—मयि नरेश्वर। ७ फ अ—श्रुतं। ८. च रा प्र ब ल१ ल२—नास्ति॥ ९. ल१—कुरुष्व। १०. रा प्र ब ल१—नास्ति। ११. फ—महाबहुं महाप्राज्ञं वेगवन्तमरिन्दमम्॥ १२.—अपराजितम्। १३. फ—शोकहर्त्तारं। ब—शोकगुप्तारं। १४. म ल१ अ—०वेयं। १५. फ ब म ल१ अ—मनस्विनम्॥ १६. आ—त्वं मदर्थे समापृच्छे। फ अ—तं ममार्थे। १७. आ प्र म—०दयन्। ब ल१—०दनम्॥ १८. आ—परमं गताः। फ अ—परमांगणाः। च रा ब—परमं गताः। १९. फ रा अ—०र्यें। २०. फ—च विशालयां पृथिव्यां॥

६०] पितरं मातरं चोभौ सं-मान्याऽभि-प्रणम्य[1] च ।
अनुप्र-व्रजितो रामं[2] सु-मित्रा तेन सु-प्रजा ॥४८॥ [५८
६१] अनु-क्रोशेन धर्माऽऽत्मा त्यक्त्वा सुखम् अनु-उत्तमम् ।
अन्व्-अगच्छत्[3] काकुत्स्थं भ्रातरं पालयन् वने । [५९
६२] सिंह-स्कन्धो महा-बाहुर् मनस्वी प्रिय-दर्शनः ॥४९॥ [६०पू
वृद्धोप-सेवी लक्ष्मी-वान् शक्तश्[4] चाऽबहु-जल्पकः । [६१पू
६३] राज-पुत्रः प्रियो राज्ञः सदृशः श्वशुरस्य मे[5] ॥५०॥
मतः प्रिय-तरो नित्यं मम[6] रामस्य लक्ष्मणः । [६२
६४] पितृ-वद् वर्तते रामे मातृ-वद् वर्तते मयि ॥५१॥ [६०उ
ह्रियमाणां तदा वीरो न मां वेत्ति स लक्ष्मणः । [६१उ
६५] योज्यते[7] धुरि यस्यां तु ताम्[8] उद्-वहति धुर्य-वत् ।
६६पू] रामे-प्रिये[9] हि सन्न् एव वृत्तम् आर्यम् अनु-स्मरन् ॥५२॥ [६३
साऽसुराः[10] सह-गन्धर्वा भुजङ्ग-नर-देवताः ।
N] नि-हन्यात् समरे क्रुद्धः किं पुना रावणं रणे ॥५३॥ [N
६६उ] मृदुर् दान्तः शुचिर् दक्षः प्रियो रामस्य लक्ष्मणः ।
स मद्-वाक्येन कुशलं वक्तव्यो लक्ष्मणस् त्वया''[11] ॥५४ [६४
६७] अ-प्रमत्तेन काकुत्स्थे भवितव्यं त्वयेति च ॥

---

१. फ—प्रसाद्य । २. प्र ब म ल$_1$—नित्यं ॥ ३. फ च—अनुगच्छति ॥ ४. म—शान्तश् । ५. रा प्र ब म ल$_1$—सदृग्देवाधिपस्य च । आ—स्वसुरस्य ॥ ६. फ—मत्तो । प्र—संगो । ल$_1$—संगी । च आ—नित्यमङ्गं । म—नित्यमङ्गो ॥ ७. प्र ल$_1$—युज्यते । ८. फ—स तामुद्वहते ध्रुवम् ॥ ९. फ च रा—रामस्नेहावसत्येव । ब ल$_1$—०स्नेहावसन्ते च । प्र—०स्नेहावसन्तेव । च म—०स्नेहाद्वसन्नेव ॥ १०. आ—ससुरासुरगन्धर्वाः ॥ ११. फ—स ते मद्वचनाद्वाक्यः कुशलं बलवत्तरः । रा प्र ब म—मद्वाक्यात्कुशलं वाच्यस्त्वया वानरपुङ्गव । ल$_1$—मद्वाचा कुशलं वाच्यस्त्वया वानरपुङ्गव ॥

उत्थायोत्थाय वक्तव्यो वचनं लक्षणो मम ॥५५॥ [N
६८] कुशलं लक्ष्मणं दृष्ट्वा सु-ग्रीवं च महा-बलम् । [N
इदं ब्रूयास् तु मे नाथं शूरं रामं पुनः पुनः ॥५६॥ [६६उ
६९] जीवितं धारयिष्यामि यावन् मासो भविष्यति ।
ऊर्ध्वं मासान् न जीवेयं सत्यम् एतद् ब्रवीमि ते ॥५७॥ [६७
७०] रावणेनोप-रुद्धां मां नि-कृत्य प्राकृताम् इव ।
त्रातुम् अर्हसि मज्जन्तीं वराह इव मेदिनीम् ॥५८॥ [६८
७१] सीतायास् तद् वचः श्रुत्वा हनुमान् इदम् अब्रवीत् ।
सर्वं करिष्यते रामो यावद् इच्छसि मैथिलि ॥५९॥ [N
७२] यत् तु रामोऽभि-जानीयाद् अभि-ज्ञानम् अ-निन्दिते ।
प्रीति-सञ्जननं तस्य तत् प्र-दातुम् इहार्हसि ॥६०॥ [N
७३] सा निर्-ईक्ष्य ततः सर्वं वेण्युद्-ग्रथितम् उत्तमम् । [N
ततो वस्त्र-गतं मुक्त्वा दिव्यं चूडा-मणिं शुभम् ।
७४] प्र-देयो राघवायेति सीता हनुमते ददौ ॥६१॥ [६९
प्रति-गृह्य ततो वीरो मणिं वेणी-शयं शुभम् ।
N] अंगुल्यां योजयामास न ह्य् अस्य प्राऽभवद् भुजे ॥६२॥ [७०

---

१. फ अ—वचनात् ॥ २. फ—लक्ष्मणे ॥ ३. फ अ—मासं दशरथात्मज । ब—०सो गमिष्यति । आ—यावन्मासं भ० । ४. ल१—मासं । ५. आ—सत्यं प्रतिश्रृणोति मे ॥ ६. फ—नश्यन्तीं पृथिवीमिव राघवः । अ—पाताले पतन्तीमिव मे० ॥ ७. प्र म ल१ अ—तु ॥ ८. फ—०तुं ममार्हसि । ९. च रा प्र ब म ल१ ल२ अ—वेणीग्र० । १०. फ च रा प्र ब म ल१ ल२ अ—वेणीं मुक्त्वा ददौ तस्मै । ११. फ—चूडामणिरत्नं हनूमते ॥ १२. फ—प्रदेयं । १३. फ च रा प्र ब—सुरसुतोपमा । १४. म—नास्ति ॥

७८पू] मणि-रत्नं कपि-वरः सम्प्र[1]-गृह्याऽभि-वाद्य च । [७१पू

N] आचार्यम् इव शिष्यो हि वि-नीतवद्[2] उप-स्थितः ॥६३॥ [N

७६पू] आ-पृच्छामीऽहं[3] ते देवि नोत्कण्ठां कर्तुम् अर्हसि ।[4] [N

७८उ] सीतां प्र-दक्षिणं[5] कृत्वा पार्श्व-तः प्राऽञ्जलिः[6] स्थितः ६४॥ [७१उ

हर्षेण महताऽऽविष्टः सीता-दर्शन-जेन सः ।

७६] हृदयेन गतो रामं शरीरेण[7] त्व् अधि-ष्ठितः ॥६५॥ [७२

मणि-वरम् उप-गृह्य तं महाऽर्हं[8]

जनक-नृपाऽऽत्म-जया धृतं प्र-भावात्[9] ।

द्रुमम् इव[10] पवनाऽवधूत-मूर्तिर्

७७] हृषित-तनुर् हनुमांस् तदा बभूव[11] ॥६६॥ [७३

इत्यार्षे रामायणे सुन्दर-काण्डे मणि-प्रदानो[12]

नाम पंचत्रिंशः सर्गः ॥३५॥

---

१. फ—स संगृ० । २. फ—विनीतमिदमब्रवीत् ॥ ३. फ—०मि हि । ४. रा प्र ब म ल$_1$—नास्ति । ५. आ—प्रदक्षिणीकृत्वा । ६. आ—प्राञ्जलि० ॥ ७. आ—०रे तु धिष्ठितः ॥ ८. रा प्र ब म ल$_1$—वरार्हं । ९. आ—प्रयतात् । १०. आ—गिरिवरप० । ११. फ—क्षुधिततनुर्हनुमान् बभूव । रा प्र ब म ल$_1$—हृषिततनुर्हनुमान् बभूव सद्यः । आ—हृषितवपुर्हनुमांस्तदा बभूव ॥ १२. फ—०प्रदानिको । च रा प्र म ल$_1$ ल$_2$—०नं ॥

मणिं दत्त्वा ततः सीता वानरं वाक्यम् अब्रवीत् ।
अभि-ज्ञातम् अभि-ज्ञानम् एतद् रामस्य त[1]त्त्व-तः॥१॥ [१
मणिं तु रामो दृष्ट्वैव त्रयाणां सं-स्मरिष्यति ।
वीरो जनन्या मम च राज्ञो दश-रथस्य च ॥२॥ [२
स[3] भूयश् च महोत्साहो देशि[2]तो हरि-स[4]त्तम ।
अस्मिन् कार्य-समारम्भे चिन्तयेद् उत्तरोत्तरम् ॥३॥ [३
त्वम् अस्मिन् कार्य-सं[5]योगे प्रमाणं हरि-यूथप ।
त[6]त्-तद् वि-चिन्तयेर् यन् मे[8] दुःख-क्षय-करं भवेत्॥[7]४॥ [४
स तथेति प्र[9]ति-ज्ञाय मारुतिर् भीम-विक्रमः ।
शिरसा वन्द्य वै[10]देहीं गमनायोप-चक्रमे ॥५॥ [५
ज्ञात्वा सम्प्र-स्थि[11]तं वीरं वानरं मारुताऽऽत्म-जम् ।
वाष्प-पीडितया वाचा मैथिली वाक्यम् अब्रवीत् ॥६॥ [६
कौशल्यं ह[12]नुमन् ब्रूयाः स[13]हितौ राम-लक्ष्मणौ । [७
सु-ग्रीवं च स[14]हाऽमात्यं वृद्धान् स[15]र्वांश् चै वानरान् ॥७॥ [८पू

---

१. आ अ–अनु०। २.अ –निश्चयं॥ ३. फ–सम्भूय स्वयमुत्साहान्नोदितो। च रा प्र म ल$_1$ ल$_2$–मम यश्च म०। ब–स महांश्च म०। अ–०हो नोदितो ह०। ४. आ–०सत्तमः। अ–वानरोत्तम॥ ५. फ अ–०नियोगे। ६. फ–तत्तु चिन्तय यन्मेत्र। च ब म ल$_2$ अ–तत्तच्चिन्तय यद्यन्मे। रा ल$_2$–ततश्चिन्तय यद्यन्मे। ७. प्र–तत्तच्चिन्तय यद्धर्मं न तु दुःखतरम्भवेत्॥ ८. रा प्र ब म ल$_1$ ल$_2$–तत्। ९. आ–परि०। १०. रा–मैथिलीं॥ ११. फ अ–देवी॥ १२. फ च प्र म ल$_1$–०मद्। १३. प्र ब म ल$_1$ ल$_2$–सह तौ। १४. रा प्र ब म ल$_1$ ल$_2$–महात्मानं। १५. फ–सर्वान् स॥

जीवन्तीं मां यथा रामः सं-भावयति वीर्यवान्[1] ।
तथा[2] स[2] हनुमन् वाच्यो वाचा धर्मम् अवाऽऽप्नुहि ॥८॥ [१०
नित्यम् उत्साह-युक्तस्य[3] वाचं[4] श्रुत्वा[5] मयेरिताम्[6] ।
वर्द्धिष्यते[6] दाशरथेः[6] पौरुषं मद्-अवाऽऽप्तये ॥९॥ [११
स हि मे त्वत्-समायुक्तो[8] वाचं श्रुत्वा तु राघवः ।
पराक्रम-विधिं वीरो विधि-वत् संवि-धास्यति ॥१०॥[9] [१२
सीतायास् तद् वचः श्रुत्वा हनुमान् मारुताऽऽत्म-जः ।[10]
शिरस्य् अञ्जलिम् आ-धाय वाक्यम् उत्तरम् अब्रवीत् ११ [१३
क्षिप्रम् एष्यति काकुत्स्थो हर्य्-ऋक्ष-प्रवरैर्[11] वृतः ।
यस् ते युधि वि-जित्याऽरिं[12] शोकं च[13] व्यप-नेष्यति[13] ॥१२॥ [१४
न हि[14] पश्यामि मर्त्त्येषु[15] नाऽमरेष्व्[16] असुरेष्व् अपि ।
यस्[17] तस्योद्-वमतो[17] बाणान् स्थातुम् उत्सहतेऽग्र-तः ॥१३॥ [१५
अप्य्[18] अर्कम् अपि पर्जन्यम् अपि वैवस्वतं यमम् ।
स च[19] सोढुं[19] रणे शक्तस् तव हेतोर् विशेष-तः[20] ॥१४॥ [१६
स[21] हि[21] सागर-पर्यन्तां महीं शासितुम् अर्हति ।
त्वन्-निमित्तं हि रामस्य जयो जनक-नन्दिनि ॥१५॥ [१७

---

१. फ अ—कीर्तिमान् । २. आ—स त्वया । फ—त्वया स । अ—तत्त्वया । ३. प्र ब म ल$_1$ ल$_2$—०युक्तः स । ४. च प्र ब म ल$_1$ ल$_2$—वाक्यं । अ—श्रुत्वैव राघवः । ६. ल$_1$—विविच्यते । प्र ब म ल$_1$—दाशरथिः । ७. अ—नास्ति ॥ ८. च रा प्र ब म ल$_1$ ल$_2$—तत्समायुक्तं वचः । ९. फ अ—नास्ति ॥ १०. फ—सीतामाश्वासयामास पुनश्चैनामथाब्रवीत् ॥ ११. फ—०प्रवलैर् । १२. आ—०त्वारिं । १३. फ—व्यपनुदिष्यति ॥ १४. ब म—तं । १५. ल$_1$ ल$_2$—सत्त्वेषु । १६. फ रा अ—वा सुरेष्वसु० । १७. फ—कस्तस्य सृजतो । रा प्र ब म ल$_1$ ल$_2$—यस्तस्योद्वहतो ॥ १८. च—यथार्कम् । आ—यः कर्तुम् । प्र ब म ल$_1$ ल$_2$—अथार्कम् । १९. च रा प्र ब म ल$_1$ ल$_2$—विसोढुं । अ—हि । २०. फ—विलासिनि ॥ २१. आ—न स ॥

तस्य तद् वचनं सम्यक्[1] सा श्रुत्वातु सु-भाषितम्[1] ।
जानकी बहु-मान्यैवं[2] वानरं[3] वाक्यम् अब्रवीत् ॥१६॥ [१८
ततम्[4] तं[4] प्र-स्थितं सीता वीऽऽक्षमाणा[5] पुनः[6] पुनः[6] ।
भर्त्तुः[7] स्नेहा[8]ऽन्वितं भर्तुः[8] सौहृदाद् अन्व्-अमानयत्॥[9] १७॥[१९
यदि वा मन्यसे तावद्[10] वसैकाऽहम्[10] अरिं-दम ।
अस्मिन्[11] सुसं[11]-वृते देशे वि-श्रान्तः श्वो गमिष्यसि॥१८॥ [२०
मम चैवाऽल्प-भाग्यायाः सान्निध्यात् तव धीमतः[12] ।
शोकस्याऽस्य वि-पारस्य मुहूर्त्तं स्याद् अपि क्षयः ॥१९॥[२१
गते हि हरि-शार्दूल पुनर् आ-वृत्तये त्वयि ।
प्राणानाम् इह[13] सन्देहो मम[14] स्यान् नास्ति[14] सं-शयः॥२०॥[15] [२२
तव[16] वाऽदर्शनं चाऽपि[16] भूयो मां परि-तापयेत् ।
दुःखे[17] दुःख-परा[18]भूतां दुर्-मनस्कां ह्य् अ-भागिनीम्[18]॥२१॥[19][२३
अयं च[20] वीर[20] सन्देहस् तिष्ठतीऽव ममाऽग्र-तः ।
सु-महत्सु[21] सहायेषु[21] हर्य्-ऋक्षेषु हरीऽऽश्वर[22] ॥२२॥ [२४

---

१. फ—श्रुत्वा सम्यक् शान्त्वभाषितम् । अ—श्रुत्वा सम्यक् सर्वभाषितम् ॥ २. फ अ ल१, ल२—०मन्यैव । ३. फ अ—मैथिली ॥ ४. प्र ल१—तत्रस्थं । अ—ततस्त । ५. फ—वीक्ष्यमाना । च रा प्र ब ल१—वक्ष्यमाणं । ६. अ—समन्ततः । ७. फ—भर्तृस्ने० । ८. ब—वाक्यं सौहार्दादिदमब्रवीत् । ९. अ—भर्तृस्नेहादिदं वाक्यं वक्तुं सौहार्दात्सम्प्रचक्रमे । आ—भर्त्तुः स्नेहादिदं वाक्यं सौहार्दादथ मानयत् । म—भर्त्तुः स्नेहाद्धितं वाक्यं सौहार्दादिदमब्रवीत् ॥ १०. फ—तात वसेः कामम् । ११. आ—कस्मिंश्चित्संवृते । १२. फ—वीर्यवन् ॥ १३. अ—अपि । १४. अ—ममास्ति च न । म—मम नास्त्यत्र ॥ १५. रा प्र ब ल१ ल२—नास्ति ॥ १६. अ—तवादर्शनजं वापि । फ—वादर्शनं वापि । म—चादर्शनं वीर । १७. फ—दुःखात् । १८. फ—०भूतामनाथां मन्दभा० । १९. रा प्र ब ल१ ल२—नास्ति । २०. रा प्र ब म—तु वी० । ल१ ०वीर्ये च । ल२—वीरेह । २१. आ रा प्र म ल१ ल२- सुमहांस्तत्सहायेषु । २२. आ—०श्वरः । फ—०श्वरा ॥

कथं नु[1] खलु दुष्-पारं तरिष्यन्ति महोदधिम् ।
तानि हर्य्-ऋक्ष-सैन्यानि तौ वा नर-वराऽऽत्म-जौ॥२३॥[२५
त्रयाणाम् एव[2] भूतानां सागरस्या[3]ऽपि लङ्घने ।
शक्तिः स्याद् वैनतेयस्य तव वा मा[4]रुतस्य वा[4] ॥[5]२४॥ [२६
तद्[6] अस्मिन् कार्य-सं[6]योगे वीर वै दुरति-क्रमे ।
किं पश्यसि समा-धानं त्वं हि कार्य-विदां व[7]र ॥२५॥[8][२७
कामम् अस्य त्वम् एवैकः कार्यस्य परि-साधने ।
पर्य्-आप्तः पर-वीर-घ्नः[9] जगद्-अर्थ-फलोदयः ॥२६॥ [२८
बलैः समस्तैर् यदि मां वि-जित्य तु[10] दशाऽऽननम् ।
वि-जयी[11] स्वं[11]-पुरं रामो नयेत् तत् स्याद् यशस्-करम्॥२७॥[२९
यथाऽहं तस्य वीरस्य वञ्चयित्वा हृता बलात् ।
रक्षसा तद्-भयाद् एव तथा नाऽर्हति राघवः ॥२८॥ [N
बलैस् तु सं-कुलां कृत्वा लंकां पर-बलाऽर्दनः ।
मां नयेद् यदि काकुत्स्थस्[12] तस्य तत्[12] सदृशं भवेत्॥२९॥ [३०
तद् यथा तस्य वि-क्रान्तम् अनु-रूपं महाऽऽत्मनः ।
भवेद् आहव-शूरस्य तथा त्वम् उप-पादय ॥३०॥ [३१
तद्[13]-अर्थोप[13]-हितं वाक्यं प्र[14]-श्रितं हेतु-सम्[15]मतम् ।

---

१. फ अ–हि ॥ २. रा प्र ब म ल१ ल२–अपि । ३. फ–०स्यास्य । ४. फ च–मारुतात्मज । ५. रा प्र ल१ ल२–नास्ति । ब–त्रुटितः पाठः । ६. आ–तस्मिन् कार्यविनियोगे । ७. फ–वरः । ८. रा प्र ब ल१ ल२–नास्ति ॥ ९. फ च रा–०घ्न यशस्यस्तु फ०। रा ब ल१ल२ अ–०घ्न यशस्यस्ते फ०। प्र म–०घ्नः शस्यते यः फ० ॥ १०. फ–विजित्य च पुरे । रा प्र ब म ल१ ल२–विनिर्जित्य । ११. आ–स्वे पुरे । ब–सुपुरं ॥ म ल१ल२ अ–स्वं पुरं । १२. आ–काकुत्स्थस्तत्र । प्र म ल१ ल२–काकुत्स्थस्तत्तस्य ॥ १३. अ–तच्छ्रुत्वापसृतं । १४. आ फ रा ब–प्रसृतं । प्र–प्रास्रितं । अ–सम्मतं । १५. फ–०संहितम् । रा प्र ब म ल१ ल२–०संमितम् । अ–संयुतम् ।

नि-शम्य हनुमान् देव्या वाक्यम् उत्तमम् अब्रवीत् ॥३१॥ [३२
क्षिप्रम् एष्यति वैदेहि हर्य्-ऋक्ष-प्लवगैर् वृतः ।[2]
सु-ग्रीवः सत्त्व-सम्पन्नस् [3]तवाऽर्थे कृत-निश्चयः ॥३२॥ [३३
स वानर-सहस्राणां कोटिभिर् अभिसं-वृतः ।
क्षिप्रम् एष्यति वैदेहि राक्षसानां नि-[4]षूदनः ॥३३॥ [३४
तस्य विक्रम-[5]सम्पन्नाः [5]सत्त्व-वन्तो महा-बलाः ।
मनः-सङ्कल्प-[6]सम्पाता नि-देशे हरयः स्थिताः ॥३४॥ [३५
येषां नोपरि नाऽधस्तान् न तिर्यक् सज्जते गतिः ।
न च कर्मसु सीदन्ति महत्स्व् अमित-ते[7]जसः ॥३५॥ [३६
[8]अ-संवृतैर् महोत्साहैः स-सागर-धरा[9]धरा ।
कृत-प्रद[10]क्षिणा भूमि[11]र् वायु-वेगाऽनु-[11]सारिभिः ॥३६॥ [३७
मद्-विशिष्टाश् च तुल्याश् च सन्ति तत्र वनौकसः ।
मत्-तः प्रत्य्-अवरः कश्चिन् नास्ति सुग्रीव-सन्निधौ ३७॥ [३८
अहं तावद् इह प्राऽऽप्तः किं पुनस् ते महा-बलाः ।
न हि प्र-कृष्टाः [12]प्रेष्यन्ते प्रेष्यन्ते हीऽतरे [12]जनाः ॥३८॥ [३९
तद् अलं परि-तापेन देवि मन्युर् अपैतु ते ।
एकोत्-पातेन ते लंकाम् एष्यन्ति हरि-पुङ्गवाः॥३९॥ [४०
मम पृष्ठ-गतौ तौ तु[13] चन्द्र-सूर्याव् इवोदितौ ।

---

१. फ—शेषं । अ—सर्वं ॥ २. रा प्र ब म ल१ ल२—नास्ति । ३. प्र ब ल१ ल२—त्वदर्थे ॥ ४. फ—०कः । ५. अ—०सम्पनौ वीर्यवन्तौ । ६. प्र म ल१ ल२ अ—०सम्पन्ना । ७. रा प्र ब म ल२ ल२—०विक्रमाः ॥ ८. फ—असंहतैर् । रा प्र ब म ल१ ल२—असत्कृतैर् । अ—ससंवृतम० । ९. फ—०परावैरः । च—०रधराम्बरा । रा प्र ब म ल१ ल२ अ—०रवनाम्बरा । १०. फ रा प्र ब म ल१ ल२—प्रदक्षिणीकृता । ११. फ—भूमिः सर्वमार्गानु० । अ—भूमिर्वायुमार्गानु० । १२. फ—हीनतेजसः ॥ १३. फ—च ।

त्वत्-सकाशं महा-सत्त्वौ राज-पुत्राव् इहैष्यतः[1] ॥४०॥ [४१
तौ च वीरौ नर-वरौ सहितौ राम-लक्ष्मणौ ।
आ-ग[2]म्य नगरीं लंकां सायकैर् वि-धमिष्यतः ॥४१॥[3] [४२
स-गणं रावणं हत्वा राघवो रघु-नन्दनः ।
त्वाम् आ-दाय वराऽऽरोहे स्वां पु[4]रीं प्रति-यास्यति॥४२॥ [४३
तद् आ-श्वसिहि भद्रं ते भव त्वं काल-कांक्षिणी ।
अ[5]-चिराद् द्रक्ष्यसे रामं ज्वलन्तम् इव भास्करम्॥४३॥ [४४
नि-हते राक्षसेन्द्रे तु स-पु[6]त्राऽमात्य-बान्धवे ।
त्वं सम्-एष्यसि रामेण शशाऽङ्केनेव रोहिणी ॥४४॥[7] [४५
क्षिप्रम् एष्यसि वैदेहि पारं शोकस्य मैथिलि ।[8]
क्षि[9]प्रं द्रक्ष्यसि रामेण नि-हतं रावणं रणे ॥४५॥ [४६
एवम् आ-श्वास्य वैदेहीं हनुमान् मारुताऽऽत्म-जः ।
गमनाय मतिं कृत्वा वैदेही[10]म् इदम् अब्रवीत् ॥४६॥ [४७
तम् अरि-[11]घ्नं म[12]हाऽऽत्मानं क्षिप्रं द्रक्ष्यसि राघवम् ।
लक्ष्मणं स[13]ह-सुग्रीवं लंका-द्वारम् उप-स्थितम् ॥[14]४७॥ [४८
नख-दं[15]ष्ट्राऽऽयुधान् भीमान् सिंह-शार्दूल-विक्रमान् ।
वानरे[16]न्द्रान् महेन्द्राऽऽभान् क्षिप्रं द्रक्ष्यसि सं-गतान् ४८ [13] [४९
शैलाऽम्बुद-निकाशानां लंका-मलय-सानुषु ।

---

१. अ–नरसिंहाविहायतः। आ–इहेष्यतः। २. ब म ल$_1$–०स्य । ३. अ–नास्ति ॥ ४. अ–पुरं। ५. अ–न चिराद् द्रक्ष्यसे रामं तपन्तम् । फ–द्रक्ष्यसि पतिं तपन्तम्॥ ६. आ–सपुत्रामित्रबान्धवैः। ७. अ–नास्ति। ८. फ–क्षिप्रं त्वं देवि शोकस्य पारं यास्यसि मैथिलि । अ–नास्ति । ९. अ–त्वं समेष्यसि ॥ १०. फ–वैदेही पुनरब्रवीत् ॥ ११. आ–तमविघ्नं। १२. रा प्र ब म ल$_1$ ल$_2$–महाभागं । १३. फ म अ–च ससुग्रीवं। १४. रा–नास्ति ॥ १५. अ–नखदन्ता० । १६. आ–वानरान्वारेन्द्राभान् ।

नदतां हरि-मुख्यानाम् आर्ये श्रोष्यसि नि-स्वनम्॥[1]४९ [५०
स हि [2]मर्मसु [2]घोरेण ताडितो मन्मथेषुणा ।
न शर्म लभते रामः सिंहाऽर्दित इव द्विपः ॥५०॥ [५१
मा शुचो देवि शोकाऽऽर्त्ते मा भूत् ते मनसि क्लमः ।[3]
[4]शचीऽवेन्द्रेण सीते [4]त्वं भर्त्रा नाथवती [5]ह्य् [5]असि ॥५१॥ [५२
को वि-[6]शिष्टस् [6]तु रामेण सौमित्रि[7]णाऽपि [7]कः समः ।
अग्नि-मारुत-कल्पौ [8]तौ [9]भ्रातरौ तव सं-[9]श्रयौ ॥५२॥ [५३
नाऽस्मिन्न् चिरं [10]वत्स्यसि देवि देशे
रक्षो-गणैर् अध्य्-उषितेऽति-रौद्रे ।
न ते चिराद् आ-गमनं प्रियस्य
क्षमस्व तत्-सङ्गम-काल-मात्रम् ॥५३॥ [५४

इत्यार्षे रामायणे सुन्दर-काण्डे सीताप्रत्याश्वासनं
नाम [11]षट्त्रिंशः सर्गः ॥ ३६ ॥

---

१. फ—नर्दतां हरिमुख्यानामार्ये यूथान्यनेकशः ॥ २. आ—धर्मसु घोरेषु ॥ ३. फ—मा शोच देवि मानार्हे त्यज शोकमनिन्दिते । अ—मा शोच देव्यशोका मा भूत्ते मनसि क्लमः । ४. आ—त्राशिनी श्रीरिवेन्द्रेण । फ—श्रीमता श्रीरिवेन्द्रेण । अ—सज्जिनी श्रीरिवेन्द्रेण । ५. फ—शची ॥ ६. ब म ल१ ल२—विशिष्टो हि । ७. आ—सौमित्रेर्वापि । ब म ल१ ल२—को वा सौमित्रिणा समः । ८. आ—तु । ९. रा—भ्रातरावपि संश्रयौ । फ—भ्रातरौ नाऽत्र संशयः ॥ १०. रा—वत्स्यसीति । ११. ल१—अष्टत्रिंशः ॥

एवम् उक्ता तु हनुमता प्रियं वाक्यं मनो-हरम् ।
१] उवाचाऽऽत्म-हितं सीता गमिष्यन्तं प्लवं-गमम् ॥१॥ [१
त्वां दृष्ट्वा प्रिय-वक्तारं प्र-हृष्यामि प्लवं-गम ।
२] अर्ध-सञ्जात-सस्येव प्राऽऽप्य वृष्टिं वसुं-धरा ॥२॥ [२
पुमांसं राघवाद् अन्यं गात्रैर् मति-मतां वर ।
३] न स्पृशेयं स-कामाऽहं व्रतम् एतत् परमं मम ॥३॥ [३
अभि-ज्ञानं तु रामाय दद्यास् त्वं हरि-पुङ्गव ।
४] क्षिप्ताम् इषीकां काकाय कोपाद् एकाऽङ्ग-नाशिनीम् ॥४॥ [४
मनःशिलायास् तिलको गण्ड-पार्श्वे नि-वेशितः ।
५] त्वया प्र-हृष्टेन मम तत् पुनः स्मर्त्तुम् अर्हसि ॥५॥ [५
स वीर्यवान् हृतां सीतां कथं त्वं समुपेक्षसे ।
६] वसन्तीं रक्षसां मध्ये महेन्द्र-वरुणोपमः ॥६॥ [६
७३] एष चूडा-मणिर् दिव्यो मया सुपरि-रक्षितः ।
एनं दृष्ट्वा प्र-हृष्यामि व्य्-असने त्वाम् इवाऽनघ ॥७॥ [७
८] एष निर्-यातितः सौम्यं मया ते वारि-सम्भवः ।
N] अतः परं न शक्ष्यामि जीवितुं शोक-कर्षिता ॥८॥ [८
अ-सह्यानि च दुःखानि वाचश् च हृदय-च्छिदः ।

---

१. फ—०नोरमम् । ब प्र ल१ ल२—वाक्यमनुत्तमम् ॥ २. फ—गमिष्यामि परां मुदम् ।३. ल१—अवस० । रा—०सस्येपि॥ ४. आ—रामस्य ।५. आ अ—काकस्य । ६. अ—०नाशिनः ॥ ७. ब प्र ल१ ल२—०देशे । ८. फ—हि तां । च अ—हि मां । रा प्र ब म ल१ ल२—इमां ॥ ९. फ—परं ॥ १०. प्र म ल१ ल२—श्रीमान् मया । फ—सौम्य मयि । ११. रा ब ल१ ल२—शक्यामि । १२. आ—०कालसा ॥ १२. रा प्र ब ल१ ल२—०स्थिताः ।

१०] राक्षसीनां[1] सु-घोराणां त्वत्-कृते मर्षयाम्य् अहम् ॥९॥ [९
धारयिष्यामि मासं तु जीवितं शत्रु-सूदन ।
९] ऊर्ध्वं मासान् न जीवेयं त्वया हीना नृपात्म-ज[2]॥१०॥ [१०
घोरो राक्षस-राजो[3]ऽयं दृष्टश् च न सुखं च मे ।[4]
११] त्वां च श्रुत्वा वि-लम्बन्तं[5] न जीवेयम् अहं क्षणम्॥११॥ [११
वैदेह्या वचनं श्रुत्वा करुणं चारु[6] भाषितम् ।[7]
N] अथाऽब्रवीन् महा-तेजा हनुमान् मारुताऽऽत्म-जः १२॥[१२
त्वच्-छोकाऽभि-मुखो[8] रामो देवि सत्येन ते शपे ।
N] राम-दुःखा[9]ऽभि-भूतश् च लक्ष्मणः परि-तप्यते॥१३॥ [१३
दृष्टा[10] कथञ्चिद् भवती न कालः परि-शोचितुम् ।
N] इदं[11] मुहूर्ते[11] दुःखानाम् अन्तं गच्छसि[12] भामिनि[13] ॥१४॥ [१४
ताव् उभौ पुरुष-व्याघ्रौ राज-पुत्राव् अ-निन्दितौ[14] ।[15]
N] त्वद्-दर्शन-कृतोत्साहौ लंकां भस्मी-करिष्यतः ॥१५॥ [१५
स[16] हत्वा[16] समरे शूरो रावणं सह-राक्षसम्[17] ।[18]
N] राघवस्[19] त्वां विशाला[19]ऽक्षि स्वां पुरीं प्राऽऽपयिष्यति १६॥ [१६
यत्[20] तु[20] रामोऽभि-जानीयाद् अभि-ज्ञानम् अ-निन्दिते ।

---

१. फ—राक्षसानां ॥ २. रा प्र ब म ल$_1$ ल$_2$—नरर्षभ ॥ ३. प्र ब म ल$_1$ ल$_2$—०राजश्च । ४. फ—घोरं राक्षसराजानमाक्रमस्व रणे जय । ५. आ—विपद्यन्तं ॥ ६. फ—साधु भा० ।७. अ—वैदेह्या करुणं श्रुत्वा वचनं साधुभाषितम् ॥ ८. फ—०भिहता । ९. फ—रामशोकाभि० ॥ १०. आ—दृष्ट्वा कथञ्चिद्भवतीं ।११. फ रा—इमम्मुहूर्त्तं । ल$_1$ ल$_2$—इदं मुहूर्त्तं । अ—इदं मुहूर्त्तात् । १२. रा ल$_1$ ल$_2$—गच्छामि । १३. फ—भाविनि ॥ १४. ल$_2$—०त्रावरिन्दमौ । १५. ल$_1$—नास्ति । १६. फ अ—हत्वा तु० । प्र ब म ल$_1$—हत्वा तं । १७. फ अ ब—०बान्धवम् । १८. ल$_2$—नास्ति । १९. अ—राघवः सुवि० । ब ल$_1$ ल$_2$—त्वां विशालाक्षी । २०. ल$_2$—यातुं ॥

N] प्रीति-सञ्जननं तस्य भूयस् त्वं दातुम् अर्हसि ॥१७॥ [१७
साऽब्रवीद् दत्तम् एतत् ते मयाऽभि-ज्ञानम् उत्तमम् । [१८पू
N] वेणी-शोभा-करं दिव्यं मणि-रत्नं प्लवं-गम ॥१८॥ [N
एतद् एव हि रामस्य[1] दृष्ट्वा केश-विभूषणम् ।
N] श्रद्धेयं हनुमन् वाक्यं तव वीरं[2] भविष्यति ॥१९॥ [१८उ
एवम् उक्तस् तु हनुमान् वैदेह्या मारुताऽऽत्म-जः ।
२६] पादाऽभि-वन्दनं चक्रे वि-नीतो हरि-पुङ्गवः ॥२०॥[3] [N
गृहीत्वा[4] तु[4] मणिं हृष्टः श्रीमांस्[5] तत[5] प्लवगोत्तमः ।
N] शिरसा वन्द्य वैदेहीं गमनायोप-चक्रमे ॥२१॥ [१९
N] तम्[6] उत्पात[6]-कृतोत्साहम् अवेक्ष्य हरि-पुङ्गवम् ।
२२उ] वर्द्धमानं महा[7]-वेगम् उवाच जनकाऽऽत्म-जा ॥२२॥
अश्रु-पूर्ण-मुखी वाक्यम्[8] उवाच कपि-सत्तमम्[8] । [२०
२३] हनुमद्[9]-गमने व्यग्रा[9] शोक-सन्तप्त-मानसा ॥२३॥ [N
हनुमन्[10] सिंह-संकाशौ भ्रातरौ राम-लक्ष्मणौ ।
१२] सु-ग्रीवं च सहाऽमात्यं सर्वान् ब्रूयास् त्व् अन्-आमयम् २४[२१
यथा वत्स[11] महा-बाहुर् मां तारयति राघवः ।
N] अस्मात्[12] तु दुःखं[12]-संरोधात् तत् समा-धातुम् अर्हसि॥२५[13] [२२
[14]इमं च[14] तीव्रं मम शोक-वेगं

---

१. आ–रामश्च ॥ २. म–सर्व ॥ ३. अ–नास्ति ॥ ४. अ–प्रगृह्य तं । ५. च–श्रीमत्तं । प्र ब म ल१ ल२ अ–श्रीमन्तं ॥ ६. प्र ब म ल१ ल२–समुत्पात० । ७. म ल१ ल२–महात्मानम् ॥ ८. फ–श्यामा वाष्पसन्दिग्धया गिरा । अ–दीना वाष्पसन्दिग्धया गिरा । प्र ब ल१ ल२–०क्यं मारुतिं क० । ९. अ–हनूमन्तमनुव्यग्रा ॥ १०. आ–हनुमत्सिंह० ॥ ११. प्र रा ल१ अ–च स । १२. फ–अस्माद्दुःखाम्बुसं० । प्र ब म ल१–अस्मात्सुदुःखसं० । १३. ल२–नास्ति ॥ १४. फ–इदन्तु । ल१–इदं च ।

रक्षोभिर् एभिः परि-भर्त्सनं च ।
ब्रूयाश्[1] च रामस्य यतः समीपं
२९] निर्[2]यं शिवं तेऽस्तु हरि-प्रवीर ॥२६॥ [२३
स राज-पुत्र्या प्रति-वेदितो[3]ऽर्थः
कपिः कृताऽर्थः परिहृष्ट-भावः ।
तद् अल्प-शेषं प्रसम्-ईक्ष्य कार्यं
२४] दि[4]शं ह्य् उदीचीं मनसा जगाम ॥ २७॥ [२४

ई[5]त्यार्षे रामायणे सुन्दर-काण्डे हनुमत्-प्रयाणेऽभिज्ञान-द[6]र्शनो
नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

१. आ–ब्रूयास्तु । २. फ अ–शिवश्च तेऽध्वास्तु । च रा प्र ब म $ल_1$ $ल_2$–पन्थाः शिवस्तेस्तु ॥ ३. फ–०पादितार्थः ४. फ–आशामु· दीचीं ॥ ५. $ल_2$–इति सु० । अ–त्रुटितः । ६. फ अ–०वर्णनं । च रा प्र ब म $ल_1$ $ल_2$–०दर्शनं ॥

स वाणीभिः प्र-शस्ताभिर् गमिष्यन् पूजितस्[1] तया ।
२८] वन्द्यं[2] सीताम् अति-क्रान्तश् चिन्तयामास वीर्यवान्[3] ॥१॥ [१

अल्प-शेषम् इदं कार्यं दृष्टेयम् अ-सितेक्षणा ।
२९] त्रीन् उपायान् अथोत्-क्रम्य[4] चतुर्थ इह[5] दृश्यते ॥२॥ [२

न साम रक्षःसु गुणाय कल्पते[6]
न दानम् अर्थोप-चितेषु वर्तते[7] ।
न भेद-साध्या बल-दर्पिता जनाः
३०] परा-क्रमस् त्वेवं ममेह रोचते[8] ॥३॥ [३

न[9] चोऽस्य कार्यस्य परा-क्रमाद् ऋते
विनिश्-चयः कश्चिद् इहोप-पद्यते[10] ।
हत[11]-प्रवीरस्य रणे हि रक्षसः[12]
कथञ्चिद् आ-याद् यद्[13] इहाऽस्य मार्दवम् ॥४॥ [४

एक-कार्ये हि निर्-दिष्टो यो बहून्य् अपि साधयेत् ।
३२] सर्व[14]-कार्याऽवि-रोधेन स कार्यं कर्तुम् अर्हति ॥५॥ [५

---

१. अ—प्रतिपूजितः । २. फ—तां वन्दयित्वापक्रा० । रा प्र ब म ल$_1$ ल$_2$—सीतामभिक्रा०। अ—सीतामपक्रा०। ३. फ अ—वानरः ॥ ४. फ—उपक्रम्य । च रा प्र ल$_1$ ल$_2$ अ—आतिक्रम्य । ५. फ च—इव । ६. फ च—कथ्यते । प्र ब म ल$_1$ ल$_2$—कल्पते । ७. च रा प्र ब म ल$_2$—स्वेषु म० । अ—तेषु ममैव॥ ८. ल$_1$—परेत्यारभ्य ०पद्यते इत्यन्तः पाठो नास्ति ।९. आ—तदस्य । प्र—न चार्य । १०. ल$_2$—०पकल्पते । अ—०पजायते । ११. प्र ब म ल$_1$ ल$_2$—इह प्र० । १२. च रा प्र ब म ल$_1$ ल$_2$—रक्षसां । १३. फ—यदि हन्त ॥ १४. म—पूर्वका० ॥

न ह्य् एकः साधको हेतुः कर्मणाम् उप-[1]पद्यते[2]। [६पू
कर्मणां समुपेतानां बहूनाम् अर्थ-सिद्धये । [N
३३] यो ह्य् अर्थं बहु-धा वेद स समर्थोऽर्थ-साधने ॥६॥ [६उ
इहैव तावत् कृत-निश्चयो ह्य् अहं
[3]यदि व्रजेयम् मनुजेश्वराऽऽलयम् ।
पराऽऽत्म-[4]सम्मर्द-विशेष-[4]तत्त्व-वित्
३४] ततः कृतं स्याद् इह भर्तृ-शासनम् ॥७॥ [७
कथं नु[5] खल्व् अद्य भवेत् सुखाऽऽगतम्
प्र-सह्य युद्धं मम [6]राक्षसैः [6]सह ।
कथं नु [7]खल्व् अद्य बलं च तत्त्व-[7]तः
३५] [8]सं-मानयेन् मां च [9]रणे दशाऽऽननः ॥[10]८॥ [८
[11]इदम् [11]अस्य नृ-शंसस्य नन्दनोपमम् उत्तमम् ।[10]
३६] वनं नेत्र-मनः-कान्तं नाना-द्रुम-लताऽऽकुलम् ॥९॥ [१०
बलाद् वि-ध्वंसयिष्यामि [12]शुष्कं वनम् इवाऽन[13]लैः ।
३७] अस्मिन् [14]भग्ने ततः कोपं[15] करिष्यति [16]स रावणः॥१०॥[११
ततो महाऽऽत्माऽश्व-पदाति-युक्तं[17]

---

१. अ-स्वल्पस्यापि हि रक्षणे ॥ २. अ—नास्ति । ३. प्र ब म ल१ ल२—अनुब्र० । ४. आ—परात्मशंमर्द० । ब—परार्थसमान० । प्र—परार्थसंस्पन्द० । म ल१ ल२—परार्थसंम० । फ—०तत्त्वतः ॥ ५. फ—च । ६. आ—राक्षसानाम् । ७. फ—खल्वात्मबलेन सर्वान् । ८. च प्र ब म ल१ ल२—समा० । ९. च प्र ब ल१ ल२ अ—दशाननोऽयम् ॥ १०. आ—नास्ति । ११. रा च प्र ब म ल१ ल२ अ—इदं वनं ॥ १२. आ—शस्यं । १३. फ च रा—०निलः । १४. प्र ब ल१ ल२—दग्धे । १५. प्र ब ल१ ल२—शोकं । १६. रा—हि ॥ १७. फ—ततो महत्साश्वमहारथद्विपं । च रा—ततो महात्मास्वपदातियुक्तं । प्र ल१ ल२—ततो महात्माऽऽश्वपदातियुक्तं । अ—ततो ममाभ्यासमहारथद्विपं ।

बलं समा-देक्ष्यति राक्षसाऽधि-पः ।
त्रिशूल-कालोपम-पट्टिशाऽऽयुधं[1]
३८] ततो महद् युद्धम्[2] इदं भविष्यति ॥११॥ [१२
अहं तु तैः सं-यति चण्ड-विक्रमैः
सम्-एत्य रक्षोभिर् असङ्ग[3]-विक्रमः ।
नि-हत्य तद् रावण-देशितं[4] बलं
३९] सुखं गमिष्यामि कपीश्वराऽऽलयम् ॥१२॥ [१३
ततो मारुत-वत् क्रुद्धो मारुतिर् भीम-विक्रमः ।
N] उरु-वेगेन महता द्रुमान्[5] क्षेप्तुं प्र-चक्रमे ॥१३॥ [१४
प्र-भञ्जन्[6] शुशुभे धीमान् प्रभञ्जन-सुतः कपिः ।
N] प्र-भञ्जन इवाऽक्षोभ्यो निष्प्रभञ्जन्-मारुतिः[7] ॥१४॥ [N
ततस् तु हनुमान् धीरो[8] बभञ्ज प्रमदा-वनम् ।
४०] मत्त[9]-द्विज-समाघुष्टं नाना-द्रुम-लताऽऽकुलम्[10] ॥१५॥ [१५
तद् वनं मथितैर् वृक्षैर् भिन्नैश् च सलिलाऽऽशयैः[11] ।
४१] चूर्णितैः[12] पर्वताऽग्रैश् च बभूवाऽप्रिय-दर्शनम् ॥१६॥ [१६
लता-गृहैश् चित्र-गृहैश् च नाशितैर्

---

१. फ—०शाकुलं । २. प्र ल$_1$ ल$_2$—द्वन्द्वम्॥ ३. च रा—०रभंगविक्रमः। प्र ब ल$_1$ ल$_2$—०रभग्नविक्रमः। फ—०रचंडविक्रमः। म—रचंडविक्रमैः। ४. अ—०नोदितं॥ ५. रा—द्रुमाक्रुष्टुं । ब—द्रुमाक्रुष्टं । प्र म ल$_1$ ल$_2$—द्रुमाकष्टुं ॥ ६. फ—भंजन् स । ७ च रा प्र ब म ल$_1$ ल$_2$ अ—०मारुतः॥ ८. फ—तद्वलाद्वीरो । रा प्र ब म ल$_1$ ल$_2$ अ—०न् वीरो । ९. रा—स तु द्विजमा० । अ—मत्तबर्हिण-संघुष्टं । १०. फ च रा ल$_2$—०समाकुलम् । अ—०लतायुतम् ॥ ११. आ—शलिलाशयैः । १२. रा च ब—संचूर्णितै लताग्रैश्च । प्र—सचूर्णितैः लताग्रैश्च । म—सुचूर्णितैः लताग्रैश्च । अ—चूर्णितैश्चालिताग्रैश्च ॥

महोर-गैर् व्याल[1]-मृगैश् च निर्-गतैः[2] ।
शिला-गृहैर् उन्-मथितैः सुधा[3]-गृहैः
४२] प्रनष्ट-रूपं तद् अभून् महद्[4] वनम् ॥१७॥ [१९
स तस्य कृत्वा नृ-पतेर् महा-कपिर्
[5]महद् व्य्-अलीकं सह[6]सा महा[7]ऽऽत्मनः ।
युयुत्सुर् एको बहुभिर् महा-बलः
४३] श्रिया ज्वलंस् तोरणम् आ-स्थितः[8] कपिः १८॥ [२१

इत्यार्षे रामायणे सुन्दर-काण्डे प्रमदा-वन-विध्वंसो[9]
नामाऽष्टात्रिंशः सर्गः ॥३८॥

---

१. च रा प्र ब म $ल_1$, $ल_2$—व्याघ्रमृ० । अ—व्याडमुख्यैश्च । २. फ प्र—निर्जितैः । अ—चुंबितैः । ३. फ—०तैस्तथोत्तमैः । ४. प्र ब म $ल_1$, $ल_2$—महा-वनम् ॥ ५. अ—महाव्यलीकं । ६. आ—महतो । फ—मनसो । अ—रातसो । ७. फ—मनस्विनः । ८. च रा प्र ब म $ल_1$,$ल_2$ अ—आश्रितः क० । फ—०तस्तदा ॥ ९. फ रा प्र—विध्वंसनं ॥

[वं–३८]= [एकोनचत्वारिंशः सर्गः] =[दा–४२]

तत् कृत्वा[1] सु-महत् कर्म हनुमान् दर्शयन् बलम्[2] ।
N] सु[3]-स्तम्भ-कलितं चैत्य[4]-प्रासादं सोऽभ्य्[5]-अरोहत ॥१॥ [N
ततः पक्षि-निनादेन वृक्ष-भङ्ग-स्वनेन च ।
१] बभूवुस् तेऽर्थं[6] सं-भ्रान्ताः सर्वे लंका-निवासिनः ॥२॥ [१
वि-द्रुताश् च भय-त्रस्ता[7] वि-नेदुर् मृग-पक्षिणः ।
२] राक्षसानां[8] निमित्तानि क्रूराणि प्रति-पेदिरे ॥३॥ [२
ततो गतायां निद्रायां राक्षस्यो वि-कृताऽऽननाः ।
३] तद् वनं ददृशुर् भग्नं तं च वीरं महा-कपिम् ॥४॥ [३
स ता दृष्ट्वा महा-बाहुर् महा-सत्त्वो महा-बलः ।
४] चकार सु-महद् रूपं[9] राक्षसीनां[10] भयाऽऽवहम् ॥५॥ [४
ततस् तं मेघ-संकाशं महा[11]-कायं महा-बलम्[11] ।
५] राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर् जनकाऽऽत्म-जाम् ॥६॥[12] [५
कोऽयं कस्य कुतो[13] वाऽयं[13] किं निमित्तम् इहाऽऽगतः ।
६] कथं वा[14] [14]त्वयि सं-वादं राज-पुत्र्य् अकरोद् अयम् ॥७॥ [६
आ-चक्ष्व [15]त्वं विशालाऽक्षि मा[16] भूत् तव भयं [16]वरे ।
७] सं-वादम्[17] अ-सिताऽपाऽङ्गि त्वया किं कृतवान् अयम् ॥८॥ [७

---

१. प्र–कृतं । २. फ–वने । ३. आ–तत्स्तम्भकलिलं । रा–सुस्तम्भाक० । ४. रा–सोन्यं प्रा० । आ–चैत्यं प्रा० । ५. अ–चारुरोह सः ॥ ६. फ–०वुर्भयसंविग्नाः ॥ ७. फ–दिशः सर्वा । अ–०यव्यग्रा । ८. फ–रक्षसां च ॥ ९. ल$_2$–युद्धं । १०. अ–राक्षसानां । ११. फ अ–अतिकायं मनस्विनम् । १२. फ–नास्ति ॥ १३. फ–कुतश्चायं । १४. रा प्र म ल$_1$ ल$_2$–च त्वयि । अ–त्वयि च ॥ १५ फ–नो । १६. फ–भयं मा भूत्तवाङ्गने । १७. फ अ–संलापम् ॥

अथाऽब्रवीत् तदा साध्वी सीता सर्वाऽङ्ग-शोभना ।[1]
८] रक्षसां काम-रूपाणां वि-ज्ञाने मम का गतिः[2] ॥९॥ [८
स्वयम् एवाऽस्य[3] जानीध्वं[4] योऽयं यच्[5] च[6] करिष्यति ।
९] अहिर् एव ह्य् अहेः पादान्[6] वि-जानाति न संशयः ॥१०॥[९
अहम् अप्य् अस्य भीताऽस्मि[7] नित्यं निर्-गमने[7] मतिम् । [१०पू
१०] करोमि[8] रक्षोभिर्[8] अहं काम-रूपैर् हि वञ्चिता ॥११॥ [N
वैदेह्या वचनं श्रुत्वा राक्षस्यो वि-स्मिता दृढम् ।
११] स्थिताः काश्चिद्[9] गताः कांश्चिद्[10] रावणायाऽऽचचक्षिरे १२ [११
रावणस्य समीपे[11] तु राक्षस्यो वि-कृताऽऽननाः[11] ।
N] वि-रूपा वानरं भीमम् आ-ख्यातुम् उप-चक्रमुः[12] ॥१३॥ [१२
अशोक-वनिका-मध्ये राजन् भीम-वपुः कपिः ।
१३] सीतया कृत-संवादस् तिष्ठत्य् अ-मित-विक्रमः ॥१४॥ [१३
न च[13] तं जानती[13] सीता हरिं हरिण-लोचना ।
१४] अस्माभिर् बहु-धा पृष्टा नि-वेदयितुम्[14] इच्छति ॥[15]१५॥ [१४
वासवस्य भवेद् दूतो[16] दूतो वैश्रवणस्य च[16] ।[15]
१५] प्रेषितो[17] वाऽपि रामेण[17] सीतायास्[18] तव कारणात्[18] ॥१६॥[१५

१. फ—अथाब्रवीद्राजसुता सीता राजीवलोचना । २. फ च अ—मतिः । ३. आ—एवाशु । ४. अ—जानीत । ५. फ ब अ—यद्वा । ६. रा प्र ब म ल, ल२—पादौ ॥ ७. फ—भीता हि चेतोपक्रमणे । अ—भीता हि चेतो । ८. च अ—कुर्मि रक्षोभिरेवाहं । रा ब म ल, ल२—कृतवत्येव रक्षोभिः ॥ ९. च रा प्र ब म ल, ल२—काश्चित्ततो । १०. प्र ब म ल, ल२—भीता ॥ ११. फ—समीपं तु राक्षस्यो रुचिराशनाः । १२. आ—०चक्रमे ॥ १३. फ—तु तं जानकी । आ—च तं जानकी । १४. म—न निवेदितुम् ॥ १५. रा प्र ब ल, ल२—नास्ति । १६. फ ब म—त्वा । १७. प्र ब ल, ल२—आख्यातीहागतो नूनं । १८. फ प्र ब ल, ल२—सीतार्थे स भविष्यति । म—सीतादर्शनकारणात् । रा—नास्ति ॥

तेन भग्नं वनं सर्वं यत् तत् तव मनो-रमम्।

N] नाना-मृग-गणाऽऽकीर्णं प्र-मृष्टं[2] प्रमदा-वनम् ॥१७॥ [१६

N] न स कश्चिद् वनोद्देशस् तरसा यो न नाशितः ।[3]

१६] यत्राऽऽसीज्[4] जानकी सीता स तेन न विनाशितः ॥१८॥[१७

जानकी-रक्षणाऽर्थं वा श्रमाद् वा नोप-लभ्यते ।

१७] अथवा कः श्रमस् तस्य सैव तेनाऽभि-रक्षिता ॥१९॥[6] [१८

चारु-पल्लव-शाखश् च यस् त्व् आसीत् सीतया स्थितः ।

१८] प्र-वृद्धः शिंशपा-वृक्षः स च तेनाऽ[9]भि-रक्षितः ॥२०॥ [१९

तस्योग्र-रूपस्योग्रं त्वं दण्डम् आ-ज्ञातुम्[11] अर्हसि ।

१९] सीता सं-भाषिता येन तद् वनं च[12] वि-नाशितम् ॥२१॥ [२०

त्वया प्रति-गृहीतां तां स्वयं[13] रक्षो-गणेश्वर ।

२०] कः सीताम्[14] अभि-भाषेत[14] यो न स्यात् त्यक्त-जीवितः२२॥[२१

राक्षसीनां वचः श्रुत्वा रावणो राक्षसाऽधिपः[15] ।

२१] हुतोऽग्निर्[16] इव[16] जज्वाल कोप-संवर्तितेक्षणः ॥२३॥ [२२

आत्म-कारण[17]-सम्भूतान् किं-करान् नाम राक्षसान् ।

२२] सं-दिदेश[19] महा-तेजा नि-ग्रहाऽर्थं महा-कपेः ॥२४॥ [२४

---

१. फ रा म अ—०हरम्॥ अ—प्रकृष्टं ॥ ३. आ—तन्न कश्चिद्वनोद्देशो तरसा यन्न नाशितम् । अ—तत्र कश्चिद्वनोद्देशो मनसैव प्रकल्पितः । ४. फ—यत्रास्ते । ५. फ—परिरक्षितः । ६. फ—नास्ति ॥ ७. फ—यं सीता समुपाश्रिता । ८. आ—सिंसपा० । फ—शिंशुपा० । रा ब अ—शिंशिपा० । ९. आ—तेनातिर०॥ १०. फ—तस्योग्रस्योग्ररूपं । ११. ल$_2$—आख्यातुम् । १२. प्र—न ॥ १३. आ—तव । १४. प्र म ल$_1$ ल$_2$—सीतां त्वाभि० ॥ १५. फ—राक्षसेश्वरः । अ—रक्षसां वरः । १६. आ—हुताग्निरिव ॥ १७. आ—आत्ममानससं० । फ—सोथ मानससं०। अ—०संभूतां । १८. अ—राक्षसा । १९. फ अ—व्यादि०॥

तेषाम् अशीति-साहस्राः(?स्री) किं-कराणां मनस्[1]-विनाम्।[२५
२३] निर्-ययुर्(?यौ) भवनात्[2] तस्मात्[2] कूट[3]-मुद्गर-धारिणाम् २५[२६पू
दृप्ता[4]ः स्वामि-हिते युक्ता घोर-रूपा महा-बलाः । [N
२४] युद्धाऽभि-नन्दिनः सर्वे हनुमत्-त्रासनोत्सुकाः[5] ॥२६॥[२६उ
हनूमान् अपि वि-क्रान्तः स्वं पौरुषम् उपाऽऽश्रितः ।[6]
२५] स-हर्षः[7] पदम् आ-साद्य तं चैत्यं सोऽध्य्-अरोहत[8] ॥२७॥ [N
आ-रोहमाणस्य ततो वेगो[9] वेग-ततो महान् ।
२६] सोपानेष्व्[10] अभवत् तस्य प्रति-शब्दो बृहत्[11]-तरः ॥२८॥[N
अ-प्रधृष्यः[12] सुदुर्-धर्षं चैत्य-प्राकारम् आ-रुहन् ।
२७] हनूमान् प्राऽज्वलल् लक्ष्म्या पारियात्रो[13]पमोऽभवत् ॥२९॥ [N
तं[14] कपिं ते[14] समा-साद्य तोरण-स्थम् अरिं-दमम् ।
N] अभि-पेतुर् महा-भोगं[15] पतङ्गा इव पावकम् ॥३०॥ [२७
ते गदाभिर् वि-चित्राभिः परिघैः काञ्चनैस्[16] तथा[16] ।
N] आ-जघ्नुर् वानरं[17] श्रेष्ठं बाणैर् आदित्य-सन्निभैः ॥३१॥[२८
आवर्त्त इव तोयस्य गाङ्गस्य विपुलो महान् ।

---

१. फ-(तु० वं)-साहस्री किंकराणां महाचमूः । आ-तरस्विनाम् । ल$_2$-तमस्वि० । २. प्र म ल$_1$ ल$_2$-वचनात्तस्य । ३. फ-शूलमु० । च प्र ल$_1$ ल$_2$-शूलमुद्गरपाणयः । अ-कूटमुद्गरपाणयः ॥ आ म-०धारिणः । ४. फ-हृष्टाः । रा-धृष्टा । ५. फ-युद्धाभिमनसः सर्वे हनूमन्तमुपागमन् ॥ ६. अ-नास्ति । ७. म-सहस्रं । अ-सहस्रपादम् । आ-सहर्षप० । ८. अ-चैत्यमधिरोहता ॥ ९. प्र-वेगवे० । ल$_2$ अ-वेगाद् । १०. आ-सोपानेथ भवेत् । ११. च रा प्र ब म ल$_1$ ल$_2$ अ-महत्तरः ॥ १२. फ-अवमृष्यन् । रा प्र म ल$_2$ अ-अप्रधृष्यं । १३. फ च रा प्र ब म ल$_1$,ल$_2$-पारिजातोप० ॥ १४. फ ल$_1$ ल$_2$-ते कपिं तं । च रा प्र ब-ते कपिं तु । म-तं कपिं तु । १५. फ ब-०वेगाः । अ-०भागाः । १६. आ-कांचनैर्गदैः । फ अ-कांचनांगदैः । १७. म अ-वानरश्रेष्ठं ॥

N] आ-क्षिप्तो हनुमांस् तैस् तु स सर्वै रक्षसां गणैः॥[1]३२॥ [N
स तैः परि-वृतः श्रीमान् सर्व-तः सत्त्व-वान् कपिः । [N
२७] समा-विध्य च लांगूलं ननाद सुमहा[2]-स्वनम् ॥३३॥ [३०उ
स भूत्वा च महा-कायो हनूमान् मारुताऽऽत्म-जः ।
२८] भुजम्[3] आ-स्फोटयामास लंकां शब्देन पूरयन् ॥३४॥ [३१
तस्याऽऽस्फोट[4]न-शब्देन महता श्रोत्र-घातिना ।
२९] पेतुर् विहङ्गा गगनाद्[5] उच्चैश् चेदम् अघोषयत ॥३५॥ [N
जयत्य् अति-बलो रामो लक्ष्मणश् च महा-बलः ।
३०] राजा जयति[6] सु-ग्रीवो राघवेणाऽ[7]नु-पालितः ॥३६॥ [३३
दूतोऽहं कोसलेन्द्रस्य[8] रामस्याऽक्लिष्ट-कर्मणः ।
३१] हनुमान् शत्रु-सैन्यानां नि-हन्ता मारुताऽऽत्म-जः॥३७॥ [३४
न[9] रावण-सहस्रं मे युद्धे प्रति-बलं भवेत् ।
३२] शिलाभिश् च प्र-हरतः[10] पादपैश् च सहस्र-शः ॥३८॥ [३५
धर्षयित्वा पुरीं लंकां अभि-वाद्य च मैथिलीम् ।
३३] समृद्धो[11]ऽर्थो गमिष्यामि मिषतां[12] सर्व-रक्षसाम् ॥३९॥ [३६
एवम् उक्त्वा वि-मानाऽग्रे चैत्ये स हरि-पुङ्गवः ।
N] अ[13]भवद् भीम-संह्रादो लंकां शब्देन पूरयन् ॥४०॥[14] [N

---

१. फ श्र–परिक्षिप्य हनूमन्तं स बभौ रक्षसां गणः । प्र म ल$_1$ ल$_2$–आक्षिप्तो हनुमांस्तैश्च सर्वतो रक्षसां गणः ॥ २. च प्र ब म ल$_1$ ल$_2$ श्र–सुमहत्स्वनम् ॥ ३. फ च रा प्र ब म ल$_1$ ल$_2$ श्र–पृष्ठम् । ४. फ–तस्यास्फोटितश० । ५. श्रा–गगनाद्विश्चैवम् । ६. च–जयतु । ७. ब म ल$_1$–रामेणैवानुपा० ॥ ८. फ च–कोशलेन्द्रस्य ॥ ९. फ–रावणस्य सहस्रं । १०. ल$_2$–प्रहरता ॥ ११. रा म–संसिद्धार्थो । ब प्र ल$_1$–समिद्धार्थो । १२. श्र–पश्यतां ॥ १३. फ–आनदद्भी० । रा प्र म ल$_1$ ल$_2$–अनदद् । ब–अब्दद् । १४. श्र–नास्ति ॥

तेनाऽऽक्रान्तः प्र-बलिना[1] प्रासादः स हनूमता।
३५] व्य्-अशीर्यत गिरेः शृङ्गं वज्रेणेव च[2] ताडितम्[2] ॥४१॥[3] [N
३६पू] ते तं वानरम् आ-साद्य चैत्य-प्रासाद-संस्थितम्[4]।
N] अभि-पेतुर् यथा मेघाः[5] पर्वतं प्रति-वर्षितुम् ॥४२॥[6] [N
तस्य संनाद-शब्देन तेऽभवन् भय-पीडिताः[6]।
३८] ददृशुश् च हनूमन्तं सन्ध्या-मेघम् इवोत्थितम्[7] ॥४३॥ [३७
स्वामि-सन्देश-निःशंकास् ततस् ते[8] राक्षसा युधि।
३९] चित्रैः प्र-हरणैर् भीमैर्[9] अभि-पेतुः समन्ततः[9] ॥४४॥ [३८
४०पू] तैः[10] संपरि[10]-वृतः क्रूरैः[11] सर्व-तः[12] स[12] महा-बलः।
N] आ-ससादाऽऽयसं[13] भीमं परि-घं तोरणाऽऽश्रयम्॥४५॥
४३उ] स तं परि-घम् आ-साद्य[14] वि-नदन्[15] रक्षसां गणम्[15]। [३९
४४पू] सूदयामास वज्रेण दैत्यान्[16] इव सहस्र-दृक्[16] ॥४६॥ [N
स पन्न[17]-गम् इवाऽऽदाय स्फुरन्तं विनता-सुतः।
N] वि-चचाराऽम्बरे वीरो गृहीत्वा परि-घं हरिः ॥४७॥ [४०
स हत्वा राक्षसान् वीरान्[18] किं-करान् मारुताऽऽत्म-जः।

---

१. फ रा प्र ब म ल१ ल२–प्रचलितः। च–प्रवलितः। २. रा प्र म ल१,ल२–विदारितम्। ३. अ–नास्ति। ४. रा प्र ब म ल१,ल२–॰मास्थितम्। ५. फ–वेगाः॥ ६. फ अ–भयशङ्किताः। ७. आ–इवोदितम्। फ–इवोद्धतम्। च म–इवोन्नतम्। रा–इवोत्तमम्॥ ८. फ–॰निःशङ्काः प्रतस्थुः। ९. फ–भीतैरभिपेतुस्ततस्ततः॥ १०. प्र ब म ल१ ल२–स तैः प॰। ११. म ल१ ल२–शूरैः। १२. रा–समन्तात्सुम॰। प्र ब म ल१ ल२–समन्तात् स। १३. फ–॰दाथ स घोरं। च रा प्र ब म ल१ ल२–दाथ तं भीमं॥ १४. प्र म ल१ ल२–आस्थाय। अ–आदाय। १५. आ–न्यहनद्रक्षसां। प्र म ल१ ल२–निनदन् र॰। अ–ह्यवधीद् रक्षसां गणान्। फ–सुघोरं र॰। १६. रा प्र ब म ल१ ल२–दानवानिव वज्रभृत्॥ १७. आ–सर्पमिवामदाय। १८. आ–वीरः।

N] युद्धाऽऽकाङ्क्षी [1]ततो वीरस् तोरणं समभि-[2]प्लुतः ॥४८॥ [४१

ततस् तस्माद् भयान् मुक्ताः [3]केचिद् अत्र निशा-[3]चराः । [४२पू

N] उत्-[4]पेत्य बलिनो भीमाः संनि-[5]कर्षं हनूमतः ॥४९॥ [N

ते प्र-दीप्तानि शूलानि मुद्गराऽसि-परश्वधान् ।

N] वि-सृजन्तो महा-कायास् [6]तं [6]कपिं पर्य्-अवारयन् ॥५०॥ [N

ततो वाताऽऽत्म-जो क्रुद्धो भीम-रूपं समा-स्थितः ।

N] राक्षसानां शतं घोरं जघान हरि-पुङ्गवः ॥५१॥ [7] [N

स हत्वा राक्षस-गणान् वज्रेणेन्द्र इवाऽसुरान् ।

N] अन्तरिक्ष-स्थितः श्रीमान् इदं वचनम् अब्रवीत् ॥५२॥ [N

[9]मादृशानां सहस्राणि वि-शिष्टानां च [10]राक्षसाः ।

N] बलिनां वानरेन्द्राणां सुग्रीव-वश-वर्त्तिनाम् ॥५३॥ [N

सं-स्थितानि परे पारे समुद्रस्य महाऽऽत्मनः ।

अहम् [11]एकस् ततः [11]मांऽऽप्तः सीता-सन्दर्शनोत्सुकः ॥५४[N

सा च दृष्टा मया साध्वी भर्तृ-दर्शन-लालसा ।

N] शेष-कार्य-समाधाने कृत-बुद्धिश् च नो नृपः ॥५५॥ [N

स वानर-सहस्राणां कोटि-कोटि[12]भिर् आ-[12]वृतः ।

४८] आ-गमिष्यति सु-ग्रीवः सर्वेषां वो नि-[13]षूदनः ॥५६॥ [N

नेयम् अस्ति पुरी लङ्का न यूयं न च रावणः ।

४९] [14]यः [14]स राघव-वीरेण [15]कृत-वैरो निशा-चरः ॥५७॥ [N

---

१. फ–तदा । २. फ–०द्रुतः । ३. फ अ–केचित्तत्र तु राक्षसाः । च प्र ब म $_1$ ल$_2$–केचित्तत्र तु नि० । ४. ल$_2$–उत्प्लुत्य । ५. आ–सन्निकर्षं ॥ ६. आ-राक्षसाः॥ ७. आ रा प्र ब म ल$_1$,ल$_2$–नास्ति॥ ८.फ–अन्तरीक्षे स्थितः॥ ९. आ–ईदृशानां । १०. रा प्र ब म ल$_1$–रक्षसां ॥ ११. फ–०मेवागतः सम्यक् ॥ १२. फ–०टिकोटीभिरावृतः । च रा प्र ब म ल$_1$ ल$_2$–०टिकोटिसमावृतः । १३. आ–निषूदकः । ब–जिघांसया । १४. अ–यस्तु । १५. फ अ–बद्ध० ॥

ततस्[1] तु समरं मुक्त्वा[1] केचित्[2] तत्रैव राक्षसाः[2] ।
५०] तान् हतान्[3] सु-बहून् दृष्ट्वा वि-षेदुर् नष्ट-चेतसः ॥५८॥ [N
हताऽवशेषा जग्मुस्[4] ते राक्षसा रावणाऽऽलयम् । [N
नि-हतान् किं-करान् सर्वान् रावणायाऽऽचचक्षिरे [४२उ
५१] तद् अ-प्रियं महा-घोरं श्रुत्वा चुक्रोध रावणः[5] ॥५९॥[6] [N
स राक्षसानां नि-हतं महा-बलं[7]
नि-शम्य राजा परिवृत्त-लोचनः ।
समा-दिदेशाऽप्रतिमं पराऽऽक्रमे
N] प्रहस्त[8]-पुत्रं समरेषु दुर्-जयम् ॥६०॥ [४३

इत्यार्षे रामायणे सुन्दर-काण्डे किंकर-वधो
नामैकोनचत्वारिंशः सर्गः ॥३९॥

---

१. च–मरणाद्धि ततो । रा प्र ब म $ल_1$ $ल_2$–मरणाच्च विनिर्मुक्ता ये के० । अ–समाराधि ततो मुक्ताः । २. फ–कतिचिन्मत्तराक्षसाः । च–केचित्तस्मा ? रा० । रा प्र ब म $ल_1$ $ल_2$–केचित्तत्र रा०। अ–कतिचित्तत्र रा०। ३. फ–हत्वा ॥ ४. फ–गत्वा । ५. फ–राक्षसः । ६. अ–नास्ति । अतः परमधिकः पाठः—रा च प्र ब म $ल_1$ $ल_2$–किंकरान्सुबहून्हत्वा हनुमान् कपिकुञ्जरः । कांचनाम्रवणाच्छन्नं बभञ्ज प्रमदावनम् ॥ चम्पकान्नागवृक्षांश्च* तिलकान्वंजुलानपि । नारिकेलानशोकांश्च तथाऽन्यान् विविधान् द्रुमान् ॥ बभञ्ज परमक्रुद्धो वृक्षशाला जघान च †। तं दृष्ट्वा भज्यमानञ्च ‡ वनपालाः समन्ततः ॥ ७. फ अ–महागणं । प्र म $ल_1$–महद्बलं । ८. फ–रक्षोगणं वै। प्र ब म $ल_1$ $ल_2$–प्रहस्तसूनुं ॥

---

*ब प्र $ल_2$–चण्यकान्नागवृक्षांश्च । † रा प्र ब म $ल_1$ $ल_2$–वृक्षशाखा बभञ्ज च । ‡ रा प्र ब म $ल_1$–दृष्ट्वा भज्यमानं वनं ।

१४उ] सं-दिष्टो राक्षसेन्द्रेण [1]प्रहस्तस्य सुतो बली ।[2]
जम्बु-माली महा-दंष्ट्रो निर्-जगाम धनुर्-धरः[3] ॥१॥ [१
१५] रक्त-माल्यों[4]ऽम्बर-धरः स्रग्वी[5] रुचिर-कुण्डलः ।
महा-विवृत्त-नयनश् चण्डो [6]परम-दुर्जयः ॥२॥[7] [२
१६] धनुः शक्र-धनुः-प्रख्यं वहन् रुचिर-सायकम् ।
वि-स्फारयंश्[8] च वेगेन वज्र-निष्पेष[9]-निस्वनम् ॥३॥ [५
१७] तस्य[10] विस्फार-घोषेण धनुषो महतो दिशः ।
प्र-दिशो गगनं चैव सहसा[11] सम्-अपूर्यत[12] ॥४॥ [६
१८] रथेन स्वर-युक्तेन तम् आ-गतम् उद्-ऐक्षत[13] ।
हनुमान् वेग-सम्पन्नो जहर्ष च ननाद[14] च ॥५॥ [८
१९] तं तोरण-विटङ्कस्थं हनूमन्तं महा-कपिम् ।
जम्बु-माली महा-बाहुर् विव्याध नि-शितैः शरैः ॥६॥ [९
२०] अर्ध-चन्द्रेण वदने शिरस्य् एकेन कर्णिना[15] ।
बाह्वोर् विव्याध नाराचैर् वि-शिखैस्[16] तं महा-कपिम् ॥७॥ [१०

---

१. ब—प्रहस्ततनयो । २. फ—अतः पूर्वं पूर्वसर्गपठितः 'किंकरान् सुबहून् हत्वेत्यादिः सर्गोऽन्तः पाठः पठ्यते । ३. रा प्र ब म ल$_1$ ल$_2$—महाबलः । ४. आ—०मालांवरधरः । ५. आ—श्रग्वी । अ—श्रीमान् । ६. फ ब—समरदु० । ७. च रा प्र ब म ल$_1$ ल$_2$—क्रोधसंरक्तनयनश्च संदष्टोष्ठपुटो बली ॥ ८. फ—०रयन्स । प्र ब—०रयन् । ९. फ—वज्रनिर्घोषनि० ॥ १०. आ—यत्य । ११. प्र ब म—महता । अ—महसा । १२. आ प्र म—समपूरयन् । ब—समपूरयत् । १३. फ अ—उदीक्ष्य सः । १४. फ—ननर्द । अ—ननन्द ॥ १५. फ—कार्षिणा । १६. आ फ—विशिषैस् ॥

२१] तस्य तच् छुशुभे ताम्रं शरेणाऽभि-हतं मुखम् ।
शरदीऽवाऽम्बुजं फुल्लं विद्धं भास्कर-रश्मिना ॥८॥ [११

२२] चुकोप बाणाऽभि-हतो राक्षसस्य महा-कपिः । [१३
ततः पार्श्वेऽति-विपुलां ददर्श महतीं शिलाम् ॥९॥

२३] तरसा तां समुत्-क्षिप्य चिक्षेप बल-वान् हरिः ।
तां शरैर् दशभिः क्रुद्धः सूदयामास राक्षसः ॥१०॥ [१४

२४] वि-पन्नं कर्म्म तद् दृष्ट्वा हनूमांश् चाऽति-विक्रमः ।
सालं स-मूलम् उत्-पाट्य भ्रामयामास वीर्य-वान् ॥११॥[१५

२५] भ्रामयन्तं कपिं दृष्ट्वा साल-वृक्षं महा-बलम् ।
चिक्षेप सु-बहून् बाणाञ् जम्बु-माली महा-बलः ॥१२॥ [१६

२६] सालं चतुर्भिश् चिच्छेद वानरं पंचभिर् भुजे ।
उरस्य् एकेन विव्याध दशभिश् च स्तनाऽन्तरे ॥१३॥ [१७

२७] स शरैः पूरित-तनुः क्रोधेन महताऽऽवृतः ।
गृहीत्वा परि-घं घोरं भ्रामयास वीर्य-वान् ॥१४॥ [१८

२८] अति-वेगोऽति-वेगेन भ्रामयित्वा मदोत्कटः ।
परि-घं पातयामास जम्बुमालि-रथोपरि ॥१५॥ [१९

२९] तस्य नैव शिरो नाऽस्थि न जानु स्फिग् न वा हनुः ।
न धनुर् न रथो नाऽश्वास् तत्र किञ्चन दृश्यते ॥१६॥ [२०

३०] स हि तस्याऽति-वेगस्य वेगेन महता हतः ।

---

१. आ—पार्श्वेऽतिविपुलां शुभ्रां । २. फ—बलात् । ३. फ—बृहच्छालं समुत्पाट्य । ४. फ—वेगवान् ॥ ५. आ—शरैः । ६. प्र ल₁—तरस्यैकेन । ७. ल₁—वेगवान् । ८. अ—सोतिवे० । ९. फ च—महोत्कटः । १०. रा—घात० । ११. ल₁—नास्ति । १२. फ अ—बाहवः । १३. फ—न ह्यस्य तत्र किंचिद्दृश्यते । च रा प्र ब म ल₁ ल₂—नाश्वस्तत्र किंचिन्न दृश्यते । अ—नाश्वस्तत्र कश्चिन्न दृश्यते ॥

सर्वः[1] सं-चूर्णितस् तत्र स-मांसाऽस्थि-शिरस्-तनुः ॥१७॥ [N
जम्बु-माली च नि-हतः किं-कराश् च नि-पातिताः ।[2]
३१] चुकोप[3] रावणः श्रुत्वा क्रोध-संरक्त[4]-लोचनः ॥१८॥ [२२
स रोष-संवर्द्धित-लोल-लोचनः[5]
प्रहस्त-पुत्रे नि-हते महा-बले ।[6]
समा-दिदेशाऽऽशु महा-महाऽऽयुधान्[7]
३२] अमात्य-पुत्रान् सुदृढ-प्रहारिणः[8] ॥१९॥ [२३
स राक्षसानां नि-हतं महा-गणं[9]
वनं च भग्नं परमं[10] प्रियं बली ।
हनूमतस् तं च नि-शम्य वि-क्रमम्
अमात्य-पुत्रान् व्यु-असृजन्[11] महा-बलान् ॥२०॥[12] [N

इत्यार्षे रामायणे सुन्दर-काण्डे लंका-पर्वणि जम्बुमालि-वधो नाम चत्वारिंशः सर्गः ॥४०॥

---

१. आ–सर्वं । २. अ–जम्बुमालिं च निहतं किंकरांश्च निपातितान् । ३. अ–चुक्रोध । ४. फ–क्रोधसंक्षुभिताननः । अ–०संलुलिताननः ॥ ५. फ म अ–०संवर्त्तित० । रा प्र ब म ल$_1$ ल$_2$–रोषसंवर्तितलोचनो युवा । आ–०तलोचनो युवा । ६. च रा प्र व ल$_1$ ल$_2$–प्रहस्तपुत्रो निहतो महाबलः । ७. रा प्र ब म ल$_1$ ल$_2$–०शाथ दृढायुधांस्तान् । फ–महायुधांस्तान् । ८. फ–व्यसृजन्महाबलान् । ९. प्र ब ल$_1$ ल$_2$–महार्चिषां । १०. आ–परमप्रियं । ११. च–विसृजन् । १२. फ–नास्ति ॥

ततस् ते राक्षसेन्द्रेण नोदितो[1] मन्त्रिणां सुताः ।
१] निर्-ययुर् भवनात् तस्मात् सप्त सप्ताऽर्चि-वर्चसः[2] ॥१॥ [१
महाबल-परीवारा धनुष्-मन्तो महा-बलाः ।
२] कृताऽस्त्राः[3] परमेष्वासाः[3] परस्पर-कृतोद्यमाः ॥२॥ [२
हेम-जाल-परिक्षिप्तैर् वेगवद्भिः[4] पताकिभिः ।
३] तोयद-स्वन-निर्घोषैर् वाजि-युक्तैर् महा-रथैः ॥३॥ [३
तप्त-काञ्चन-चित्राणि चापान्य् अमित-विक्रमाः ।
४] वि-स्फारयन्तः सं-हृष्टास् तडिद्-वन्त इवाऽम्बु-दाः ॥४॥ [४
जनन्यस् तास्[5] तदा तेषां[5] विदित्वा किं-करान् हतान् ।
५] बभूवुः शोक-सम्भ्रान्ताः[6] स-बान्धव-सुहृज्जनाः ॥५॥ [५
ते परस्पर-संहृष्टास् तप्त-काञ्चन-भूषणाः ।
६] अभि-पेतुर् हनूमन्तं तोरणाऽग्र-व्यवस्थितम्[7] ॥६॥ [६
सृजन्तो बाण-वर्षं[8] ते घोर-रूपा महा-स्वनाः ।
७] वृष्टि-मन्त इवाऽम्भोदा वि-चेरुर् नैर्ऋतर्षभाः[9] ॥७॥ [७
अव-कीर्णस् ततस् ताभिर् हनूमान् शर-वृष्टिभिः ।
८] अभवत् सं-वृताऽऽकारः शैल-राड् इव वृष्टिभिः[10] ॥८॥ [८

---

१. च रा प्र ब म ल१ ल२ अ–चोदिता मंत्रिणः । २. फ–०र्चिरर्च्चसः ॥ ३. आ–कृतास्त्रास्त्रविदां श्रेष्ठाः ॥ ४. आ–ध्वजवद्भिः ॥ ५. फ–ताः स्वनन्त्येषां । ६. फ–०सन्त्रस्ताः । च रा प्र ब म ल१ ल२–०विभ्रान्ताः । अ–०संतप्ताः । ७. आ–०प्रभव० । रा प्र ब म ल१ ल३–०स्थितं तदा ॥ ८. फ–बाणवृष्टीस्ते रथस्थाः सुम० । अ–बाणवृष्टिं ते रथस्थाः सुम० । रा च प्र म ल१ ल२–घोररूपं म० । ९. फ–नैर्ऋताम्बुदाः । १०. आ–नास्ति ॥

स शरान् वञ्चयामास तेषाम् आशु-चरैः[1] कपिः ।
९] रथ[2]-वेगं च[2] वीराणां वि-चरन् वि-मलेऽम्बरे ॥९॥ [९
स[3] तैः[3] क्रीडन् धनुष्-मद्भिर् व्योम्नि वीरः प्र-काशते ।
१०] सहस्राऽन्तो धनुष्-पाणिस् तोय-दैर् इव मारुतिः ॥१०॥ [१०
स कृत्वा नि-नदं घोरं त्रासयित्वा[4] महा-चमूम् ।
११] चकार हनुमान् वेगं तेषु रक्षःसु वि-स्मयन्[5] ॥११॥ [११
तलेनाऽप्य् अवधीत् कांश्चित् पद्भ्यां कांश्चित् परं-तपः[6] ।
१२] मुष्टिभ्याम् अवधीत् कांश्चिन् नखैः कांश्चिद् व्य्-अदारयत्[7] १२[१२
१३पू] प्र-ममाथोरसा कांश्चिद् ऊरुभ्याम् अपरान् कपिः ।
N] केचित् तस्योग्र-नादेन तत्रैव[8] पतिता भुवि ॥१३॥ [१३
१३उ] ततस् तेष्व्[9] अव[9]-सन्नेषु भूमौ नि-पतितेषु च ।
तत् सैन्यम् अगमत् सर्वं[10] दिशो दश भयाऽर्दितम् ॥१४॥ [१४
वि-नेदुर् वि-स्वरान् नादान् नि-पेतुर् भुवि वाजिनः ।
१४] भग्न-नीड[11]-ध्वज-च्छत्रैर् भूर् वि-कीर्णाऽभवद् रथैः ॥१५॥ [१५
स तान् प्र-वृद्धान् विनि-हत्य राक्षसान्
महा-बलांश् चण्ड-पराक्रमैः[12] कपिः ।
युयुत्सुर् अन्यैर्[13] बहुभिः स[13] राक्षसैस्
१५] तद् एव वीरोऽधि-जगाम तोरणम् ॥१६॥ [१७

इत्यार्षे रामायणे सुन्दर-काण्डे मन्त्रि-पुत्र[14]-वधो
नामैकचत्वारिंशः सर्गः ॥४१॥

---

१. फ–०चरन् । २. आ–रथवेगेन ॥ ३. च–शमैः । प्र ब म ल$_1$ ल$_2$–शरैः ॥ ४. आ–भ्रामयित्वा । ५. फ–भैरवम् । आ–विस्मयम् ॥ ६. फ प्र ब म ल$_1$ ल$_2$–महाबलः । ७. रा प्र ब म ल$_1$ ल$_2$–०ददारयत् ॥ ८. आ–तस्मिन्वनोद्देशे । फ–तस्यैव नादेन ॥ ९. आ–तेषु वसन्नेषु ॥ १०. आ–भागशः । ११. फ–भग्ननीलध्व० ॥ १२. च रा म–०पराक्रमान् । १३. फ आ–अन्यैः पुनरेव । प्र–एतैर्ब० ॥ १४. फ म–अमात्यपुत्रवधो ॥

हतान् मन्त्रि-सुतान् श्रुत्वा वानरेण महाऽऽत्मना ।
१] रावणः सं-वृताऽऽकारश् चकार [1]मतिम् उत्तमाम् ॥१॥[१
स विरूपाऽक्ष-[2]यूपाऽक्षौ दुर्-द्धरं च महा-बलम् ।
२] [3]प्र-घसं भास-कर्णं च पञ्च सेनाऽग्र-योधिनः ॥२॥ [२
सं-दिदेश दश-ग्रीवो वीरान् [4]रण-विशारदान् ।
३] [5]मन्त्रि-पुत्र-वध-[5]व्यग्रो हनुमद्-[6]ग्रहणं प्रति ॥३॥ [३
N] महा-गुण-परिख्याता [7]रण-कर्म्म-विशारदाः । [N
[8]यात सेनाऽग्र-गाः क्षिप्रं महा-बल-[9]पराऽऽक्रमाः ।
४] स-वाजि-रथ-मातङ्गाः स कपिः शास्यताम् इति ॥४॥ [४
यत्नेन खलु योद्धव्यं तम् आ-साद्य [10]वनाऽऽलयम् ।
५] कर्म चाऽपि [11]समा-देयं देश-[12]काल-नय-क्षमम् ॥५॥ [५
N] वानरोऽयम् [13]इति [13]ज्ञातुं नहि मे शुद्ध्यते मनः । [६पू
[14]नाऽप्य् [14]अहं तं कपिं मन्ये कर्म-तः [15]प्रति-तर्कयन् ॥६॥
६] [16]सर्वथा [16]तन्न् महा-भूतं महा-बल-[17]परिग्रहम् ।
८पू] भवेद् इन्द्रेण [18]वा सृष्टम् अस्मान् प्रति तपो-[19]बलात् ॥७॥ [७

---

१. फ–मतिमान्मातिम् ॥ २. प्र ब म ल१ ल२–०क्षरूपाक्षौ । ३. आ–प्रथमं॥४. आ–नयवि०। ५. आ–मन्त्रिपुत्रवधे व्यग्रो । फ–स तु क्रोधसामविष्टो । अ–हनुमद्ग्रहणव्यग्रो । ६. फ–हनुमन्निग्रहं ॥ ७. रा–रणे क० । फ–महाक० । ८. फ–यान्तु । ९. फ–०लपरिग्रहाः ॥ १०. फ–प्लवंगमम् । ११. फ प्र म ल१ ल२–समाधेयं । १२. आ–देशकालेण यच्छुभम् । अ–देशकाले च यच्छुभम् ॥ १३. आ–अविज्ञातो । १४. फ–न ह्यहं । १५. रा प्र ब म ल१ ल२–परित० ॥ १६. ल२–सर्वतस्तन् । १७. ल२ फ अ–पराक्रमम् । १८. फ–सृष्टोऽयम० । १९. रा प्र ब म ल१ ल२–तपोबलम् । फ–विरुध्यता ॥

स-नाग-यक्ष-गन्धर्वैर् देवैर् [1]वाऽपि [1]महर्षिभिः । [८पू

N] सम्-एताऽस्मद्-विनाशाय कृतेयं काम-रूपिणी ॥८॥ [N

सृष्टा तस्मात् प्र-यत्नेन योधयध्वं[2] महा-बलाः ।

N] तद् विनिर्-यात सैन्येन सं-युगे युद्ध-दुर्जयाः ॥[3]९॥ [N

९उ] निर्-जिता हि मया देवाः सं-[4]युताः सं-युगे [4]पुरा । [८उ

तैर् अवश्यं वि-धातव्यं व्य्-अलीकं किञ्चिद् एव नः ॥१०॥

१०] तद् एतन् नास्ति सन्देहः सं[5]प्रत्य् अद्य नि-[5]गृह्यताम् । [९

हरिर्[6] इत्य्-एव नोपेक्ष्यः कपिः क्रूर-पराक्रमः ॥११॥

११] दृष्टा हि हरयः [7]शूरा मया विपुल-विक्रमाः । [१०

वाली च सह-सुग्रीवो जाम्ब-वांश् च महा-[8]बलः ॥१२॥

१२] नीलः सेना-पतिश् चैव ये चाऽन्ये तद्-अन्तराः[9] । [११

१३पू] तेषां तु न गतिर् व्योम्नि न तेजो न पराक्रमः ॥[10]१३॥ [१२पू

[11]सत्त्वम् एतद् [11]व्यव-स्थेयं कपि-रूपस्य तस्य [12]तत्वे ।[13]

N] [14]महान्तं [14]यत्नम् आ-स्थाय [15]कर्तव्यस् तस्य [15]निग्रहः ॥१४॥ [१३

तस्माद् [16]अस्य महोत्साहैर् अ-प्रमत्तैः [17]सद्-आयुधैः ।

---

१. फ—वा परमर्षिभिः । अ—वा स मह० ॥ २. रा म—रोध० । ३. फ—निर्याताः सर्वसैन्येन संयुगेष्वपराङ्मुखाः ॥ ४. रा प्र म—संयुगे सहिताः पुरा । ब $ल_1$ $ल_2$—संयुगे सहिताः पुरा । फ—सगणाः सपुरन्दराः ॥ ५. च—संप्रगृह्य नि० । रा—संप्रयोज्य निरूह्यतां । प्र ब म—संप्रसृज्य निरूह्यताम् । $ल_1$—संप्रसृज्य निरूढिताम् । $ल_2$—संप्रसज्य निरूढताम् । फ अ—तत्प्रसह्य नि० । ६. म $ल_1$ $ल_2$—कपिर् ॥ ७. म $ल_1$ $ल_2$—क्रूरा । ८. $ल_1$ $ल_2$—०महायशाः ॥ ९. अ—अन्तरं । १०. च प्र ब म $ल_1$—न मतिर्न बलोत्साहौ न रूपं न पराक्रमः ॥ ११. आ—सर्वथैवाप्यव० । प्र ब म $ल_1$ $ल_2$—सर्वथैवाप्यव० । १२. आ अ—तु । $ल_2$—च । १३. फ—नास्ति । १४. आ फ—प्रयत्नं महद् । १५. फ—निवारयितुमर्हथ ॥ १६. रा—यस्य । १७. फ—०त्तैरुदायुधैः ।

१५] सर्वैर् एव[1] समेतैश् च भवितव्यम् अ-संशयैः[2] ॥१५॥[3] [N
कामं लोकास्[4] त्रयः सेन्द्राः[4] स-सुराऽसुर-मानवाः ।
१६] भवताम् अग्र-तः स्थातुम् अ-पर्याप्ता[5] रणाऽजिरे॥१६॥ [१४
तथाऽपि तु[6] नय-ज्ञेन वि-जयं परि-रक्षता[6] ।
१७] भवितव्यं[7] प्र-यत्नेन युद्धे[8] सिद्धिर् हि[8] चञ्चला ॥१७॥ [१५
ते स्वामि-वचनं मूर्ध्ना प्रति-गृह्य महौजसः ।
१८] सम्[9]-एत्य तु[10] महा-भागा[10] हुताऽश[11]-सम-तेजसः ॥१८॥ [१६
रथैश्[12] च मत्तैर्[12] मातङ्गैर् वाजिभिश् च महा-जवैः[13] ।
१९] शस्त्रैश् च वि-विधैस् तीक्ष्णैर् भृशं चोप(?पाऽऽ)-वृता बलैः१९[१७
ततस् तं ददृशुर् वीरा दीप्यमानं महा-कपिम्[14] ।
२०] रश्मि-मन्तम् इवोद्-यन्तं[15] स्व-तेजो-रश्मि-मालिनम्॥२०॥ [१८
तोरण-स्थं महा-भागं महा-सत्त्वं महा-बलम्[16] ।
२१] महा-मतिं महोत्साहं महा-कायं महा-कपिम्[17] ॥२१॥ [१९
तं सम्-ईक्ष्य च ते सर्वे दिक्षु सर्वास्व् अव-स्थिताः ।
२२] तैस् तैः प्र-हरणैर् भीमैर् अभि-पेतुस् ततस् ततः ॥२२॥ [२०
तस्य पश्चाऽऽयसास् तीक्ष्णाः[18] सि(?शि)तास् तेन शिलीमुखाः

---

१. प्र ल$_1$—सर्वैरेवाप्रमत्तैश्च । २. आ—०संशयः । फ ब म ल$_2$—०संशयं । ३. अ—नास्ति ॥ ४. रा प्र ब म ल$_1$ ल$_2$—सेन्द्रास्त्रयः लोका । ५. रा प्र ब म ल$_1$ ल$_2$—असमर्था ॥ ६. आ—तु हि नावज्ञा नयमाकांक्षिणी रणे । च—तु हि नावज्ञा जयमकांक्षिणी रणे । रा प्र ब म ल$_1$ ल$_2$—कार्या नावज्ञा जयमाकांक्षता रणे । ७. फ—रक्षितव्यं । ८. आ—युद्धसिद्धिश्च ॥ ९. आ फ—समुत्पेतुर् । १०. फ—०वेगा । ११. फ—हुताग्निस० ॥ १२. फ—रणोन्मत्तैश्च मा० । अ—मत्तैर्नागैश्च । १३. आ—०यवैः । च रा प्र ब म ल$_1$ ल$_2$—बलैः ॥ १४. अ—०बलम् । १५. ल$_2$—इवादित्यं ॥ १६. फ—०भुजम् । १७. फ—०बलम् ॥ १८. च रा प्र ब म ल$_1$—सिताः पंचमुखाः शराः । ल$_2$—सिताः पंचमुखाः शरैः । फ—स्फीताः पंचमुखाः शराः ॥

२३] शिरस्य् उत्पल-पत्राऽऽभा दुर्-द्धरेण नि-पातिताः॥२३॥[२१

स तैः पञ्चभिर् आ-विद्धः शरैः शिरसि वानरः ।

N] उत्-[1]पपात नदन् व्योम्नि[2] दिशो नादैर्[3] पूरयन् ॥२४॥ [२२

ततस् तु दुर्-द्धरो वीरः[4] स-रथः[5] सज्ज-कार्मुकः ।

२४] किरन् शर-[6]शतान्य् एव तम् आ-[7]पेदेऽमरोपमः ॥२५॥ [२३

स कपिर् वारयामास तं[8] व्योम्नि शर-वर्षिणम् ।

२५] वृष्टि-मन्तं निदाघाऽन्ते पयो-दम् इव मारुतः ॥२६॥ [२४

अर्द्यमानस् ततस् तेन दुर्-द्धरेणाऽनिलाऽऽत्म-जः ।

२६] चकार कदनं भूयो व्य्-अवर्द्धत च वीर्य-वान्[9] ॥२७॥ [२५

सोऽम्बरं[10] सहसोत्-पत्य दुर्-द्धरस्य [11]रथोपरि ।

२७] नि-पपात महा-वेगो विद्युद् आशु गिराव् इव[12] ॥२८॥ [२६

ततः स मथिताऽष्टा[13]ऽश्वं रथं भग्नाऽक्ष-कूबरम् ।

२८] वि-हाय न्य्-अपतद् भूमौ दुर्-द्धरस् त्यक्त-जीवितः ॥२९॥[२७

तं विरूपाऽक्ष-यूपाऽक्षौ दृष्ट्वा नि-पतितं [14]भुवि ।

२९] सञ्जात-रोषाव्[15] उद्-युक्तौ व्योम्नि मुद्गर-धारिणौ[16]॥३०॥[२८

स ताभ्यां सहसोत्-पत्य तिष्ठन्[17] वै[17] वि-मलेऽम्बरे ।

३०] मुद्गराभ्यांमहा-बाहुर् वक्षस्य् अभि-हतः कपिः ॥३१॥ [२९

तयोर् वेग-वतोर् [18]वेगं नि-हत्य [19]सुमहा-बलः ।

---

१.आ—उत्पतत्व्यनदन् । २. फ अ—व्योम । ३. फ अ—दश विनादयन्॥ ४. अ—धीरः। ५. च रा प्र ब म ल$_1$ ल$_2$—०थी ।६.आ—०शतान्येकोभिपेदे । अ—०शतैस्तीक्ष्णैरभिपेदे ।७. रा प्र ब म ल$_1$ ल$_2$—०दे महाकपिं । अ—०दे मनोजवः॥ ८.च—तद् । ९. फ—वेगवान्॥ १०. च रा ब प्र ल$_1$ ल$_2$—स दूरे । फ अ—स दूरं । ११. ब प्र म ल$_1$ ल$_2$—रथं प्रति । फ अ—रथे हरिः । १२. प्र—इति ॥ १३. रा प्र ब म ल$_1$ ल$_2$—मथितांगश्च ॥ १४. आ—युधि । १५. आ—०रोषौ युध्येतां । १६. अ—०पाणिनौ ॥ १७. आ—धिष्ठितो ॥ १८. ल$_2$—वेगे । १९. फ च प्र ब ल$_1$—स म० ।

३१] नि-पपात पुनर् भूमौ सुपर्ण-सम-विक्रमः ॥३२॥ [३०
स ताल-वृक्षम् आ-साद्य समुत्-पाट्य च[१] पाद-पम्[१] ।
३२] उभौ राक्षस-वीरौ तौ जघान पवनाऽऽत्म-जः ॥३३॥[२] [३१
ततस् तौ नि-हतौ दृष्ट्वा वानरेण म[३]हाऽऽत्मना ।
३३] अभि-पेदे[४] महा-वेगः प्र-सह्य प्र-घसो हरिम् ॥३४॥ [३२
एक-तः कपि-शार्दूलं यशस्-वि[५]नम् अभि-द्रु[५]तः ।
३४] भास-कर्णश् च सं-क्रुद्धः शू[६]लम् आ-दाय वीर्य-वान्॥३५॥[७][३३
पट्टिशे[८]न क्षुर-प्रेण प्र-घसः प्रत्य्-[९]अषेधयत् ।[१०]
३५] भास-कर्णश् च शूलेन राक्षसः कपि-सत्तमम् ॥[११]३६॥ [३४
स ताभ्यां वि-[१२]क्षतैर् गा[१३]त्रैर् असृग्-दिग्धि (?ग्ध)-त[१३]नू-रुहः ।
३६] अभवद् वानर-श्रेष्ठो बाल-सूर्य-सम-प्रभः ॥३७॥[११] [३५
समुत्-पाट्य गिरेः शृङ्गं स-मृग-व्याल-पादपम् ।[११]
३७] जघान हनुमान् वीरो राक्षसौ कपि-कुञ्जरः ॥३८॥ [३६
ततस् तेष्व् अव-सन्नेषु सेना-पतिषु पञ्चसु ।
३८] बलं तद् अ[१४]व-शिष्टं तु नाशयामास वानरः ॥३९॥ [३७
अश्वैर् अश्वान् गजैर् नागान् योद्धैर् योद्धान् रथै रथान् ।
३९] स कपिर् नाशयामास सहस्राऽक्ष इवाऽसुरान् ॥४०॥ [३९
हतैर् नागैस् तुरङ्गै[१५]श् च भग्नैश् चैव महा-रथैः ।

१. आ-सपादपम् । फ अ-च वानरः । २. फ-तावुभौ क्रूरो जघानामर्षचोदितः ॥ ३. फ-महाबलौ । ४. फ-अभियातो ॥ ५. ब म $ल_1$ $ल_2$-यशस्वीत्यहनद् द्रुतं । ६. $ल_1$-शूरम् । ७. रा-नास्ति ॥ ८. ब म $ल_1$ $ल_2$-पट्टिसेन । ९. आ-०धयन् । १० अतः परमधिकः पाठः-आ-समुत्पाट्य गिरेः शृङ्गं समृगव्यालपादपम् । जघान हनुमान् वीरो भासकर्णं महाबलम् ॥ ११. च-नास्ति ॥ १२. रा-विगतैर् । १३. फ अ-गात्रैः क्षतजार्द्रतनूरुहः ॥ १४. फ च अ-अवशेषं ॥ १५. च रा प्र ब म $ल_1$ $ल_2$-तुरंगैर्भग्नैश्चैव ।

४०] हतैश्[१] च राक्षसैर् भूमी[२] रुद्ध-मार्गा समन्ततः ॥४१॥ [३९

ततः कपिस् तान् ध्वजिनी-पतीन्[३] रणे[३]

निहत्य वीरान् स-बलान् स-वाहनान्[४] ।

तद् एव धीरः परि-गृह्य तोरणं

४१] कृत-क्षणः[५] काल[६] इव क्षये[६] यथा[७] ॥४२॥ [४०

इत्यार्षे[८] रामायणे सुन्दर-काण्डे[९] हनुमद्-युद्धे पंच-सेनाऽग्र-राक्षस-वधो[१०]
नाम द्वाचत्वारिंशः सर्गः ॥४२॥



१. अ–हतैश्चोष्ट्रादिभिर् । २. आ–भीमैर् ॥ ३. अ–ध्वजिनो महाबलान् । रा प्र ब $ल_1$ $ल_2$–०पतीन्वै । ४. रा–सवाहान् । ब प्र $ल_1$–सवानरान् । $ल_2$–स वानरः । ५. अ–कृतक्षणो रुद्र । ६. फ–प्रजाक्षये ॥ ७. आ–इति । ८. $ल_1$–त्रुटितः । ९. अ–त्रुटितः । १०. अ–सेनापतिवधो ॥

सेना-पतीन् पञ्च स[1] तु[1] प्र-मर्दितान्
हनूमता साऽनुचरान् स-वाहनान्[2] ।
निशम्य[3] राजा समरोद्धतस्[4] ततः
१] कुमारम् अक्षं प्रसम्-ईक्ष्य[5] तं तदा[5] ॥१॥ [१
स तस्य दृष्ट्या[6]ऽर्पण-सम्प्रचोदितः[6]
प्र-तप्त-जाम्बूनद-चित्र-कार्मुकैः[7] [8] ।
समुत्-पपाताऽऽशु सदस्[9] उद्-ईरितो[9]
२] द्वि-जाति-मुख्यैर् हविषेव पावकः ॥२॥ [२
ततो महद्-बाल-दिवाकर-प्रभं
प्रतप्त-जाम्बूनद-जाल-संवृतम् ।
रथं समा-स्थाय ययौ स[11] वीर्य-वान्[11]
महा-रथस्[10] तं प्रति वानरर्षभम् ॥३॥ [३
ततस् तपः-सञ्चय-संग्रहाऽर्जितं
प्रतप्त-जाम्बूनद-चित्र-कार्मुकम् ।
पताकिनं रत्न-विभूषित-ध्वजं
३] मनोजवाऽष्टाऽश्व-वरैः सु-योजितम् ॥४॥ [४

---

१. रा-सुतान् । प्र ब म ल१ ल२-स तान् । अ-शतान् । २. च रा प्र ब म ल१ ल२-सबान्धवान् । ३. आ अ-समीक्ष्य । ४. आ-०द्धतं ततः । ५. आ-तस्थौ । ६. फ-दृष्टिप्रनिपातचोदितः । च प्र म-०संघनोदितः । रा ब ल१ ल२-०संघचोदितः । अ-०संप्रणोदितः । ७. च-०मुकं । ८. च फ रा प्र ब म ल१ ल२-अत्र २यश्लोकस्य प्रतप्त इति पादमारभ्य ४र्थश्लोकं यावत् केचन पादशः केचन श्लोकशः पाठं जहतीति ज्ञेयम् । ९. फ-सभिद्धिरीरितो । १०. च प्र ब म-महारथी । ल१ ल२-महारथो । ११. रा प्र ब म ल१ ल२-महाबलं ॥

सुराऽसुराऽधृष्यम् असङ्ग-चारिणं
रवि-प्रभं व्योम-चरं समा-हितम् ।[1]
सु-[2]बन्धुरं स्व्-अत्तविधान-कूबरं
४] यथा-क्रमाऽऽवेशित-शक्ति-तोमरम् ॥५॥ [५
वि-राजमानं परिपूर्ण-च[3]न्द्रकं
स-हेम-[4]जालं शशि-सूर्य-वर्चसम् ।
दिवा-कराऽऽभं सु-रथं समा-स्थितः[5]
५] स निर्-जगामाऽमर-तुल्य-विक्रमः [6]॥६॥ [६
आ[7]-पूरयन् खं च महीं च सा[8]ऽचलां
तुरङ्ग-मातङ्ग-महारथ-स्वनैः ।
बलैः समेतैर्[9] अभि-तोरण (?णं)-स्थितं
N] [10]सं-दृप्तम् आसीनम् उपाऽऽगमत् कपिम् ॥७॥ [७
स तं समा-साद्य हरिं हरीऽऽक्षणं[11]
युगाऽन्त-कालाऽग्निम्[12] इव[12] प्रजा-क्षये ।
अव-स्थितं विस्मित[13]-जात-सम्भ्रमः
N] सम्-ऐक्षताऽक्षो बहु-मान-चक्षुषा ॥८॥ [८

१. ल$_{2}$—नास्ति । २. च—वसुधरं । रा प्र ब म ल$_{1}$ ल$_{2}$—सुसुन्दरं ॥ ३. अ—०र्णसंस्थितं । ४. आ—सहेमदाम्ना । फ—स्वहेम० । म—सुहेमदाम्ना । ल$_{1}$—सहेमधाम्ना । ५. आ—दिवाकराभेन रथेन संस्थितः । रा—दिवाकराभेन रथे समास्थितः । ६. फ—नास्ति ॥ ७. म—सु० । ल$_{2}$—स पू० । अ—सं० । ८. रा—समेखलां । ९. अ—समेतैः स हि तोरणास्थितं । आ—०तोरणे स्थितं ॥ १०. फ च ल$_{2}$—स दृप्तम् । प्र ब म ल$_{1}$—सुदृप्तम् । ११. आ—०णो । १२. आ—०कालोर्मिरिव । १३. रा ल$_{1}$ ल$_{2}$—विस्मृतवीरसं० ॥ अ—विस्मित-वीतसं० । फ च प्र ब म—विस्मितवीरसं० ॥

स तस्य वेगं च कपेर् महाऽऽत्मनः
पराऽऽक्रमं चाऽरिषु पार्थिवाऽऽत्म-जः ।
वि-[1]धारयन् स्वं च बलं निशा-चरो
N] हिम-क्षये सूर्य [2]इवाऽभ्य्-[2]अवर्धत ॥९॥ [९
स जात-मन्युः [3]प्रसम्-ईक्षित-क्र[3]मैः
द्रु[4]मे-स्थिरं सं[4]प्रति दुर्-जयाऽऽ[5]कृतिः ।
समा-हिताऽऽत्मा हनुमन्तम् आहवे
N] प्र-णोदयामास शि[6]तैर् त्रिभिः शरैः ॥१०॥ [१०
ततः कपिं तं प्रसम्-ईक्ष्य गर्वितं
जित-[7]श्रमं शत्रु-पराजयोदि[8]तम् ।
अवैक्षताऽक्षः समुदीर्ण-मानसः
६] स बाण-पाणिः प्रगृहीत-कार्मुकः ॥११॥ [११
स हेम-निष्काऽङ्गद-चारु-कुण्डलः
समा-ससादाऽऽशु पराक्र[9]मैः कपिम् ।
त[10]योर् बभूवाऽप्रतिमः समा-[11]गमः
N] सुराऽसुराणाम् इव सं-भ्रमो महान् ॥१२॥ [१२
चचा[12]ल भूमिर् न ततापं भास्करो
ववौ न वायुः प्र-चचाल मन्दरः ।

---

१. च रा प्र ब म ल₁ ल₂–विचारयन् । २. म–इव व्यवर्द्धत । अ–इवाभिवर्द्धते ॥ ३. आ–स समीक्षितं द्रुमं । फ–प्रसमीक्षितं द्रुमं । ४. आ–द्रुमस्थितः । फ–द्रुमस्थितः शुभं संप्रति । च रा प्र ब म ल₁ ल₂ अ–तः संयति । ५. फ–०कृतिम् । ६. आ–सितैस् ॥ ७. फ–०प्रभं । रा प्र ब म ल₁ ल₂–०क्रमं । ८. फ अ–०चितम् । रा प्र ब म–०द्धृतम् ॥ ९. अ–०क्रमं । १०. ल₂–ततो । ११. अ–पराक्रमः ॥ १२. अ–रराम ॥

कुमारम् अक्षं प्रसम्-ईक्ष्य सं-युगे
N] ननाद च द्यौर् उदधिश् च चुक्षुभे ॥१३॥ [१३
स तस्य वीरः सु-मुखान् पतत्रिणः
७पू] सुवर्ण-पुंखान् स-विषान् इवोरगान् ।
N] समाधि-संयोग-विमोक्ष[1]-साधकान्
७उ] शरान्[2] बहून् मूर्ध्नि कपेर् न्य्-अपातयत्[3] ॥१४॥ [१४
८१] स [4]तैः शरैर् मूर्ध्नि समं नि-पातितैः[5]
N] क्षरन्न् असृग्-दिग्ध-विवृत्त-लोचनः ।
९१] नवोदिताऽऽदित्य[6]-निभः शरांऽशुमान्[7]
N] व्य्-अराजताऽऽदित्य इवोष्ण-रश्मिभिः ॥१५॥ [१५
ततः[9] स पिंगाऽधिप-मन्त्रि-सत्तमः
समू-ईक्ष्य तं राजवरा[10]ऽऽत्म-जं रणे ।
उदग्र-चित्राऽऽयुध-चित्र-कार्मुकं
N] जहर्ष चाऽपूर्यत चाऽऽहवोत्सुकः[11] ॥१६॥ [१६
स मन्दराऽग्रस्थ[12] इवांऽशुमान् कपिर्
विवृद्ध-कोपो बल-वीर्य-[13]दर्पितः ।
कुमारम् अक्षं स-बलं स-वाहनं
N] ददाह नेत्राऽग्नि-मरीचि-रश्मिभिः ॥१७॥ [१७
ततः स बाणा[14]ऽसि-विचित्र-कार्मुकः

---

१. रा म–०विमोक्ष्य सायकान् । २. आ–छरान । ३. आ ल$_1$ ल$_2$–०यन् ॥ ४. ल$_1$–शितैः । ५. ल$_2$–निपातैः । ६. फ–०दितानूरुनिभः । रा प्र ब म ल$_1$ ल$_2$–०दितादित्यनिभान् । ७. रा प्र ब म ल$_1$ ल$_2$–शरां शितान् । अ–शरांशुभिः । ८. अ–इवांशु० ॥ ९. अ–ततस्तु । १०. ब ल$_1$ ल$_2$–राजमहागजं । ११. फ–०वोन्मुखः ॥ १२. प्र–मदरांगस्थ । १३. रा–०र्यधर्षितः । आ–०र्यविक्रमः ॥ १४. आ–बाणासनिचि० ।

शर[1]-प्रकर्षाऽऽयुध[1]-राक्षसाऽम्बु-दः ।
शरान् मुमोचाऽऽशु हरीऽऽश्वरा[2]ऽचले
N] बलाहको वृष्टिम् इवाऽचलोत्तमे ॥१८॥ [१८
ततः कपिस् तं रण-चंड-विक्रमं
विवृद्ध-तेजो-बल-वीर्य-विक्रमम्[3] ।
कुमारम् अक्षं प्रसम्-ईक्ष्य सं-युगे
N] ननाद हर्षाद् घन-तुल्य-निस्वनैः[4] ॥१९॥ [१९
स बाल-[5]भावाद् बल[5]-वीर्य-दर्पितः
प्रवृद्ध-मन्युः क्षत-जोपमेक्षणः ।
समा-ससादाऽप्रतिमं महा[6]-कपिं
N] [7]गजो महा-[8]कूपम् इवाऽऽवृतं तृणैः ॥२०॥ [२०
स तेन बाणैः प्र-सभं नि-पातितैश्[9]
चकार नादं घन-[10]नाद-नि[10]स्वनः ।
समुत्-पपाताऽऽशु नभः समा-चरन्
N] [11]भुजाऽऽदि-विक्षेप[11]ण-घोर-दर्शनः[12] ॥२१॥ [२१
समुत्-पतन्तं समुपा[13]ऽद्रवद् बली
स राक्षसानां प्र-वरैः[14] प्रताप-वान् ।
[15]रथी [15]हरि-श्रेष्ठ-तमं किरन् शरैः

---

१. आ–सरप्रकर्षांमुध० । च रा प्र ब म ल$_{1}$ ल$_{2}$–शरप्रवर्षौ युधि रा० । अ–शरप्रवर्षे युधि रा० । २. ब प्र ल$_{1}$ ल$_{2}$ अ–हरीक्षणाचले ॥ ३. आ–०र्थसायकम् । फ–०र्थसाधकम् । ४. फ–विक्रमः । ५. फ अ–०भावा-दतिवीर्य० । ६. फ अ–रणे कपिं । ७. ब प्र ल$_{1}$ ल$_{2}$–गजं । ८. रा ब प्र ल$_{1}$ ल$_{2}$–महामत्तम् ॥ ९. आ फ–०तितः । १०. फ–०नमेघनिस्वनम् । ११. रा प्र ब म–स जातकोपारुण० । ल$_{1}$ ल$_{2}$–संजात-कोपारुण० । आ–सजातिवि० । १२. आ–०र्शनम् ॥ १३. आ–समभिद्रवद् । १४. ब–प्रवरैः । १५. फ–महारथः श्रे० ।

१०] पयो-धरः शैलम् इवोग्र[1]-वृष्टिभिः ॥२२॥ [२२

स तान् शरांस् तस्य वि-मोक्षयन् कपिश्

चचार वीरः पथि वायु-सेविते ।

शराऽन्तरे मारुतिर्[2] एष निष्-पतन्[2]

११] मनो-जवः सं-यति चंड-विक्रमः ॥२३॥ [२३

तम् आत्त-बाणाऽऽसनम् आहवोन्-मुखं[3]

समा[4]-चरन्तं नि-शितैः शरोत्तमैः ।

अवैक्षताऽक्षं[5] बहु-मान-चक्षुषा

१२] जगाम चिन्तां[6] च सः मारुताऽऽत्म-जः ॥२४॥ [२४

ततः शरैर् भिन्न-भुजाऽन्तर-च्छविः

कपिः कुमारेण महाऽऽत्मनाऽग्र[7]-तः ।

महा-भुजः कर्म-विशेष-तत्त्व-विद्

N] व्य्-अचिन्तयत् तस्य[8] रणे पराऽऽक्रमम् ॥२५॥ [२५

अ-बालवद् बाल-दिवाकर-प्रभः

करोत्य् अयं कर्म महद् महा-बलः ।

न तावद् अस्याऽऽहव-कर्म-शोभिनः

१३] प्र-मार्पणे[9] मे मतिर् आशु जायते ॥२६॥ [२६

अयं महाऽऽत्मा च महांश् च वीर्य-तः[10]

समा-हितश् चाऽऽशु-गतिश् च सं-युगे । [२७पू

---

१. फ–इवाश्मवृष्टिभिः ॥ २. फ अ–मारुतवद्विनिष्पतन् ॥ ३. फ–आहवप्रियं । ४. फ अ–समापतन्तं । आ–समं चरन्तं । रा प्र ब म ल$_1$ ल$_2$–समावरन्तं । ५. प्र–अचक्षताक्षं । ६. फ–चिन्तामथ ॥ ७. फ प्र ब म ल$_1$ ल$_2$ अ–०ना नदन् । रा–०ना नुदन् । ८. आ–विचिंतयंस्तस्य ॥ ९. च रा प्र ब ल$_1$ ल$_2$–प्रमारणे ॥ १०. च रा प्र ब म ल$_1$ ल$_2$–वीर्यवान् ।

[1]महच् च कर्माऽप्रतिमं सम्-ईहते
N] न बाल-भावं समरे[2]ऽनु-वर्तते ॥२७॥ [N
अ-संशयं कर्म-गुणो[3]दयाद् [3]अयं
स-नाग-यक्षैर् [4]मुनिभिः स[4]-वायुभिः । [२७उ
पराऽऽक्रमोत्साह-विवृद्ध-मानसः
१४] सम्-ईक्ष[5]यते स[6]म प्र-मुखे व्यव-स्थित[6]ः॥२८॥
पराऽऽक्रमो ह्य् अस्य मनांसि कम्पयेत्
N] सुराऽसुराणाम् अपि शीघ्र-कारिणः । [२८
न खल्व् अयं ना[7]ऽभि-भवेद् उपेक्षितः
पराऽऽक्[8]रमो ह्य् अस्य[8] रणे वि-व[9]र्द्धते ॥२९॥
प्र-मापणं त्व् एव ममाऽस्य रोचते
१५] न वर्द्धमानोऽग्निर् उपेक्षितुं क्षमः । [२९
[10]इति प्र[10]-वेगं च प[11]रस्य कीर्तयन्
स्[12]व-कर्म-योगं च वि-धाय वीर्यवान् ॥३०॥
वधे कुमारस्य महा-बलस् तदा
N] चकार बु[13]द्धिं हनुमान् म[14]हा-कपिः । [३०
स तस्य तान् अ[15]ष्ट हयान् महा-जवान्[15]
समा-हितान् भार-स[16]हान् वि-वर्तिन[16]ः ॥३१॥

---

१. आ—महांश्च । २. आ—समरे तु व० ॥ ३. म—कर्मगुणैर्महोदयः । फ च रा प्र ब ल$_1$ ल$_2$—०णोदयोदयः । ४. फ अ—मुनिभिश्च वा० । ५. आ—समीक्षते । ६. फ—मत्समराग्रमास्थितः ॥ ७. ल$_2$—नापि भवेद् । ८. प्र—०क्रमस्त्वस्य । ९. रा—प्रवर्द्धते ॥ १०. अ—इत्युग्रवेगं । फ—इति प्रमेयं । ११. फ—बलस्य । १२. रा ब—सुकर्म० ॥ १३. फ—युद्धं । १४. फ—०बलः । अ—०मतिः । १५. च रा प्र ब म ल$_1$ ल$_2$—उग्रजवान् महाबलान् । १६. च रा प्र ब म ल$_1$ ल$_2$—०रसमाधिवर्तिनः । अ- ०रसहांस्तररिवनः ॥

रथे नि-युक्तान् नि-जघान वाजिनस्

N] तलैश् च तालैश् च कपिर् महा-बलः[1] । [३१

ततस् तलेनाऽभि-हतो महा-रथः

स[2] तस्य[2] पिंगाऽधिप-मन्त्रिणा भृशम् ॥३२॥

प्रभग्न-नीडः[3] स[3]-युगाऽक्ष-कूबरः

१६] पपात भूमौ हत-वाजि-सारथिः[4] । [३२

स तं परि-त्यज्य महा-रथो रथं

स-कार्मुकः खड्ग-धरोऽभि-पुप्लुवे ॥३३॥

तपोऽभि-योगाद् ऋषिर् उग्र-विग्रहो[5]

१७] वि-हाय देहं मरुताम् इवाऽऽलयम् (?ये) । [३३

ततः कपिस् तं वि-चरन्तम् अम्बरे

पतत्रि-राजाऽनिल-सिद्ध-सेविते ॥३४॥

स मारुतिर् मारुत-वेगवांस्[6] तदा[6]

१८] करेण जग्राह च पादयोर् दृढम् । [३४

स तं समा-विध्य सहस्र-शः कपिर्

महोरगं क्रुद्ध इवाऽण्डज[7]-जेश्वरः ॥३५॥

कुमारम् अक्षं प्रविकीर्ण-भूषणं

१९] विनिष्-पिपेषाऽऽशु-गतिर्[8] मही-तले । [N

स भग्न-बाहूऽऽरु-कटी-शिरोधरः

क्षरन्न् असृङ् निर्-मथिताऽस्थि-लोचनः ॥३६॥

---

१. रा म–०बलः । २. च रा ब म ल$_1$ ल$_2$ अ–स तेन । प्र-रथेन ॥ ३. आ–०नीडेषु । ४. फ–०जिकोम्बरात् । रा प्र ब म ल$_1$ ल$_2$ अ–०जिनो रथात् । ५. अ–०संग्रहो ॥ ६. आ–०वेगवान्...। ७. आ–इवांडिजेश्वरः ॥ ८. रा प्र ब म ल$_1$ ल$_2$–०गतिं ॥

विमुक्त-सन्धिः[1] प्रविकीर्ण-बन्धनो
२०] हतः क्षितौ वायु-सुतेन राक्षसः ।
महा-कपिर् भूमि-तले नि-पात्य[2] तं[2]
N] चकार रक्षोऽधि-पतेर् महद् भयम् ॥३७॥ [३६
महर्षिभिश् च[3] प्र-वरैर्[3] महा-व्रतैः
सम्-एत्य भूतैश्[4] च स-यक्ष-पन्नगैः[4] ।
सुरैश् च सेन्द्रैर्[5] भृश-जात-विस्मयैर्[5]
२१] हते कुमारे स[6] कपिर्[6] निर्-ईक्षितः ॥३८॥ [३७
स तं नि-हत्याऽ[7]मर-वीर-दुर्ज्जयं
कुमारम् अक्षं क्षत-जोपमेक्षणः ।
तद् एव वीरोऽथ[9] जगाम[9] तोरणं
२२] कृत-क्षणः काल इव प्रजा-क्षये ॥३९॥ [३८

इत्यार्षे[10] रामायणे[11] सुन्दर-काण्डेऽक्ष-वधो[11]
नाम त्रयश्चत्वारिंशः सर्गः ॥४३॥

---

१. आ–०सत्त्वः । २. आ–निर्मथ्य । फ–निपिष्य । अ–निषिच्य । प्र–निपातितं ॥ ३. आ–चक्रधरैर् । म ल$_{1}$ ल$_{2}$–चक्रचरैर् । ४. च रा ब प्र म ल$_{1}$ ल$_{2}$–यक्षैश्च सभूतपन्नगैः । ५. अ–सेन्द्रैस्तु भृशं जयोदयैः । ६. फ–बहुभिर् ॥ ७. प्र ब म ल$_{1}$ ल$_{2}$ अ–निहत्यासुरवी० । ८. च प्र ब म ल$_{1}$ ल$_{2}$–क्षतजेक्षणं कपिः । आ–क्षतजोपमेक्षणं । ९. च रा प्र ब म ल$_{1}$ ल$_{2}$–वीरः प्रतिगृह्य ॥ १०. ल$_{2}$–इति । ११. च रा प्र ब म ल$_{1}$–०ण्डेऽक्ष-कुमारवधो ॥

ततस् तु रक्षोऽधिपतिर्[1] महा[2]ऽऽत्मा
हनूमताऽक्षे नि-हते कुमारे ।
मनः समा-धाय वि[4]वृद्ध-रोषः
१] समा-दिदेशेन्द्रजितं रणार्थं[3] ॥१॥ [१

त्वम् अस्त्र-विच्[5] छस्त्र-विदां वरिष्ठः
प्रसन्न-बुद्धिः समरेष्व्[6] अ-धृष्यः ।
सुरेषु सेन्द्रेषु च दृष्ट-कर्मा
२] पितामहाऽऽराधन-सञ्चिताऽस्त्रः ॥२॥ [२

तवाऽस्त्र-बलम् आ-साद्य नो[7] सुराः स-मरुद्-गणाः ।
३] अन्ये[8] च त्रिषु लोकेषु सं-युगे[9]ऽधि-गताः शैमम्[10] ॥३॥ [३

भुज-वीर्याऽभि-गुप्तश्[11] च तपसा चाऽभि-रक्षितः ।
४] देश-काल-विधि-ज्ञश् च त्वम् एव मति-स(?म)त्तम ॥४॥ [४

न तेऽस्त्य् अ-साध्यं समरेषु कर्मणां[12]
न तेऽस्ति तुल्यं मति-दर्शनेषु च ।[13]

---

१. ब प्र ल१—०तेर् । २. प्र—महात्मना । ३. च रा ब प्र म ल१—तमिन्द्रकल्पं । अ—तदिन्द्रकल्पं । ४. च अ—सरोषात् । रा प्र ब म ल१ ल२—सरोषः । ५. फ—०भृच्छस्त्रभृतां । प्र ब म ल१—विच्चास्त्रविदां । ६. च रा प्र ब म ल१ ल२—समरेऽप्रधृष्यः । अ—समरेषु युक्तः । ७. फ—न सुराः । च अ—सासुराः । रा प्र ब ल१ ल२—ससुराः । म—नासुराः । ८. म अ—अन्येषु । ९. फ—०गेषु गताः । च रा ब—०गेऽभिगताः । अ—०गे न गताः । १०. ल१ ल२—श्रियं । ११. अ—०गुप्तैश्च । १२. ब ल१ ल२—कर्मणा । १३. च प्र ब म ल१ ल२—न तेऽस्त्यकार्यं मतिदृष्टपूर्वं । रा—न तेऽस्त्यकार्यं-मतिदृष्टपूर्वं ।

न [1]चाऽपि [2]कश्चित् त्रिषु सं-ग्रहेषु
५] [3]व्यति-क्रमेद् [3]अस्त्र-बलं बलं च ॥५॥ [५
ममाऽनु-रूपं [4]सु-महद् बलं ते
६पू] पराऽऽक्रमश् चाऽर्थ-परिग्रहश् च ।[5]
[6]भवन्तम् आ-साद्य रणाऽव-मर्दे
७] [7]मनः [8]शमं गच्छति निश्चिताऽर्थम् ॥६॥[9] [६
नि-हताः किं-कराः सर्वे जम्बु-माली च राक्षसः ।
७] अमात्य-पुत्रा वीराश् च पंच-सेनाऽग्र-[10]गांस् [10]तथा ॥७॥ [७
अक्षः कुमारोऽति-बलो दुर्-धरश् च महा-बलः । [८उ
८] न [11]चै ते समरे कश्चित् तुल्योऽस्ति रिपु-सूदनः ॥८॥ [N
न [12]चैवं [13]सारता [13]तेषु यथा त्वयि महा-द्युते । [९
९] तस्माद् गच्छाऽद्य [14]पुत्र [14]त्वं युद्धाय वि-जयाय च ॥९॥ [N
[15]इमं त्व् अ-धृष्यं [15]परमं बलेषु
कपेः प्र-भावं च पराऽऽक्रमं च ।[16]

---

१. च ल$_1$ ल$_2$ अ रा प्र–तेऽस्ति । २. रा प्र किंचित् । ३. च रा प्र ब म ल$_1$ ल$_2$–न वेदयस्तेऽस्त्र० अ–न वेद यस्तेऽस्त्रबलाबलं । ४. फ च रा प्र ब म ल$_1$ ल$_2$ अ–तपसो । ५. रा प्र ब–पराक्रमं शास्त्रपरिग्रहं च । म ल$_1$ ल$_2$–पराक्रमं चास्त्रपरिग्रहं च । ६. आ–नन्वेवम् । रा प्र ब ल$_1$ ल$_2$–न त्वेवम् । अ–त्वमेवम् । ७. आ जनः । ८. आ–०र्थः । ९. अतः परमधिकः पाठः–आ रा प्र ब म ल$_1$ ल$_2$–सर्वेषु कार्येषु समर्थनीया । बुद्धिस्त्वयाद्येह महानुभावः । पुनश्च म–निहत्य रक्षांसि बहूनि संयुगे कुमारमक्षं च विनाश्य वानरः । अभीतवद्गर्जति तस्य निग्रहं त्वयाशु रक्षोवर संविधीयताम् । १०. रा प्र ब म ल$_1$ ल$_2$–०गा हताः । ११. फ–तु । १२. फ–चमे । १३. रा प्र ब म ल$_1$ ल$_2$ अ–सारतत्तेषु । १४. फ–वै पुत्र । १५. फ अ–अयं ह्यधृष्यः परमो । च प्र ब म ल$_1$ ल$_2$–इमं ह्यधृष्यं । १६. फ–कपेः प्रभावश्च पुराक्रमश्च ।

त्वम् आत्मना चैव सम्[1]-ईक्ष्य सर्वं[2]
१०] कुरुष्व वीर्यं[3] स्व-गुणा[4]ऽनु-रूपम् ॥१०॥ [१०
बलाऽव-मर्दस् त्वयि सं[5]-निविष्टो
यथा न गर्हेयुर् उदार-सत्त्वाः ।
तथा सम्-ईक्ष्या[6]ऽऽत्म-बलं परं च
११] प्रजा[7]-कृते कर्म[8] समा-रभस्व ॥११॥ [११
न खल्व् इयं मतिर् मह्यं (?) यत् त्वां सं-प्रेषयाम्य् अहम् ।
१२] इयं तु राज-धर्माणां क्षत्रियाणां[9] गतिर् मता ॥१२॥ [१४
नाना-सत्त्वैश् च सं-ग्रामे त्वया सार्द्धम् अरिं-दम ।
१३] अवश्यम् एव योद्धव्यं कार्यस्य[10] (?श्च) वि-जयो रणे ॥१३॥ [१५
ततः पितुस् तद् वचनं नि-शम्य
प्रदक्षिणी-कृत्य च तं महाऽऽत्मा[11] ।
चकार भर्तारम् अ-दीन-सत्त्वो
१४] रणाय वीरः प्रतिपन्न-बुद्धिः (?म्) ॥१४॥ [१६
ततस् तैस्[12] तैस् गुणैर् इष्टैर् इन्द्र-जित् प्रति-पूजितः ।
N] युद्धोद्यम-कृतोत्साहः सं-ग्रामं प्रत्य्-अपद्यत[13] ॥१५॥ [१७
श्री-मान् पद्म-पलाशाऽक्षः स रक्षोऽधि-पतेः सुतः ।
N] निर्-जगाम[14] महा[15]-वेगः समुद्र इव पर्वणि[16] ॥१६॥ [१८

---

१. रा प्र ब म $ल_1$ $ल_2$—वै प्रसमीक्ष्य । २. फ—स्त्वमात्मनश्च प्रसमीक्ष्य सत्त्वं । ३. प्र म $ल_1$ $ल_2$—कार्यं । ४. अ—स्वबलानु० । ५. आ—सन्निकृष्टे । ६. फ—समीक्ष्य स्वबलं । ७. फ—पराक्रमं । च रा प्र ब म $ल_1$ $ल_2$ प्रजाकृतं । ८. आ च रा प्र ब म $ल_1$ $ल_2$ अ—च । ९. आ—क्षत्रियस्य । १०. फ च रा प्र ब म अ—काम्यश्च । $ल_1$ $ल_2$—कस्यचिद् । ११. आ—प्रदक्षिणं रक्षसुतः प्रभावान् । च अ—प्रदक्षिणं रक्षसुतः प्रभावः । १२. आ—तैः स्वैर् । १३. आ—समपद्यत । १४. फ—नियुक्तो ? । अ—चुक्षुभे स । १५. फ—महाभागः । च प्र ब $ल_1$ $ल_2$—०वेगः । १६. फ—पर्वसु ॥

स पक्षि-राजोत्तम-तुल्य-वेगैर्
[1]व्याघ्रैश् चतुर्भिः शित-तीक्ष्ण-दंष्ट्रैः ।
[2]रथं समा-युक्तम् असंग-वेगं
१८] समा-रुरोहेन्द्र-जिद् इन्द्र-कल्पः ॥१७॥ [१९
४४स.] स रथी धन्विनां श्रेष्ठः शूरः शस्त्र-भृतां वरः ।
१] रथेनाऽऽदित्य-वर्णेन तं वानरम् उपाऽद्रवत्[3] ॥१८॥ [२०
स तस्य रथ-निर्घोषं ज्या-स्वनं कार्मुकस्य च[4] ।
२] नि-शम्य तु हरि-श्रेष्ठः[5] संप्र-हृष्ट-तरोऽभवत् ॥१९॥ [२१
[6]महत् स चापम् आ-दाय सित-पीतांश् च सायकान् ।
N] हनूमन्तम् अभि-प्लुत्य[7] जगाम युधि वानरम् ॥२०॥ [२२
तस्मिंस् ततः संयुग-जात-हर्षे
रणाय निर्-गच्छति बाण-पाणौ ।
दिशश् च सर्वाः कलुषी-र्बभूवुर्
N] मृगाश् च रौद्रं[9] बहु-धा वि-नेदुः ॥२१॥ [२३
समा-ययुस् तत्र तु[10] नाग-यक्षा
महर्षयश् चक्र-धराश् च सिद्धाः ।
ततः समा-प्लुत्य तु पक्षि-संघा
N] वि-नेदुर् उच्चैः परम-प्रहृष्टाः २२॥ [२४
आ-यान्तं स-रथं दृष्ट्वा शूरम् इन्द्र-जितं हरिः ।
३] ननाद च महा-नादं व्य्-अवर्धत च[11] वेग-वान् ॥२३॥ [२५

---

१. रा प्र ब म ल₁ ल₂–सिंहैश् । अ–व्याडैश् । २. आ–रथे ॥ ३. फ–०पागमत् । च रा प्र म ल₁ ल₂ अ–०पाक्रमत् । ४. आ–तु । च–तत् । ५. फ–हरिशार्दूलः । ६. ल₁ ल₂–स महच्चापम् । ७. फ–०द्रुत्य । ८. रा प्र ब म ल₁ ल₂–प्रदिशश्च नेदुः । अ–कलुषा ब० । ९. ल₁ ल₂ अ–रौद्रा । १०. फ रा प्र ब म ल₁ ल₂–च । ११. आ–स ॥

इन्द्र-जित् तु रथं दिव्यम् आ-स्थितश् चित्र-कार्मुकः ।
४] धनुर् वि-स्फारयामास तडित्-स्फूर्जित-निस्वनम्[1] ।।२४।। [२६
ततः समेताव् अति-तीक्ष्ण-वेगौ
महा-बलौ तौ रण-निर्विशंकौ ।
कपिश् च रक्षोऽधि-पतेश् च पुत्रः
५] सुराऽसुरेन्द्राव् इव बद्ध[2]-वैरौ ।।२५।। [२७
स तस्य वीरस्य महा-रथस्य
धनुष्-मतः सं-यति सम्म-मतस्य ।
शर-प्रवेगं वि-तथं[3] प्र[3]-वृद्धं
६] चकार मार्गे पितुर् अ-प्रमेयः ।।२६।। [२८
ततः शरान् आयत-तीक्ष्ण-शल्यान्[4]
सु-पत्रिणः काञ्चन-चित्र-पुंखान् ।
मुमोच वीरः पर-वीर-हन्ता
N] समन्त-तो वज्र-निपात-वेगान् ।।२७।। [२९
स तस्य तं[5] स्यन्दन-निस्वनं च
मृदङ्ग-भेरी-पणव[6]-प्रणादम् ।
नि-शम्य शब्दं पुनर् उत्-पपात
N] वि-कृष्यमाणस्य च कार्मुकस्य ।।२८।। [३०
शराणाम् अन्तरेष्व्[7] आशु[7] न्य्-अवर्तत महा-कपिः ।
N] हरिस् तस्याऽति-वेगस्य मोहयंल् लक्ष(?क्ष्य)-संग्रहम् २९ [३१
शराणाम् अग्र-तस् तस्य पुनः[8] समभि-र्वर्तत ।
७] प्र-सार्य हस्तौ मति-मान् उत्-पपाताऽनिलोपमः ।।३०।। [३२

---

१. आ—०स्वनः । २. च रा प्र ब म ल$_2$—वृद्ध० । ३. आ—विपुलं च तत्र । ४. फ—०वेगान् । ५. फ च रा प्र ब अ—तत् । फ अ—०पटहस्वनं च । च रा—०पटहप्रमाणम् । प्र म ल$_1$ ल$_2$—०पटह प्रणा० । ७. फ—अन्तरे ह्याशु । ८. फ—पुनरेवाभ्यव० । रा प्र ब म ल$_1$ ल$_2$—पुनश्चैवाभ्यव० ।।

तावू उभौ वेग-सम्पन्नौ रण-कर्म्म-विशारदौ ।

८] सर्व[1]-भूत-मनो-ग्राहि चक्रतुर् युद्धम् उत्त-तमम् ॥३१॥ [३३

हनूमतो वेद न राक्षसोऽन्तरं

न मारुतिस् तस्य महाऽऽत्मनोऽन्तरम् ।

परस्परं दुर्वि-[2]षहौ बभूवतुः

९] [3]समा-गतौ मारुत-[4]तुल्य-विक्रमौ ॥३२॥ [३४

ततः स [5]लक्ष्ये [6]प्रवि-हन्यमाने

शरेषु घोरेषु च सं-पतत्सु । [३५पू

जगाम चिन्तां महतीं महाऽऽत्मा- [३५[3]

N] ऽवि-गाहयंस् तस्य कपेः प्र-वेगम् ॥३३॥ [N

स तं सम्-ईक्ष्याऽप्रति-[7]वीर्य-वेगं

महा-कपिं मारुत-तुल्य-वेगम् ।

मतिं चकाराऽऽशु ततो महाऽऽत्मा [N

N] समाधि-संयोग-समाहिताऽऽत्मा ॥३४॥ [३५[4]

दिव्याऽस्त्र-योगेन वि-नाशनाय

N] यदा न मृत्युर् जनितोऽस्य तेन ।[8] [N

[9]तदा मतिं राक्षस-राज-सूनुश्

चकार तस्मिन् हरि-वीर-मुख्ये ।

अ-वध्यतां तस्य कपेः सम्-ईक्ष्य

१०] कथं [10]नु कुर्याद् (?म्)इति नि-ग्रहांऽर्थम् ३५ [३६

ततः पैतामहं वीरः सोऽस्त्रम् अस्त्र-विदां वरः ।

N] सं-दधे सु[11]महा-तेजास् तं हरि-प्रवरंप्रति ॥३६॥ [३७

---

१. फ-सर्वरूपम० । २. म ल$_1$ ल$_2$ अ-निर्विषयौ । ३. रा प्र ब म ल$_1$ ल$_2$-समेत्य तौ । ४. च-०भीमत्रि० । ५. आ-लक्षे । ६. आ प्र ब म ल$_1$ ल$_2$-प्रतिह० । ७. आ-०वीर्यवेगं । ८. फ अ-नास्ति । ९. फ अ-ततो । १०. फ-नियच्छेयमितिप्र० । ११. आ-स्म म० ॥

अ-वध्यं सर्व-भूतानां तद् अस्त्रं न बबन्ध तम् ।
N] अस्त्रं तद् वि-तथं दृष्ट्वा स जगर्हे पिता-महम् ॥३७॥[1] [N
अथाऽऽगस्य ततो ब्रह्मा मारुताऽऽत्म-जम् अब्रवीत् ।
माऽनृतं मद् वचः कार्षीर् ग्रहणं गच्छ वानर ।
N] एवम्[2] उक्तोऽथ हनुमांल् लक्ष(?क्ष्य)-भूतः स्थितो गतः ३८ [1] [N
अ-वध्योऽयम् इति ज्ञात्वा शस्त्रेणा[3]ऽस्त्र-शास्त्र-वित् ।
N] बबन्ध युधि वि-क्रान्तं[4] मारुताऽऽत्म-जम् इन्द्र-जित् ॥३९॥ [३८
स ततो ब्रह्मणोऽस्त्रेण बद्धः कपि-वराऽऽत्म-जः ।
११] अभवन् निर्वि-चेष्टश्[5] च[6] पपात धरणी-तले ॥४०॥ [३९
ततस् तु वि-ज्ञाय महाऽस्त्र-बन्धं
प्रभोः प्र-भावाद् वि-गतोग्र[7]-वेगः ।
पिता-महाऽनु-ग्रहम् आत्मनश् च
N] वि-चिन्तयामास हरि-प्रवीरः ॥४१॥ [४०
ततः स्वायंभुवैर् मन्त्रैर्[8] ब्रह्माऽस्त्र-प्रतियन्त्रितः ।
N] हनुमांश् चिन्तयामास वर-दानं पिता-महात् ॥४२॥ [४१
न मेऽस्य बन्धस्य न[9] शक्तिर् अस्ति
वि-मोक्षणे लोक-गुरोः प्रसादात् ।
अवश्यम् एवं वि-हितस् तु मन्त्रो
N] मयाऽऽत्म-योनेर् अनु-वर्तितव्यः ॥४३॥ [४२
स[10] वीर्यम् अस्त्रस्य कपिर् विचार्य[11]
तथाऽऽत्म-शक्तिं परि-चिन्त्य वीरः ।
पिता[12]-महाऽनु-ग्रहम् आत्मनश् च[12]

---

१. फ च रा प्र ब ल$_1$ ल$_2$ अ—नास्ति । २. म—एवमुक्तस्तथेत्युक्त्वा । ३. फ अ—तमस्त्रेणास्त्र० । च रा प्र ब म ल$_1$ ल$_2$—तमस्त्रेणास्त्रशस्त्रभृत् । ४. फ—विक्रान्तो । ५. आ—०चेष्टस्तु । ६. आ—बद्धं । ७. आ—विगतप्रयोगः । च प्र—विगतः प्रयोगः । ८. आ—०मन्त्रितैः । ९. आ—च । १०. ल$_1$—वीर्यं स मन्त्रस्य । ११. म—विदित्वा । १२. आ—पितामहाज्ञामनुवर्तते स्म ।

N] पिता-महाऽऽज्ञाम् अनु-वर्तते स्म ॥४४॥ [४३
अस्त्रेण चाऽपि बद्धस्य भयं मम[1] न जायते ।
N] पितामह-महेन्द्राभ्यां रक्षितस्याऽनिलेन च ॥४५॥ [४४
ग्रहणं चाऽपि रक्षोभिर् महन्[2] मे गुण-दर्शनम्[2] ।
N] राक्षसेन्द्रेण सं-वादस् तस्माद् गृह्णन्तु मां परे ॥४६॥ [४५
स निश्चिताऽर्थः पर-वीर-हन्ता
समीक्ष्य-कारी विनिवृत्त-चेष्टः ।
परैः[3] प्र-सह्याऽभि-गतैर्[4] नि-गृह्य
N] बभूव तैस् तैः परि-भर्त्स्यमानः ॥४७॥ [४६
ततस् तु ब्रह्मणोऽस्त्रेण स बद्धो वानरर्षभः ।
११] अभवन् निर्वि-चेष्टश्[5] च वि-षण्णश् चैव लज्जया ॥४८॥ [N
तथा[6] तं[6] राक्षसा दृष्ट्वा निर्वि-चेष्टम् अरिं-दमम् ।
१२] बबन्धुः पाश-बन्धैश् च द्रुम-चीरैश् च मारुतिम् ॥४९॥ [४७
स रोचयामास[7] पुनः[8] स्व-बन्धं[8]
प्र-सह्य वीरैर्[9] अभिनिर्-गृहीतः ।
कौतूहलान् मां युधि राक्षसेन्द्रो
N] द्रष्टुं व्यव-स्येद् इति निर्वि-चेष्टः ॥५०॥ [४८
स बद्धस् तेन बन्धेन वि-मुक्तोऽस्त्रेण वीर्य-वान् ।
N] अस्त्र-बन्धो हि सामान्यं न बन्धम् अनु-वर्तते ॥५१॥ [४९

---

१. ल$_1$—न मम विद्यते । म ल$_2$—मम न विद्यते । २. आ—माहात्म्ये गुण उत्तमः । च—माहात्म्यैर्गुणवत्तरम् । रा प्र ब म ल$_1$ ल$_2$—मामेभिर्गुणवत्तरम् । ३. आ—परः । ४. च—प्रसस्ताभि० । रा प्र ब—प्रशस्ताभि० । म ल$_1$ ल$_2$—प्रशस्ताभि० । ५. आ—निर्विचेष्टाभिर्विष० । ६. रा म—तं तथा । ल$_1$ ल$_2$—ततः तं । ७. आ—रोषया० । फ—रोधया० । च रा प्र ब म ल$_1$ ल$_2$—गोपया० । ८. आ—पुनश्च बद्धं । च—पुनः स्वबंधनं । ९. आ—धीरैर् ॥

अथेन्द्र-जित् तं द्रुम-चीर-बद्धं
सम्[1]-ईक्ष्य वीरः कपि-राज-मुख्यम् ।
वि-मुक्तम् अस्त्रेण जगाम चिन्तां
N] न बन्धम् [2]अन्यं ह्य् [2]अनु-वर्ततेऽस्त्रम् ॥५२॥ [५०
अहो महत् कर्म कृतं निर्-[3]अर्थं
न राक्षसैर् मन्त्र-[4]कृतिर् हि[4] शक्यौ[5] ।
पुनश् च नाँ[6]ऽस्त्रे प्र-हतेऽस्त्रम् अन्यत्[6]
१४] प्र-वर्तते सं-यति तत् खलु स्मँ[7] ॥५३॥ [५१
अस्त्र-बन्धँ[8]-विमोक्षं तु[9] हनुमान् नाँ[10]ऽव-बुध्यत ।
१५] कृष्यमाणो हि रक्षोभिस् तैश् च बन्धैर् नि-पीडितः ॥५४॥ [५२
हन्यमानस् तु[11] तैः[11] क्रूरै राक्षसैः काष्ठ-[12]मुष्टिभिः ।
१६] समीपं राक्षसेन्द्रस्य समा-[13]कृष्यत वानरः ॥५५॥ [५३
अथेन्द्र-जित् तं प्रसम्-ईक्ष्य मुक्तं
शस्त्रेण बद्धं द्रुम-चीर-[14]बन्धैः ।
व्य्-अदर्शयँ[15]त् तत्र महा-बलं तं[15]
N] हरि-प्रवीरं स-गणाय राज्ञे ॥५६॥ [५४
तं मत्तम् इव मातंगं बद्धं [16]कपि-वरोत्तमम् ।

---

१. आ-विचार्य । २. फ-अन्यत्त्वनु० । ३. आ-निरर्थकं । ४. आ-०न्त्रकृतेन । च-राक्षसैरत्र कृ० । ५. च-शक्यः । ६. रा प्र ब म $ल_1$ $ल_2$-नास्त्रैर्हतमन्यदस्त्रम् । ७. रा प्र ब म $ल_1$ $ल_2$-स्म नः । ८. च-०बन्धं वि० । ९. रा प्र ब म $ल_1$ $ल_2$ अ-च । १०. रा प्र ब म $ल_1$-नान्व० । $ल_2$-०बुध्यते । ११. आ $ल_1$ अ-ततः । १२. $ल_1$ $ल_2$ अ-कामरूपिभिः । १३. फ-प्राकृष्यत स ॥ अ-प्राकृष्यत च । १४. अ-०सूत्रैः । १५. अ-०र्शयंस्तत्र म० । आ-०यन् महाबलं तं । १६. म $ल_1$ $ल_2$-हरिव० ।

N] राक्षसा राक्षसेन्द्राय रावणाय न्य्-अवेदयन्[1] ॥५७॥ [५५
कोऽयं कस्य कथं[2] वा[3]ऽपि किं-कार्यः किं-व्यपाऽऽश्रयः ।
इति राक्षस-वृद्धानां तेषां सं-जज्ञिरे कथाः ॥५८॥ [५६
हन्यतां दह्यतां वा[4]ऽपि भक्ष्यताम् इति चाऽपरे ।
N] राक्षसास् तत्र सं-क्रुद्धाः परस्परम् अथाऽब्रुवन् ॥५९॥ [५७
स हन्यमानो बहुभिश् च तत्र
सम्-एत्य रक्षोऽधिप-पा[5]द-मूलम् ।
ददर्श राज्ञः पर-वीर-हन्तुर्
N] गृहं महा-रत्न-परि[6]च्छदं तत् ॥६०॥ [५८
तं ददर्श महा-तेजा रावणः कपि-सत्तमम् ।
N] रक्षोभिर् वि-कृताऽऽकारैः कृष्यमाणं ततस्-ततः ॥६१॥ [५९
राक्षसाऽधिपतिः क्रुद्धो ददर्श कपि-कुञ्जरम् ।
N] तेजो-बल[7]-समायुक्तं तपन्तम् इव भास्-करम् ॥६२॥ [६०
स रोष-संवर्द्धित[8]-ताम्र-दृष्टिर्
दशाऽऽननस् तं कपिम् अन्व[9]-अवैक्षत ।
अथोप-विष्टान् कुल-शील-वृद्धान्
२०] समा-दिशत् तं प्रति मन्त्रि-मुख्यान् ॥६३॥ [६१
यथा-क्रमं तैः[10] स कपिर् हि पृष्टः [६२[3]
यथा-क्रमेणैव कपिर् हि दृष्टः । [N

१. फ–न्यदर्शयन् । २. फ अ–कुतो । ३. च–चापि ॥ ४. फ–हन्यतां क्वापि । रा ब म $ल_1$–हन्यतां चापि । प्र $ल_2$–हन्यतां वा० । ५. फ अ–०पपार्श्वमूले । ६. आ–च्छदन्तम् । रा–छिदन्तम् । ब प्र–०छिदन्तत् । अ–०छदं च । ७. फ–तेजोवर्ण० । ८. फ रा प्र ब म $ल_2$–०संवर्त्तितता० । अ–संवर्त्तितवाम० । ९. अ–अन्ववेक्ष्यत । १०. फ–संप्रति मन्त्रिमुख्यैः । रा प्र ब म $ल_1$ $ल_2$–तैर्हि कपिः स पृष्टः ।

सर्वैः स पृष्टस् तु विसृष्ट-कार्यैः

N] कार्याऽर्थम् अर्थस्य च मूलम् आदौ[1] । [६२[2]

नि-वेदयामास कपीऽऽश्वरस्य

२१ड़] दूतः सकाशाद् अहम् आ-गतोऽस्मि ॥६४॥ [६२उ

इत्यार्षे रामायणे सुन्दरे[2]-काण्डे इन्द्रजिद्[3]-युद्धे हनुमद्-ग्रहणं

नाम चतुश्चत्वारिंशः सर्गः ॥४४॥

---

१. फ–एव । २. रा अ–नास्ति । ३. फ च रा प्र व म ल$_1$ ल$_2$–नास्ति ॥

ततस् तु कर्मणा[1] तस्य वि[2]-स्मितं भीम-विक्रमम्[2] ।
१] हनुमान् रोष-ताम्रा[3]ऽक्षं रक्षोऽधिपम् अवैक्षत ॥१॥ [१
भ्राज-मानं महाऽर्हेण काञ्चनेन[4] वि-राजता ।
२] मुक्ता-जालाऽऽवृताऽन्तेन मुकुटेन महा-द्युतिम्[5] ॥२॥ [२
वज्र-संयोग-संयुक्तैर् महाऽर्ह-मणि-विग्रहैः ।
३] हैमैर् आ-भरणैश् चित्रैर् मानसैर् उप-शोभितम् ॥३॥ [३
४पू] महाऽर्ह-क्षौम-संवीतं रक्त-चन्दन-भूषितम् । [४पू
N] पूर्ण-चन्द्रांऽशु-वर्णेन हारेणा[6]ऽतिवि-राजितम्[6] ॥४॥
४उ] अनु[7]-लिप्तं वि-चित्राभिर्[8] वि-विधाभिश् च भक्तिभिः । [N
वि-पुलैर् दर्शनीयैश् च रक्ताऽक्षैर् भीम-दर्शनैः ॥५॥
५] दीप्त-तीक्ष्ण-महा-दंष्ट्रैः प्रलम्ब-दशन-च्छदैः । [५
शिरोभिर् दशभिर् भीमं[9] भ्राज-मानं महौजसम् ।
६] नाना-व्याल[10]-मृगाऽऽकीर्णैः शिखरैर् इव मन्दरम् ॥६॥ [६
नीलाऽञ्जन-चय-प्रख्यं हारेणोरसि राजितम्[11] ।
N] पूर्ण-चन्द्रांऽशु-वर्णेन तडिद्-वन्तम्[12] इवाऽम्बु-दम् ॥७॥ [७
बाहुभिर् बद्ध-केयूरैश् चन्दनोत्तम-भूषितैः ।
७] भ्राज-मानं शुभैः[13] पीनैः[13] पञ्च-शीर्षैर् इवोर-गैः ॥८॥ [८

---

१. आ फ–तैः कर्मभिस्तस्य । च रा–कर्मणस्तस्य । २. आ–विस्मितो भीमकर्म्मणः । फ–विस्मितो भीमविक्रमः । ३. फ–०ताम्राक्षो । ४. रा प्र ब म ल$_1$ ल$_2$–कवचेन । ५. फ–महौजसा । रा–महामतिम् । ६. फ अ–हारेणाभिवि० । च रा प्र व म ल$_1$ ल$_2$–हारेणोरसि राजता । ७. रा प्र ब ल$_1$ ल$_2$–अणुभिः सुवि० । ८. आ–०निःस्वनैः । च प्र ब म ल$_1$–०विक्रमैः । ९. फ–भीमैः । १०. च रा–०व्याडमृगा० । फ–०गाकीर्णैः । ११. आ–राजता । १२. आ–सबलाकम् । १३. अ–सुवर्णाभैः ॥

महति स्फाटिके चित्रे रत्न-संयोग-संस्कृते[1] ।
८] उत्तमाऽऽस्तरणाऽऽस्तीर्णे सूऽप[2]-विष्टं वराऽऽसने ॥९॥ [९
अलंकृताभिर् अत्य्-अर्थं प्र-मदाभिः समन्त-तः ।
९] बाल-व्यजन-हस्ताभिस्[3] ताभिः[3] समभि[4]-वीजितम् ॥१०॥ [१०
१०पू] दुर्-धरेण प्र-हस्तेन महा-पार्श्वेन रक्षसा ।
१२पू] मन्त्रिभिर् मन्त्र-तत्त्व-ज्ञैर् नि-कुम्भेन च मन्त्रिणा ॥११ [११
उपाऽऽस्य[5]-मानं रक्षोभिश् चतुर्भिर् बल[6]-दर्पितैः ।
११] कृत्स्नं[7] परि-वृतं लोकं[8] चतुर्भिर् इव सागरैः ॥१२॥ [१२
N] ताभ्यां मन्त्राऽर्थ-विद्भ्यां[9] च सारणेन[10] शुकेन[10] च ।
१२उ] उपाऽऽस्य[11]-मानं सचिवैः सुरैर् इव सुरेश्वरम् ॥१३॥ [१३
अपश्यद् राक्षस-पतिं हनुमान् अ-मितौजसम्[12] ।
१३] वेष्टितं[13] मेरु[14]-शिखरैः स-तोयम् इव तोय-दम् ॥१४॥ [१४
बन्धनैः पीड्य-मानोऽपि रक्षोभिर् भीम-विक्रमः[15] ।
१४] वि-स्मयं परमं गत्वा रक्षोऽधि-पम् अवैक्षत ॥१५॥ [१५
भ्राज-मानं ततो दृष्ट्वा हनुमान् राक्षसेश्वरम् ।
१५] मनसा चिन्तयामास तेजसा तस्य वि[16]-स्मितः ॥१६॥ [१६

---

१. च रा प्र ब म ल$_1$ ल$_2$—०चित्रिते । २. फ च रा प्र ब ल$_1$ ल$_2$ अ—उपविष्टं । ३. च रा प्र ब म ल$_1$ ल$_2$ अ—०हस्ताभिः स्त्रीभिः । ४. रा अ—समुपसेवितम् । ५. च रा प्र ब म ल$_1$ ल$_2$ अ—उपोपविष्टं । ६. च रा प्र ब म ल$_1$ ल$_2$—भीमविक्रमैः । फ अ—बलदर्पितम् । ७. आ फ—कृत्स्नः । ८. आ—लोकः । ९. रा प्र ब म ल$_2$—सुमन्त्रविद्भ्यां । ल$_1$—स मन्त्रविद्भ्यां । १०. रा प्र ब म ल$_1$ ल$_2$—समेतं शकुनेन । ११. च रा प्र ब म ल$_1$ ल$_2$—आत्मसामान्यस० । अ—अन्वेष्यमाणं स० । १२. च रा प्र ब म ल$_1$ ल$_2$—अतितेजसम् । १३. आ—धिष्टितं । १४. आ—०शिखरे । १५. च रा प्र ब म ल$_1$ ल$_2$— ०कर्मभिः । १६. रा प्र ब म ल$_1$ ल$_2$—मोहितः ॥

अहो वीर्यम् अहो सत्त्वम् अहो रूपम् अहो बलम् ।[1]
१६] अहो राक्षस-राजस्य सर्व-लक्षण-सम्पदः ॥१७॥ [१७
यदि नाऽधर्म-बहुलः स्याद् अयं राक्षसेश्वरः ।
१७] स्याद् अयं स्वर्ग-लोकस्य स-शक्रस्याऽपि रक्षिता ॥१८॥ [१८
तेन खल्व् अस्य वि-भ्रान्ता देवाश् चाऽसुर-मानवाः ।[5]
१८] अयं ह्य् उत्-सहते क्रुद्धः कर्तुम् एकाऽयनं जगत् ॥१९॥ [१९
इति चिन्तां बहु-विधां चकार हनुमांस् तदा ।
१९] दृष्ट्वा राक्षस-राजस्य प्र-भावम् अ-मितौजसः । [२०
N] गाम्भीर्यं च श्रियं चैव मनसा च वि-सिस्मि(?ष्मि)ये॥ २० [N

इत्यार्षे रामायणे सुन्दर-काण्डे रावण-दर्शनं
नाम पंचचत्वारिंशः सर्गः ॥ ४५ ॥

---

१. रा प्र ब म ल१ ल२–अहो रूपमहो वीर्यमहो सत्त्वमहो बलम् । २. आ–०लक्ष्मण० । ३. फ च प्र ब म ल१ ल२ अ–सुरलोकस्य । ४. फ च प्र ब म ल१ ल२–०पि हि रक्षिता । अ–०पि च रक्षिता । ५. फ–तेन खल्वस्य विभिदुर्देवाः सासुरमानुषाः । च रा प्र ब म ल१ ल२–तेन खल्वस्य विभिदुर्लोकाः ससुरदानवाः । अ–बिभेत्यस्माद्धि वीराद्धि लोकः ससुरदानवः । ६. रा प्र ब म ल१ ल२ अ–अयमुत्सहते वीरः । ७. फ–हनुमन्कपिः । ८. च रा प्र ब म ल१ ल२–विस्मयं गतः । ९. फ–नास्ति । १०. अ–इति । ११. रा प्र ब म ल२–हनुमद्दर्शनं ॥

तम् उद्-ईक्ष्य महा-बाहुः पिंगाऽक्षं पुर-तः स्थितम् ।
१] रोषेण महताऽऽविष्टो रावणः शत्रु-रावणः ॥१॥ [१
स राजा रोष-ताम्राऽक्षः प्र-हस्तं रक्षसां वरम् ।
२] काल-युक्तम् उवाचेदं वचो विपुल-विक्रमः ॥२॥ [४
दुर्-आत्मा पृच्छ्यताम् एष कस् त्वं किं वा प्र-योजनम् ।
३] वनं भग्नं किम्-अर्थं च राक्षसानां च तर्जनम् ॥३॥ [५
रावणस्य वचः श्रुत्वा प्र-हस्तो वाक्यम् अब्रवीत् ।
४] समा-श्वसिहि भद्रं ते न भीः कार्या कपे त्वया ॥४॥ [७
यदि वा त्वं महेन्द्रेण प्रेषितो रावणाऽऽलयम् ।
५] तत्त्वम् आ-ख्याहि मा ते भूद् भयं वानर-सत्तम ॥५॥ [८
यदि वैश्रवणस्य त्वं यमस्य वरुणस्य वा ।
६] चारु रूपम् इदं कृत्वा प्र-विष्टो नगरीम् इमाम् ॥६॥
विष्णुना प्रेषितो वाऽपि लङ्का-विजय-कांक्षिणा । [९
७] न हि ते वानरं तेजो रूपं-मात्रं तु वानरम् ॥७॥
सत्यं त्वं कथय क्षिप्रं ततो वानर मोक्ष्यसे । [१०
८] अ-नृतं वदतस् त्व् अद्य दुर्-लभं तव जीवितम् ॥८॥

---

१. च रा प्र ब म ल१ ल२-रावणो लोकरा० । २. अ-रक्षसोऽब्रवीत् ।
३. प्र-विक्कवावि० । ४. अ-नास्ति । ५. फ च रा ब-दुष्टात्मा । ६. फ-किम-
र्थास्य । आ-कस्त्वं वा किं । ७. आ-वनभङ्गं । फ-वनभङ्गः । ८. फ-
किमर्थोयं । ९. फ-त्वया कपे । १०. फ-तावत्त्वमिन्द्रेण । ११. फ-तेऽस्तु ।
अ-भूत्ते । १२. फ-वानर मोक्ष्यसे । १३. आ-च । १४. आ-त्वं तु ।
१५. आ-लङ्कां वि० । १६. आ-रूपं मात्रं । १७. म-नास्ति । १८. अ-मोक्षसे ।
१९. फ च रा प्र ब म १ ल२ अ-वदतो ह्यद्य । २०. अ-जीवनम् ॥

अथ-वा यन्-निमित्तं ते प्र-वेशो रावणाऽऽलये[1]। [११
९] तद् एव कथय क्षिप्रं बहुना किं प्र-योजनम् ॥९॥ [N
१०पू] एवम् उक्तो हरि-वरस्[2] तं राक्षस-गणेश्वरम्[2] ।
११उ] अब्रवीन् नाऽस्मि शक्रस्य यमस्य वरुणस्य वा[3] ॥१०॥ [१२
धन-देन[4] न मे सख्यं विष्णुना नाऽस्मि चोदितः[5] ।
१२] जातिर् एव[6] ममैषा हि वानरोऽहम् इहाऽऽगतः ॥११॥ [१३
दर्शने[7] राक्षसेन्द्रस्य दुर्-लभे[8] सति[9] यन्[9] मया।[10]
१३] वनं राक्षस-राजस्य[11] दर्शनाऽर्थं[12] वि-नाशितम् ॥१२॥ [१४
ततस्[13] ते[13] राक्षसाः प्राऽऽप्ता बलिनो युद्ध-कांक्षिणः[14] ।
१४] रक्षणाऽर्थं तु देहस्य योधितास् ते मया रणे ॥१३॥ [१५
अस्त्र-पाशैर् न शक्योऽहं बद्धुम् अत्य्[15]-आयतैर् अपि ।
१५] पिता-महाद् एव वरो[16] मम ह्य् एष उपाऽऽगतः[16] ।[17] [१६
राजानं द्रष्टु-कामेन मयाऽस्त्रं न नि-वारितम्[18] ॥१४॥
१६] विप्र[19]-युक्तो महाऽस्त्रेण रक्षोभिः[20] परि-पीडितः[20] । [१७
दूतोऽहम् इह[21] संप्राऽऽप्तो राघवस्याऽति-तेजसः[22] ॥१५॥ [१८उ

---

१. फ–राक्षसालये । प्र–रावणालयं ॥ २. अ–हरिवरो राक्षसानां ग० । ३. आ–च । ५. च–धनदस्य । ५. फ रा–नोदितः । ६. ल$_1$ ल$_2$–एवं । ७. अ–दर्शनं । ८. अ–दुर्लभं चाति । ९. फ–तन् । १०. रा–नास्ति । ११. फ–हि राक्षसेन्द्रस्य । रा प्र ब म ल$_1$ ल$_2$–च राक्षसेन्द्रस्य । १२. रा प्र ब म ल$_1$ ल$_2$–दर्शनाय । १३. फ–ततश्च । १४. रा प्र ब म ल$_1$ ल$_2$–०दुर्मदाः । १५. फ–अप्यायतैर् । १६. फ–मया पुरा लब्धो वरो महान् । अ–ह्येवमुपागतः । १७. रा प्र ब ल$_1$ ल$_1$–नास्ति । १८. फ–निवर्तितम् । १९. आ रा ब म ल$_1$ ल$_2$–विप्रमुक्तो । फ–विप्रमुक्तोहमस्त्रेग । २०. रा ब म ल$_1$ ल$_2$–रक्षोभिरतिपीडितः । प्र अ–रक्षोभिरभिपीडितः । २१. रा–इति । २२. फ अ–राघवस्यामितौजसः । ल$_2$–राघवस्य महात्मनः ॥

१८] श्रूयतां चाऽपि वचनं मम तथ्यम् इदं नृप[1] । [१९
N] रामो यद् आह धर्माऽऽत्मा स च राजा महा-रथः[2] ॥[3] १६॥ [N

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-वाक्यं
नाम षट्चत्वारिंशः सर्गः ॥[4] ४६॥

---

१. फ अ–त्वया । २. च रा ब म ल१, ल२ अ–हरीश्वरः ।
३. फ–नास्ति ॥ ४. फ अ–सर्गसमाप्तिर्नास्ति ॥

तं सम्-ईक्ष्य महा-सत्त्वं सत्य-[1]वाग् हरि-पुंगवः ।
१] [2]वाक्यम् [2]अर्थ-वद् अ-व्यग्रम् उवाच पवनाऽऽत्म-जः ॥१॥ [१
अहं सुग्रीव-सन्देशाद् इह प्राऽऽप्तस् तवाऽऽलयम् ।
२] राक्षसेश हरीऽऽशस् [3]त्वाम् इदं कौशल्यम् अब्रवीत्[3] ॥२॥[4] [२
[5]राज्ञः शृणु [6]समा-देशं सु-ग्रीवस्य महाऽऽत्मनः ।[4]
३] [7]धर्माऽर्थाय हितं चैव [7]इह चाऽमुत्र च क्षमम् ॥३॥ [३
राजा दशरथो नाम रथ-कुञ्जर-[8]वाजि-मान् ।
४] पितेव बन्धुर् लोकानां सुरेश्वर-सम-द्युतिः ॥४॥ [४
ज्येष्ठस् तस्य महा-बाहुः पुत्रः प्रीति-करः [9]प्रभुः ।
५] पितुर् नि-[9]देशान् निष्-[10]क्रान्तः प्र-विष्टो दण्डकं वनम् ॥५[५
लक्ष्मणेन [11]समं भ्रात्रा सीतया [12]वाऽपि भार्यया ।
६] महर्षिभिर् अनु-क्रान्तं [13]धर्म्यं पन्थानम् [13]आ-स्थितः ॥६॥ [६
तस्य भार्या वने नष्टा सीता नाम [14]यशस्-विनी ।
७] वैदेहस्य सुता राज्ञो [15]जनकस्य महाऽऽत्मनः[15] ॥७॥ [७

---

१. फ च रा प्र ब म ल$_1$ ल$_2$—सत्ववान् । २. च प्र ब ल$_1$ ल$_2$—वाक्यं यथावद् । ३. रा प्र ब ल$_1$—त्वां कुशलं परिपृच्छति । अ—त्वां भ्राता कौ० । ४. ल$_2$—नास्ति । ५. अ—भ्रातुः । ६. आ—ममादेशं । ७. फ अ—धर्मार्थोपहितं युक्तमिह । रा प्र ब म ल$_1$ ल$_2$—धर्मार्थयोर्हितं । ८. आ—०जिनाम् । ९. आ—पितुः । १०. च—नियोगात्संप्राप्तः । रा प्र ब म ल$_1$ ल$_2$—नियोगं संप्राप्य । अ—निदेशनियतः । ११. रा प्र ब म ल$_1$ ल$_2$ अ—सह । १२. रा प्र ब म ल$_1$ ल$_2$—सह । अ—चापि । १३. आ—०धर्मपन्था० । रा—धर्मपन्थानमाश्रितः । अ—०नमाश्रितः । १४. फ अ—मनस्विनी । १५. आ—सुग्रीवेण च संगतः ॥

स मार्ग-माणस् तां देवीं राज-पुत्रः[1] सहाऽनु-जः ।
८] [2]ऋष्यमूकं च संप्राऽऽप्तः सु-ग्रीवेण च सं-गतः ॥८॥[3] [८
तस्य तेन प्रति-ज्ञातं सीतायाः परि-मार्गणम् ।
९] सु-ग्रीवस्य च रामेण हरि-राज्यं प्रति-श्रुतम् ॥९॥ [९
ततस् तेन वने[4] हत्वा राज-पुत्रेण वालिनम् ।
१०] सु-ग्रीवः [5]प्राऽऽपितो राज्यं हर्य्-ऋक्ष-प्लवगाऽधि-पः॥१०॥ [१०
स सीता-मार्गणे व्यग्रः सु-ग्रीवः [7]सत्य-संगरः ।
११] हरीन् सं-प्रेषयामास दिशः सर्वा हरीऽऽश्वरः ॥११॥ [१२
तां हरीणां सहस्राणि प्र-युतान्य् अर्बुदानि च ।
१२] दिक्षु सर्वासु मार्गन्ते ह्य् अधश् चोपरि चाऽम्बरे ॥[8]१२॥ [१३
वैनतेय-समाः केचित् केचित् तत्राऽनिलोपमाः ।
१३] अ-संग-गतयश् चाऽन्ये महा-काया महा-जवाः॥१३॥[10] [१४
अहं तु हनुमान् नाम मारुतस्यौरसः सुतः ।
१४] सीतायाः कारणात् तूर्णं योजनानां शतं प्लुतः ॥१४॥ [१५
तद् भवान् दृष्ट-तत्त्वाऽर्थः तपः-कृत-परिश्रमः[12] ।
१५] पर-दारान् महा-प्राज्ञ नोप-रोद्धुं [13]त्वम् [13]अर्हसि ॥१५॥ [१६
न हि धर्म-विरुद्धेषु बह्व्-अपायेषु कर्मसु ।
१७] मूल-घातिषु सज्जन्ते बुद्धि-मन्तो भवद्-विधाः ॥१६॥ [१८

---

१. च रा प्र ब म ल$_1$ ल$_2$ अ–राजपुत्रीं । २ च अ–ऋष्यमूकमनुप्राप्तः । रा प्र ब म ल$_1$ ल$_2$–ऋष्यमूकं गिरिं प्राप्तः । ३. आ–नास्ति । ४. आ–रणे । ५. फ म अ–स्थापितो राज्ये ॥ ६. रा–प्रतिसं० । ७. प्र म ल$_1$–सुग्रीवस्याभ्यनुज्ञया । ल$_2$–सुग्रीवस्याभ्यनुग्रहाः । ८. रा ब नास्ति । ९. म–०यः केचिद्धरिवीराः । १०. रा प्र ब ल$_1$ ल$_2$ नास्ति । ११. ल$_2$–नास्ति । १२. आ–०रिग्रहः । १३. म–०द्धुमिहार्हति । रा ल$_1$ ल$_2$–समर्हसि । प्र ब–समर्हति ॥

कश् च [1]लक्ष्मण-मुक्तानां [2]शराणां नत-पर्वणाम् ।
१८] दीप्तानाम् अग्र-तः स्थातुं शक्तो देवाऽसुरेष्व् अपि ॥१७ [१९
न चाऽपि त्रिषु लोकेषु राजन् विद्येत कश्चन ।
१९] राघवस्य व्य्-अलीकं [3]च कृत्वा यः सुखम् [3]आप्नुयात् ॥१८ [२०
[4]त्वं तु काल-हितं वाक्यं धर्म्यम् अर्थाऽनु-पालितम् ।
२०] मन्यस्व नर-देवाय [5]जानकी प्रति-दीयताम् [5] ॥१९॥ [२१
[6]दृष्टा हीऽयं मया देवी लब्धं यद् इह दुष्-करम् ।
२१] उत्तरं कर्म यच् छेषं[7] निमित्तं तत्र राघवः ॥२०॥ [२२
लक्षितेयं च वि-जने मया शोक-परायणा ।
२२] [8]गृहीतां किं न जानासि पञ्चाऽऽस्याम् इव [9]भोगिनीम् २१ [२३
नेयं जरयितुं शक्या साऽसुरैर् अमरैर् अपि ।
२३] विष-संपृक्त[10]म् अत्य्-अर्थं भुक्तम् अन्नम् इवौजसा ॥२२ [२४
अप-कुर्वन् हि रामस्य साक्षाद् [11]अपि पुरं-दरः ।
२४] न सुखं प्राऽऽप्नुयाद् राजन् किं पुनस् त्वद्-विधो जनः २३ [३४
यां सीतेत्य् अभि-जानासि सेयं[12] तिष्ठति रूपिणी ।
२५] काल-[13]रात्रीऽति तां विद्धि सर्व-लंका-निवासिनाम् ॥२४ [३५
तपः-[14]सन्तान-लब्धस् ते योऽयम् ऋद्धि-परि[15]च्छेदः ।
२७] न [16]सं नाशयितुं [17]न्याय्यं आत्म-त्राण-परि[18]च्छेदः ॥२६ [२५

---

१. फ—कश्चिल्लक्ष्मण० । २. फ—बाणानां । ३. फ—यः कृत्वा सुखमवाप्नुयात् । ४. आ—तं । ५. रा—जानकीं प्रतिवेदय । ६. आ—दृष्ट्वा । ७. आ—छेयः । ८. ल$_1$—गृहीत्वा । ९. ल$_1$—पन्नगीम् । १०. अ—०संस्पृष्टम् । ११. आ—एव । १२. प्र—तां सर्यामिव मान्दिरे । ल$_1$—०ति तेऽग्रतः । १३. अ—कालरात्रिं हि । १४. च रा प्र ब ल$_1$ ल$_2$—०संचयल० । १५. आ—परिछन्दः । १६. रा ब म ल$_1$ ल$_2$—सन्न्यासयितुं । प्र—सन्न्यासयितुं । १७. आ—न्याय्यम् । १८. फ— ०परिग्रहः ॥

अ-वध्यतां[1] तपो-वीर्याद् भवता यदि मन्यते ।
२८] आत्मनश् चाऽसुरैर् देवैर्[2] हेतुस् तत्राऽप्य् अयं महान् २६ [२६
स हि रामः स-सुग्रीवो नैवं[3] देवो न[3] पन्नगः ।
N] नाऽसुरो नैवं[4] गन्धर्वो न यक्षो नैवं[5] किन्नरः ॥२७॥ [२७
N] मानुषो राघवो राजन्[6] सु-ग्रीवश्[7] च[7] हरीऽऽश्वरः ।
ताभ्यां प्राण-परित्राणं कथं राजन् करिष्यसि ॥२८॥ [२८
३०] न च[8] धर्मोऽपि[9] सं-हार्यो ह्य् अ-धर्म-फल-संयुतः[10] ।
स एव फलम् अभ्येति[11] धर्मो नाऽधर्म-नाशनः ॥२९॥ [२९
३१] प्राऽऽप्तं धर्म-फलं तावद् भवता नाऽत्र सं-शयः ।
फलम् अस्याऽप्य् अ-धर्मस्य क्षिप्रम् एवोप-भोक्ष्यते ॥३०॥[३०
३२] जन-स्थाने[12]-वधं बुद्ध्वा वालिनश् चाँऽपि[13] सं-क्षयम् ।
राम-सुग्रीव-सख्य च[14] बुध्यस्व[14] हितम् आत्मनः ॥३१॥ [३१
३३] कामं खल्व् अहम् अप्य् एकः स-वाजि-रथ-कुंजराम् ।
लंकां नाशयितुं शक्तस् तस्यैष[15] तु[15] विनिश्-चयः ॥३२॥[३२
३४] रामेण हि प्रति-ज्ञातं हर्य्-ऋक्ष-कपि-सन्निधौ ।
उत्-सादनम् अ-मित्राणां क्षिप्रं तच्[16] च[16] करिष्यति ॥३३॥[३३
३५] तद् अलं काल-पाशेन सीता-विग्रह-रूपिणा ।
३६पू] स्वयं स्कन्धाँऽव-सक्तेन[17] क्षेमम् आ-लोकयाऽऽत्मनः[17] ॥३४॥[३६

---

१. म०ध्यतां । २. रा प्र ब ल$_1$ ल$_2$—नास्ति । ३. ल$_1$ ल$_2$—न देवो न च । ४. फ च रा प्र ब म ल$_1$ ल$_2$ अ—न च । ५. फ च रा प्र ब अ—न च । ६. ब म ल$_1$ ल$_2$—राजा । ७. अ—स च राजा । ८. फ म—हि । ९. च म—धर्मोपसं० । ल$_2$—धर्मो हि । १०. अ—०लसंहितः । ११. फ—आप्नोति । अ—अन्वेति । १२. अ—०स्थाने वधं । १३. अ—चैव । १४. फ-हि बुध्यस्वाहि० । १५. आ—तस्यैकस्य ॥ १६. च रा प्र ब ल$_1$ ल$_2$—तत्तु ॥ १७. फ—कण्ठावसक्तेन चिन्त्यतां हितमात्मनः ॥

सीतायास् तेजसा दग्धां राम-कोप-प्रदीपितास् ।

N] दह्य-मानाम् इमां पश्य लंकां स-रथ-कुञ्जराम् ॥३५॥ [३७

N] तस्य तद् वचनं श्रुत्वा वानरस्य महाऽऽत्मनः ।

३६उ] आ-ज्ञापयद् वधं तस्य[1] रावणः क्रोध-मूर्च्छितः ॥३६॥ [५२,१

स तस्य तद् वाक्यम् अ-दीन-भाषिणः

कपि-प्रवीरस्य नि-शम्य वि-प्रियम् ।

दशाऽऽननः कोप-विवृत्त-लोचनः

N] समा-ऽदिशत् तत्र[2] महा[3]-कपेर् वधम्[3] ॥३७॥ [४६

इत्यार्षे रामायणे सुन्दर-काण्डे हनुमद्-वाक्यं

नाम सप्तचत्वारिंशः सर्गः ॥४७॥

---

१. फ-राजा ॥ २. अ-जस्य । ३. फ-वधं महाकपेः । अ-कपेर्महावधम् ॥

आ-ज्ञप्ते तु वधे तस्य[1] रावणेन दुर्-आत्मना[2] ।
१] नि-वेदित[3]-वतो वाक्यं नाऽनुमेने विभीषणः ॥१॥ [२
राक्षसाऽधि-पतिं क्रुद्धं तद्[4] अ-कार्यम् उप[4]-स्थितम् ।
२] विदित्वा चिन्तयामास कार्यं[5] कार्य[5]-विदां वरः ॥२॥ [३
निश्चिता[6]ऽर्थं ततः साम्ना पूज्यं[7] शत्रु-जिद् अग्र-जम्[7] ।
३] उवाच हितम् अत्य्-अर्थं वाक्यं वाक्य-विदां वरः॥३॥[8] [४
राज-वृत्त-विरुद्धं च लोक-वृत्ते[9] च[10] गर्हितम् ।
४] सर्व-थाऽसदृशं वीर कपेर् अस्य प्र-मापणम्[11] ॥४॥[12] [५
अ-संशयं शत्रुर् अयं प्र-वृद्धः[13]
कृतं ह्य् अनेनाऽप्रियम् अ-प्रमेयम् ।
न[15] दूत-वध्यां तु[15] वदन्ति सन्तो
५] दूतस्य दण्डा बहवः प्र-दिष्टाः ॥५॥ [१४
वैरूप्यम् अंगेषु कशा[16]-निपातो
योग्यस्[17] तथा लक्षण-संनिपातः[18] ।[19]

---

१. आ–तत्र । २. फ ल$_1$–हनूमतः । अ–महात्मना । ३. म ल$_1$ ल$_2$–निवेदितं ततो । अ–निवेदिते ततो ॥ ४. आ–तस्य का० । फ अ–तच्च कार्यमुपास्थितम् । रा प्र ब म ल$_1$ ल$_2$–तद्वधार्थमुप० । ५. आ–कार्यविधिम्प्रति ॥ ६. च म–०तार्थः । ७. फ–पूजयित्वा स रावणम् । आ–पूर्वशत्रु० । ८. रा प्र ब ल$_1$ ल$_2$–नास्ति ॥ ९. प्र–०वृत्तं । १०. फ अ–न । ११. ल$_2$–न मारणम् । १२. फ–नास्ति ॥ १३. अ–प्रवृत्तः । १४. च रा प्र ब ल$_1$ ल$_2$–नास्ति । १५. फ अ–दूता ह्यवध्यास्तु । ल$_1$–न दूतवाच्यं हि । ल$_2$–दूतं न वध्यं हि । प्र म रा–०वध्यां हि ॥ १६. म–कशाभिघातो । १७. फ म–मौड्यं । अ–मौन्यं । १८. अ–०पाताः । १९. रा प्र ब ल$_1$ ल$_2$–नास्ति ।

एतान्[1] हि दूते प्र-वदन्ति दण्डान्[2][3]

६] दूतस्य[4] दण्डो हि वधोऽप्रशस्तः[4] ॥६॥ [१५

कथं हि धर्माऽर्थ[5]-विनीत-बुद्धिः

पराऽवर[6]-प्रत्यय-निश्चिताऽर्थः ।

भवद्-विधः कोप-वशे नँ[7] (?नु) तिष्ठेत्

७] क्षोभं[8] न गच्छन्ति हि सत्त्व-वन्तः[9] ॥७॥ [१६

नँ[10] धर्म्म-वादे न च लोक-वृत्ते

न शास्त्र-बुद्धौ[11] स्व-मतेन चाऽपि ।

विद्येत कश्चित् तव तुल्य एकस्[12]

८] त्वम्[13] उत्तमः सर्व-सुराऽसुराणाम् ॥८॥ [१७

न चाप्य् अस्य कपेर् घाते कञ्चित् पश्याम्य् अहं गुणम्।

९] तेष्व् एव पात्यतां दण्डो यैर् अयं[14] प्रेषितः कपिः ॥९॥ [२०

साधुर् वा यदि वाऽसाधुः परैः[15] सं-प्रेषितो ह्य् अयम् ।

१०] ब्रुवन्[16] पराऽर्थं पर-वान् न वधं प्राऽऽप्तुम् अर्हति ॥१०॥ [२१

अपि चाऽस्मिन् हते राजन् नाऽन्यं पश्यामि वानरम्[17] ।

११] इह यः पुनर् आ-गच्छेत् परं पारं महोदधेः ॥११॥ [२२

---

१. आ–एता । २. आ–दण्डा । ३. रा ब ल१ ल२–नास्ति । ४. च प्र–दण्डो न वधः प्रदिष्टः । फ अ–दण्डो हि वधो न दृष्टः । म–वधस्तु दूतस्य न नः श्रुतोपि । रा ब–नास्ति ॥ ५. फ–धर्मादनपेत० । अ–च धर्मार्थविदग्धबु० । आ–०र्थविनीतबद्धिर् । ६. आ–भवाद्विधैः । फ–पराभवः । ७. फ–०पवशेऽधितिष्ठेत् । रा–०पमथ प्रतिष्ठेत् । ब प्र म ल१ ल२–०पमथाधितिष्ठेत् । ८. फ–क्रोधं । ९. आ–सत्यवन्तः॥ १०. आ–नास्ति । ११. फ–०बुध्यास्त्रम० । अ–बुध्या स्व० । १२. फ–बलेन तुल्यस्तव कश्चिदस्ति । १३. फ च–त्वं ह्युत्तमः ॥ १४. आ–अयं ॥ १५. आ–परैरेष समर्पितः । फ–परैरेष समर्पितम् । १६. आ–ब्रुवं परार्थं । फ–ब्रुवं परार्थी ॥ १७. अ–खेचरम् ॥

तस्मान् नाऽस्य वधे यत्नः कार्यः पर-पुरंजय ।
१२] भवान् सेन्द्रेषु[1] देवेषु यत्नम् आ-स्थातुम्[2] अर्हति ॥१२॥ [२३
अस्मिन् वि-नष्टे हि न दूतम् अन्यं
पश्यामि यस्[3] तौ नर-राज[4]-पुत्रौ ।
युद्धाय युद्धर्षभ[5] दुर्वि-नीताव्
१३] उत्-तेजयेद्[6] वै भवतो[7] वि-रुद्धौ ॥१३॥ [२४
पराऽऽक्रमोत्साह-वता दृढेन
सुराऽसुराणाम् अपि दुर्-जयेन ।
त्वया मनो-नन्दन नैर्ऋतानां
१४] न राघवः[8] शक्ष्यति योद्धुम्[9] आजौ ॥ १४ ॥ [२९
हिताश् च शूराश् च सु-मानिताश् च
कुलेषु जाताः सुमहा-गुणेषु ।
यशस्-विनः शस्त्र-भृतां वराश् च
१५] कोटय्[10]-अग्र-शस् ते सु-भृताः सदैव[11] ॥१५ [३०
तद् एक-देशेन बलस्य तावत्
कश्चित् तवाऽऽदेश-कृतो[12]ऽभियोगः ।

---

१. प्र म ल१ ल२—सर्वेषु । २. फ—आस्थितुम् ॥ ३. फ—यौ । ४. अ—नरदेव० । ५. प्र म ल१ ल२—योधर्षभ । ६. आ—अयोजयेयो । रा ब म ल१ ल२—बुध्येत गत्वा । अ—बुधौ जयेद्यौ । ७. फ—भवता ॥ ८. प्र—चारणं । ल२—रावणः । ९. रा ब म ल१ प्र ल२—कर्तुम् ॥ १०. रा ब म ल१ ल२—कार्योद्यतास्ते । प्र—कार्योदितास्ते । ११. फ—कोट्यश्च संख्ये सुभृताश्च वीराः । अतः परमधिकः पाठः—फ—एतैः समेतैः सहितो हि राजंस्त्वं योत्स्यसे तौ खलु राजपुत्रौ । तस्मादयं गच्छतु तत्र मुक्तः समानयत्वाशु गतासुकल्पौ ॥ १२. अ—०शभृताभियोगः । रा—०तो वियोगः ।

तौ राज-पुत्राव् [1]उप-गृह्य मूढौ
१६] परेषु [2]तत्त्वं प्र-[3]गृहाण [4]सर्वम् [5]॥१६॥ ? [३१

इत्यार्षे रामायणे सुन्दर-काण्डे विभीषण[6]-वाक्यं
नामाऽष्टाचत्वारिंशः सर्गः ॥४८॥

---

१. अ–अति० । २. आ–सर्वे । ३. च रा प्र ब म ल$_1$ ल$_2$–प्रतिगृह्य । ४. आ–तत्त्वम् । ५. अ–सर्वात्मना संग्रहदुष्प्रधर्षः ॥
६. ल[1]–रावणवाक्यं । अ–इत्यार्षे रामायणे सुन्दरकाण्डे सर्गः ॥

तस्य तद् वचनं श्रुत्वा दश[1]-ग्रीवो महा-बलः ।
१] देश-काला[2]ऽन्वितं भ्रातुर् वाक्यम् उत्तरम् अब्रवीत् ॥१॥ [१
सम्यम्[3] उक्तं हि भवता[3] दूत-वध्या[4] वि-गर्हिता ।
२] अवश्यं तु वधाद् अन्यः[5] क्रियताम् अस्य नि-ग्रहः ॥२॥ [२
कपीनां किल लांगूलम्[6] इष्टं[6] भवति भूषणम् ।
३] तद् अस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु[7] ॥३॥ [३
ततः पश्यन्त्व् इमं दीनम् अङ्ग-वैरूप्य-कर्षितम्[8] ।
४] मित्राणि[9] ज्ञातयः[9] सर्वे बान्धवाः स-सुहृज्[10]-जनाः ॥४॥ [४
आ-ऽज्ञापयद् राक्षसेन्द्रः पुरं सर्वं[11] सं[11] सं[11]-त्वरम् ।
N] लांगूलेन प्र-दीप्तेन रक्षोभिः परि-णीयताम्[12] ॥५॥ [५
तस्य तद् वचनं श्रुत्वा राक्षसा रण-कर्कशाः ।
५] वेष्टयन्ति स्म लांगूलं जीर्ण-कार्पास[13]-कर्पटैः ॥६॥ [६
सं[14] वेष्ट्यमाने लांगूले व्य्-अवर्द्धत ततः कपिः ।
६] शुष्कम् इन्धनम् आ-साद्य वनेष्व् इव हुताऽशनः ॥७॥
तैलेन परि-षिच्या[15]ऽथ तेऽग्निं तत्राऽप्य्[16] अपातयन् । [७

---

१. $ल_२$-श्रुत्वावरजस्य मनीषिण: । फ-दशग्रीव: सहासुरै: । ब-ह्यनुजस्य मनीषिण: । प्र $ल_१$-ह्यवरजस्य मनीषिण: । २. फ अ-०कालहितं ॥ ३. अ-सम्यगुक्तं त्वया भ्रातर् । ४. फ-०वाक्यं । ५. आ-अन्यत् ॥ ६. अ-लांगूलं दष्टं । ७. अ-गच्छति ॥ ८. आ-०कारितम् । फ रा म अ-०कर्शितम् । ९. फ-समित्रज्ञा० । १०. फ-सकपीश्वरा: । ११. अ-च स० । म-च चत्वराम् । १२. आ-०नीयताम् ॥ १३. आ-जीर्णकार्पासिकै: पटै: । फ अ-जीर्णै: कार्पासिकै: पटै: । ब $ल_१$ $ल_२$- कर्पासक० ॥ १४. $ल_२$-संवे० ॥ १५. आ-०सिच्याथ । १६. आ-तत्रावपा० । म-तत्र न्यपा० । $ल_१$ $ल_२$-तत्राप्यतापयन् ।

N] लांगूलेन प्र-दीप्तेन [1]राक्षसास् तं व्य्-[1]अलोकयन् ॥८॥[2]
रोषो[3]त्कर्ष-परीताऽऽत्मा बाल-सूर्य-[4]समाऽऽननः । [८
N] शुचि-[5]व्यपर(?ग)मे चैवं स-विद्युत् तोय-दो यथा॥९॥ [N
स भूयः स-गतैः क्रुद्धै राक्षसैर् हरि-पुंगवः ।
N] नि-बद्धः कृतवान् वीरस् तत्-काल-सदृशीं मतिम् ॥१०॥[१०
७उ] कामं खलु न मे [6]शक्ता नि-बद्धस्याऽपि [6]राक्षसाः । [११पू
N] क्रुद्धस्य पुर-तः स्थातुं सिंहस्येवेतरे मृगाः ॥११॥ [N
८पू] छि[7]त्त्वा पाशान् समुत्-पत्य [8]हन्याम् अहम् इमान् [8]पुनः । [११उ
N] [9]एषां [9]चाऽपि सुपर्य्-आप्तो राक्षसानाम् अहं युधि ॥१२॥
किन्तु रामस्य प्रीत्य्-अर्थं वि-षहिष्येऽहम् ईदृशम् । [१३
N] लङ्का चारितव्या मे[10] पुनर्[11] एव भविष्यति[11] ॥१३॥ [१४पू
N] इति [12]क्षमेऽहम्[12] एतेषां राक्षसानाम् इमां क्रियाम् । [N
८उ] अवश्यम् एव द्रष्टव्या लंकेयं रजनी-क्षये । [१५
रात्रौ हि[13] न[13] सु-[14]दृष्टा मे दुर्ग-कर्म-विधानतः ॥१४॥[15] [१४उ
९] कामं बन्धैश् च भूयो मे लांगूलाऽऽदीपनेन च ।

---

१. आ-राक्षसांस्तान् विलो० । २. अतः परमधिकः पाठः—म-स चाथ परैर्घोरै राक्षसैर्भीमविक्रमैः ॥ ३. फ च रा-रोमहर्ष० । ब प्र म ल$_1$ ल$_2$-रोषहर्ष० । अ-रोषामर्ष० । ४. फ अ-०र्यनिभाननः । च-०र्य इवाननः । रा-०र्य इवोदितः । ५. फ-शुचिशुक्रे व्यतिक्रामे । च रा प्र ब म ल$_1$ ल$_2$ अ-शुचिशुक्रव्यपगमे ॥ ६. च रा प्र ब ल$_1$ ल$_2$-शक्तिर्निबद्धस्यापि राक्षसैः । म-शक्ता बद्धस्यापि निशाचराः । ७. आ-हित्वा । ल$_1$ ल$_2$-भित्वा । ८. फ-गच्छतः परिधारणे । ९. प्र ब म ल$_1$ ल$_2$-एषामपि । अ-एषां वापि ॥ १०. म-च । ११. आ-दुर्गकर्मविधानतः ॥१२. फ च-ज्ञात्वाहम् । १३. रा प्र ब म ल$_1$ ल$_2$-न हि० । १४. फ च-सुदृश्या । १५. आ-नास्ति ॥

१०उ] पीडां कुर्वन्तु रक्षांसि न च मे [1]मनसः श्रमः ॥१५॥[2] [१६
९२उ] ततस् ते[3] सं-वृताऽऽकारम् अँ-ब्रुवन्तं महा-बलम् ।
प्र-गृह्य निर्-ययुः सर्वे राक्षसाः कपि-कुंजरम् ॥१६॥ [१७
१३] शंख[4]-भेरी-निनादैस् तं[5] घोष-वं(?यं) तँश् च कँर्मभिः ।
१४पू] राक्षसाः क्रूर-कर्माणश् चारयन्ति स्म तां पुरीम् ॥१७॥ [१८
[6]अथोपवीत-सर्वाऽगः [7]स्रस्त-सर्वेन्द्रिय-क्रियः ।
N] [8]हनूमांश् चारयामास लंकां रावण-पालिताम् ॥१८॥ [१९
यथाऽपश्यन् निशि तदा भवनानि च रक्षसाम् । [२०पू
N] ततः परि-विशिष्टांश्[9]च(?ष्टानि) स्वभावाद् ददृशे हरिः १९ [N
१५उ] सोऽपश्यद् भूमि-भागांश् च सुवि-भक्तांश् च चत्वरान् । [२०उ
रथ्याश् च गृह-संबाधाः[10] कपिः शृंगाटकानि च ॥२०॥ [२१पू
१४उ] [11]दुर्ग-कर्म च लंकायां[12] सुनि-विष्टां[13](?ष्टं) सु-रक्षिणः(?तम्) । [N
N] गृहाणि च समृद्धानि ददर्शाऽऽलक्षितो बली ॥२१॥ [14][२१उ
चत्वरेषु चतुष्केषु तथा शृंगाटकेषु च ।

---

१. फ—मनसि क्लमः । च रा प्र ब म ल१ ल२ अ—मनसि श्रमः । २. अतः परमधिकः पाठः—म—एवं चिन्तयतस्तस्य लांगूलं वेष्टितं परैः । घटानां ते सहस्रेण स्नेहस्य सिषिचुः क्रुद्धाः । स्नेहावसिक्तं लांगूलं क्रूराः प्रज्वालयंस्ततः ॥ ३. फ—तं संवृताकारं सत्त्ववन्तं । आ—ते संवृताकारं सत्त्ववन्तं ॥ ४. अ—खरभेरीनिनादैश्च । फ रा प्र ब म ल१ ल२—०निनादैश्च । ५. फ—घोषयन्तस्ततस्ततः । म ल१ ल२—घोषयन्तः स्वक० ॥ ६. आ च रा प्र ब म ल१ ल२ अ—अथोपस्थित० । ७. आ—स्वस्थः स० । च रा म—स्वस्थस० । ८. आ—हनूमान् रमयामास ॥ ९. फ च—०ष्टां च तां पुरीं । रा प्र ब म ल१—०ष्टां च तां ददर्श पुरीं कपिः । ल२ अ—०ष्टां च तां ददर्श पुरीं ॥ १०. आ—०सम्बन्धाः । ११. अ—गुप्ति० । १२. रा प्र ब म ल१—लंकायाः । १३. अ—सुनिविष्टाश्च रक्षसः । १४. फ—नास्ति ॥

N] घोषयन्ति हनूमन्तं[1] चारीक (?र) इति[2] राक्षसाः [3]॥२२॥ [२२
१६उ] दीप्यमाने ततस् तस्य लांगूलाऽग्रे हनूमतः ।
राक्षस्यस् ता वि-रूपाऽक्ष्यः प्रोचुर्[4] देव्यै तद् अ-प्रियम् २३ [२४
१७] यस् त्वया कृत-संवादः सीते प्र-मुखे-तः कपिः ।
लांगूलेन प्र-दीप्तेन स एष परि-गीयते ॥२४॥ [२५
१८] श्रुत्वा[5] तद्[6] वचनं क्रूरम् आत्म-प्रहरणोपमम् ।
जानकी शोक-सन्तप्ता हुताऽशनम् उपाऽऽगमत्[7] ॥२५॥ [२६
१९] मंगलाऽभि-मुखी तस्य श्रुत्वा सीता महा-कपेः[8] ।
उप-तस्थे विशालाऽक्षी नि-यता हव्य-वाहनम् ॥२६॥ [२७
२०] यद्य् अस्ति गुरु-शुश्रूषा यद्य् अस्ति चरितं तपः ।
यदि मां[9] तारयत्य् आर्यः शिवो भव हनूमतः ॥२७॥ [२८
२१] यदि कश्चिद् अनु-क्रोशस् तस्य मय्य् अस्ति धीमतः ।
यदि वा भाग्य[10]-शेषो मे शिवो भव हनुमतः ॥२८॥[11] [२९
२२] यदि मां वृत्त-संपन्नां तत्-सर्व-गत-मानसाम् ।[12]
२३पू] हुताऽशन वि-जानासि शिवो भव हनूमतः ॥२९॥[13] [३०
यदि मां तारयत्य् आर्यः कृत-ज्ञः सत्य-संगरः ।[14] [३१पू
परं पारं समुद्रस्य रक्षसाऽप-हृतां सतीम् ।[15]
N] अस्माद् दुःखाद्[16] रघु-श्रेष्ठः[16] शिवो भव हनूमतः ॥[17] ३०॥[३१उ

---

१.च ब—वराक । ल₂—चकार । २.आ च ब ल₂—इव । ३.फ—नास्ति । ४.अ—शंसुर् । ५. फ—स हनुमान् । ६. च रा प्र ब म ल₁ ल₂—ताम्रमुखः ॥ ५. फ—सा श्रुत्वा । ७. फ—उदीरयत् ॥ ८. आ—कपिम् ॥ ६. फ—चैवैकपत्नीत्वं । म—वाप्येकपत्नीत्वं॥अ—मां तारयेदार्यः।१०. अ—०शेषं । ११.फ म—नास्ति॥१२.फ—नास्ति । १३. रा म—नास्ति ॥ अतः परमधिकः पाठः—फ—यदि वा भाग्य-शेषो मे शिवो भव हनूमतः ॥ १४. रा ब प्र ल₁ ल₂ अ—नास्ति । १५. रा प्र ब म ल₁ ल₂ अ—नास्ति । १६. म—दुःखानुसंराधात् । १७. रा ब प्र ल₁ ल₂—नास्ति ॥

२३उ] ततः[1] शिवाऽर्चिर् अ-व्यग्रः[1] प्रदक्षिण-शिखोऽनलः[2] ।
जज्वाल मृग-शावाऽक्ष्याः शंसन्न्[3] इव शिवं कपेः ॥३१॥ [३२

२४] ततः प्र-दीप्ते लांगूले चिन्तयामास वानरः ।
प्र[4]-दीप्तोऽग्निर् अयं[5] कस्मान् न दहति सर्व-तः[5] ॥३२॥ [४९

२५] दृश्यते च महा-ज्वालां[6] करोति च न मे रुजम् ।[6]
शिशिरस्येव सं-तापो[7] लांगूले मे प्रति-ष्ठितः ॥३३॥ [५०

२६] अथवा तद् इदं [8]व्यक्तं यद् दृष्टं प्लवता मया ।
राम-प्रसादाद् आश्चर्यं सर्व-तः[8] सरितां पतौ[9] ॥३४॥ [५१

२७] यदि तावत् समुद्रस्य मैनाकस्य नगस्य[10] च[10] ।
रामाऽर्थे सं-भ्रमस्[11] तादृक् किम् अग्निर्[12] न करिष्यति ३५॥[५२

२८] सीतायाश् चाऽऽनृ-शंस्येन तेजसा राघवस्य च ।
२९पू] पितुश्[13] च मम सख्येन न मां दहति पावकः ॥३६॥ [५३
भूयः स चिन्तयामास मुहूर्त्तं कपि-कुंजरः ।
कथम् अस्मद्-विधस्येह बन्धनं राक्षसाऽधमैः ।
N] प्रति-क्रिया न युक्ता स्यात् स[14]त्य-धर्म-पराक्रमैः[15] ॥३७॥ [५४
ततश् छित्वा[16] स तान् पाशान् वेग-वान् वै[16] महा-कपिः ।

---

१. फ—ततो विधूमः स्निग्धार्चिः । च रा प्र ब म $ल_1$ $ल_2$ अ—ततः स्निग्धार्चिरव्य० । २. अ—०णमुखोऽनलः । ३. अ—शंशन्न् ॥ ४. फ—संप्रदीप्तस्त्वयं । ५. फ—पावकः । $ल_1$ $ल_2$—सर्वतः ॥ ६. रा प्र ब म $ल_1$ $ल_2$—महाज्वालः करोति न मनोरुजम् । अ—महाज्वालः करोति न च मे रुजाम् ॥ ७. आ—संपातो । ८. फ—मन्ये । रा म $ल_1$ $ल_2$—सर्वं । । ९. फ—गिरौ चोदधिसंभवे ॥ १०. आ—च धीमतः । फ—व तस्य च । ११. आ—संभ्रमं । १२. $ल_2$—किमर्थं ॥ १३. ब—वायोश्च ॥ १४. च प्र ब म $ल_1$ $ल_2$ अ—सति मह्यं पराक्रमे । रा—सति मय्यपराक्रमे । १५. आ—प्रतिक्रियानुयुक्तस्याऽस्ति मह्यं पराक्रमे ॥ १६. फ—छित्वात्मनः पाशान्वेगवान्स ।

N] उत्-पपाता[1]ऽऽशु वेगेन ननाद च महा-बलः ॥३८॥ [५५
N] पुरेवं[2] वि-चरन् श्रीमान्[2] शैल-शृंगम् इवोन्नतम् ।
[3]वि-विक्तं रक्षसां यानम्[3] आ-ससादाऽनिलाऽऽत्म-जः ३९[५६
३०] स भूत्वा शैल-संकाशः क्षणेन पुनर् आत्म-वान् ।
ह्रस्वतां समनु-प्राऽऽप्तो बन्धनानि[4] व्य्-अशातयत्[4] ॥४०॥[५७
३१] वि-मुक्तश्[5] चाऽभवच् छ्रीमान् पुनः पर्वत-सन्निभः ।
वीऽऽक्ष[6]-माणश् च ददृशे परि-घं तोरणाऽऽश्रयम् ॥४१॥ [५८
३२] गृहीत्वा स महा-बाहुः कालाऽऽयस-परिष्कृतम् ।
३३पू] रक्षिणस् तान् पुनः सर्वान् सूदयामास मारुतिः ॥४२॥ [५९
स तांश्[7] च[7] हत्वा रण-चण्ड-वेगः[8]
सम्-ईक्षमाणः[9] पुनर् एव लंकाम् ।
प्रदीप्त-लांगूल-कृता[10]ऽग्निमाली
N] प्राऽकाशताऽऽदित्य इवांऽशु-माली ॥४३॥ [६०

इत्यार्षे[11] रामायणे[11] सुन्दर-काण्डे हनुमल्-[12]लांगूल-दीपनं[12]
नामैकोनपंचाशः सर्गः ॥४९॥

---

१. फ रा ब प्र ब म ल₁ ल₂—उत्पपात च । अ—उत्पपाताथ ॥ २. फ—स पुरद्वारमाश्रित्य । आ—पुर्यैवं विचरन् छ्रीमान् । म—पुनरेव वि० । अ—पुरीद्वारं विशन् श्री० । ३. फ—विभक्तं राक्षसान् घोरान् । च रा प्र ब म ल₁ ल₂—विविक्तं रक्षसां वासम् ॥ ४. आ—बन्धनान्यवसादयन् । अ—बन्धनान्यवशातयन् ॥ ५. फ—स मुक्तश् । ६. फ अ—वीक्ष्यमा० ॥ ७. फ—तांस्तु । अ—वापि । ८. फ—०विक्रमः । ९. आ—०ईक्ष्यमाणः । १०. ल₁—०लगताग्नि० ॥ ११. ल₂—इति । अ—नास्ति । १२. फ अ—लांगूलदीपनं । ब—लांगूलोद्दीपनं । प्र म—०प्रदीपनं ॥

वी[1]ऽऽक्षमाणस् ततो लंकां कपिः कृ[2]त-मनोरथः ।
१] वर्धमान-समु[3]त्साहः कार्य-शेषम् अचिन्तयत् ॥१॥ [१
उत्तरं [4]किं नु मे शेषं[4] कर्त्तव्यम् इह सम्प्रति ।
२] यद् एषां रक्षसां भूयः सं-तापम्[5] उप[5]-पादयेत ॥२॥ [२
वनं तावत् प्र-मथितं प्र-वरा राक्ष[6]सा हताः ।
३] बलैक-देशः क्ष[7]पितः शेषं दुर्ग-विनाशनम् ॥३॥ [३
दु[8]र्गे वि-नाशिते कर्म भवेद् अल्प-परिश्रमम् ।
४] अ-प्रयत्नेन क[9]र्म स्यान् ममोऽपि स-फलः श्रमः ॥४॥ [४
यो ह्य् अयं मम लांगूले दीप्यते हव्य-वाहनः ।
५] अस्य सं-तर्पणं न्याय्यं कर्तुम् एभिर् गृहोत्तमैः ॥५॥ [५
ततः सं[10] दीप्त[10]-लांगूलः स-विद्युद् इव तोय-दः ।
६] भवनाऽग्रेषु लं[11]कायां वि-चचाराऽनिलाऽऽत्म-जः ॥६॥ [६
७पू] मुमोच हनुमान् [12][13]अग्निम् अदीप्य[12][13]त हुताऽशनः ।
प्र-दीप्तम् अग्निं पवनस् तेषु वेश्मस्व् [13]अचारयत् ॥७[14]॥ [N
८] ततः श्वसन-संयोगाद् अति-वेगो हुताऽशनः ।

---

१. च प्र म ल$_2$ अ—वीक्ष्य० । २. ब—गतम० । ३. अ—०महोत्साहः । ४. अ—कार्यशेषं मे । च—किन्तु मे । ५. रा प्र ब म ल$_1$ ल$_2$—संतापाय मनो दधे । फ च अ—उपपादये । ६. अ—रक्षसां । ७. आ—कुपितः । अ—क्षयितः । ८. रा ब प्र म ल$_1$ ल$_2$—दुर्गस्य नाशने । ९. फ अ—कर्माणि मम स्यात् ॥ १०. च—संदीप्तलां० । ११. रा प्र ब म ल$_1$ ल$_2$—लङ्कायां । १२. फ—अग्निं प्रदीप्तश्च । १३. फ—अपालयत् । च रा प्र ब म ल$_1$ ल$_2$—अदाहयत् । १४. अ—प्रदीप्तमग्निं भवनेषु वेश्मसु प्रोत्साहयत् संविभजन्मनोजवम् । तां चापि लंकां पुनरेव वानरः प्रोत्पत्य चोत्पक्ष्य शनैरदाहयत् ॥

९पू] कालाऽग्निर् इव सं-दीप्तस् तेषु वेश्मस्व्[1] अदृश्यत ॥८॥ [२२
ततोऽनिलो[2]ऽनलौ क्रुद्धौ हनुमांश् चैव वीर्यवान्[3] ।[4]
N] परि-तप्ता तदा[5] लंका सा[6] समन्ताद् अदृश्यत[7] ॥९॥ [N
क्वचित् काञ्चन-वर्णाऽऽभा[8] तपनीय-निभा क्वचित् ।
N] कृष्णाऽऽयस-सवर्णा[9] च क्वचिच् च रजतोपमा[10] ॥१०॥ [N
फुल्लाऽशोक-निभा[11] चाऽपि किंशुकोपम-दर्शना[12] ।
क्वचिद् धूमाऽऽवृता श्यामा ज्वलन्तीऽव स्व-तेजसा ।[13]
N] इन्द्राऽऽयुध-निभा[14] भूत्वा नाना-वर्णा[15] क्वचित् क्वचित् ॥११॥[16] [N

---

१. अ–वेश्मसु दृश्यते । २. ल$_2$–ततोऽनलाऽनिलौ । ३. ल$_2$–वानरः । ४. अतः परमधिकः पाठः—म–परिक्षिप्य पुरीं लंकां सर्वतः समदीपयत् । लोकस्यास्य क्षये प्राप्ते दीप्तामिव वसुन्धराम् ॥ ततो निर्दह्यमानानि भवनानि चकाशिरे । महेन्द्रशिखराणीव दह्यमानानि सर्वतः ॥ ज्वलनेन प्रदीप्तानि तोरणानि चकाशिरे । विद्युद्भिरिव बद्धानि मेघजालानि घर्मणि ॥ हर्म्याग्रैर्दह्यमानैश्च शूलैः प्रज्वलितैरिव । प्रबभौ सा पुरी लंका महोल्काभिर्भयङ्करा ॥ ५. फ–परिक्षिप्य तदा । अ–परिक्षिप्य ततो । ६. फ–मा । ७. फ अ–अदीप्यत । प्र ल$_2$–अदह्यत ॥ ८. फ अ–०नवर्णाभस्तपनीयनिभः । ९. फ अ–सवर्णाभः । १०. फ अ–०पमः ॥ ११. फ अ–०निभश्चापि । रा म ल$_2$–०निभा क्वापि । १२. फ अ–०सन्निभः । १३. फ अ–क्वचिद् धूमावृतः श्यामो विधूमो ज्वलितः क्वचित् । १४. फ अ–०घनिभो । १५. फ अ–०वर्णः । १६. अतः परं आ–कोशेऽधिकः पाठो भवति । स चोत्तरं पठ्यमानस्य २३–तमोत्तरार्धादेः २६–तमपूर्वार्धाऽन्तस्य ग्रन्थस्यैव मूलतः पत्रक्रमव्यत्यासप्रयोजनतः । पुरस्ताद्वर्तमानोऽपार्थो द्विः पाठो द्र० । तथात्वे सत्येकस्मिन्नपि कोशे द्वयोः पाठयोर्मध्ये यत्क्रियांश्चिच्छेदो भवति तत्र काल एव कारणं द्र० । अथ पाठः—आ–आजघ्नुर्वानरश्रेष्ठं वाणैरादित्यसन्निभैः । आवर्त्त इव गांगस्य तोयस्य विपुलो महान् । परिक्षिप्य हनूमन्तं सर्वतो रक्षसां बलम् । ततो वातात्मजः क्रुद्धो हेमरूप्यसमाचितम् ॥ प्रासादस्य गृहीत्वा च स्तम्भं हेमविभूषितम् । भ्रामयित्वा तु तं वेगादिन्द्रायुधनिभं ततः ॥

ततस् ते राक्षसाः सर्वे[1] स-रावण-महा-बलाः ।
N] बाल-वृद्धास्[2] सु[2]-शोचन्तो निर्-ययुर् नगराद् बहिः ॥१२॥ [N
परस्परम् अव-ष्टभ्य हस्तं हस्तेन वेश्मनाम्[3] ।
धूमात्[4] स्रवद्भिर्[4] नयनैः क्रोशन्तश् चेतरेतरम् ।
N] स्त्रियश् च ज्वलनाऽऽविष्टा भ्रमन्त्यो वै ततस्-ततः[5] ॥१३ [N
आकाशोत्[6]-पतने शक्ता धरण्यां रजनी-चराः ।
N] बभ्रमुस् तत्र तत्रैव ज्वाला-मालाऽऽकुले पथि ॥१४॥ [N
मायाम् आ-श्रित्य दहनो महा-शब्दो भयानकः ।
N] जीमूत-सदृशैर् नादैर् नदन्[7] पर्य्-अटते महीम्[7] ॥१५॥ [N
दग्धानि हि[8] वि-मानानि नि-पेतुर् धरणी-तले ।
N] वि-मानानीऽव सिद्धानाम् अम्बरात्[9] पुण्य-संक्षये[9] ॥१६॥ [N
१०उ] तानि काञ्चन-जालानि[10] मुक्ता-मणि-लतानि[11] च ।[12]
भवनानि च दह्यन्ते शीर्यन्ते रत्न-वन्ति च[13] ॥१७॥ [N
११] वज्र-विद्रुम-वैडूर्य-मुक्ता-रजत-सम्भवान्[14] ।

---

१. फ च अ—क्रुद्धाः सरा० । रा प्र ब म ल$_1$ ल$_2$—क्रुद्धाः रावणश्च म० । २. फ—०वृद्धांश्च शो० । रा प्र ब म ल$_1$ ल$_2$ अ—०वृद्धाश्च शो० । ३. आ—वेश्मनः । म—वेश्मनि । ४. आ—धूमाच्छ्रवद्भिर् । प्र ब म ल$_1$ ल$_2$—धूमाद्धलद्भिर् । ५. अतः परमधिकः पाठः—म—विमानेभ्यः प्रदीप्तेभ्यः दह्यमाना वरांगनाः । त्यक्ताभरणसंयोगा भयार्ता विप्रदुद्रुवुः । मुक्तोत्तरीय-संभ्रान्ता दृश्यमानपयोधराः । धावन्ति तत्र तत्रैव मृग्यो दावार्दिता यथा ॥ ६. रा प्र ब म ल$_1$ ल$_2$—आकाशात्पतिताः । ७. आ—अटन् पर्यटते म० । फ—अटन्पर्यटते बली । च—अटन् पर्यटते वशी । रा प्र ब म ल$_1$ ल$_2$—अटन्परिवृतो वशी । अ—अटते भृशं । ८. फ अ—तु । च रा प्र ब म ल$_1$ ल$_2$—च । ९. च रा प्र ब म ल$_1$ ल$_2$—आकाशात्पतितानि च । अ—अंबरात्कालसंक्षये । १०. फ—०नजातानि । ११. रा म ल$_1$ ल$_2$—०वृतानि । १२. ब प्र—नास्ति । १३. फ—विमानानि व्यसीर्यन्त रत्नवन्ति च । ब—नास्ति । १४. आ—०संभवाम् । फ—०संहतान् ।

विचित्रै[1](?तान्)भवनैर्(?ने)धातून् स्यन्दे[2]ना(?मा)नि(?नान्)ददाहे[2] सः
१२] नाऽग्निस् तृप्यति काष्ठानां ना[3]ऽग्नेः स हरि-यूथ-पः ।
(?न)ह[4]नुमता(?नू-)निरस्तानां राक्षसानां वसुं-धरा[5]।१९।। [२९
१३] सी[6]तयाऽभ्य्-अ[6]र्थितो वह्निर् लं[7]कां राक्षस[7]-संकुलाम् । [N
ज्वाला-मा[8]ला-परिक्षेपैर् अदहन् मारुताऽन्वितः ॥२०॥ [३४उ
१४] तेन शब्देन वि-[9]ध्वस्ता धर्षितास् तेन चाऽग्निना ।
१५पू] अभि-पेतुस् त[10]तो घोरा[11] ह[12]नुमन्तं निशा-चराः ॥२१॥ [३५
१७उ] संप्र-दीप्तैश् च शै[13]लाऽग्रैः पाशैः खड्गैः प[14]रश्वधैः ।
N] हनूमन्तं महा-वेगैर्[15] अभ्य्-अ[15]घ्नन् नैरृतर्षभाः ॥२२॥[३६
१५उ] ते राक्षसा भीम-बला नाना-प्रहरणाऽन्विताः । [३७पू
आ-जघ्नुर् वानर-श्रेष्ठं बाणैर् आदित्य-[16]सन्निभैः २३ [N
१६] आ-वर्त्त इव तो[17]यस्य गा[17]ङ्गस्य वि-पुलो महान् ।
१७पू] परि-क्षिप्य हनूमन्तं सं-बभौ रक्षसां गणः ॥२४॥ [N
१८उ] ततो वाताऽऽत्म-जः क्रुद्धो हेम-रू[18]प्य-समावृतम् ।
प्रासादस्य समुद्-धृत्य स्तम्भं हेम-विभूषितम् ॥२५॥[19] [N
भ्रामयित्वा गुण-श[20]तं नाम वि-श्राव्य चाऽऽत्मनः ।

---

१. ब प्र म अ–विचित्रान् भवने । ल$_{2}$–विचितान् भवने । २. फ च रा ब प्र म अ ल$_{1}$ ल$_{2}$–स्यन्दमानान् ददर्श । ३. रा प्र ब म ल$_{1}$ ल$_{2}$–नाग्नौ । ४. फ अ–हनू० । ५. फ अ–०न्धराम् । ६. अ–शीतायाभ्यर्थितो । फ–सीतयाभ्यर्च्चितो । ७. फ अ–लंकां वै राक्षसाकुलाम् ॥ ८. आ–०मालप० ॥ ९. फ च–संक्रुद्धा । रा प्र ब म ल$_{1}$ल$_{2}$–संरब्धा । अ–वित्रस्ता । १०. फ–तदा । ११. ल$_{2}$–वीरा । १२. च ब म ल$_{2}$–हनू० । १३. प्र–शैलाग्रैः । १४. आ–परश्वधैः । १५. फ अ–०वेगा प्राक्षिपन् । च रा प्र ब म ल$_{1}$ ल$_{2}$–०वेगैराजघ्नुर्नै० । १६. ल$_{1}$–०त्यमर्चितैः । १७ फ अ–गांगस्य तोयस्य । १८. आ–हेमरूपसमद्युतिम् । फ–हेमरूपसमाचितम् । अ–हेमरूप्यं समन्ततः । १९. रा–नास्ति । २०. फ–शतगुणं ।

१९] जघान राक्षसान् घोरान् वज्रेणेन्द्र इवाऽसुरान् । [N
N] नि-हत्य राक्षसांस्[1] तत्र दिवम् एवोत्-पपात हे[2] ॥२६[3]॥[३७उ
अथ[4] वि-क्रम्य सहसा सं-क्रामन्[5] स गृहाद् गृहम् ।
N] लंकाम् आ-दीपयामास वायु-वेगैः[6] प्र-तापवान् ॥२७॥ [३८
स लांगूलाऽव-सक्ताऽग्निर् मुक्तो मृत्यु-मुखाद् इव ।
N] लंकां पर्य्-अपतत्[7] कृत्स्नां खं[8] ग्रहः सं-पतन् इव ॥२८॥ [३९
तोरणेषु गवाऽक्षेषु हर्म्येषु शिखरेषु च ।
N] तिष्ठमानं[9] स्म[10] पश्यन्ति राक्षसाः प्लवगोत्तमम् ॥२९॥ [४०
सर्व-तो हनुमान् एकः सं-पतन् स व्य्-अराजत ।
N] हुताऽशन इवाऽऽकाशे ज्वाला-माला-परिष्कृतः ॥३०॥ [N
अन्तःपुर-विमानेषु रावणस्य महा-कपिः ।
N] नि-पपाताऽग्नि-सहितो मूर्त्ति-मान् इव पावकः ॥३१॥ [N
हुताऽशन[11]-ज्वाल-समावृता सा
हत-प्रवीरा परमाऽऽर्त्त-योधा ।
हनूमता[12] कोप[13]-बलाऽभिभूता
२०] बभूव कालोप-हतेव लंका ॥३२॥ [४१
स राक्षसांस् तान्[14] सु-बहून् नि-हत्य[15]

१. आ–च वरांस् । २. म–सः । ३. रा नास्ति ।४. ल₁–अतिवि० । ५. आ–संक्रमत् । फ–संक्रमन् । रा–संक्रामत् । ६. फ च रा प्र ब म ल₁ ल₂ अ–०पुत्रः । ७. फ–०र्यचरत् । ८. फ रा प्र ब म ल₁ ल₂ अ–खे । ९. आ–तिष्ठमानाः । फ–०मानन्तु । च रा प्र म ल₁ ल₂–०मानास्तु । १०. रा प्र ब म ल₁ ल₂–०परिप्लुतः । अ–०पुरस्कृतः । ११. फ–हुताऽशनेनाथ स० । १२. फ च रा म अ–हनूमतः । १३. अ–कंप० । १४. फ–तांश्च ब० । १५. फ–निपात्य ।

वनं च भंक्त्वा बहु-पादपं तत[1] ।
वि-सृज्य रक्षो-भवनेषु चाऽग्निं
N] जगाम रामं मनसा महाऽऽत्मा ॥३३॥ [५६
स दीर्घं[2] लीलयोत्थाप्य[3] लांगूलं भीम-दर्शनम् । [सर्ग५०
N] निर्-वापयामास तदा समुद्रे हरि-सत्तमः[4] ॥३४॥ [१
स तां भय-भ्रान्त-निशाचराऽऽकुलां
समुज्ज्वल-ज्वाल-हुताऽशनाऽङ्किताम् ।
ददर्श लंकां हनुमान् महा-यशाः
N] स्वयम्भु[5]-कोपोपहताम् इव क्षितिम् ॥३५॥ [५३

इत्यार्षे[6] रामायणे[7] सुन्दर-काण्डे लंका[8]-पर्वणि लंका-दाहो[9]
नाम पंचाशः सर्गः ॥५०॥

---

१. फ-ततः । २. अ-दीर्घः । ३. फ-०लीलयोद्धृत्य । अ-०लीलयोच्छित्य । ४. रा प्र ब म ल१ ल२-हरिपुंगवः । अ-कपिसत्तमः । ५. आ-स्वयंभुकोपाप० । रा ब म ल१ ल२-स्वयंभुवः कोप० । ६. ल२-इति । रा-श्रीरामायणे । ७. फ प्र ब म-नास्ति । ८. फ-लंकाप्रदीपनं । ज-लंकादहनं । रा म ल१ ल२-लंकादीपनं । ब-लांगूलोद्दीपनं । ९. अ-सुन्दरकाण्डे लंकाप्रदीपनो नाम सर्गः॥

N] प्रदीप्यमाने[1]-लांगूले हनूमति महा-बले ।
जानकीं दुःख[2]-सन्तप्तां सरमा वाक्यम् अब्रवीत् ।
१] दीप्य-मानां स्वया[3] लक्ष्म्या सन्ध्याम् औत्पातिकीं[4] यथा ॥१॥
प्र-शमं गच्छ वैदेहि हनूमन्तं प्रति प्रिये ।
२] गतः स[5] प्रिय[6]-दूतस् ते छित्त्वा पाशान् इव द्विपः ॥२॥
स राक्षस-सहस्राणि वि-द्राव्य[7] हरि-पुंगवः ।
३] नि-हत्य राक्षसान् वीरान्[8] दिवम् एवोत्-पपात ह ॥३॥
अथ वि-क्रम्य सहसा सं-क्रामन्[9] स गृहाद् गृहम् ।
४] लंकाम् आ-दीपयामास वायु-पुत्रो महा-बलः ॥४॥[10]
५पू] स हि पुच्छाऽव-सक्तोऽग्निर्[11] मुक्तो मृत्यु-मुखाद् इव ।
दावाऽग्निर् इव रोषेण[12] कपिः पावक-सन्निभः ।
९] ददाहेमां पुरीं लंकां कृत्स्नां रावण-पालिताम्[13] ॥५॥
सेयं रोष-परीतेन क्रुद्धेनेवाऽन्तकाऽग्निना ।
१०] कृत्स्ना प्र-दह्यते[14] लंका शिशिरेणेव पद्मिनी ॥६॥
प्रासादाः पाण्डुराऽभ्राऽऽभा[15] ज्वलनेन समा-हृताः ।
११] पर्वता इव दृश्यन्ते काञ्चनाऽर्जुन[16]-धातवः ॥७॥

---

१. आ-प्रदीप्यमाने लां० । २. फ अ-शोक० । ३. प्र-स्वयं । ४. च ब म ल$_1$,ल$_2$ प्र-औपयिकीं । रा-औपायिकीं ।५. फ-नास्ति । ६. च रा प्र ब म ल$_1$ ल$_2$ अ-संप्रति दू० । ७. आ-विद्रास्य । ८. फ-च वरांस्तत्र । आ-राक्षसान्वीरो । ९. आ-संक्रमत् । १०. फ-नास्ति । ११. आ-०सक्तोऽग्निः । फ-पुच्छावसक्तोऽपि । च-०सिक्तोग्निः । ब-०सिक्ताग्निः । १२. फ-कोपेन । १३. फ-काल इवान्तकः । १४. फ-प्रदीप्यते । ल$_2$ अ-प्रदह्यते । १५. आ-पांडुराभासा । अ-पांडुरज्वालाः । १६. फ-मेघाः सेन्द्रायुधा इव ॥

अमी[1] ज्वाला-परीताऽगा भग्न-दंष्ट्राश् च कुञ्जराः ।
१२] राज-मार्गेषु दृश्यन्ते मेघाः सेन्द्राऽऽयुधा इव ॥८॥[2]
सम्प्रदीप्त-कलापाऽग्रा[3] त्रि-कलापाश् च बर्हिणः ।
१३] सं-क्रामन्त[4] इवाऽऽभान्ति पुष्पिताः कमलाऽऽकराः ॥९॥[5]
क्वचित् किंशुक-वर्णाऽऽभाः[6] क्वचिच् छाल्मलि-सन्निभाः ।
१४] रक्तोत्पल-निभाः[7] काँऽपि[8] दृश्यन्ते पावकाऽर्चिषः ॥१०॥
रावणाऽन्तः-पुरं सर्वं[9] दह्यते सर्व-तोऽग्निना ।
१६] दह्यते ननु देशोऽयं सीते यत्र तवाऽऽसनम् ॥११॥
सा वायुना भ्रान्त-हुताऽशनाऽर्चिषा
पुरी दवाऽग्नि-प्रतिमेन सर्व-तः ।
प्र-सह्य[10] लंकां प्लव-गेन धीमता
हुताऽशनायोप-हृता[11] यथा बलिः ॥१२॥
१७] कपि-प्रमुक्तेन[12] भृशेन[13] वह्निना
प्र-सह्य लंका वर-गात्रि दह्यते ।
बलाद्[14] बलि-श्रेष्ठ-तमेन धीमता
गताऽऽसु[15]-कल्पाश् च कृता निशा-चराः ॥१३॥
N] न सन्ति यानानि न सन्ति राक्षसा[16]
गृहाण्य्[17] अ-दग्धानि न सन्ति जानकि ।
कृता हि लंका स-गृहाऽऽसन[18]-द्रुमा

---

१. म–अग्निज्वाला० । २. फ–नास्ति । ३. च रा अ–संप्रदीप्ता क० । म–०प्तकलापाश्च । ४. अ–संक्रामन्ति । ५. रा–नास्ति । ६. फ अ–०पुष्पाभाः । ७. आ–निकाशाश्च । ८. ०आ–पुरः । ९. फ अ–चैव सर्वतो दह्यतेऽग्निना । १०. आ–प्रविश्य लङ्कां । ११. आ–०हृतो । अ–०हिता । १२. म–०प्रवीरेण । १३. च रा प्र ब म ल$_1$ ल$_2$–भृशं स । १४. अ–कालात् कपिश्रे० । फ म–बलाद्धरिश्रे० । १५. आ–गतासु० । १६. आ–रक्षसां । १७. च रा प्र ब म ल$_1$ ल$_2$–गृहाणि द० । १८. फ–०हाचलद्रुमा । च रा प्र ब स ल$_1$–०हा वनद्रुमा । ल$_2$–०हा वनेगृहा । अ–०हा सराक्षसा ।

हुताऽशनेनाऽप्रतिमेन भस्म-सात् ॥१४॥

N] ततस् तु लंकां कुपिता[1]ऽग्नि-विद्रुमां[1]

सम्-ईक्ष्य सर्वे कुपिता निशा-चराः ।[2]

प्र-दुद्रुवुर् दारुण-दर्शना भृशं

रुराव रावं च[3] सु[4]-हर्षितो हरिः ॥१५॥[5]

N] पुरीं[6] प्र-दग्धां[6] ज्वलनेन[7] भास्वतां[7]

महाऽऽत्मना भामिनि सर्वतो-दिशम् ।

N] तवाऽर्थ-सिद्धिं प्रथमं तु खे-चरा

वि-नाशम् एतं[10] हि[10] वदन्ति[11] पण्डिताः[11] ॥१६॥

कृताम् अ-बुद्धिं प्र-वदन्ति सर्व-तः

१८] कपि-प्रवीरेण निशम्य धर्षिताम् ।

१९[2]] पुरीम् इमां रावण-बाहु-पालितां

N] वि-नश्यमानां [13]सम्-ईक्ष्य सर्व-[13]शः[14] ॥१७॥

ततस् तु धैर्येण विचार्य मैथिली[15]

प्र-शाम्य शोकाऽग्निम् अपां घटैर् इव ।

---

१. आ–कपिरग्निविद्रुतां । फ०ज्वलिताग्निवि० । च रा प्र म ल$_1$ ल$_2$ अ–०विद्रुतां । २. आ–समीक्ष्य सर्वां व्यथितां सुदुर्दशाम् । अ–समीक्ष्य सर्वां मथितां सुदारुणाम् । ३. फ च रा–स । ४. च–च ह० । ५. आ–नास्ति । ६. आ–भृशं प्रदीप्तां । ७. फ–हुताशनार्दिताम् । ८. फ–सरावणां भाविनि । च रा प्र ब म ल$_1$ ल$_2$ अ–सरावणां । ९. आ–प्रवदन्ति । १०. फ–एतद्धि । ब म ल$_2$–एषां हि । ११. आ–निशम्य धर्षिताम् । १२. आ फ रा प्र ब ल$_3$ अ–नास्ति । १३. आ–च वदन्ति पण्डिताः । १४. ब–नास्ति । १५. आ–मैथिलि ।

N] गता प्रसादं मधुराऽक्षरं वचो
१.९[4]] निशम्य[1] तस्या जहृषे ननन्द च[1] ॥१८॥

इत्यार्षे[2] रामायणे सुन्दर-काण्डे सरमा[3]-वाक्यं
नामैकपंचाशः सर्गः ॥५१॥

---

१. च–निशम्य हर्षेण ननन्द जानकी। रा प्र ब म ल$_1$ ल$_2$–निशम्य तस्या जहृषे ननाद च। २. ल$_2$ अ–इति। ३. अ–लंकादाहे सरमावाक्यं। ब–सुरमावाक्यं॥

सं[1] दीप्य-मानां वि-ध्वस्तां त्रस्त[2]-रक्षो-गणां पुरीम् ।
१] अवेक्ष्य[3] हनुमांल् लंकां चिन्तयामास वि-क्लवः[4] ।।१।। [२
तस्याऽऽसीत् सु-महांस् त्रासः कुत्सा चाऽऽत्मन्य्[5] अजायत ।
N] लंकां प्र-दहता कर्म[6] किं चि(?स्वि)त्[7] कृतम् इदं मया ।।२।। [३
धन्यास् ते पुरुष-श्रेष्ठा ये बुद्ध्या कोपम् उत्थितम् ।
४] नि-रुन्धन्ति महाऽऽत्मानो दीप्तम्[8] अग्निम् इवाऽम्भसा ।।३।। [४
परि-दग्धा पुरी लंका नूनम् आर्याऽपि जानकी[9] ।
N] दग्धा तेन[10] मया भर्तुर् हतं कार्यम् अ-जानता ।।[11]४।। [९
यद्-अर्थम् अयम् आरम्भस् तत्[12] कार्यं वि-फलं कृतम् ।
२] मया हि दहता लंकां न सीता परि-रक्षिता ।।५।। [१०
ईषत्-कर[13]म् इदं कार्यम् आसीत्[14] पूर्वं न संशयः ।
३] तस्य[15] क्रोधाऽभि-भूतेन मया मूल-क्षयः कृतः ।।[16]६।। [११
वि-नष्टा जानकी व्यक्तं[17] न ह्य् अ-दग्धः प्र-दृश्यते[18] ।
५] लंकायां[19] कश्चिद् उद्देशः सर्वा भस्मी-कृता पुरी ।।७।। [१२
यद् इदं वि-हितं[20] कार्यं मम प्रज्ञा-विपर्ययात् ।

---

१. रा प्र ब ल$_1$ ल$_2$ अ–संदीप्य० । २. आ–ध्वस्तरक्षो० । म–रक्षोगणसमाकुलाम् । ३. अ–समीक्ष्य । ४. फ–वानरः । ५. अ–चैव व्यजायत । ६. अ–किंस्वित्किं किं । ७. अ–दीप्यम् । ८. फ अ–यदि दग्धा । ९. च रा प्र ब म ल$_1$ ल$_2$–मैथिली । १०. च रा प्र ब म ल$_1$ ल$_2$–मया तथा । ११. अ–नास्ति । १२. फ–तदेवमवसादितं । प्र म ल$_1$ ल$_2$–तत्कार्यमफलं कृ० । १३. आ प्र ल$_1$ ल$_2$–०त्कृतम् । १४. प्र ल$_1$ ल$_2$–मया प्रज्ञाविपर्ययात् । १५. च रा ब म अ–तेन । १६. प्र ल$_1$ ल$_2$–नास्ति ॥ १७. फ रा ब म–नूनं । १८. फ–प्रकाशते । १९. फ च अ–लंकायाः क० । रा ब म–चैव हि दुर्धर्षा मया । २०. आ–रहितं ।

६] इहैव प्राण-संन्यासो[1] ममाऽपि ह्य्[2] अभि-रोचते ॥८॥ [१३
किम् अग्नौ नि-पताम्य्[3] आशु[3] आहोस्विद् वडबा-मुखे ।
७] शरीरं वाऽपि सत्त्वेभ्यो ददामि मकराऽऽलये ॥९॥ [१४
कथं हि जीवता[4] शक्यो मया द्रष्टुं हरीऽऽश्वरः[5] ।
८] तौ वा पुरुष-शार्दूलौ कार्य-सर्वस्व-घातिना ॥१०॥ [१५
मया खलु तद् एवेदं रोष-दोषात्[6] प्रकाशितम् ।
९] प्रथितं[7] त्रिषु लोकेषु कपित्वम् अनव-स्थितम् ॥[8]११॥ [१६
धिग् अस्तु राजसं[9] भावम् अन्-ईर्षम्[10] अन्-अवस्थितम् ।[11]
१०] ईश्वरेणाऽपि यद्[12] रोषान्[12] मया सीता न रक्षिता ॥१२॥[13] [१७
वि-नष्टायां तु वैदेह्यां ताव् उभौ वि-नशिष्यतः ।
११] तयोर् वि-नाशात् सु-ग्रीवः स-बन्धुर् वि-नशिष्यति ॥१३॥ [१८
एतद् एवं[14]-विधं श्रुत्वा भरतो भ्रातृ-वत्सलः ।
१२] धर्माऽऽत्मा सह[15]-शत्रुघ्नः कथं शक्ष्यति[16] जीवितुम् ॥१४॥ [१९
इक्ष्वाकु-वंशे धर्म्म-ज्ञे गते नाशम्[17] अ-संशयम्[17] ।
१३] नशिष्यन्ति प्रजाः सर्वाः शोक-संताप-पीडिताः ॥१५॥ [२०
तद् अहं मन्द-भाग्यस् तु लुप्त-धर्माऽर्थ-संग्रहः ।

---

१. रा प्र ब म ल१ ल२–०विन्यासो । २. आ रा प्र ब–ह्यपि रो० । च–ह्यतिरो० । ३. फ–निपताम्यद्य । अ–निपतान्येव । ४. आ–जीविता । ५. अ–कपीश्वरः । आ–हरीश्वरम् । ६. फ–रोषामर्षात् । रा प्र ब म ल१ ल१–रोषावेषात् । ७. रा प्र ब म ल१ ल२–प्रश्रुतं । ८. च रा ब म ल१ ल२ अ–अयं श्लोकार्धो व्यत्यासेन पठितः । ९. रा–राक्षसं । १०. च–अनीषम् । ११. फ–नास्ति । १२. आ–यद्रागान् । फ–सा ह्येषा । १३. ब–अयं श्लोकार्धो व्यत्यासेन पठितः । १४. फ अ–एव वधं । १५. फ ल१ ल२–स हि श० । १६. ल१ ल२–शक्नोति । १७. आ–नाशं न संशयः ॥

१४] रोष-दोष-परीताऽऽत्मा व्यू-अक्तं लोकं-विनाशकः॥१६॥ [२१
तं एवम् शोक-सम्भ्रान्तं निमित्तान्य् उप-पेदिरे ।
१५] पूर्वम् अप्य् उप-लब्धानि शनैः पुनर् अचिन्तयत्॥१७॥ [२२
अथ-वा चारु-सर्वाऽगी रक्षिता स्वेन तेजसा ।
१६] न नशिष्यति कल्याणी नाऽग्निर् अग्नौ प्र-वर्तते ॥१८॥ [२३
तस्य धर्माऽऽत्मनो भार्यां साध्वीम् अमित-तेजसः ।
१७] स्व-चारित्राऽभि-गुप्तां तां स्प्रष्टुं नाऽर्हति पावकः॥१९॥ [२४
नूनं राम-प्रभावेन वैदेह्याः सु-कृतेन च ।
१८] यन् मां दहन-कर्माऽपि नाऽदहद् हव्य-वाहनः ॥२०॥ [२५
त्रयाणां भरताऽऽदीनां भ्रातृणां देव-वर्चसाम् ।
१९] रामस्य च मनः-कान्तां तां कथं सम्प्र-धक्ष्यति । [२६
N] नाऽदहन् मम लांगूलं कथम् आर्यां प्र-धक्ष्यति ॥२१॥ [२७उ
व्रतोप-वास-निरतां नित्यं राम-परायणाम् ।
२०] कथं तां धक्ष्यते ह्य् अग्निर् अतितीव्र-व्रते स्थिताम् ॥२२॥[N
तपसा सत्य-संवादाद् अन्-अन्यत्वाच् च भर्तरि ।
२१] अपि सा निर्-दहेद् अग्निं न ताम् अग्निः प्र-धक्ष्यति॥२३॥[२९

---

१. ल$_2$–शोक० । २. फ–०संतप्तं । ३. रा प्र ब ल$_1$ ल$_2$–नास्ति । ४. च–साक्षात् पु० । म–स भूयः पर्यचिन्तयत् । अ–सूक्ष्माण्यवगतानि च । ५. रा प्र ब ल$_1$ ल$_2$–नास्ति ॥ ६. फ अ–नह्यस्य भार्या । ७. ल$_1$ ल$_2$–तामतिते० । ८. ल$_1$ ल$_2$–०भिगुप्तस्य । ९. फ–दग्धुमर्हति । १०. अ–०प्रभावमनःकान्ता कथमग्निः प्रधक्ष्यति । च प्र ल$_1$ ल$_2$–०प्रभावेन वैदेह्यास्तपसापि वा । रा ब म–०प्रभावेण वैदेह्यास्तपसापि वा । ११. अ फ ल$_1$ अ–यदा । १२. अ–सर्वत्राप्रतिमः पुनः । १३. फ च रा ब प्र म ल$_1$ ल$_2$–चैव तेजसा । १४. प्र म ल$_1$ ल$_2$–यदा दहनकर्मायं सर्वत्राप्रतिमः प्रभुः । अ–यदा दहनकर्मायं सर्वत्राप्रतिमप्रभः । १५. फ–मनःकांता कथं नाशमवाप्नुयात् । च रा प्र ब म ल$_1$ ल$_2$–मनःकांतां नित्यं रामपरायणां । १६. अ–नास्ति । १७. च रा प्र ब म ल$_1$ ल$_2$–नास्ति । १८. फ–०परमां । १९. च रा प्र ब ल$_1$ ल$_2$–नास्ति । २०. प्र म ल$_1$ ल$_2$–दह्यते । २१. फ–

६] इहैव प्राण-संन्यासो[1] ममाऽपि ह्य्[2] अभि-रोचते[2] ॥८॥ [१३
किम् अग्नौ नि-पताम्य्[3] आशु[3] आहोस्विद् वडबा-मुखे ।
७] शरीरं वाऽपि सत्त्वेभ्यो ददामि मकराऽऽलये ॥९॥ [१४
कथं हि जीवता[4] शक्यो मया द्रष्टुं हरीऽऽश्वरः[5] ।
८] तौ वा पुरुष-शार्दूलौ कार्य-सर्वस्व-घातिना ॥१०॥ [१५
मया खलु तद् एवेदं रोष-दोषात्[6] प्रकाशितम् ।
९] प्रथितं[7] त्रिषु लोकेषु कपित्वम् अनव-स्थितम् ॥[8]११॥ [१६
धिग् अस्तु राजसं[9] भावम् अन्-ईशम्[10] अन्-अवस्थितम् ।[11]
१०] ईश्वरेणाऽपि यद्[12] रोषान्[12] मया सीता न रक्षिता ॥१२॥[13] [१७
वि-नष्टायां तु वैदेह्यां ताव् उभौ वि-नशिष्यतः ।
११] तयोर् वि-नाशात् सु-ग्रीवः स-बन्धुर् वि-नशिष्यति॥१३॥[१८
एतद् एवं[14]-विधं श्रुत्वा भरतो भ्रातृ-वत्सलः ।
१२] धर्माऽऽत्मा सह[15]-शत्रुघ्नः कथं शक्ष्यति[16] जीवितुम् ॥१४॥ [१९
इक्ष्वाकु-वंशे धर्म्म-ज्ञे गते नाशम्[17] अ-संशयम्[17] ।
१३] नशिष्यन्ति प्रजाः सर्वाः शोक-संताप-पीडिताः ॥१५॥ [२०
तद् अहं मन्द-भाग्यस् तु लुप्त-धर्माऽर्थ-संग्रहः ।

---

१. रा प्र ब म ल$_1$ ल$_2$—०विन्यासो । २. आ रा प्र ब—ह्यपि रो० । च—ह्यतिरो० । ३. फ—निपताम्यद्य । अ—निपतान्येव । ४. आ—जीविता । ५. अ—कपीश्वरः । आ—हरीश्वरम् । ६. फ—रोषामर्षात् । रा प्र ब म ल$_1$ ल$_1$—रोषावेषात् । ७. रा प्र ब म ल$_1$ ल$_2$—प्रश्रुतं । ८. च रा ब म ल$_1$ ल$_2$ अ—अयं श्लोकार्धो व्यत्यासेन पठितः । ९. रा—राक्षसं । १०. च—अनीशम् । ११. फ—नास्ति । १२. आ—यद्रागान् । फ—सा ह्येषा । १३. ब—अयं श्लोकार्धो व्यत्यासेन पठितः । १४. फ अ—एव वधं । १५. फ ल$_1$ ल$_2$—स हि श० । १६. ल$_1$ ल$_2$—शक्नोति । १७. आ—नाशं न संशयः ॥

१४] रोष-दोष-परीताऽऽत्मा व्य्-अक्तं लोके[1]-विनाशकः ॥१६॥ [२१
तं एवम् शोक-[2]सम्भ्रान्तं निमित्तान्य् उप-पेदिरे ।
१५] पूर्वम् अप्य् उप-लब्धानि शनैः[3] पुनर् अचिन्तयत्[4] ॥१७॥[5] [२२
अथ-वा चारु-सर्वाऽ[6]ङ्गी रक्षिता स्वेन तेजसा ।
१६] न नशिष्यति कल्याणी नाऽग्निर् अग्नौ प्र-वर्तते ॥१८॥ [२३
तस्य धर्माऽऽ[6]त्मनो भार्यां साध्वीम्[6] अमित[7]-तेजसः ।
१७] स्व-चारित्राऽभि-गुप्तां[8] तां स्प्रष्टुं[9] नाऽर्हति पावकः ॥१९॥ [२४
नूनं राम-प्रभावेन[10] वैदेह्याः सु-कृतेन च[10] ।
१८] येन्[11] मां[11] दहन-कर्माऽपि नाऽदहेद्[12] हव्य-वाहनः[12] ॥२०॥ [२५
त्रयाणां भरताऽऽदीनां भ्रातॄणां देव-वर्चसाम्[13] ।[14]
१९] रामस्य च मनः-कान्तां[15] तां कथं सम्प्र-धक्ष्यति[15] ।[16] [२६
N] नाऽदहन् मम लांगूलं कथम् आर्यां प्र-धक्ष्यति ॥२१॥[17] [२७ उ
व्रतोप-वास-निरतां[18] नित्यं राम-परायणाम् ।[19]
२०] कथं तां धक्ष्यते[20] ह्य्[21] अग्निर् अतितीव्र-व्रते स्थिताम्[21] ॥२२॥ [N
तपसा सत्य-संवादाद् अन्-अन्यत्वाच् च भर्तरि ।
२१] अपि सा निर्-दहेद् अग्निं न ताम् अग्निः प्र-धक्ष्यति[22] ॥२३॥ [२९

---

१. ल₂—शोक० । २. फ—०संतप्तं । ३. रा प्र ब ल₁ ल₂—नास्ति । ४. च—साक्षात् पु० । म—स भूयः पर्यचिन्तयत् । अ—सूक्ष्माण्यवगतानि च । ५. रा प्र ब ल₁ ल₂—नास्ति ॥ ६. फ अ—नह्यस्य भार्या । ७. ल₁ ल₂—तामतिते० । ८. ल₁ ल₂—०भिगुप्तस्य । ९. फ—दग्धुमर्हति । १०. आ—०प्रभावमनःकान्ता कथमग्निः प्रधक्ष्यति । च प्र ल₁ ल₂—०प्रभावेन वैदेह्यास्तपसापि वा । रा ब म—०प्रभावेण वैदेह्यास्तपसापि वा । ११. आ फ ल₁ अ—यदा । १२. आ—सर्वत्राप्रतिमः पुनः । १३. फ च रा ब प्र म ल₁ ल₂—चैव तेजसा । १४. प्र म ल₁ ल₂—यदा दहनकर्मायं सर्वत्राप्रतिमः प्रभुः । अ—यदा दहनकर्मायं सर्वत्राप्रतिमप्रभः । १५. फ—मनःकांता कथं नाशमवाप्नुयात् । च रा प्र ब म ल₁ ल₂—मनःकांतां नित्यं रामपरायणां । १६. आ—नास्ति । १७. च रा प्र ब म ल₁ ल₂—नास्ति । १८. फ—०परमां । १९. च रा प्र ब ल₁ ल₂—नास्ति । २०. प्र म ल₁ ल₂—दह्यते । २१. फ—

स तथा चिन्तयंस् तत्र देव्या धर्म-परिग्रहम् ।
२२] शुश्राव हनुमान् वाचं[1] चारणानां मनस्-विनाम् ॥२४॥ [३०
अहो खलु कृतं कर्म दुर्वि-षह्यं हनूमता ।
२३] अग्निं वि-सृजता भीमं भीमे रात्तस-मन्दिरे ॥२५॥ [३१
दग्धेयं नगरी सर्वा[2] साऽद्रि[3]-प्राकार-तोरणा ।
२४] जानकी च न दग्धेति वि-स्मयोऽभून्[4] महान् हि नः॥२६॥[३३
इति शुश्राव हनुमान् वाचं ताम् अ-मृतोपमाम् ।
N] बभूव चाऽस्य मनसो हर्षस् तत्-काल-सम्भवः ॥[6]२७॥[३४
स[7] निश्चित्याऽथ दृष्टाऽर्थैः कारणैश् च महा-गुणैः ।
२५] ऋषि-वाक्यैश् च हनुमान् अभवत् प्रीत-मानसः ॥[8]२८॥[३५
ततः कपिः प्राऽऽप्त-मनोरथाऽर्थस्
२६पू] ताम् अ-क्षतां राज-सुतां च श्रुत्वा[9] ।
प्रत्यक्त-तस् तां पुनर् एव द्रष्टुं
N] प्रति-प्रयाणाय मतिं चकार ॥२९॥ [३६

इत्यार्षे[10] रामायणे सुन्दर-काण्डे हनुमच्चिन्ता[11]
नाम द्विपंचाशः सर्गः ॥ ५२ ॥

---

१. प्र म ल$_1$ ल$_2$ अ—वाचस् । २. फ—लंका । ३. आ—साट्टप्रा० । फ—दप्तप्रा० । ४. फ अ—विस्मयोद्भुतमेव च । ५. प्र—अभवत् प्रीतमानसः । ६. फ—नास्ति । ७. च—निश्चित्यार्थदृष्टार्थौ । प्र ब म ल$_1$ ल$_2$—०त्याथ दृष्टार्थैः । अ—सन्निमित्ते च दृष्टार्थैः । ८. फ—नास्ति । ९. आ—विदित्वा । १०. ल$_2$—इति । ११. फ अ—सीतानुशोचनं ॥

ततस् तु शिंशपा[1]-मूले जानकीं पर्यव[2]-स्थिताम् ।
N] अभि-गम्या[3]ऽब्रवीद् दृष्ट्वा[4] देवि[5] यास्यामि चा(?त्वा)ऽक्षताम्[6] १[१
२उ] ततस् तं प्र-स्थितं दृष्ट्वा वीऽऽक्ष[7]माणा पुनः[8] पुनः ।[9]
भर्तृ-स्नेहाद् इदं भर्त्तुः सु-हृदं तम् अथाऽब्रवीत् ॥२॥ [२
३] यदि[10] त्वं[10] मन्यसे तात[11] वसैकाऽहम्[12] इहाऽन्-अघ ।
कच्चित् सुसं-वृते देशे वि-श्रान्तः श्वो गमिष्यसि ॥[13] ३॥[३
४] मम चैवाऽल्प-भाग्यायाः सान्निध्यात् तव वानर ।
शोकस्याऽस्याऽप्रमेयस्य मुहूर्त्तं स्याद् अपि क्षयः ॥४॥ [४
५] गते हि हरि-शार्दूले (?ल) पुनः[14] सं-प्रा[14]ऽऽप्तये त्वयि ।
प्राणेष्व् अपि[15] न वि-श्वासो मम वानर-पुंगव ॥५॥ [५
६] अ-दर्शनं च[16] ते[16] वीर भूयो मां तापयिष्यति ।
दुःखाद् दुःख-तरं भूयो[17] प्र-यास्ये शोक-[18]कर्षिता ॥६॥ [६
७] अयं च वीर सं-देहस् तिष्ठतीऽव ममाऽग्र-तः ।
सु-महत्सु[19] सहायेषु हर्य्-ऋक्षेषु महाऽऽत्मनः[20] ॥७॥ [७

---

१. ब अ—शिंशिपा० । २. आ—पर्यवारिताम् । च—पर्युपस्थिताम् । रा म—प्रस्यव० । ३. रा ब म ल१ ल२ अ—०अभिवाद्य० । ४. फ—हृष्टो । रा ल१ ल२ अ—दृष्ट्वा । ५. आ ल१ ल२—दिष्ट्या पश्यामि चाक्षताम् । रा ब—वीक्षमाणः पुनः पुनः । ६. प्र—नास्ति । ७. आ फ ब—०क्ष्यमाणं । ८. फ—मुहुर्मुहुः । ९. रा—नास्ति । १०. अ—यदिदं । ११. च रा म ल१ ल१—तावद् व० । अ—तात श्रांतो वासम् । १२. फ—अरिन्दम । अ—इह कच्चित् । १३. म—इत आरभ्य २०—शश्लोकप्रथम-पादान्तः पाठो नास्ति । १४. आ—मुहूर्तं गमने । १५. फ अ— इह । १६. फ—ते हि । १७. फ अ—प्राप्य । १८. फ अ—दुर्मनस्कां ह्यभागिनीम् । आ—दुर्मनां शोककर्शिताम् । ल१—प्रवासे शो० । १९. च रा प्र ब ल१ ल२ अ—सुमहांस्त्वत्स० । फ—सुमहांस्तत्स० । २०. आ फ अ—महाबलः ॥

८] कथं नु खलु दुष्-पारं तरिष्यन्ति[1] च[1] सागरम् ।
तानि हर्य्-ऋक्ष-सैन्यानि तौ चोभौ[2] राम-लक्ष्मणौ[2] ॥८॥ [८
९] त्रयाणाम् एव भूतानां सागरस्येह[3] लंघने ।
शक्तिः स्याद् वैनतेयस्य तव वा मारुतस्य वा[4] ॥९॥ [९
१०] तद्[5] एतत्-कार्य-निर्बन्धे[5] समुत्-पन्ने दुरा-सदे ।
किं पश्यसि समा-धानं त्वं हि कार्य-विदां[6] वरः[6] ॥१०॥ [१०
११] कामम् अस्य त्वम् एवैकः कार्यस्य परि-साधने ।
१२पू] पर्य्-आप्तः पर-वीर[7]-घ्न किं नु सर्वैं सुसं-हर्ता: ॥११॥ [११
१४उ] बलैस्[9] तु सं-कुलां कृत्वा लंकां पर-बलाऽर्दनः[10] ।
१५पू] मां नयेद् यदि काकुत्स्थस् तत् तस्य सदृशं भवेत् ॥१२॥ [१२
शरैस् तम् उग्रैर्[11] [12]यदि मां युधि निर्-जित्य रावणम् ।
N] वि-जयी[13] [14]स्वं पुरं[14] रामो नयेत् तत्र[15] स्याद्[15] यशस्-करम् ॥१३॥ [N
१५उ] तद् यथा तस्य वि-क्रान्तम् अनु-रूपं महाऽऽत्मनः ।
भवत्य् आहव-शूरस्य[16] तथा त्वम् उप-पादय[17] ॥१४॥ [१३
१६] तद्[18]-अर्थोप[18]-हितं वाक्यं प्र[19]-श्रितं हेतु-संयुतम् ।
नि-शम्य हनुमांस् तत्र[20] वाक्यम् उत्तरम् अब्रवीत् ॥१५॥ [१४

---

१. आ—पारमेष्यति । ब प्र ल$_1$ ल$_2$ अ—पारमेष्यन्ति । २. फ अ—वा नरवरात्मजौ । ३. फ—सागरस्यापि । रा ल$_2$—०रस्यास्य । ब प्र—०रस्यास्ति । ल$_1$ अ—निसागरस्यावलं० । ४. आ—च । ५. फ अ—तत्र कार्यस्य नि० । च—यदत्र कार्यनि० । रा प्र ब ल$_1$—तदत्र कार्यनि० । ल$_2$—०र्यनिर्वेदसमु० । ६. फ—०विशारदः । ७. प्र—०वीर्यघ्न । फ—०रघ्नस् । ८. फ—तत्त्वेतदुदितं मम । च रा प्र ब ल$_1$ ल$_2$—न त्वेतदुचितं मम । ९. फ—बलैश्च । प्र—बलैस्त्वसं० । १०. फ—०र्दन ॥ ११. फ च अ—उग्रं । १२. च प्र ब—युधि । १३. ल$_1$—विजित्य । १४. रा ल$_1$—स्वपुरं । १५. आ—तस्य । १६. फ—शून्यस्य । १७. रा प्र ब ल$_1$—०पादये: । ल$_2$—०पादये ॥ १८. फ—तदर्थौपायिकं । १९. फ च अ—प्रसृतं । २०. प्र ब ल$_1$ ल$_2$ अ—तस्य ॥

१७] देवि हर्य्-ऋक्ष-सैन्यानाम् ईश्वरः प्लवतां वरः ।
सु ग्रीवः सत्त्व-सम्पन्नस् तवाऽर्थे कृत-निश्चयः ॥१६॥ [१५
१८] स वानर-सहस्राणां कोटि-कोटीभिर्[1] आ-वृतः ।
१९पू] क्षिप्रम् एष्यति वैदेहि सु-ग्रीवः प्लव-गाऽधिपः[2] ॥१७॥ [१६
तौ च वीरौ नर-वरौ सहितौ राम-लक्ष्मणौ ।
N] आ-गम्य[3] नगरीं लंकां सायकैर् वि-धमिष्यतः ॥१८॥ [१७
२६उ] स-गणं राक्षसं हत्वा न-चिराद् रघु-नन्दनः ।
त्वाम् आ-दाय वराऽऽरोहे स्वां पुरीं प्रति-यास्यति[4] ॥१९॥ [१८
२७] समा-श्वसिहि भद्रं ते भव त्वं काल-कांक्षिणी ।
क्षिप्रं द्रक्ष्यसि रामेण नि-हतं रावणं रणे ॥२०॥ [१९
२८] नि-हते राक्षसेन्द्रे च[5] स-मित्राऽमात्य-बान्धवे[6] ।
त्वं सम्-एष्यसि रामेण शशांऽकेनेव रोहिणी ॥२१॥ [२०
एवम् आ-श्वास्य वैदेहीं हनुमान् मारुताऽऽत्म-जः ।
२९] गमनाय मतिं कृत्वा[7] जानकीम् अभ्य्-अवादयत् ॥२२॥ [२२
अ[8]-सत्यानि हि युद्धानि तथा जय-पराजयौ ।
N] दृष्ट्वा[9] च सीतां वैदेहीं श्रेयो मे गमनं त्व् इतः ॥२३॥ [N

इत्यार्षे[10] रामायणे सुन्दर-काण्डे लंका-दाहे हनुमत्[11]-सीताऽऽश्वासनं
नाम त्रिपंचाशः सर्गः ॥५३॥

---

१. फ–कोटीभिरभिसंवृतः । रा प्र ब ल$_1$ ल$_2$–कोटिकोटिभिरावृ० । २. फ–प्रियकृत्ते महाबलः । रा–सुग्रीवः प्लवतां वरः । ३. रा प्र ब ल$_1$ ल$_2$–आगत्य । ४. फ अ–पुरीमभियास्यति । ५. अ–तु । ६. फ रा अ–सुपुत्रामा० । अा–०त्यबान्धवैः । ७. अ–चक्रे । ८. रा प्र ब म ल$_2$–असत्या निश्चला लक्ष्मीस्तथा । ल$_1$–असाध्या निश्चला लक्ष्मीस्तथा । ९. रा प्र म ल$_1$ ल$_2$ अ–दृष्टा हि सीता वैदेही । १०. ल$_2$–इति । अ–हृत्यार्षे । ११. फ रा म ल$_1$ ल$_2$–हनूमता सीता० । प्र अ–सीताश्वासनं ॥

N] राक्षस[1]-प्रवरान् हत्वा नाम वि-श्राव्य चाऽऽत्मनः ।[2]
१पू] नगरीम् आकुलां कृत्वा हत्वा[3] च प्र-वरं बलम् ॥[4]१॥ [२३
N] पुनर् दृष्ट्वा च वैदेहीं व्यथयित्वा च रावणम् ।[5]
१उ] दर्शयित्वा[6] बलं घोरं वैदेहीम्[7] अभि-वाद्य च[8] ।
N] प्रति[9]-गन्तुं मतिं[10] चक्रे[10] पुनर् मध्येन सागरम् ॥२॥[11] [२४
ततः[12] स कपि-शार्दूलः स्वामि-संदर्शनोत्सुकः[13] ।
२] आ-रुरोह गिरिं[14] मुख्यम्[14] अरिष्टम् अरि-सूदनः ॥३॥ [२५
शीत[15]-मारुत-जुष्टाभिर्[15] नीलाभिर् वन-राजिभिः । [N
३] शाल-तालाऽश्व-कर्णैश् च वन्यैश् च बहुभिर् वृतम् ॥४॥ [३३उ
लता-वितानैर् बहुभिः[16] पुष्पवद्भिर् अलंकृतम्[17] ।
४] नाना-मृग-गणाऽऽकीर्णं धातु-विष्यन्द[18]-भूषितम् ॥५॥ [३४
बहु-प्रस्रवणोपेतं शिला[19]-संचय-संकटम् ।

---

१. आ–राक्षसान् प्र०। २. अतःपरमधिकः पाठः–अ–समाश्वास्य च वैदेहीं वारयित्वा पुरं बलम् । ३. प्र–प्रहत्वा । ४. अ–नास्ति ॥ ५. म अ–नास्ति । अतः परमधिकः पाठः–आ–दर्शयित्वा बलं घोरं वञ्चयित्वा च रावणम् *। ६. आ–दर्शनाय । ७. फ–मैथिलीम् । ८. ब म ल₁ ल₂–तु । ९. आ फ रा ब प्र अ–प्रत्यागन्तुं । १०. फ रा ब प्र अ–मनश्चक्रे । ११. म–नास्ति ॥ १२. म–पुनः । १३. फ–स्वामिनो द० । १४. प्र–गिरिमुखम् ॥ १५. आ–तुङ्गपद्मकजु० । फ–तुङ्गपर्वतयुक्ताभिर् । च रा अ–तुङ्गमारुत० । १६. फ अ–विविधैः । १७. फ–अलंकृतैः । १८. फ–०विस्पन्दभू० । ब प्र म–०निष्यन्दभू० । ल₁ ल₂–०निष्यन्दशोभितम् ॥ १९. फ प्र–शिलासंचयकंटकम् । ल₁–शिलाभिश्च समुत्कटम् ।

---

* अ–नगरीमाकुलां कृत्वा वञ्चयित्वा च रावणम् ।

५] महर्षि-यक्ष[१]-गन्धर्व-किन्नरोरग-सेवितम् ॥६॥ [३५
लता-पादप-संबाधं सिंहा[२]ऽऽकुलित-कन्दरम् ।

N] व्याघ्र-द्वी[३]पि-समाकीर्णं स्वादु-मूल-फल-द्रुमम् ॥७॥[४] [३६
समा[५]ऽऽरुरोहाऽति-बलः पर्वतं प्लव-गोत्तमः ।

६] राम-दर्शन-शीघ्रेण प्र[६]-हर्षेण प्र-चोदितः ॥[७]८॥ [३७
तेन पादलता(?तलो)ऽऽक्रान्ता रम्येषु गिरि-सानुषु ।

७] सं[९]-घोषम् अभ्य[१०]-अशीर्यन्त शिलाश् चूर्णी-कृतास् ततः॥९[११] ३८
स तम् आ-रुह्य शैलेन्द्रं व्यू-अवर्धत महा-कपिः ।

८] दक्षिणाद् उत्तरं पा[११]रं प्रा[१२]ऽर्थयंल् लवणाऽम्भसः ॥१०॥ [३९
अ[१३]धि-रुह्य ततो वीरः पर्वतं पवनाऽऽत्म-जः ।

९] ददर्श सागरं भीमं मीनोरगं[१४]-निषेवितम् ॥११॥ [४०

---

१. आ—महर्षिभिर्यक्ष० ॥ २. आ—सिद्धसेवितकं० । ल१—मुनिसेवितकं०
३.—आ—०सिंहस० । ४. अतः परमधिकः पाठः—म—
सोत्तरीयमिवाम्भोदैः श्रृंगान्तरविलंबिभिः । परिधानमिवाधस्तान्नानातरुलतावृतम् ॥
बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः । उन्मिषंतमिवोद्धूतैर्नयनैरिव धातुभिः ॥
तोयोत्पलस्वनैर्मन्दैः प्रगीतमिव सर्वतः । देवदारुभिरुद्वृद्धैरूर्ध्वबाहुमिव स्थितम् ॥
प्रस्खलज्जलसंपातैर्वर्षन्तमिव सर्वतः । वाद्यन्तमिव विस्पष्टैर्नानाप्रस्रवणास्वनैः ॥
आगलन्तमिवाम्भोदैरभ्रशैलैश्चलाचलैः । विस्तीर्णोपलजिह्वाग्रद्विजिह्वमिव पन्नगम्
वेपमानमिव श्यामैः स्कन्धमात्रशिलोच्चयैः । प्रपातजलनिष्यन्दैःप्रोत्क्रुष्टमिव सर्वतः
आलिखन्तमिवाद्योभ्यैर्गण्डशैलैश्चलाचलैः । विकर्णाकरबाहूरुं शरीरमिव वारणाम् ॥
वेणुभिर्मारुतोद्धूतैःकूजन्तमिव कीचकैः । विश्वसन्तमिवामर्षाद् घोरैराशीविषोल्वणैः
नीहारमिव गम्भीरैर्ध्यायन्तमिव गह्वरैः । मेघराजिनिभैः पादैः प्रक्लिन्नमिव सर्वतः
ऋंभमाणमिवाकाशे शिखरैरभ्रमालिभिः । गुहातरगतैः सिंहैर्गर्ज्जतमिवाधिष्ठितैः
लतागृहसमाकीर्णं कुंजैर्बहुभिःसंवृतम् । निकुंजैर्विविधाकारैश्चन्दनैश्च समावृतम् ॥
५. फ अ—तमारु० । ६. म ल१ ल२—स हर्षेण । ७. रा—नास्ति ।
८. आ—पादलताक्रां० । फ च—पादलताक्रान्तो । ल१—पादतलक्रां० ।
९. आ—सर्वेषामवशी० । च—सघोषमवशी० । १०. रा—नास्ति । ११. फ—तीरं ।
१२. म ल१ ल२—पर्यटंल् । १३. प्र—अभि० । १४. फ—मीननक्रनि० ॥

स मारुतं[1] इवाऽऽकाशे मारुतस्यौरसः सुतः ।
१०] प्र-पेदे हरि-शार्दूलः पितुः पन्थानम् उत्तमम् ॥१२॥ [४१
स[2] तथा[2] पीडितस् तेन कपिना पर्वतोत्तमः ।
११] सर्वैश्[3] च सहितः सत्त्वैः[3] प्र[4]-विवेश मही-तलम् ॥१३॥
कंप-मानैश् च शिखरैः पतद्भिश् चाऽचलोपमैः[5] । [४२
१२] स गिरिः क्षोभितस्[8] तेन प्र-नृत्त इव दृश्यते[6] ॥१४॥ [N
तस्योरु-वेगोन्मँथिताः[7] पादपाः पुष्प-शालिनः ।
१३] नि-पेतुर् भू-तले भग्नाः शक्र-वज्राऽऽहता[9] इव ॥१५॥ [४३
कन्दराऽन्तर-संस्थानां[10] पीडितानां महाऽऽत्मनाम् ।
१४] सिंहानां नि-नदो भीमो मेघानाम् इव शुश्रुवे ॥१६॥ [N
अर्द्ध[11]-प्रवृद्ध-वसना व्याकुली-कृत-भूषणाः ।
१५] प्र[12]-पेतुश् चाऽङ्गनास् त्रस्ताः सहसा धरणी-धरात्[13] ॥१७॥ [N
किन्नरोरग-गन्धर्वा यक्ष-विद्याधरास् तथा ।
१६] पीडितं तं नग[14]-वरं त्यक्त्वा गगनम्[15] आ-स्थिताः ॥१८॥ [४७
अतिप्र-माणा[16] बलिनो दीप्त-जिह्वा महा-विषाः ।
१७] निपीडित-शिरो-ग्रीवा व्य्-अचेष्टन्त[17] महोर-गाः ॥१९॥ [४८॥

---

१. फ—मारुतमिवाकाशं । २. फ—ततःप्रपीडितस् । ३. आ—ररास सहितैर्वृक्षैः । अ—रराम सहितैर्वृक्षैः । फ—जगाम सहसत्त्वैश्च । च—सोपि चै सहितैः सत्त्वैः । रा ब—सर्वैश्च सहितैः । ४. आ फ—प्राविशच्च । ५. आ—०लोत्तमैः । आ—०लोपमैः । ६. फ अ—लक्ष्यते । ७. फ—०वेगमथिताः । च रा प्र ब म ल$_1$ ल$_2$—०वेगमाश्रिताः । अ—०वेगाद्बलिनः । ८. फ अ—०शोभिताः । च रा प्र ब ल$_1$ ल$_2$—शोभिनः । ९. फ च रा प्र ब म ल$_1$ ल$_2$ अ—०वज्रहता । १०. अ—कन्दरादरसं० । ११. फ—तास्ता प्र० । च प्र ब म ल$_1$ ल$_2$ अ—स्रस्तप्रवृ० । रा—स्रस्तप्रवृद्धव्यसना । १२. फ—समुत्पेतुश्चाप्सरसः । १३. फ रा म—०तले । १४. रा प्र ब म ल$_1$ ल$_2$ अ—गिरिवरं । १५. ल$_1$ अ—गमनम् । १६. फ अ—०प्रमाणबलिनो । १७. म—व्यवेष्टन्त ॥

क्वचित् सुस्राव[1] सलिलं क्वचिद्[2] रजत-निस्रवम्[2] ।
१८] धातून् अन्यांश् च वि-विधान् महा-प्लवग-पीडितैः[3] ॥२०॥[N
स चाऽपि भू-धरः[4] श्रीमान् बलिना तेन[5] पीडितः[5] ।
१९] समृद्ध-शिखरोदग्रः[6] प्र-विवेश रसा-तलम् ॥२१॥ [४८
दश-योजन-विस्तारो[7] विंशत्य्-उच्छ्राय-योजनः[7] ।
N] धरण्यां[8] समतां यातो[9] बभूव स मही-धरः ॥२२॥ [४९

इत्यार्षे रामायणे[10] सुन्दर-काण्डेऽरिष्ट-पर्वत-सूदनं
नाम चतुष्पंचाशः सर्गः[11] ॥५४॥

---

१. फ—क्वचिच्छुस्राव। अत्र ण्यर्थान्तर्भावः द्र०। २. आ—रजतसन्निभम्। रा म—क्वचिज्जलदनिस्वनम् । ब प्र ल$_1$ ल$_2$ अ—क्वचिद् रजतनिस्वनम् । ३. आ—०पीडिताः । ४. फ अ—च भूमिधरः । रा प्र ब म ल$_1$ ल$_2$—चाऽपि पर्वतः। ५. फ अ—प्रतिपीडितः । ६. ल$_1$—०रोदग्धः । ७. फ—०नविस्तीर्णस्त्रिंशद्योजनमुच्छ्रितः। अ—०विस्तारो विंशद्योजनमुच्छ्रितः । ८. रा ब ल$_2$—धरण्याः। ९. फ अ—जातः स बभूव धराधरः । १०. स—श्रीरामायणे। ११. आ—इत्यार्षेऽरिष्टसूदनं नाम सर्गः । ल$_2$—इति सुन्दरकाण्डेऽरिष्टदर्शनं नाम सर्गः । अ—इत्यार्षे रामायणेऽरिष्टप्लवनो नाम सर्गः । फ—इत्यार्षे रामायणे सुन्दरकाण्डे वाल्मीकीये हनुमतस्त्यागमनं नाम सर्गः ॥

N] आ-प्लुत्य च महा-वेगः पक्ष-वान् इव पर्वतः ।
स चन्द्र-[2]कुमुदं रम्यं सूर्य-कारण्डवं शुभम् ।
१] पुष्य-श्रवण-कादम्बम् अभ्र-[3]शैवल-शाद्वलम् [4]॥१॥ [१
पुनर्वसु-[5]महामीनं रक्ता[6]ऽङ्ग-ग्राह-भीषणम् ।
२] ऐरावत-[7]महाद्वीपं स्वाति-हंस-[8]विलोलितम् ॥२॥ [२
[9]वात-संघात-भीमोर्मिं चन्द्रांऽशु-[10]शिशिरांऽम्बुदम् ।
३] भुजङ्ग-यक्ष-गन्धर्व-समृद्ध-कमलोत्पलम् ॥३॥ [३
ग्रस-[11]मानं [12]इवाऽऽकाशं तारा-पतिम् इवोल्-लिखन् ।
N] हरन्न् इव स-नक्षत्रं गगनं सां[12]ऽर्क-मण्डलम् ॥४॥ [५
अ-पारम् अ-परि[13]श्रान्तैः [14]खांऽम्बुधिं सम्[14]-अगाहत । [६उ
४] दिशो नादेन महता पूरयन् मेघ-निस्वनः ॥५॥[15] [१०पू

---

१. म—इतः पूर्वमयं पाठः—संकोच्य च कपिः कर्णौ बाहुभ्यां पीड्य पर्वतम् । संनिरुध्य हरिः प्राणमुत्पपात महाबलः ॥ देवराजध्वजाकारं कपिलं रोमभिश्चितम् । विपरिक्षिप्य लांगूलमध्वानं महदास्थितः ॥ २. ब प्र ल$_2$—चन्द्रकुसुमं । ३. च अ—॰शैवालशाड्वलम् । रा ब प्र म ल$_1$ ल$_2$—॰शैवलशाद्वलम् । ४. अ—पुष्यश्रवणकादम्बं तत्र तोयदशाद्वलम् । ५. प्र—पुनर्वक्रम॰ । ल$_2$—पुनर्वसुमहाभीमं । ६. अ—रक्षांगं ग्रा॰ । च ब रा प्र ल$_2$—चक्रांगग्रा॰ । ७. रा—॰महाद्विपं । ८. फ—॰सविडोलितम् । ल$_1$ अ—॰सविलोहितम् । ९. ल$_2$—वायुसं॰ । अ—वातसंपात॰ । १०. अ—॰शिखराम्बु॰ । ११. फ—ग्रसमानमिवा॰ । १२. फ—सेन्दुमं॰ । १३. फ—॰श्रान्तो । १४. फ—ह्यपां पतिमगाहत । रा ब प्र म ल$_1$ ल$_2$—॰धिं स व्यगाहत । १५. अतः परमधिकः पाठः—फ च—मारुतस्यात्मजः श्रीमान् कपिर्व्योमचरो महान् । संप्रच्छाद्येव गगनं वर्षन्निव दिशो दश ॥ हनूमान् मेघजालानि विकर्षन्निव गच्छति । बाहुभ्यामन्तरे सक्तं मेघजाल-

तं श्रुत्वा निनदं घोरं वानरास् ते हनूमतः ।[1]
५] आसन्[2] संहृष्ट-मनसः सुहृद्-दर्शन-लालसाः[3] ॥६॥ [२१
जाम्बवांस्[4] तु हरि-श्रेष्ठः प्रीति-संहृष्ट[5]-मानसः ।
६] उपाऽऽमन्त्र्य हरीन् सर्वान् साऽङ्गदान् वाक्यम् अब्रवीत् ७[6] २२
सर्व-था कृत-कार्योऽसौ[7] हनूमान् नाऽत्र संशयः ।
७] न ह्य् अस्याऽकृत[8]-कार्यस्य वेग एवं-विधो भवेत् ॥८॥ [२३
तस्य बाहूऽऽरु-वेगं च[9] निनदं च महाऽऽत्मनः ।
८] सं-श्रुत्य हरयो हृष्टाः समुत्-पेतुः समन्त-तः ॥९॥ [२४
ते नगाऽग्रान् नगाऽग्राणि शिखराच् छिखराणि च ।
९] प्र-हृष्टाः सम्-अपद्यन्त हनूमन्तं दिदृक्षवः[10] ॥१०॥ [२५
ते स्थित्वा पादपाऽग्रेषु द्रुम-शाखाः सु-पुष्पिताः ।[11]

---

सपांडुरम् ॥ उत्तरीयमिवासक्तमासीत्तस्य महाकपेः । पाण्डुरारुणवर्णानि नीललोहितकानि च ॥ कपिना कृष्यमाणानि महाभ्राणि चकाशिरे । स जगाम महातेजाः पुनर्मध्येन सागरे ॥ पर्वतेन्द्रं सुनाभं च संस्पृश्यैकेन पाणिना । ज्यामुक्त इव नाराचो महावेगमुपागमत् ॥ स च किञ्चिदनुप्राप्तः समालोक्य महागिरिम् । ननाद सुमहन्नादं मेघनादसमस्वनः ॥ स दृष्ट्वा पर्वतश्रेष्ठं सुहृद्दर्शनकर्षितः । प्रहर्षमतुलं लेभे हनूमान् मारुतात्मजः ॥

१. फ च—ते तस्य निनदं श्रुत्वा सर्वे एव वनौकसः । २. फ—आशशंसुर्हृ० । ३. फ च प्र—०नकांक्षिणः ॥ ४. अ—जाम्बुवांस्तु । फ अ रा व प्र म $ल_1$ $ल_2$—जाम्बवांश्च । ५. रा व प्र म $ल_1$ $ल_2$—संप्रहृष्टतनूरुहः । ६. च—७—मश्लोकादारभ्य २०—शश्लोकान्तः पाठो नास्ति ॥ ७. फ—कृतकर्मासौ । ८. फ—०तकृत्यस्य । ९. व प्र म $ल_1$ $ल_2$—०रुवेगेन । अ—बाहुरवेनैव । १०. व प्र म $ल_1$ $ल_2$—दिदृक्षया ॥ ११. फ—ते प्रीताः पादपाग्राणि द्रुमशाखाश्च पुष्पिताः । अ—ते स्थिताः पादपाग्रेषु द्रुमशाखासु वानराः ।

१०] वासांसी[1]ऽव प्र-काशानि समाऽवि[2]ध्यन्त वानराः॥११॥ [२६
उत्तमं वेगम् आ-स्थाय हर्षाद् द्वि-गुण-विक्रमैः[3] ।
११] आ-जगाम महा-तेजाः पुनर् मध्येन सागरम् ॥१२॥[4] [N
पर्वतेन्द्रं सु-नाभं च सं तु सं-स्पृश्य[5] पाणिना ।
१२] ज्या-मुक्त इव नाराचो महा-वेगम् उपाऽऽगमत् ।
मारुतस्या[6]ऽऽत्मजः[7] श्रीमान् कपिर् व्योम-चरो महान्॥१३॥ [N
१३] स प्र-च्छाद्यै[8]व गगनं कर्षन्न्[9] इव दिशो दश ।
हनूमान् मेघ-जालानि वि-कर्षन्न् इव गच्छति ॥१४॥ [N
१४] बाह्वोर्[10] अन्तर-संयुक्तं मेघ-जालं च पाण्डुरम् ।[11]
N] उत्तरीयम् इवाऽऽसक्तम् आसीत् तस्य महा-कपेः॥१५॥ [N
पाण्डुराऽरुण-वर्णानि नील-लोहितकानि च ।
१५] कपिना[12]ऽऽकृष्यमाणानि महाऽभ्राणि च[13]काशिरे ॥१६॥ [N
चालयन् मेघ-वृन्दानि लंघयंश् च[14] पुनः पुनः ।
१६] प्र-च्छन्नं[15] च प्र-काशं च[15] चन्द्रमा इव लक्ष्यते ॥१७॥ [N
स किञ्चिद्[16] अनुसंप्राऽऽप्तं समा-लोक्य महा-गिरिम्[17] ।
१७] अनदद्[18] हनुमान् नादं मेघ-नाद-सम-स्वनम् ॥१८॥ [N

---

१. आ-वासांसि च । २. फ-प्रसंविध्यन्त । ३. ल$_1$-०णसंभ्रमः । ल$_2$-०णविभ्रमः । ४. फ-१२-शश्लोकादारभ्य २०-शश्लोकं यावत्पाठो नास्ति ॥ ५. ब प्र म ल$_1$ ल$_2$-समुपस्पृश्य । अ-स तु संस्पर्श्य ॥ ६. अ आ-मारुतस्यालयं । ७. आ रा ब प म ल$_1$ ल$_2$-श्रीमत् । ८. ल$_1$-संप्रच्छाद्यैव । अ-संफाल्यैव । ९. म ल$_1$ ल$_2$-विकिरन्निव । १०. आ-बाहुभ्यामन्तरे सक्तं । ११. रा-नास्ति ॥ १२. अ-कपेराकृ० । १३. आ-चकासिरे । १४. रा ब प्र म ल$_1$ ल$_2$-०यन्वं । १५. रा ब प्र म ल$_1$ ल$_2$-प्रच्छन्नश्च प्रकाशश्च ॥ १६. रा-कंचिदनु० । आ-किंचिदनुसंप्राप्तः । १७. ल$_2$-महामुनिम् । १८. प्र म ल$_2$-व्यनदद् ह० । ल$_1$-व्यनदद् बहु संनादं ।

स दृष्ट्वा पर्वत-श्रेष्ठं सुहृद्-दर्शन-हर्षितः[1] ।[2]
N] प्र-हर्षम् अ-तुलं लेभे हनुमान् मारुताऽऽत्म-जः ॥१९॥ [N
ते तस्य निनदं श्रुत्वा सर्व एव वनौकसः ।
N] आसन् संहृष्ट-मनसः सुहृद्-दर्शन-कांक्षिणः ॥२०॥[3] [N
तम्[4] अद्रि-घन-संकाशम् आ-पतन्तं महा-कपिम् ।
१८] दृष्ट्वा ते वानराः सर्वे तस्थुः प्राऽञ्जलयस् तदा[5] ॥२१॥ [२८
तस्यैव[6] च गिरेः शृङ्गे[7] नि-पपात महा[8]-जवः ।
१९] नि-षसाद महेन्द्रस्य मारुतिः पादपाऽऽकुले[9] ॥२२॥ [२९
ततस् ते प्रीत-मनसः[10] सर्वे वानर-पुङ्गवाः ।
२०] हनूमन्तं महाऽऽत्मानं परि-वार्योप-तस्थिरे ॥२३॥ [३१
उपाऽयनानि चाऽऽदाय मधूनि च फलानि च ।
२१] परि-वार्याऽर्चयन्ति स्म मारुतस्यौरसं सुतम् ॥२४॥ [३३
वि-नेदुर् मुदिताः केचिच् चक्रुः किलकिलां[11] तथा[11] ।
२२] हृष्टाः पादप-शाखाश् च वि-निन्युर्[12] वानरर्षभाः ॥२५॥ [३४
हनुमांस् तु गुरुं वृद्धं जाम्ब-वन्तं महा[13]-कपिम् ।
२३] कुमारम् अङ्गदं चैवाऽभ्य्[14]-अवन्दत[14] महा-बलम्[15] ॥२६॥[३५
स ताभ्यां पूजितः पूज्यः कपिभिश् च[16] सभाजितः[16] ।

---

१. आ—०नकांक्षिणः । प्र—०नहर्षतः ।२. अ—नास्ति । ३. अ आ ल$_2$—नास्ति ।
४. आ—तमिन्द्रघ० । म—तमभ्रघ० । ५. ल$_2$—०यस्तथा॥ ६. फ अ—स तस्यैव ।
७. फ च प्र ल$_2$—शृङ्गं । ८. फ—निपतत्सुमहा० । ९. च—०पाकुलं ॥
१०. आ—प्रीतिमनसः ॥ ११. आ—०किलांस्तथा । अ—०किलास्तथा ।
रा ब प्र म—०किलां परे । ल$_1$ ल$_2$—०किलां च ते । १२. आ—आनिन्युर् ॥
१३. फ—महामतिम् ॥ १४. प्र—चैवमभ्यनन्दन् । च रा ब ल$_1$ ल$_2$—चैव
अभ्यनन्दन् । म—चैवमभ्यवन्दन् । च— वापि अभ्यवन्दन् । फ—चैव ववन्द
च । १५. फ—महाकपिः । १६. रा च म—०भिश्चाभिपूजितः । प्र ल$_1$
ल$_2$—०भिश्चापि पूजितः । फ—०भिश्च समार्चितः ।

२४] दृष्टा देवीऽति वि-क्रान्तः सं-क्षेपेण न्य्-अवेदयत् ॥२७॥[३६
दृष्टा देवीऽति वचनं महत्[1] तद्[2] अ-मृतोपमम् ।
२५] श्रुत्वा ते मारुतेस् तस्य मुदिता हरयस् तदा ॥२८॥ [४०
क्ष्वेडन्त्य् अन्ये हसन्त्य्[3] अन्ये द्रवन्त्य्[4] अन्ये प्लवं-गमाः ।
२६] चक्रुः किलकिलाम्[5] अन्ये प्रति-गर्जन्ति चाऽपरे ॥२९॥[४१
केचिच् चोच्छ्रित[6]-लाङ्गूलाः प्र-हृष्टाः कपि-कुञ्जराः ।
२७] अञ्चिताऽऽयत[7]-दीर्घाणि लांगूलानि वि-चिक्षिपुः ॥३०॥ [४२
अ-परे तु[8] हनूमन्तं वानरा वारणोपमाः[9] ।
२८] आ-प्लुत्य गिरि-शृङ्गेभ्यः सं-स्पृशन्ति प्र-हर्षिताः॥३१॥[४३
स्तुवन्ति च नमस्यन्ति परि-षस्वजिरेऽपरे[10] ।
२९] वालि-पुत्रोऽङ्गदश् चैव [11]संपरि-ष्वज्य पीडितम्॥३२॥ [N
प्रहृष्ट[12]-मनसं दृष्ट्वा तम् अ-रोगम् उप-स्थितम्[13] ।
३०] नि-षसाद ततो हस्ते गृहीत्वा पवना[14]ऽऽत्म-जम्॥३३॥ [N
रमणीये वनोद्-देशे दुर्-धरस्य[15] महा-गिरेः ।
३१] परि-वार्य च ते सर्वे परां प्रीतिम्[16] अवाऽऽप्नुयुः॥३४॥ [N
जाम्ब-वन्तं हनूमन्तम् अङ्गदं च [17]हरीऽऽश्वरम् ॥

---

१. फ अ—महार्थमम्०। २. रा ब प्र म ल$_{1}$ ल$_{2}$—०योऽभवन् । ३. फ—द्रवन्त्यन्ये । ४. फ—गर्जन्त्यन्ये क्षिपन्ति च। अ—गर्जन्त्यन्ये प्लवं०। ५. अ—०किलाश्चान्ये । ६. अ—केचिदुच्छ्रित० । ७. फ—सुचिन्तयन्ति दी० । च—अवितायतदी० । रा ब म ल$_{1}$ ल$_{2}$—अधिकायतदी० । अ—कुंचितायतदी० ॥ ८. च—च हनू० । अ—हनुमंतं तु । ९. फ—वानरोत्तमाः । च—वानरोपमाः । प्र—वानरौकसः । ल$_{1}$ ल$_{2}$—काननौकसः । अ—वासवोपमाः ॥ १०. फ—०रे युवा । ११. आ—परिष्वज्य च पीडितम् । १२. अ—०ष्टवदनं । १३. अ—अवस्थितम् । १४. आ—वालिनः सुतः ॥ १५. आ—दर्दुरस्य । १६. फ अ—प्रीतिमुपागताः । रा ब प्र म ल$_{1}$ ल$_{2}$—प्रीतिं प्रपेदिरे ॥ १७. फ अ—कपीश्वरम् ।

३२] परि-वार्योपविष्टास् ते भेजिरे विपुलाः शिलाः[1] ॥३५॥[४८
उप-विष्टा गिरेस् तस्य शिलासु विपुलासु च[2] ।
३३] श्रोतु-कामाः समुद्रस्य लंघनं वानरोत्तमाः ॥३६॥ [४९
दर्शनं चाऽपि लंकायाः सीताया रावणस्य च ।
३४] तस्थुः प्राऽञ्जलयः सर्वे हनूमद्[3]-वचनोत्सुकाः[3] ॥३७॥ [५०
प्रीति-विस्फा[4]रिताऽक्षास् ते निश्-शब्दा हरयोऽभवन्।[5]
३५] तच्-चित्तास्[6] तत्-पराश् चैव हनूमद्-वचनोत्सुकाः[7] ॥३८॥[N
जाम्ब-वान् ऋक्ष-राजस् तु गजो गवय एव च ।[8]
पनसश् च गवाऽक्षश् च मध्ये तस्थुर् वनौकसाम्[9] ।
N] अङ्गदं मध्य-तः कृत्वा हनूमन्तं च वानराः ॥३९॥ [N
तस्थौ तत्राऽङ्गदः श्रीमान् वानरैर् बहुभिर् वृतः ।
N] उपाऽऽस्यमानो विधि-वद् देवै[10]र् देव-पतिर् यथा॥४०॥[11] [५१
हनूमता कीर्ति-मता यशस्-विना
तथाऽङ्गदेनाऽङ्ग-विदा विपश्चिता ।
तदा[12] तद्[13] अध्यासि[13]तम् उत्तमं महन्[14]
N] मही-धराऽग्रं ज्वलितं श्रिया[15]ऽभवत् ॥४१॥ [५२

[16]इत्यार्षे रामायणे सुन्दर-काण्डे हनुमत्-प्रत्यागमनं
नाम पंचपंचाशः सर्गः[17] ॥५५॥

---

१. अ—परिवार्य कपिश्रेष्ठं भेजिरे विपुलाशिषाः । २. फ—वे ॥ ३. फ अ—परिवार्य समन्ततः । रा म—हनुमद्दर्शनोत्सुकाः । ४. रा—०विस्फा-रिता० । ५. अ—नास्ति । ६. रा ब—तं चिता । प्र—तच्चिन्ता । फ च म—अनिश्चिता । ७. आ अ—नास्ति । ८. ल$_2$—नास्ति । ९. फ—वनौकसः । १०. आ—दिवि । ११. अ—नास्ति ॥ १२. ल$_1$—मुदा । १३. ल$_2$—तदा-ध्या० । १४. फ—महान् । १५. आ—क्वणितं तदाभ० । च रा ब म प्र ल$_1$ ल$_2$—ज्वलितं तदाभ० । १६. ल$_2$—इति । १७. अ—सर्ग-समाप्तिर्न दृश्यते ॥

ततस् तस्य गिरेः शृङ्गे महेन्द्रस्य महा-बलाः ।
N] हनुमत्-प्रमुखाः प्रीतिं हरयो जग्मुर् उत्तमाम् ॥१॥[1] [१
तम् आगतं महा-वीर्यं राक्षसैः क्षतं[2]-विक्षतम् ।
N] सम्-ईक्ष्य हरयः सर्वे परि-वार्य सम्-आसते[3] ॥२॥ [N
ततस् तम् अब्रवीद् वाक्यं हरीणां प्र-वरोऽङ्गदः ।
N] ब्रूहि वानर-शार्दूल कृतं[4] कर्म सुदुष्-करम् ॥३॥ [N
अपि दृष्टा त्वया सीता रामस्य महिषी प्रिया ।
N] प्रसन्न-वर्णो हि शुभस् तवाऽङ्गुष्ठ-गतो मणिः[5]॥४॥[6] [N
एतच् छ्रुत्वा शुभं वाक्यम् अङ्गदस्य विपश्चितः । [N
N] हनुमान् अब्रवीद् हृष्टः सर्वांस् तान् हरि[7]-यूथपान् ५ [५७.३७उ
अशोक-वनिका-मध्ये दृष्टा मे[8] जनकाऽऽत्म-जा ।
N] रक्षमाणा[9] सु-घोराभी राक्षसीभिर् मनस्[10]-विनी॥६॥[५७.३८
एक-वेणी-धरा बाला राम-दर्शन-लालसा ।
N] उपवास-परिश्रान्ता मलिना जटिला कृशां ॥७॥ [५७.३९
यत्नेन महता दृष्टा हृष्टां[11] सां[12] जनकाऽऽत्म-जा ।

---

१. अ-१-मश्लोकादारभ्य ८-मश्लोकान्तः पाठो नास्ति ॥ २. फ-कृत० । रा-कृतविग्रहम् । ब प्र म ल$_1$ ल$_2$-क्षतविग्रहम् । ३. च रा ब प्र म ल$_1$ ल$_2$-समन्ततः ॥ ४. फ-कृत्वा ॥ ५. ल$_2$-मुनिः । ६. अतः परमधिकः पाठः-म-युद्धं त्वमसि गदापातैः शतघ्नीपरिघेषुभिः । वीर स्थानि दृश्यन्ते तव गात्राणि भागतः ॥ एभिः प्रहारैः पश्यामः राक्षसा निहतास्त्वया । समरे वीरशब्दश्च लब्धा कीर्तिश्च शाश्वती ॥ आख्याहि नः प्रहर्षोऽयं वाक्यमब्रुवतोऽपि ते । रामप्रियहितार्थं त्वं हनुमद्वक्तुमर्हसि ॥ ७. रा-कपियू० ॥ ८. ल$_1$-दृष्टाऽसौ । ९. फ-रक्ष्य० । १०. फ-यश० ॥ ११. आ-हि सा ॥ १२. फ रा प्र ब म ल$_1$ ल$_2$-सा मया । च-मया सा ।

तया च सह जल्पित्वा पृष्ट्वा चैनाम् अन्-आमयम्[1] ।
N] अभि-ज्ञानं गृहीत्वा च सिद्धाऽर्थोऽहम् इहाऽऽगतः ॥८॥[2] [N
अंगदोऽथ शुभं वाक्यं वायु-पुत्रस्य धीमतः ।
N] श्रुत्वैव परम-प्रीतो हरि-मध्य-गतोऽब्रवीत् ॥९॥ [N
तुल्य-वीर्यो न ते कश्चित् सुराणाम् अपि दृश्यते ।
N] पुनर् आ-प्लुत्य[3] यो भीमं समुद्रं त्वम्[4] उपाऽऽगतः[5] ॥१०॥ [N
जीवितस्य प्र-दो नाऽन्यस् त्वम् एको वानरोत्तम[6] ।
N] त्वत्-प्रसादात् सम्-एष्यामः सिद्धाऽर्था राघवेण ह[7] ॥११॥ [N
दिष्ट्या दृष्टा त्वया सीता राम-पत्नी यशस्-वनी ।
N] दिष्ट्या त्यक्ष्यति[8] काकुत्स्थः शोकं सीता-वियोग-जम् ॥१२ [N
तं पुनः प्रतिसं-हृष्टः[9] प्रीति-मान् वै महा-कपिः ।
१३] जाम्ब-वान्[10] कार्य-वृत्तान्तम् अपृच्छन्[11] मारुताऽऽत्म-जम् १३ [२
कथं दृष्टा त्वया सीता कथं वा तत्र वर्तते ।
२] सं-वादश् च कथं वृत्तः क्रूर-कर्म्मा हि[12] रावणः ॥१४॥ [३
३पू] व्यासेन[13] सर्वम् एतन् नः प्र-ब्रूहि त्वं महा-भुज । [४पू
N] समा-गता कथं देवी सा च किं प्रत्यू-अभाषत ॥१५॥ [N
३उ] श्रुतोऽर्थाश्[14] चिन्तयिष्यामः[15] कार्यस्याऽस्य विनिश्-चयम्[16] ॥[४उ

---

१. फ—दृष्टा चैनामनामया । रा म—पृष्ट्वा चैतामनामयम् । २. अ—नास्ति । ३. रा प्र ब म ल१ ल—उल्लंघ्य । ४. च—तम् । ५. रा प्र ब म ल१, ल२—इहागतः ॥ ६. फ—प्रदाता त्वमेको वानरपुंगव । च रा ब म ल१ ल२—प्रदाता नस्त्वमेको वा० । प्र—प्रदाता तु त्वमेको वा० । अ—प्रदाता त्वमहो वानरपुंगव । ७. फ—च । रा प्र अ—हि ॥ ८. आ—त्यक्षति ॥ ९. आ—प्रीति० । १०. आ—जाम्बुवान्कालवृ० । ११. अ—अपृच्छत्पवनात्मजम् ॥ १२. आ—स ॥ १३. आ—व्यासतः । ल१—विस्तरेण ॥ १४. आ—श्रुतार्थाश् । ल१ ल२—श्रुत्वार्थश् । अ—श्रुतार्थश् । १५. अ—०ष्यामि । १६. अतः परमधिकः पाठः—आ—प्रसन्नवर्णो हि शुभस्त्वांगुष्ठगतो मणिः । अपि दृष्टा त्वया सीता ब्रूहि नः परिपृच्छताम् ।

यथाऽर्थस् तस्य वक्तव्यो गतैर् अस्माभिर् आत्म-वन्[1] ।
N] रक्षितव्यं च यत् तत्र तद् भवान् प्र-[2]ब्रवीतु नः ॥[3]१६॥ [९
स [4]पृष्टश् [4]च तदा तेन संप्रहृष्ट-तनूरुहः ।
N] [5]नमस्य मनसा [6]सीतां देवीम् [6]अकथयत् तदा ॥१७॥ [६
इति जाम्ब-वता पृष्टो [7]वानराणां मतेन [7]च ।[8]
६] यथा-वृत्तं कपि-श्रेष्ठः[9] कथयामास मारुतिः ॥१८॥ [N
प्रत्य्-अक्षं वस् [10]तद् यद् [10]अहं महेन्द्राऽग्राद् अव-प्लुतः ।
७] उदधेर् अपरं पारं कांक्ष-माणो महाऽऽत्मनः ।
N] [11]अ-पारं तु [11]महद् व्योम पुप्लुवेऽहं समा-हितः ॥१९॥[12] [N

---

१. आ—०वान् । २. फ अ—व्याकरोतु । आ—प्रब्रवीत्पुनः । ३. च रा ब म ल१ ल२—१६-शश्लोकादारभ्य १८-शश्लोकान्तः पाठो व्युत्क्रमेण पठितः । ४. फ—तु पृष्टस् । ५. रा ब प्र म ल१ ल२—प्रणम्य । ६. फ—देवीं सीतां सोकथयत् । ७. फ—वानरानुमतो वरः । च रा ब म ल१ ल२ अ—वानरानुमतेन च । ८. प्र—नास्ति । ९. च रा प्र ब म ल१ ल२—०श्रेष्ठ । १०. फ—तदैवाहं । ११. आ—अथास्तु सदृशं । फ च—अपान्तु सदृशं । अ—अरससदृशं । १२. अतः परमाधिकः पाठः—स—गच्छतश्च ममाव्यग्रं सत्वमभ्येत्यधिष्ठितं । पंथानं खे तदा रुद्ध्वा प्राब्रवीन्मां च भीषयत् । सरमां मां विजानीहि हनुमद्देवमातरम् । मम भक्ष्यस्त्वमुद्दिष्ट ईश्वरैर्वानरर्षभः ॥ एवं ह्यभिहिते वाक्ये क्रूरे सरमया तदा । रामदूतेन यामीति मया तस्यै निवेदितम् ॥ पुनश्चोक्ता मया देवी कृत्वा कार्यमभाषत । आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ॥ एवमुक्ता मया सा तु सरमा कामरूपिणी । अब्रवीन्नातिवर्तेत कश्चिन्मामिति मे वरः ॥ एवमुक्तस्त्वहं तत्र चिन्तयामि सुदुःखितः । अब्रुवं कुरु तद्वक्त्रं येन मां भक्षयिष्यति ॥ इत्युक्ता सा महादेवी शतयोजनविस्तृतम् । कृतवत्यात्मनो वक्त्रं पर्वतान्तरदर्शनम् ॥ संक्षिप्यात्मानमव्यग्रः प्रविष्टोहं मुखं तदा । निष्क्रम्य च मुखात्तस्मादन्तरिक्षं पुनर्गतः ॥ विज्ञप्ता च मया देवी प्रणम्य विधिवत्तदा ।

५१.३] ततस् तु सु-चिरे[1] काले गच्छन्न् उग्र-जवः कपिः ।
बलवन्-नि-गृहीताऽऽत्मा न च पश्यामि किंचन ॥२०॥ [N
५२] सोऽहं विगत-वेगः[2] सन्[2] दिशो दश वि-लोकयन् ।
न किञ्चित्[3] तत्र पश्यामि येन मे सं-हृता गतिः ॥२१॥ [३५
५३] तस्य मे बुद्धिर् उत्पन्ना किं नाम[4] गगने[5] मम ।
विघ्न[6] ईदृश उत्पन्नो[6] ह्य् अभून् मे यत्र नि-ग्रहः ॥२२॥ [३६
५४] अधो-मुखी ततो दृष्टिर् गच्छतीं[7] चारिता मया ।
ततः पश्याम्य् अहं भीमां राक्षसीं सलिलाऽऽशयाम्[8] २३[३७
५५] प्र-हस्य च महा-नादम्[9] उक्तोऽहं[9] भीमया तया ।
अव-स्थितम्[10] असं-भ्रान्तम् इदं वाक्यं सु-दारुणम् ॥२४॥[३८
५६] कश्चिन्[11] नाम महा-काय[11] मया क्षुधितयेक्षितः[12] ।
चिराय भक्ष्यस् त्वं दत्तो दिष्ट्या धात्रा महाऽर्णवे ॥२५॥[३९
५७] बाढम् इत्य्-एव तां वाणीं प्रति-गृह्य[13] त्व् अहं ततः[14] ।

---

प्रविश्य वक्त्रान्निष्क्रान्तो दाक्षायणि नमोस्तु ते ॥ गमिष्ये यत्र वैदेही सत्यश्चास्तु वरस्तव । दृष्ट्वा च मां तदा सरमाथाब्रवीद्वचः ॥ अर्थसिद्ध्यै कपिश्रेष्ठ गच्छ सौम्य यथासुखम् । तां चाप्यहमुपामन्त्र्य संप्रतस्थे पुनर्भवम्[1] ॥ सर्वतोपि निरालंबं सुरसिद्धनिषेवितम् ॥ १. प्र–सुचिरं ॥ २. अ–० वेगस्तु । आ–०गः स । ३. आ–कश्चित् ॥ ४. फ–लंकाया । ५. प्र ब म ल$_1$ ल$_2$—गमने । ६. फ अ–विघ्नमीदृशमुत्पन्नं ॥ ७. आ–गच्छन्ती । ८. प्र म ल$_1$ ल$_2$—सलिले शयाम् । फ–०लाशये । च रा ब–०लाशयाम् ॥ ९. आ–० नादो मुक्तो वै । प्र म ल$_1$ ल$_2$–० नादो मुक्तो वै ॥ १०. आ–अप्यास्थितम् । रा प्र ब म–अप्यश्रुतं । ल$_1$ ल$_2$—अथ श्रुतं ॥ ११. फ च प्र ब म ल$_1$ ल$_2$–क्वासि गन्ता महाभाग । रा–क्वापि गन्ता महाभाग । अ–क्वासि गन्ता । १२. फ च रा प्र ब म ल$_1$ ल$_2$ अ–० येप्सितः । १३. फ–तत्प्रगृह्य । १४. फ–वचः । ल$_2$ गतः ।

---

१. संप्रस्थितोऽभवं पुनर् इति मूलतः पाठस्य सतो लेखकप्रमादप्रयोजितो विकारः स्यात् ।

वर्द्धयन्[1] वि-पुलं कायं तस्याः कायम्[2] अपूरयम्[3] ॥२६॥[४०
५८] तस्यास् तद् वि-पुलं वक्त्रं वर्द्धते[4] मम भक्षणे ।
तच्[5] चाऽहम् अव[6]-बुद्ध्यैव तस्यास्[7] तद्[7] वि-पुलं मुखम्[8] २७[४१
५९] ततोऽहं विपुलं रूपं सं-क्षिप्य निमिषाऽन्तरम्[9] ।
तस्या हृदयम् आ-दाय[10] प्रस्थितोऽस्मि नभस्-तलम् २८[४२
६०] सा विसृष्ट[11]-रवा भीमा पपात लवणाऽम्भसि ।
महापर्वत-संकाशा निःकृत्त-हृदया मया[12] ॥२९॥ [४३
६१] शृणोमि ख-गतानां[13] च वाचः सौम्या[13] महाऽऽत्मनाम् ।
राक्षसी सिंहिका क्रूरा शीघ्रं हनुमता हता ॥३०॥ [४४
६२] तां हत्वा पुनर् एवाऽहं कार्यम् आत्यन्तिकं[14] स्मरन् । [४५पू
६३पू] आ (?अ) गच्छं पुले व्योम्नि वायु[15]-वेग-समन्वितः[15]॥३१॥ [N
द्वितीयश् चैव मे विघ्नो घोरः सं-जनितो महान् ।[16]
४०] सुवर्ण-शिखरं दिव्यम् अपश्यं पर्वतोत्तमम्[17] । [८
मार्गम् आ-वृत्य तिष्ठन्तं मध्ये नद-नदी-पतेः ॥३२॥ [९
४१] उप-गम्य तु[18] तं[18] दिव्यं काञ्चनं पर्वतोत्तमम् ।[19]

---

१. फ- कुर्वंश्च । २. फ-कामम् । ल२-कार्यम् । ३. फ रा प्र म ल१ ल२ अ-अपूरयन् ४. रा प्र ब म ल१ ल२-विवृद्धं । ५. अ-तथाहम् । ६. अ-अनु० । फ-अनुबुद्ध्यैवम् । ७. फ-अतीव । ८. अतः परमधिकः पाठः-प्र ब ल१-प्रविष्टस्त्वधिकं[1] तस्मात् कृत्वा रूपं च योगतः । ९. फ च रा प्र ब म ल१ ल२ अ-०न्तरात् । १०. अ-आसाद्य । ११. फ अ-विसृष्टभुजा । १२. फ अ-तदा । १३. फ-खेचराणां वाक्यं व्योम्नि । अ-खेचराणां वाचः सौम्या । १४. च-आत्यायिकं । प्र ब म ल१ ल२ अ-आत्ययिकं । १५. फ-वायोर्वेगं समास्थितः । १६. फ-द्वितीयश्चैव मे विघ्नं घोरमापतितं महत् । अ-द्वितीयश्चापि मे विघ्नं घोरमापतितं महत् । १७. फ रा प्र ल१ ल२-०यमम् । १८. अ-दिवं । १९. अ-नास्ति ।

---

१. ल१-प्रविष्टोऽस्म्यधिकं ।

क्रुता मया[1] तदा बुद्धिर् भेत्तव्योऽयं महा-गिरिः[2] ॥३३ [१०
४२] प्र-हृतं[3] च मया तस्य लांगूलेन महा-गिरेः[4] ।
शिखरं सूर्य-संकाशं व्य्-अशीर्यत सहस्र-धा ॥[5]३४॥ [११
४३] तन् मे व्य्-अवसितं दृष्ट्वा स उवाच महा-गिरिः ।
पुत्रेति मधुरां वाणीं मां[6] स पर्वत-सत्तमः[6] ॥३५॥[5] [१२
४४] पितुर् आत्म-समं विद्धि सुहृदं[7] मारुतस्य माम्[7] ।
सु-नाभ[8] इति वि-ख्यातं नि-वसन्तं महोदधौ[9] ॥३६॥[10] [१३
४५] [11]पूर्वं पक्ष[11]-गमो (?मा) भूत्वा बहवः पर्वतोत्तमाः ।[12]
छन्देन[13] पृथिवीं चेरुर्[14] बाध-मानास् तपो-धनान्[14] ॥३७॥ [१४
४६] श्रुत्वा नगानां चरितं महेन्द्रः[15] पाक-शासनः ।
चिच्छेद भग-वान् पक्षान् वज्रेण गुरुणा ततः ॥३८॥ [१५
४७] अहं तु मोक्षितस्[16] तत्र तव पित्रा महाऽऽत्मना ।
मारुतेन तदा पुत्र सागरं[17] सम्प्र-वेशितः ॥३९॥ [१६
४८] रामस्य च मया साह्ये[18] वर्ति-तव्यम् अरिं-दम ।
N] रामो धर्म-भृतां श्रेष्ठो महेन्द्र-समविक्रमः ॥४०॥ [१७
४९उ] एतच् छ्रुत्वा मुखात् तस्य सु-नाभस्य महाऽऽत्मनः ।
कार्य-गौरवम् आ-ख्यातम् अखिलेन विशेष-तः॥[19]४१॥[१८

---

१. फ अ—मे मनसा । २. प्र ब म ल$_1$ ल$_2$—मया क्रुता तदा बुद्धिर्भेदने तस्य भूभृतः । ३. आ च रा—प्रहृते । ४. फ च रा—०गिरौ । अ—०गिरे । ५. फ—नास्ति । ६. फ—तदा सत्यपुरस्कृतः । ७. म—मारुतस्य महाकपेः । अ—०तस्य च । ८. म—मैनाक । अ—सुनाभम् । ९. म—महार्णवे । १०. च रा प्र ब ल$_1$ ल$_2$—नास्ति । ११. फ—पूर्वपक्षागमा । १२. म—पूर्वं प्लवंगमाः पुत्र बभूवुरचलाः किल । च रा ब ल$_1$ ल$_2$—नास्ति । १३. ब—इन्द्रेण । १४. फ—सर्वां वध्यमानां समन्ततः । रा—चेरुर्दाहमाणास्ततस्ततः । ब—०दार्यमाणास्ततस्ततः । ०मानास्ततस्ततः । १५. प्र म ल$_1$ ल$_2$—देवेन्द्रः । १६. प्र ल$_1$ ल$_2$—मोचितस् । १७. प्र ल$_1$ ल$_2$—० रे । १८. फ अ—सख्ये । ल$_2$—साह्यं । १९. आ—नास्ति ॥

५०] तेन चाऽहम्[1] अनु-ज्ञातः सु-नाभेन महाऽऽत्मना । [१९पू
५१पू] उत्तमं जवम् आ-स्थाय शेषं पन्थानम्[2] आ-स्थितः ४२[२०पू
६३उ] गत्वा महान्तम् अध्वानम् अपश्यं नग-मण्डितम्[3] । [४५उ
दक्षिणं तीरम् उदधेर् लंका यत्र महा-पुरी ॥४३॥
६४] अस्तं दिन-करे याते रक्षसाम् आलयं[4] पुरीम्[5] ।
सम्प्र-विष्टोऽहम्[6] अ-ज्ञातो राक्षसैर् भीम-विक्रमैः॥४४॥ [४६
६५] तत्र चाऽहं निशां सर्वां वि-चिन्वन्[7] जनकाऽऽत्म-जाम् ।
रावणाऽन्तःपुर-गतो नाऽपश्यं तां सु-मध्यमाम् ॥४५॥[५०
६६] ततः सीताम्[8] अ-पश्यंस् तु रावणस्य नि-वेशने ।
शोक-सागरम् आ-साद्य न पारम् उप-लक्षये ॥४६॥ [५१
६७] शोचता च मया दृष्टं प्राकारेण समा-वृतम् ।
काञ्चनेन प्र-कृष्टेन पुरोप-वनम् उत्तमम् ॥४७॥ [५२
६८] तं प्राकारम् अनुप्राऽऽप्य पश्यामि बहु-पादपाम्[9] । [५३
अशोक-वनिकां दिव्यां महेन्द्रस्येव नन्दनम् ॥४८॥ [N
६९] अशोक-वनिका-मध्ये शिंशिपा[10]-पादपो महान् ।
तम्[11] आ-रूढः प्र-पश्यामि काञ्चनं कदली-वनम् ॥४९॥ [५४
७०] अ-दूराच् छिंशिपा[12]-वृक्षाद् अपश्यं वर-वर्णिनीम् ।
श्यामां कमल-पत्राऽक्षीं तपसा सु-कृशा[13]ऽऽननाम् ॥५०॥ [५५
७१] राक्षसीभिर् वि-रूपाभिर्[14] घोर[14]-कर्मभिर् आ-वृताम् ।

---

१. फ च रा—सोहम् । २. आ—पन्थानं संस्थितः। ३. प्र—नगराणि तम् । ४. फ च रा—०सामालकां । ल$_2$—०सामालये । ५. आ—नास्ति । ६. आ—संप्रविष्टो महारात्रौ । प्र—संप्रहृष्टो ह० । ७. प्र ल$_1$ ल$_2$—विचित्वा । अ—विचिन्नज० । ८. अ—शीताम् । ९. आ—०पम् । १०. आ—शिंशपा० प्र—शिंशुपा० । ११. ल$_2$—तामारूढः प० । फ—आरूढश्च प० । अ—आरूढस्तु प० । १२. प्र—छिंशुपा० । म ल$_2$—छिंशपा० । १३. ह अ—सुकृता । १४. फ च रा प्र ब म ल$_1$, ल$_2$ अ—०भिः क्रूरक० ।

मांस-शोणित-मत्ताभिर् व्याघ्रीभिर् हरिणीम् इव ॥५१॥ [५७
७२] तां दृष्ट्वा तादृशीं नारीं राज-पुत्रीम् अ-निन्दिताम् ।
तत्रैव शिंशिं[1]पा-वृत्ते पक्षि-वत् सम[2]व-स्थितः ॥५२॥ [६०
७३] ततो हलहला-शब्दं काञ्ची-भूषण-मिश्रितम् ।
शृणोम्य् अहम् उपाऽऽवृ[3]त्तं रावणस्य च नि-स्वनम् ॥५३॥ [६१
७४] ततोऽहं परमोद्-विग्नः स्वं रूपं सं-क्षिपन् पुनः । [६२पू
लीनश् च शिंशिं[4]पा-वृत्ते स्थितस् तस्य दिदृक्षया ॥५४॥ [N
७५] ततो रावण-दाराश् च रावणश् च महा-बलः ।
तं देशं समनु-प्राऽऽप्तो राक्षसीभिः सु-[5]रक्षितम् ॥५५॥ [६३
७६] तं[6] दृष्ट्वा सा महा-बाहुं सीता रक्षो-महाबलम् ।
सं-क्षिप्य वासस् तस्थौ सा बाहुभ्यां परि-रभ्य[7] च ॥५६॥[8] [६४
७७] ताम् उवाच दश-ग्रीवः सीतां परम-दुःखिताम् ।
अवाक्-शि[9]राः प्र-पतितो बहु मन्यस्व मां प्रिये ॥५७॥ [६६
७८] यद्[10] इतस् त्वं तु मां दर्पान् नाऽभि-नन्दस्य् अ-निन्दिते ।
द्वि-मासाऽभ्यन्तरात् सीते पास्यामि रुधिरं तव ॥५८॥ [६७
७९] एतच् छ्रुत्वा वचस् तस्य रावणस्य दुर्-आत्मनः ।
उवाच परम-क्रु[11]द्धा सीता सदृशम् आत्मनः ॥५९॥[12] [६८

---

१. म ल₂—शिंशपा० । २. फ—समुप० । ३. फ च रा प्र ब म ल₁ अ—उपोह्यंतं । ल₂—उपौह्यंतं । ४. प्र—शिंशुपा० । म ल₂—शिंसपा० । ५. च—सुरक्षितः । अ—समावृतम् । ६. आ—तत्र दृष्ट्वा । अ—तं च दृष्ट्वा । ७. अ—परिगृह्य । ८. अतः परमधिकः पाठः—म—वित्रस्ता परमोद्विग्ना वीक्ष्यमाणा ततस्ततः । त्राणं किंचिदपश्यंती प्रावेपत तपस्विनी ॥ ९. च—०शिरो । ल₁—अर्वाक् शिरः । आ—०छिराः । १०. फ च—यदि च त्वं न मे । रा—यदि त्वं न च मां । ब प्र ल₁ ल₂—यदि च त्वं न मां । म—यदि त्वं च न मां । अ—यदि त्वज्जुगु मां ॥ ११. आ—परमं क्रुद्धा । १२. ल₂—नास्ति ॥

८०] इक्ष्वाकु-कुल-नाथस्य[1] धर्म-पत्नीं महा[2]ऽऽत्मनः ।
अ-वाच्यं वदतो जिह्वा कथं न पतिता तव ॥६०॥ [६९
८१] किं[3] च[3] वीर्यं तवाऽनार्य यो[4] मद्-भर्तुर् अ-सन्निधौ ।
माम् इहाऽभ्या-ऽनयः क्रूर तेनाऽदृष्टो महाऽऽत्मना । [७०
८२] गर्हितं कर्म कृत्वा च पाप कस्मान् न लज्जसे ॥६१॥ [N
यज्वा च सत्य-सन्धश् च रण-श्लाघी च राघवः ।
८३] न त्वं रामस्य दासे (?स्ये)ऽपि यो[5]ग्यः प्राऽर्थयसे च[6] माम् । [७१
सन्निधौ नय-मानस् त्वं विराध-गतिम् आप्नुयाः॥६२॥ [7][N
८४] जानक्या[8] परमं वाक्यम् एवम् उक्तो दशाऽऽननः ।
जज्वाल राक्षसः क्रुद्धश्[9] चितायां[9] पावको यथा ॥६३॥ [७२
८५] वि-वृत्य[10] नयने क्रूरे मुष्टिम् उद्-यम्य दक्षिणम्[11] ।
वैदेहीं हन्तुम् आ-रब्धः[12] स्त्रीभिस् ताभिर्[12] नि-वारितः॥६४॥[७३
८६] स्त्रीणां मध्यात् समुत्-पत्य तस्य भार्या दुर्-आत्मनः ।
मन्दोदरी नाम शुभा तथा[13] स[14] [14]प्रति-षेधितः ॥६५॥ [७४
८७] उक्तश्[15] च शुभया वाचा तथा[16] साऽनु-नयं[17] तदा[18] ।
८८पू] सीतया तव किं कार्यं महेन्द्र-सम-विक्रम ॥६६॥
N] मया सह रमस्वाऽद्य मद्-विशिष्टा न जानकी । [७५

---

१. आ—०लराजस्य । २. रा—महौजसः ॥ ३. आ फ—किंचिद् । ४. फ—यां ॥ ५. च—योयं । रा प्र ब म ल₁—यस्त्वं । ६. रा प्र ब म ल₁—तु । ७. ल₂—नास्ति ॥ ८. ल₂—जानक्याः प० । ९. फ—कोपात्सीतायां । च रा प्र ब म ल₁ ल₂—क्रोधाच्चितायां । अ—क्रोधार्चितया ॥ १०. प्र—विवृते । ११. प्र—दक्षिणाम् । १२. फ च अ—स्त्रीभिस्तु नि० । रा प्र ब म ल₁ ल₂—ब्धस्ताभिः स्त्रीभिर् ॥ १३. रा—तथा । १४. प्र—संप्रति० ॥ १५. आ च रा प्र ब म ल₁ ल₂—ततश्च । १६. अ—तदा । १७. आ—०नयंस् । १८. अ—तया ॥

८८उ] देव-गन्धर्व-पत्न्यश् च यक्ष-राक्षस-योषितः ।
ताभी रमस्व सु-भगे सीतया किं तवाऽनया ॥६७॥ [७६
८९] ततस् ताभिः सम्-एताभिर् योषिद्भिः स महा-बलः ।
उत्थाय सहसा नीतो येनैवाऽभ्यागतः पथा ॥६८॥ [७७
९०] गते तस्मिन् दश-ग्रीवे राक्षस्यो वि-कृताऽऽननाः ।
सीतां निर्-भर्त्सयामासुः समा-गम्य सहस्र-शः ॥६९॥ [७८
९१] तृण-वद् भाषितं तासां तुलयामास जानकी ।
गर्जितं च वृथा तासां सीता श्रुत्वा न शोचति ॥७०॥ [७९
९२] वृथा गर्जन्ति निश्-चेष्टा राक्षस्यो वि-कृताऽऽननाः ।
सीताया व्यवसायं तं रावणस्य न्य्-अवेदयन् ॥७१॥ [८०
९३] वि-हितास् ततः सर्वा हत-वेगाः सु-दुःखिताः ।
परि-वार्य तदा देवीं निद्रा-वशम् उपाऽऽगताः ॥७२॥ [८१
९४] तासु चाऽथ प्र-सुप्तासु सीता भर्तृ-हिते रता ।
वि-ललाप करुणं दीना निर्-आशा च सु-दुःखिता ॥७३॥ [८२
९५] तां चाऽपि तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ।
चिन्तयामास बुद्ध्याऽहं न च मे वि-कृतं मनः ॥७४॥ [९०

---

१. फ—०वयक्षाश्च नागरा० । अ—०वकन्याश्च यक्षराक्षसयोषितां । २. फ—ताभिः सह रमस्वाद्य । अ—ताभिः सह रमस्वार्यं । ३. फ—करिष्यसि । च—प्रयोजनम् ॥ ४. अ—०आगतस्तथा ॥ ५. रा प्र ब म ल१ ल२ अ—समासाद्य ॥ ६. च म—भीषितं । ७. म—सीता श्रुत्वा न शोचति । अ—तोलयामास जा० । ८. अ—तु तदा । ९. अ—०नुशो० । १०. प्र—नाखि ॥ ११. आ—निहतास् । रा प्र ब म ल१ ल२—विकृतास् ॥ १२. फ अ—च व्यवसु० । च रा प्र ब म ल१ ल२—च प्रतिसु० । १३. फ च रा—विलेपे । अ—विलप्य । १४. प्र ब म ल१ ल२—निराश्वास ॥ १५. रा—न रामे निर्वृतं । ल१ ल२—निर्वृतं । अ—निवृतं न च मे ॥

९६] सं-भाषणाऽर्थं च मया जानक्यां वि[1]-हितो[2] विधिः ।
इक्ष्वाकु-कुल-वंशस्य स्तवो राम-पुरस्कृतः ॥७५॥[3] [९१
९७] श्रुत्वा तु गदितां वाचं रामाऽर्थ-चरितां शुभाम् ।
प्रत्य्-अभाषत मां सीता वार्ष्पा[4]ऽपिहित-लोचना ॥७६॥ [९२
९८] कस् त्वं कस्य कथं चेह प्राऽऽप्तो वानर-पुंगव ।
कथं रामेण ते प्रीतिस् तन्[5] मे वक्तुम् इहाऽर्हसि ॥७७॥ [९३
९९] ताम् अवोचम् अहं दीनां[6] शंकितां शंकितो वचः । [९४
१००उ]देवि रामस्य भर्तुस् ते सहायो भीम-विक्रमः ॥७८॥
सु-ग्रीव इति वि-ख्यातो वानरेन्द्रोऽति-भीषणः[7] । [९५
१०१] तस्य मां विद्धि सचिवं हनूमन्तम् उपाऽऽगतम् ।
भर्त्रा च प्र-हितस् तेऽहं रामेणाऽक्लिष्ट-कर्मणा ॥७९॥ [९६
१०२] इदं च पुरुष-व्याघ्र इक्ष्वाकु-कुल-नन्दनः ।
अंगुलीऽयम् अभि-ज्ञानं प्राऽदात्[8] तव यशस्[9]-विनि॥८०॥[९७
१०३] तद् इच्छेयं त्वयाऽऽज्ञप्तं[10] देवि किं करवाण्य् अहम् ।
राम-लक्ष्मणयोर् मूलं नयामि त्वां किम् उत्तरम् ॥८१॥[९८
१०४] एतच् छ्रुत्वा[11] च हृष्टा[12] सा सीता जनक-नन्दिनी ।
अहं रावणम् उत्-साद्य भ्रातृभ्यां गन्तुम् उत्सहे ॥८२॥ [९९

---

१. प्र–हि । २. ल$_2$–सीतायाश्चिन्तितो । फ च रा प्र ब म ल$_1$ अ–जानक्याश्चिन्तितो । ३. अतः परमधिकः पाठः—म–इक्ष्वाकुकुलविख्यातं संप्रवर्तयता मया । ततः सा वक्रकेशान्ता विश्वासमुपपादिता ॥ ४. आ–वाष्पैर्विहित० । ल$_2$ अ–वाष्पोपहत० । ५. रा–तत्त्वं वक्तुमर्हसि । च–तत्त्वं व० ॥ ६. प्र ब म ल$_1$ ल$_2$–देवीं ॥ ७. फ च रा प्र ब म ल$_1$ ल$_2$–०न्द्रो महाबलः ॥ ८. फ–०ज्ञानमदात्तव । आ–०ज्ञानं प्रदत्तं च । ९. आ–०स्विनम् ॥ १०. च रा प्र ब म–तवाज्ञप्तं । ल$_1$ ल$_2$–तवाज्ञां वै । अ–तदाज्ञातुं । ११. आ–दूतं ॥ १२. आ–हृष्ट्वा च ॥

१०५] प्र-णम्य शिरसा[1] सीताम् अभि-वाद्य[2] यशस्-विनीम् ।
राघवाऽऽह्लादन-करम् अभि-ज्ञानं मया[3]ऽर्थिता ॥८३॥[4] [१००
१०६] एवम् उक्त्वा वराऽऽरोहा ममैतं[5] मणिम् उत्तमम् ।
प्राऽयच्छत् परमोद्-विग्ना वाचा[6] मां सं-दिदेश च[6] ॥८४॥ [१०२
१०७] ततः प्र-णम्य शिरसा वैदेहीं सुसमा-हितः ।
प्र-दक्षिणम् उपाऽऽवृत्य[7] स्व-कार्योद्यत[7]-मानसः ॥८५॥ [१०३
१०८] उक्तोऽहम् आर्यया वाक्यं वाष्प-गद्गदया गिरा[8] ।
हनूमन्[9] सर्व[9]-वृत्तान्तम् इमम्[10] आ-ख्यातुम् अर्हसि॥८६॥ [१०४
१०९] श्रुत्वा यथा च[11] न[11]-चिराद् उभौ तौ राम-लक्ष्मणौ ।
सुग्रीव-सहितौ वीराव् उपेयातां[12] तथा कुरु ॥८७॥ [१०५
११०] यद्य[13] अन्यथा[13] भवेत् कार्यं द्वौ मासौ मम जीवितम् ।
न मां पश्यति काकुत्स्थो वि-नाथाम् इह[14] शोचतीम्॥८८॥[१०६
१११] तच् छ्रुत्वा करुणं वाक्यं क्रोधो माम् अभ्य्-अपूरयत्[15] ।
उत्तरं च मया दृष्टं कार्य-शेषम् अन्-अन्तरम् ॥८९॥ [१०७
११२] ततोऽवर्धत मे कायो महापर्वत-सन्निभः ।
युद्धाऽऽकांक्षी वनं तच् च वि-नाशयितुम्[16] आ[16]-स्थितः९०[१०८

---

१. फ–सहसा । २. आ फ–अहमासं । ३. अ–०ज्ञानमयाचिषं । फ च–मया विधिः । आ–मयार्पितम् । ४. अतः परमधिकः पाठः—म–अथ मामब्रवीत्सीता गृह्यतामयमुत्तमः । मणिर्येन महाबाहू रामस्त्वां बहु मन्यते ॥ ५. आ–तदा मे । फ–ममैवं ; च–ममेतन् । ६. अ–वाचो मां सान्दिदेस ह । ७. अ–उपावर्त्य स्वकार्ये धृत० ॥ ८. आ–तया । अ–तदा । ९. अ–हनुमन् मम वृ० । १०. आ अ–इदम् ॥ ११. फ–नापि । अ–यथावदचि० । १२. आ–उपयातस् ॥ १३. अ–यद्ययथा । १४. रा ब अ–इव ॥ १५. आ–अप्यपूरयत् ॥ १६. अ–विनाशितुमुपस्थितः । रा प्र ब म $ल_1$ $ल_2$–विनाशयितुमुद्यतः ॥

११३] तद् भग्नं वन-खण्डं तु भ्रान्त-त्रस्त[1]-मृग-द्विजम् ।
प्रति-बुद्धा निर्-ऐक्षन्त[2] राक्षस्यो भ्रान्त[3]-लोचनाः ॥९१॥[१०९
११४] मां च दृष्ट्वा वने[4] तस्मिन्[4] समा-गम्य परस्परम् ।
लंकाऽधि-पतये क्षिप्रं रावणाया[5]ऽऽचचक्षिरे ॥९२॥ [११०
११५] राजन् वन-वरं दिव्यं तव भग्नं दुर्[6]-आत्मना ।
चैत्य-प्रासाद-मुख्यश् च दुर्[7]-धरः स महा[7]-बलः॥[8]९३॥[9][१११
११६] कपेर् दुर्-आत्मनस् तस्य तव विप्रिय-कारिणः ।
वधम् आ-ज्ञापय क्षिप्रं यथा स वि-लयं व्रजेत् ॥९४॥[10][११२
११७] तच् छ्रुत्वा राक्षसेन्द्रेण[11] वि-सृष्टा[12] भृश-दुर्जयाः[13] । [११३पू
N] पदाति-बल-सम्पन्नाः समीपे[14] प्रेषिता मम ।[15] [N
राक्षसाः किं-करा नाम रावणस्य महौजसः[16]॥[17]९५॥[११३उ
११८] तेषाम् अशीति-साहस्रा[18]ः शूल-मुद्गर-धारिणाम् ।
ते मया[19] तद्[19]-वनोद्देशे परिघेण[20] नि-पातिताः[21] ॥९६॥[११४
११९] तेषां चैव[22] हत-शेषास् तु[22] दश-ग्रीवाय राक्षसाः ।

---

१. अ—च भीतस्तत्र० । आ—भ्रान्तस्तत्र मृ० । २. अ—निरीक्ष्यन्त्य । ३. अ—भ्रान्तवत्तदा ॥ ४. फ—पराक्रान्तं । ५. फ—प्राचचक्षुः सविस्तरम् ॥ ६. ब—दुरासदं । ७. अ—रक्षिणः सुमहाबलः । ८. च रा प्र ल१—चैत्यप्राकारमुख्यं च त्वदर्थं सुमहाबलः । रा ब म—चैत्यप्राकारमुख्यश्च त्वदर्थं सुमहाबल । ल२—चैत्यप्राकारमुख्यं च त्वदर्थं सुमहाबलं ॥ ९. फ—नास्ति ॥ १०. फ—नास्ति ॥ ११. अ०सेन्द्रस्य । १२. फ—निर्दिष्टा । १३. रा म ल१ ल२—रणदु० । अ—भृशदुःखिताः । १४. ल२—समीपं । १५. फ च रा प्र ब म ल१ अ—नास्ति । १६. अ—महायशः । १७. ल२—नास्ति ॥ १८. प्र म ल१—०साहस्रं । १९. फ—मया तस्मिन्वनोद्देशे । अ—तन्मया त० । २०. फ प्र म ल१—परिघेन । २१. ल२—सर्वायसमयं घोरं प्रगृह्य परिघं तदा । सर्वांस्तान् सपरिकरान् सादयामि स्म संयुगे ॥ २२. फ—तु हतशेषाश्च । च ब—तु हत० ।

गत्वा न्य्-अवेदयन् शीघ्रं हतं सैन्यं रणे मया ॥९७॥[1] [११५
१२०] तच् छ्रुत्वा राक्षसेन्द्रेण मन्त्रि-पुत्रा महा-बलाः ।
पदाति-बल-सम्पन्नाः समीपं प्रेषिता मम ॥९८॥ [११९
१२१] सर्वाऽऽयसम्[2] अहं घोरं[2] प्र-गृह्य[3] परिघं तदा[4] ।
सर्वांस् तान् स-परीवारान्[5] सूदयामि[6] स्म सं-युगे ॥९९॥ [१२०
१२२] स तान् अपि हतान् श्रुत्वा दश-ग्रीवः प्रताप-वान्[7] ।[8]
प्र-हस्तस्य सुतं वीरं जम्बु-मालिनम् आदिशत् ॥१००॥ [N
१२३] तं महाबल-सम्पन्नं राक्षसं रण-कोविदम् ।
परिघेणा[9]ऽति-घोरेण रणे[10] सूदित-वान् अहम् ॥१०१॥ [N
१२४] तं कुमारं हतं श्रुत्वा[11] समरेऽतुल-विक्रमम् ।[12]
पंच सेनाऽग्र-गान्[13] शूरान्[14] प्रेषयामास रावणः[15] ॥१०२॥
१२५] तान् अहं सह[16] सैन्येन सूदयित्वा महा-बलान् ।[17] [१२२
१२६पू] युद्धाऽर्थी[18] तोरणोद्देशे[19] तिष्ठामि[20] रण-गर्वितः ॥१०३॥ [N

---

१. म—अतः परं प्रहस्तस्येत्यारभ्य परिघेणेत्यन्तः पाठो व्युत्क्रमेण कियताचित् पाठान्तरेण पठितः । आधिक्यश्च—राक्षसैर्बहुभिः सार्धं घोरं तीव्रपराक्रमम् । २. रा प्र ब म ल$_1$ ल$_2$—सर्वायसमयं घोरम् । अ—सर्वायसं महाघोरं । ३. फ—उद्यम्य । ४. अ—महत् । ५. आ—सपरिवारान् । ल$_2$—सपरिकरान् । अ—सपरिचरान् । ६. आ—खर्दयामि सखं॰ । रा—सादमास सं॰ । ब म ल$_1$ ल$_2$ अ—सादयामि स्म सं॰ ॥ ७. अ—समरेऽतुलविक्रमः । ८. रा ब ल$_1$ ल$_2$—१००—तमश्लोकादारभ्य १०४—तम श्लोकान्तः पाठो नास्ति । ९. फ—परिवेनाति॰ । १०. आ—तं वै । ११. फ—दृष्ट्वा । १२. म—नास्ति । १३. आ—॰प्रगां । १४. म—वीरान् । १५. च—सप्त मन्त्रिसुतानथ १६. आ—सर्वं॰ । १७. म—तानप्यहं तथा तत्र सबलान् समयोधयम् । च रा प्र ब ल$_1$ ल$_2$—नास्ति । १८. म—युद्धार्थं । १९. आ—तोरणोदेशं । २०. आ—रक्षामि । फ च रा प्र ब ल$_1$ ल$_2$—रक्षोभी । अ—पश्यामि ॥

प्राग् एवाऽन्यान् महा-शूरान् सप्त मन्त्रि-सुतान् अथ ।
N] प्रेषितांस् तान् अहं सर्वान्[1] स-सैन्यान् हतवान्[2] रणे॥१०४॥[3] [N
१२६उ] ततः[4] पुनर्[4] दश-ग्रीवः पुत्रम् अक्षं महा-बलम् ।[5]
१२७पू] राक्षसैर् बहुभिः सार्द्धं प्रेषयामास मद्[6]-वधे ॥१०५॥[7] [N
तम् अहं समरे हत्वा तोरणोर्त्तमम् आ-स्थितः[8] । [N
N] ततो द्वितीयं तनयं व्या-दिदेश स रावणः ॥१०६॥[9] [१२९पू
१२७उ] तस्याऽप्य् अहं बलं[10] सर्वं[10] तं च राक्षस-पुंगवम्[10] ।
१२९उ] दृष्ट्वा[11] स्व-बले[11]-विष्टब्धं परं हर्षम् उपाऽऽगमम् ॥[12] १०७[१२६
महता हि महा-बाहुः प्र-यत्नेन महा-बलम् ।
१३०] प्रेषयामास बहुभिः सह वीरैर् मदोत्-कटम्[13] ।
१३१पू] तस्याऽपि हि मया सर्वं तत् सैन्यम् अव-सादितम् ॥१०८ [N
अथेन्द्रजिन्-नामधेयो रावणस्याऽऽज्ञया पितुः ।
N] मद् अन्तिकम् उपाऽऽयातो युद्धाऽर्थं युद्ध-कोविदः१०९[14] [१२८उ
सु-चिरं युद्ध-सक्तो मे बल-वान् इन्द्र-जित् तदा ।
N] अशक्नुवंश् च मां जेतुं ब्रह्माऽस्त्रं समुदी(?दै)रयत्११०॥[14] [N
१३१उ] ब्रह्मणोऽस्त्रेण मां बद्ध्वा[15] प्रति-जग्राह दुर्-मतिः । [१२८उ

---

१. आ—सर्वां । अ—संख्ये । २. अ—हतवारणे । ३. च म—नास्ति । ४. म—नास्ति । ५. फ—तत एनं । ६. म—दुर्जयम् । अ—वै पुनः । ७. प्र ब $ल_1$ $ल_2$—ततोऽक्षमपि स्वं पुत्रं प्राहिणोन्मदगर्वितम् । रावणो राक्षसेन्द्रोऽथ सोऽपि तत्र हतो मया ॥ रा—नास्ति । ८. अ—तोरणं समुपस्थितः । ९. रा प्र ब $ल_1$ $ल_2$—१०६—तमश्लोकदारभ्य १०८—तमश्लोकान्तः पाठो नास्ति । १०. म—रणे सैन्यं तत्सर्वं समसूदयम् । ११. फ—दृष्ट्वास्वबल० । अ—दृष्ट्वाश्वबलविष्टब्धः ॥ १२. म—दृष्ट्वेत्यारभ्य अशक्नुवन्नित्यन्तः पाठो नास्ति । १३ आ—मदोत्कटैः । च—महोत्कटम् । १४. आ फ च रा म अ—नास्ति । १५. च बद्धं ।

मम चाऽवध्यतां ज्ञात्वा रज्जुभिस् त्वं[1] अत्र-वध्य[1] वै।।१११।।[2]
१३२] रावणस्य समीपं तु नीतोऽहं तेन रक्षसा ।[3] [१२९
१३३पू] नीतो[4] दृष्टस्[4] तदाऽहं तु रावणेन दुर्-आत्मना[5] ।।११२।।
पप्रच्छ[6] चैवा[8]ऽऽगमनं राक्षसानां तथा वधम् ।[7] [१३०
N] सर्वं[9] च स मया तत्र सीतार्थं प्रति-जल्पितः[10] ।।११३।। [१३१
सीतया[11] दर्शनाऽऽकांक्षी प्राऽऽप्तस् ते[12] भवनं[12] विभो ।[13]
N] पवनस्यौरसः पुत्रो वानरो हनुमान् अहम् ।।११४।। [१३२
राम-दूतं च मां विद्धि सुग्रीव-सचिवं हरिम् ।
N] सोऽहं दौत्येन[14] रामस्य त्वत्-समीपम् उपा[15]ऽऽगमम् ११५ [१३३

---

१. आ–त्वपवध्य । च–त्ववध्यत । २. प्र ब ल$_1$ ल$_2$–तेन बद्धोहमस्त्रेण विमुक्तश्च विधैर्यवान् । द्रष्टुकामो दशग्रीवं बन्धसक्तोऽभवं तदा । म–ब्रह्मणोऽस्त्रेण स च मां बबन्धाशु महाबलः । अवध्यतां च मे ज्ञात्वा क्षिप्रकारी निशाचरः । अधिकश्च पाठः—ततो मामन्वबंधंत रज्जुभिस्तत्र राक्षसाः । रा–नास्ति ।। ३. प्र ब ल$_1$ ल$_2$–नीतोहं राक्षसैर्घोरै रावणस्यान्तिकं तदा । म–रावणस्य समीपं च गृहीत्वा मामुपानयन् । रा–नास्ति । ४. फ–दृष्टो नीतस् । ५. म–दृष्ट्वा नीतं तदा मां तु रावणः स दुरात्मवान् । रा प्र ब ल$_1$ ल$_2$–नास्ति ।। ६. आ–पप्रच्छुश्चैव गमनं । ७. प्र ब ल$_1$ ल$_2$–रावणोऽपि तदानीं स वाक्यं मामब्रवीदिदम् । अतः परमधिकश्च पाठः–कस्त्वं वानर देवो वा यक्षो नागोऽपि वाऽसुरः । केन वा प्रेषितस्तूर्णं कथयस्व ममाग्रतः । ततोऽहमब्रुवं तस्य वाक्यं वाक्यविशारदः । रा–नास्ति । ८. म–एवं तु । ९. म–सीतार्थमाभिजाल्पतः । आ–०तिजल्पितं । १०. अ–स मया तत्र सीतार्थं सर्वं च प्रतिजल्पितः । रा प्र ब ल$_1$ ल$_2$–नास्ति ।। ११. म–तवाहं । १२. म–त्वत्रद्भनं ततः । १३. रा ब प्र ल$_1$ ल$_2$–नास्ति । १४. रा प्र ल$_1$ ल$_2$–दूतेन । ब म–दूत्येन । १५. फ प्र रा ब म ल$_1$ ल$_2$ अ–उपागतः ।।

श्रृणु चाऽपि समा[1]-देशं यद् अहं प्र-ब्रवीमि ते ।
राक्षसेश हरीऽऽशस् त्वां वाक्यम् आह समा-हितः[2] । [१३४
N] धर्माऽर्थ-काम-सहितं हितं पथ्यम् इवाऽशनम्[3] ॥११६॥ [१३५उ
ऋ[4]ष्य-मूके नि-वसतः पर्वते चित्र-कानने ।
N] राघवो रण-विक्रान्तो मित्र[5]तां समुपाऽऽगतः ॥११७॥ [१३६
तेन वै कथितं राज्ञा[6] भार्या मे रक्षसा हृता ।
N] तत्र स(?सा)हाय्य[7]-हेतोस् त्वं सेनां[8] त्वरय दुः-सहाम् ११८ [१३७
वालिना हृत-राज्येन मया वै कारणेन सः ।
N] चक्रे[9]ऽग्नि-साक्षिकं सख्यं राघवः सह-लक्ष्मणः ॥११९॥ [१३९
तेन वालिनम् आ-हत्य शरेणैकेन सं-युगे ।
N] वानराणाम्[10] अहं राजा[10] कृतः प्र-भवता[11] प्र-भुः ॥१२०॥ [१४०
तस्य साहाय्यवद् अस्माभिः कार्यं[12] सर्वाऽऽत्मना भृशम् ।
N] ततः प्राऽस्थापयम् तूर्णं समीपं[13] ते[13] स धर्म-वित् ॥१२१॥ [१४१
क्षिप्रम् आ-नीयतां सीतां[14] दीयतां राघवस्य[15] च ।
N] याव[16]न् न[16] हरयो वीरा वि-धमन्ति बलं तव ॥१२२॥ [१४२
वानराणां स्व[17]-भावो हि[17] न ते न विदितः पुरा ।[18]

---

१. ल$_2$ अ—ममादेशं । २. फ अ—०हितम् । ३. च—इवाशताम् । रा ब ल$_1$ ल$_2$—इवाश्नताम् । प्र—इवाश्रुताम् ॥ ४. आ—ऋक्षमू० । ५. फ च रा प्र ब म ल$_1$ ल$_2$—मित्रत्वं समु० ॥ अ—मित्रत्वाय समागतः । ६. आ—राजन् । ७. आ—सहायार्थहेतोस्त्वं । ८. च—सेनास्त्वरय दुःसहाः । रा प्र ब म ल$_1$ ल$_2$—याचे परमदुःखितः ॥ ९. आ—कृत्वाग्नि० । अ—कृत्वाग्निसाक्षिकः ॥ १०. फ—वानराणां महाराजः । ११. अ—०वतः ॥ १२. आ—कृत्यं ॥ १३. रा प्र ब म ल$_1$ ल$_2$—त्वत्समीपे । आ—०पं मां ॥ १४. आ प्र म अ—सीतां । १५. फ च रा प्र म ल$_1$ ल$_2$ अ—राघवाय ॥ १६. आ—यावन्तो । फ—तावन्न ॥ १७. रा—०णामभावश्च । फ—०णां प्रभावोऽपि । प्र ब म ल$_1$—स्वभावश्च ॥ १८. ल$_2$—नास्ति ।

N] देवतानाम् अपि[1] सद्म ये गच्छन्त्य् अ-नि[2]वारिताः॥ [3]१२३॥ [१४३
N] इति वानर-राजस् त्वाम् आहेत्य् अभि-[4]हितं मया । [१४४पू
१३३उ] राम-दूतोऽहम् अस्मीऽति पुनश् चाऽऽवेदितं मया[5] १२४ [N
N] अवैक्षत स मां क्रुद्धश्[6] चक्षुषा निर्-दहन्न् इव । [१४४उ
तेन वध्योऽहम् आ-ज्ञप्तो रावणेन दुर्-आत्मना ॥१२५॥ [१४५पू
१३४] [7]राक्षसाऽधि-पतिं ज्ञात्वा [8]घातने मम निश्चितम्[9] । [N
विभीषणो [10]नाम ततस् तस्य भ्राता महा-मतिः[11] ।
१३५] तेन राक्षस-राजोऽसौ याचितो मम कारणात् ॥१२६॥ [१४६
१३६पू] [12]दूता वध्या न दृष्टा हि राज-[13]शास्त्रेषु रावण ।
N] दूतेन भवितव्यं हि यथाऽभिहित-वादिना ॥१२७॥ [१४८
N] सु-महत्य् अपराधेऽपि दूतस्याऽतुल-विक्रम ।
१३६उ] विरूप-करणं दृष्टं ताडनं चाऽपि शास्त्र-तः॥१२८॥ [१४९
N] विभीषणेनैवम् उक्तो रावणो राक्षसेश्वरः ।
१३७उ] राक्षसान् आ-दिदेशाऽथ लांगूलं[14] दह्यताम् इति १२९ [१५०
ततस् तस्य वचः श्रुत्वा लांगूलं ते[15] समन्त-तः ।
१३८] वेष्टयन्[16] छण-वस्त्रैश् च[16] पटैः कार्पासिकैस् तथा १३० [१५१

---

१. फ च रा प्र ब व ल१–सदो । २. आ फ च रा प्र म–०मन्त्रिताः । ३. ल२–नास्ति ॥ ४. अ–अभिहतं । ५. फ–नास्ति ॥ ६. अ–क्रोधाच् ॥ ७. आ–राक्षसानामपि राज्ञा । फ–राक्षसानां परं ज्ञात्वा । च–राक्षसानां वधं ज्ञात्वा । अ–राक्षसेन परिज्ञात्वा । ८. रा प्र ब म ल१ ल२–घातेन । अ–पापेन । ९. फ अ–निश्चियम् । १०. आ–नामतस्तस्य भ्राता स । ११. रा अ–०द्युतिः ॥ १२. रा ल१ ल२–दूतवध्या । १३. आ–राजन् शास्त्रे ह । फ च–राजन् शा० ॥ १४. च रा प्र म ल१ ल२–लांगूलो । ब अ–लांगूले ॥ १५. अ– च । १६. आ–वेष्टयं छ० । फ–वेष्टयश्छनवल्कैश्च । रा–वेष्टयञ्जीर्णवस्त्रैश्च । प्र म ल१ ल२ अ–वेष्टन्यशण-वस्त्रैश्च ॥

राक्षसा बद्ध-सन्नाहास् ततस् ते चण्ड-विक्रमाः । [१८२पू
N] लांगूलम् अग्नि-संयोगैः संस्कर्तुम् अभिसं-स्थिताः ॥१३१॥ [N
N] क्रुद्धाः[1] किलकिलायन्तस् ते शस्त्र-वर-पाणयः । [N
१३९पू] आऽदीपयन्त[2] मे पुच्छं स्नेहाऽक्तं दुष्ट-चेतसः ॥१३२[१८२उ
बद्धस्य बहुभिः पाशैर् यन्त्रितस्य च रज्जुभिः[3] ।
N] न मे पीडा[4] भवेत् काचिद् दिदृक्षोर् नगरीं दिवा ॥१३३॥[१५३
N] ततस् ते राक्षसाः शूरा[5] बद्धं माम् अग्नि[6]-संस्कृतम् ।
१३९उ] घोषयन्तो महा[7]-काया नगरी-द्वारम् आऽगमन् १३४॥ [१८४
ततोऽहं सु-महद् रूपं सं-क्षिप्य पुनर् आत्मनः ।
१४०] बंधान्[8] सर्वान् समा-क्षिप्य प्रकृति-स्थः पुनः स्थितः १३५[१८५
आयसं परिघं प्राऽऽप्य नगर-द्वार्य् अहं पुनः ।[9]
१४१] राक्षसांस् तान् समा[10]-हत्य सूदयामि स्म सर्व[11]-तः ॥१३६॥[१५६
लांगूलेन प्र-दीप्तेन तां पुरीं सो[12]ऽट्ट-तोरणाम् ।
१४२] द[13]हाम्य् अहम् अ-संभ्रान्तो युगाऽन्ताऽग्निर् इव प्र-जाः १३७[१५७
दग्धा लंका ततः पश्चाच् छंका माम् अभ्य्-अपद्यत ।[14]
१४३] दग्धा सीता न सं-देहो दुष्-कृतं खलु[15] मे कृतम् ॥१३८॥[१८८
खे गतानां[16] ततो वाक्यं चारणानां मया[17] श्रुतम् ।

---

१. अ-क्रुद्धम् । २. ल$_1$ ल$_2$-अदी० ॥ ३. आ-राक्षसैः । ४. च-पीडाभवत्काचिद् दि० । रा प्र ब ल$_1$ ल$_2$-पीडाभवत्काचिद्दिधक्षो । म-पीडाभवत्काचिद्दिधिक्षो ॥ ५. फ-क्रुद्धा । ६. फ-अपि संयुतम् । ७. आ-महारावान् ॥ ८. च रा प्र ब म ल$_1$ ल$_2$-पुनः ॥ ९. च-नास्ति । १०. फ-समुत्पत्य । अ-समाप्लुत्य । ११. अ-०शः ॥ १२. आ-साट्ट० । १३. रा प्र ब म ल$_1$ ल$_2$-दग्धवानहम० ॥ १४. आ-दग्ध्वा लंकां ततश्चाहं संकामभ्यवपद्यत । च-दग्धा लंका ततश्चाहं शंका मा० । रा प्र ब म ल$_1$ ल$_2$-लंकां दग्धवतश्चैव शंका मे समजायत । अ-दग्धा लंका ततः पश्चाच्छोकमभ्यवपद्यत । १५. फ-सुमहत् ॥ १६. आ-खग० । १७. अ-च मे ॥

दग्धेयं नगरी लङ्का साऽट्ट-प्राकार-तोरणा । [N
१४४] जानकी तु[1] न दग्धेति विस्मयोदात्त-भाषिणाम्[2] १.३९ [१६१ उ
ततो मे हर्ष उत्पन्नः श्रुत्वा ताम् अद्भुतां गिरम् । [१६२ प्
N] खे[3] गतानां वचः[4] श्रुत्वा हर्षाद् द्विगुण-विक्रमः ॥[5] १.४०॥ [N
पुच्छं निर्-वाप्य सहसा समुद्रे लवणाऽम्भसि ।
N] निश्चयाऽर्थं पुनस् तत्र गत्वा दृष्ट्वा च जानकीम् ॥[6] १.४१॥ [N
अभि-वाद्य ततो देवीं गमनाऽर्थे[7]ऽहम् उत्सुकः ।
N] अरिष्टं नगम् आ-साद्य पुप्लुवे सरितां पतिम् ॥१.४२॥[8] [N
शत-योजन-विस्तीर्णं वेगेन हरि-यूथपाः[9] ।
N] आगतो[10]ऽहं गिरि-श्रेष्ठं[11] भवतां दर्शनोत्सुकः ॥१४३॥ [N
एतद् राम-प्रभावेण वैदेह्याश् च तपो-बलात् ।[12]
१४५] सु-ग्रीवस्य प्रीत्य्-अर्थं मया सर्वम् अनु-ष्ठितम् ॥१४४॥ [१६८
एतत् सर्वं यथा-तत्त्वं यथा-वद् उप-वर्णितम् ।[13]

---

१. फ अ—न तु । २. रा—विस्मयादिति भाषिताम् । प्र ब ल₁ ल₂—विस्मयादिति भाषितम् । म—विस्मयादिति भाषिताम् ॥ ३. आ प्र म ल₁ ल₂—खग० । ४. आ—च श्रुता च । ५. फ अ—नास्ति ॥ ६. फ अ—गत्वा च तां पुनर्दृष्ट्वाऽभिवाद्य ह मातरम् । अतः परमधिकः पाठः—च रा प्र ब म ल₁ ल₂—गत्वा च तां पुनर्दृष्ट्वाऽभिवाद्याहमागतः ॥ ७. च रा ब प्र म ल₁ ल₂—गमनार्थं । ८. फ अ—१४२–१४३ श्लोकौ न स्तः ॥ ९. प्र म ल₁ ल₂—पुंगवाः । च रा ब—पुगवः । १०. च रा ब प्र म ल₁ ल₂—आदरादहं । ११. आ—०श्रेष्ठे ॥ १२. च रा ब म प्र ल₁ ल₂—द्विर्वारं पठितः ॥ १३. फ—एतत्सर्वं मया तत्त्वं समासादुपदेशितम् । च—एतत्सर्वं यथातत्त्वं समासादुपवर्णितम् । रा प्र

१.४६] अत्र यन् न कृतं किंचित् तत् पुनः क्रियताम् इति॥[1] १.४५[१६९

इत्यार्षे[2] रामायणे सुन्दर-काण्डे हनुमत्-कर्म[3]-निवेदनं
नाम षट्पंचाशः सर्गः ॥५६॥

---:०:---

ब म ल$_1$ ल$_2$—एतत्सर्वं यथातत्त्वं समासेनोपवर्णितम् । अ—सर्वमेतन्मया तत्त्वं समासादुपवर्णितम् ।

१. फ च रा प्र ब म—यदत्रानन्तरं कार्यं तत्सर्वं क्रियतामिति । अ—प्रख्याय च कृतं कृत्यं तत्पुनः क्रियतामिति ॥ २. ल$_2$—इति । ३. आ—०कर्मनिवेदनो । ब—हनुमन्निवेदनं । अ—हनुमत्कर्मनिवेदने सागरप्रत्यालंघनो नाम ॥

एवम् आ-ख्याय तत् सर्वं हनुमान् मारुताऽऽत्म-जः ।
१] भूयः समुप-चक्राम वचनं वक्तुम् उत्तमम्[1] ॥१॥ [१
स-फलो राघवोद्योगः सु-ग्रीवस्य च सं-गमः[2] ।
२] शीलम्[3] आ-साद्य सीताया[4] मम[5] च प्लवनं[6] महत्[7] ॥२॥ [२
आर्यायाः सदृशं शीलं सीतायाः प्लवगर्षभाः ।
३] तपसा धारयेल् लोकान् क्रुद्धा सा निर्-दहेद् अपि ॥३॥
सर्वथाऽतिप्र-भावोऽसौ[8] रावणो राक्षसाऽधिपः[9] ।
४] पश्यतः[10] स्पृशतः साध्वीं गात्रं न शतधा गतम्[11] ॥४॥ [३
न तद् अग्नि-शिखा कुर्यात् सं-स्पृष्टा पाणिना[12] सती ।
५] जनकस्य सुता कुर्याद् यत् क्रोध-कलुषी-कृता ॥५॥ [४
अशोक-वनिका-मध्ये रावणस्य दुर्-आत्मनः ।
६] अधस्ताच् छिंशिपायाः[13] सा ह्य् अध्य्-आस्ते शोक-कर्षिता ६[२४
७पू] राक्षसीभिः[14] परि-वृता[14] शोक-संताप-दुर्मनाः[15] ।
N] मेघ[16]-लेखा-परि-वृता[16] चन्द्र-लेखेव निष्-प्रभा ॥७॥ [२५
N] न चिन्तयति वैदेही रावणं बल-दर्पितम्[17] ।

---

१. अ–उत्तरम् ॥ २. फ–संभ्रमः । ३. ल$_1$–शीघ्रम् । ४. आ–शी० । ५. ब–मम कर्म च वा । म–सफलो मम च । ल$_1$–मम तद्दर्शनं । रा–मम च पौरुषं । प्र च–मम च क्रमणं । ६. आ–प्रति । म–श्रमः ॥ ७. अ–पुनः ॥ ८. च–सर्वार्थनिष्प्र० । आ–०थानिष्प्र० । अ–०था विप्र० । ९. अ–०सेश्वरः । १०. च रा ब अ म ल$_1$ ल$_2$ अ–यस्य तां । ११. आ–कृतम् ॥ १२. अ–प्राणिना ॥ १३. अ –अधस्ताल्लिंगियायाः ॥ १४. ल$_1$ ल$_2$–त्रुटितः पाठः । १५. अ–०कर्षिता । १६. ल$_1$ ल$_2$–त्रुटितः पाठः ॥ १७. अ–त्रुटितः पाठः ।

७३] पति-व्रता[1] तु सा देवी सततं सुव्यव-स्थिता ॥[2]८॥ [२६
अनु-रक्ता हि वैदेही रामं सर्वाऽऽत्मना शुभा ।
८] अनन्य-चित्ता[3] रामे[4] सा[5] पौलोमीऽव पुरं-दरे ॥९॥ [२७
तद् एव वासः सरजः पांशु-ध्वस्ता तथैव सा ।[6]
९] शोक-संताप-दिग्धांऽगी[7] सीता भर्तृ-हिते रता ॥१०॥ [२८
सा मया राक्षसी-मध्ये तर्ज्यमाना[8] पुनः पुनः ।
१०] राक्षसीभिः सु-घोराभिर् दुष्टाभिः प्रमदा-वने ॥११॥ [२९
एक-वेणी-धरा दीना भर्तृ-चिन्ता-परायणा ।
११] अधः-शय्या विवर्णाऽगी पद्मिनीऽव हिमाऽऽगमे ॥१२॥ [३०
रावणाद् विनि-वृत्ताऽर्था[10] मर्त्तव्ये कृत-निश्चया ।
१२] कथं-चिन् मृग-शावाऽक्षी विश्वासम् उप-पादिता ॥१३॥ [३१
ततः सं-भाषिता चैव तत्त्वम् अर्थं च दर्शिता ।
१३] राम-सुग्रीव-सख्यं च श्रुत्वा प्रीतिम् उपाऽऽगता[13] ॥१४॥ [३२
नि-यमं[14] समुद्-आचारं[15] भक्तिं[16] भर्तरि चोत्तमाम्[17] । [३३पू.
१४] यां[18] धारयति लोकेषु साध्वी सेत्य् अभि-धीयते ॥[19]१५॥ [४
सर्व-था सीतया[21] दग्धस् तपसा[20] स[22] निशा-चरः । [N

१. आ-पातिव्रतत्वे । च रा ब प्र म ल१ ल२-पतिव्रतात्वे । २. अ-त्रुटितः पाठः ॥ ३. अ-०वृत्ता । ४. आ-रामे तु । च-रामेऽपि । ब प्र म ल१ ल२ च अ-रामेण ॥ ५. अ-च । ६. फ-सा एक० वस्त्रसंवीता रजोध्वस्ता तथैव च । ७. फ-०दीनांगी ॥ ८. आ-०णा । ल२-०नः । ९. रा ब प्र म ल१ ल२ अ-रक्षिता ॥ १०. प्र-०णान्तान्निवृ० । ल१ ल२-०णार्थान्निवृ० । ११. अ-०कृतनिश्चया ॥ १२. फ-प्रदर्शिता । १३. आ-०गतम् ॥ १४. आ-०मः ।१५. आ-०रो । १६. आ-भर्तृभक्तिरिवोत्तमा । १७. प्र म ल१ ल२-सा । १८. अ-सा साध्वीत्य० । १९. आ-यस्सा धारयते तस्य महान्स खलु रावणः ॥ २०. रा म-तपसा । २१. रा म-०स्सीतया । २२. ल१-च ।

निमित्त-मात्रं रामस् तु वधे तस्य भविष्यति ॥१६॥[N३३उ
एवम् आस्ते महा-भागा सीता शोक-परायणा ।
१५] यद् अत्र प्रति-कर्तव्यं तत् सर्वं क्रियताम् इति ॥१७॥ [३५
तस्य तद् वचनं श्रुत्वा वालि-सूनुर् अभाषत ।
५८,१]जाम्बवत्-प्रमुखान् सर्वान् अनु-मान्य महा-कपिः१८[६०,१N
अस्मिन्न् एवं-विधे कार्ये भवतां च नि-वेदिते ।
२] न्याय्यं च सह वैदेह्या द्रष्टुं नृप-वराऽऽत्म-जौ ॥१९॥ [N
अहम् एको हि पर्य्-आप्तः स-राक्षस-गणां पुरीम् ।
३] लंकां तु तरसा हन्तुं रावणं च बलोत्कटम् ॥२०॥ [२
किं पुनः सहितो वीरैर् बलवद्भिः कृताऽऽत्मभिः ।
४] कृतोऽस्त्रैः प्लवने शक्तैर् भवद्भिर् विजयोद्यतैः ॥२१॥ [३
अहं रावणं संख्ये स-सैन्यं स-पुरः-सरम् ।
५] स-पुत्रं वि-धमिष्यामि स- सुहृद्-बान्धवं युधि ॥२२॥ [N
ब्राह्मम् ऐन्द्रं च रौद्रं च वायव्यं वारुणं तथा ।
६] यदि शक्र-जितोऽस्त्राणि दुर्नि-वार्याणि संयुगे॥ २३॥[N
तान्य् अहं वि-धमिष्यामि हनिष्यामि च राक्षसान् ।
७] तद् भवद्भिर् अनु-ज्ञातो दर्शयामि स्व-विक्रमम् ॥२४॥ [N

१. आ-०भूतो । २. अ-०वन्तप्र० । ३. च-हनुमान्स । ४. फ-०पीन् । ५. च रा ब प्र म ल१ ल२-०व महाकार्ये । ६. फ- ०न्याय्यौ नः । ७. फ अ-लङ्कां तां । ८. रा ब प्र म ल१ ल२-नाशयितुं । ९. अ- ०स्त्रैश्च वने० । आ-०स्त्रैः प्लवणे । प्र म ल१ ल२-०स्त्रैः प्लवणैः । अ-०स्त्रैश्चरणे । १०. फ-०स्थितम् । अ-०द्धतैः ॥ ११. अ-०पुरं बलम् । १२. ल१-त्रुटितः पाठः । १३. म-०वाराणि । प्र-त्रुटितः । १४. प्र-त्रुटितः पाठः । १५. ल१ ल२-नास्ति । १६. प्र ल२-त्रुटितः पाठः । १७. आ च प्र ल२-निहंष्यामि च । रा-विनिहंष्यामि । १८. फ च-भवन्द्भिरननु० । रा म ल२-भवाद्भिरभ्यनु० । ब-भवाद्भिरप्यनु० । १९. फ च-नवि० । प्र-सुवि० । २०. ल१-ल-नास्ति ।

मयाऽ[1]तुल्या वि-सृष्टा च[1] शैल-वृष्टिर्[2] अन्-अन्तरा ।

८] देवान् अपि रणे हन्यात् किं पुनस् तान् निशा-चरान् ॥२८॥ [N

अतीऽयात् सागरो वेलां मन्दरः प्र-चलेत् तथा[3] ।

९] जाम्ब-वन्तं न समरे जयेयुर् युधि राक्षसाः ॥२६॥ [N

सर्व-राक्षस-संघातां[4] राक्ष[5]सेश्वर-पूर्व[5]काः ।

१०] अलम् एको हि[6] नि[6]धने ते[7]षां वायु-[8]सुतः [8]कपिः ॥२७॥ [N

प[9]नसस्योरु-वेगेन नलस्य च महाऽऽत्मनः ।

११] गि[9]रयश् च वि-दीर्यन्ते[10] किं पुनर् युधि राक्षसाः ॥२८॥ [N

न[11] देवा[11]ऽसुर-यक्षेषु पन्न-गेषु नगेषु[12] च[12] ।

१२] मै[13]न्द[13]स्य प्रति-योद्धारं पश्येयं द्वि-विदस्य वा[14] ॥२९॥ [N

[15]अश्वि-पुत्रौ महा-वेगौ तौ हि[16] प्लव-गोत्तमौ[16] ।

१३] पितामह-वरोत्सेकात् परमं यत्नम् आ-स्थितौ ॥३०॥ [N

[17]अश्विनोर् माननाऽर्थं हि[17] सर्व-लोक-पिताम[18]हः ।

---

१. रा ब प्र म ल$_2$—मत्पौरुष वि० । फ अ—०ष्टात्तु । ल$_1$—त्रुटितः पाठः । २. फ अ—०ष्टिर्निरं । ३. फ—०लेदपि ॥ ४. फ—०संघा ये । रा—०संघातान् । अ—०संघातास्तु । ५. आ—०सेस्वर० । फ—०सेभ्यश्वर । रा—०वकं । ब प्र म ल$_1$ ल$_2$—०वकान् । ६. रा म—निहन्तुं हि । ब—हि निधने । ७. रा म—कपिर् । ब—अयं । ८. रा म—वायुसुतो ह्यहम् । ब—वायुसुतः प्रभुः । प्र ल$_2$—वायुसुतो जवे । ल$_1$—वायुसुतो ह्ययम् । ९. ल$_1$—परमस्यो । १०. फ—०योऽप्यवदीर्येयुः । ब प्र म ल$_1$—०योऽपि । ल$_2$—यो हि । ११. आ—स देवा० । फ—०देवेष्व० । प्र—तदेवा ० । १२. फ रा ब म ल$_1$ ल$_2$—नरेषु । प्र—सुरेषु वा । च अ—नागेषु वा । १३. आ रा—०मैंद्रस्य । १४. ब प्र म ल$_1$ ल$_2$ अ—च । १५. रा ब प्र म ल$_1$ ल$_2$—०वेगावेतौ प्लु० । आ—अस्विनागरुहावेतौ । १६. आ अ—महाप्लवगसत्तमौ । १७. आ—अश्विनौ मनितार्थौ हि । फ—अश्विनौ मननार्थं च । अ—अश्विनौ बलिनौ यौ हि । १८. अ—०महैः ॥

१४] सर्वाऽव[1]ध्यत्वम् अतुलम् उभयोर् दत्तवांस् तथा[2] ॥३१॥ [N
तेनोत्सेकेन[3] महता प्र-मथ्य महतीं चमूम् ।
१५] सुराणाम् अमृतं वीरौ[5] पीत-वन्तौ प्लवं[4]-गमौ ॥३२॥ [N
तद् एताव् अपि सं-क्रुद्धौ स-वाजि-रथ-कुंजराम् ।
१६] लंकां नाशयितुं शक्तौ सर्वे तिष्ठन्तु[6] वानराः ॥३३॥ [N
अ-युक्तं हि विना देवीं सीताम् असित-लोचनाम् ।
१७] समीपे[7] गमनं तस्य राघवस्य महाऽऽत्मनः ॥३४॥ [४
दृष्टा देवी[8] न[9] चाऽऽनीतेत्य् एवं तत्र नि-वेदितुम् ।
१८] अ-युक्तम्[10] अपि जानामि भवद्भिः ख्यात-कर्मभिः ॥३५॥ [५
उ१९] न[11] हि वः[11] प्लवने[12] कश्चित् नाऽपि कश्चित् पराऽऽक्रमे ।
तुल्यः समस्त[13]-दैत्येषु लोकेषु हरि-सत्तमाः ॥३६॥ [६
२०] जित्वा लंकां[14] राक्षसांश्[14] च हत्वा तं रावणं रणे ।
पू२१] सीताम् आ-दाय गच्छामः सिद्धाऽर्था हृष्ट-मानसाः ॥३७॥ [७
तेष्व्[15] एवं[15] हत-शेषेषु राक्षसेषु[16] हनूमता ।
N] किं प्राऽऽप्त-कालं कर्तव्यं प्राऽऽप्य गच्छाम[17] मैथिलीम् ३८॥ [८
राम-लक्ष्मणयोर् मध्ये न्यस्येम[18] जनकाऽऽत्म-जाम् ।

---

१. ल$_1$ ल$_2$—०युध्य० । २. आ ल$_1$ ल$_2$—तदा । ३. ल$_1$—तेनास्सु० । ४. ब प्र ल$_2$—प्लवोत्तमौ । ५. अ—०रौ । ६. ल$_2$—०न्ति । ७. फ च—० पं ग० । ८. फ ल$_1$—सीता । ९. ल$_2$—नास्ति । १०. रा ब प्र म ल$_1$ ल$_2$—०क्तमिव । ११. च—रहितः । रा ब ल$_1$ अ फ—नहि नः । १२. आ—प्लवणे । १३. ल$_1$ ल$_2$—सामरदै० । अ—सागरदै० । १४. आ—लंकां सरक्षौघां । रा ब प्र म ल$_1$ ल$_2$—सरक्षसां लंकाम् । १५. च रा ब प्र म ल$_1$ ल$_2$ अ—तेष्वहम् । १६. फ—रक्षस्सु हरि-सत्तमाः । १७. रा प्र म ल$_1$ ल$_2$—०मि । १८. फ—न्यसामो । च रा ब प्र म ल$_1$ ल$_2$—न्यसेत्स । अ—संन्यस्य ।

उ२१] किं परि-क्लिश्य तान् सर्वान् वानरान् वानरर्षभान्[1] ॥३९॥ [९
वयम्[2] एव हि गत्वा[2] तान् हत्वा राक्षस-पुंगवान् ।
N] राघवं द्रष्टुम् अर्हामः सु-ग्रीवं सह[3]-लक्ष्मणम् ॥४०॥ [१०

इत्यार्षे[4] रामायणे सुन्दर-काण्डे अंगद-वाक्यं
नाम सप्तपंचाशः सर्गः ॥५७॥

---

१. फ ब म—०र्षभाः । ल₂—०र्षभः । अ—०र्षभ । २. अ—वयं समभिगत्वा । फ—वयमेव हि हत्वा । ३. अ—च स ल० । ४. आ—सुन्दरकाण्डे । रा—श्रीरामायणे । ल₂—इति सुन्दरकाण्डे । अ—सुन्दरकाण्डे उद्योगपर्वणि ॥

अंगदस्य वचः श्रुत्वा जांब-वान् वाक्यम् अब्रवीत् ।
१] नैषा बुद्धिर् महा-[1]बाहो यद् ब्रवीषि महा-कपे ॥१॥ [११
वि-[2]चेतुं वयम् आ-[3]ज्ञप्ता दक्षिणां दिशम् उत्तमाम् ।
२] नाऽऽनेतुं कपि-राजेन नैव[4] रामेण[5] धीमता ॥२॥ [१२
कथं[6]चिन् निर्-जितां सीताम् अस्माभिर् नाऽ[7]भि-रोचयेत् ।
३] राघवो नृप-शार्दूलः कुलं व्यप-दिशन् स्व-कर्म[8] ॥३॥ [१३
प्रति-ज्ञा[9]य स्वयं राजा[10] सीता-विजयम् अग्र-तः ।
४] सर्वेषां कपि-मुख्यानां कथं[11] मिथ्या करिष्यति[12] ॥४॥ [१४
वि-पुलं कर्म च[13] कृतं[13] भवेत् तुष्टिर् न तस्य तु[14] ।
५] वृथा वो दर्शितं वीर्यं भवेद् वानर-पुंगवाः ॥५॥ [१५
तस्माद् गच्छामहे सर्वे यत्र रामः स-लक्ष्मणः ।
६] सु-ग्रीवश् च महा-तेजाः कार्यस्याऽस्य नि-[15]वेदने ॥६॥ [१६
N] जगृहुस् तेऽर्थं[16] तद् वाक्यं कपेर् जाम्ब-वतस् तदा । [६१,१पू
७पू] बाढम् इत्य्-एव चोक्त्वा वै प्र-स्थानं सम्-अरोचयन् ॥७॥ [N
N] अंगद-प्रमुखा वीरा जाम्ब[17]-वांश् च[17] महा-कपिः । [१उ
८उ] प्रीति-मन्तश् च ते सर्वे वायु-पुत्र-पुरः सरा(ः) ॥८॥

---

१. आ-महाबुद्धेः । २. $ल_2$-विक्रेतुं । ३. अ-आदिष्टा । ४. च-नानेन । रा प्र ब $ल_2$-तेनैव । म $ल_1$-तेन वै । ५. रा म $ल_1$-राघवेण च । प्र ब $ल_2$-रामेणैव च । ६. अ-कथं विनिर्० । ७. आ-नावरो० । रा प्र ब म $ल_1$ $ल_2$-नैव रो० । अ-०भिरभिरो० । ८. फ च रा प्र ब म $ल_1$ $ल_2$-महत् । ९. फ-०ज्ञातं । अ-०ज्ञातुं । १०. अ-राज्ञा । ११. रा-न च । १२. अ-भविष्यति । १३. च रा प्र ब $ल_1$ $ल_2$-तत्कृत्वा । अ-कर्ता वै । १४. फ प्र $ल_1$ अ-च । १५. फ-कार्यस्य विनिवेदने । १६. अ-ते च । १७. आ-हनूमांश्च ।

महेन्द्राऽग्रं[1] परि-त्यज्य पुप्लुवुर् वानरोत्तमाः[2] ।
N] मेरु-मन्दर-संकाशा मत्ता इव महा-गजाः[3] । [२
८पू] छादयन्त इवाऽऽकाशं कपयस् तोय-दा यथा[4] ॥९॥ [३
सं-पूज्यमानं[5] भूतैश् च हनुमन्तं महा-बलम् ।[6]
९] कपि-श्रेष्ठा[7] महा-काया: पिबन्त इव दृष्टिभिः ॥१०॥[8] [४
रामस्य[9] चाऽर्थ-सिद्धिं च भर्तुश् च वि-पुलं यशः[10] ।
१०] समा-धाय समृद्धाऽर्थाः कर्म-सिद्धिम् अनु-उत्तमाम्[11] ॥११॥ [५
प्रियाऽऽख्यानोत्सुकाः सर्वे सर्वे युद्धाऽभि-नन्दिनः ।[11]
११] सर्वे राम-प्रतीकारे निश्-चिताऽर्था[12] मनस्-विनः ॥१२॥ [६
प्लवमाना[13] खम्[14] आ-श्रित्य ततस् ते काननौकसः ।
१२] नन्दनोपमम् आ-सेदुर् वनं द्रुम-लताऽऽकुलम् ॥१३॥ [७
यत् तन् मधु-वनं श्री-मत् सु-ग्रीवस्य सु-रक्षितम्[15] ।
१३] अ-धृष्यं सर्व-भूतानां[16] सर्व-भूत-मनो-हरम् ॥१४॥ [८
यद् रक्षति महा-वीर्यः[17] सदा दधि-मुखः कपिः ।
१४] मातुलः कपि-मुख्यस्य सु-ग्रीवस्याऽमितौजसः ॥१५॥ [९
ते तद् वनम् उपाऽऽगम्य बभूवुर् हृष्ट-मानसाः ।
१५] वानरा वानरेन्द्रस्य मनः-कान्तं मनो-रमम्[18] ॥१६॥ [१०

---

१. अ–महेन्द्राद्रिं । २. फ प्र ब म ल$_1$ ल$_2$–वानरर्षभाः । ३. फ–०द्विपाः । ४. च रा प्र ब म ल$_1$ ल$_2$–तोयदोपमाः । ५. आ–०मानस्तु तैश्च । ६. अ–सभाज्यमानो भूतैस्तैर्जांबवान्सुमहाबलः । ७. रा प्र ब म ल$_1$ ल$_2$–०श्रेष्ठं म० । अ–हनूमन्तं महावेगं । ८. फ–कपीत्यारभ्य सर्वे रामेत्यन्तः पाठो नास्ति । ९. प्र म ल$_1$ ल$_2$–राघवस्यार्थसिद्धिं च । अ–रामस्य चार्थसंसिद्धिं । १०. अ–जसः । ११. रा प्र ब म ल$_1$ ल$_2$–नास्ति । १२. अ–निश्चिताश्च म० । ल$_2$–निश्चिताऽर्थास्तपस्विनः । १३. अ–०णा । १४. फ–समाश्रित्य । १५. अ–हि चेप्सितम् । १६. आ–भूतैश्च रा म ल$_1$–०लोकानां । १७. रा म ल$_1$–वीरः । १८. रा प्र ब म ल$_1$ ल$_2$ अ–०हरम् ॥

ततस् ते वानरा हृष्टा दृष्ट्वा मधु-वनं महत् ।
१६] हनूमन्तम् अयाचन्त जाम्बवत्-प्रमुखास् तदा [1] ॥१७॥
स चांऽगदम् उपाऽऽगम्य याचं[2]ति स्म तदा मधु ।[3]
१७] सिद्धाऽर्थानां किलाऽस्माकं प्रसादं कर्त्तुम् अर्हसि ॥[4] १८॥[N
अंगदस् तु हनूमन्तं प्र-शं[5]स्य शुभया गिरा ।
१८] किम् इच्छसि वदस्वेति प्रीतो वाक्यम्[6] उवाच ह ॥१९॥ [N
अंगदस्य वचः श्रुत्वा हनूमान् हरि-पुंगवः ।
१९] ज्ञातिभिः सहितो हर्षाद् इदं वचनम् अब्रवीत् ॥२०॥ [N
राज्ञस् तु यत् ते[7] पितुर् अप्य् अ-प्रधृष्यं
वनं बभूवाऽप्रतिमं सु-गुप्तम् ।
तद् देहि दा[8]यं हरि-पुंगवानां
सुदुर्-लभं नो हरि-राज-पुत्र ॥२१॥ [N

इ[9]त्यार्षे रामायणे सुन्दर-काण्डे वान[10]र-प्रत्यागमनं
नामाऽष्टापंचाशः सर्गः [11]॥५८॥

---

१. अ–नास्ति । २. आ–याचन्ति । रा प्र ब म ल$_1$ ल$_2$–याचते । ३. अ–कुमारमयभ्याचन्त मधूनि मधुपिंगलाः । ४. अ–इतः परं सर्गान्तः पाठो नास्ति । ५. ब–प्रशंस्य । ६. फ–वाक्यं शुभ वहम् । ७. फ–ते यत् । ८ फ–तुष्ट्यै । ९. ल$_1$–इति । १०. आ–उद्योगपर्वणि वानर० । च–वानरप्रत्यागमनं । ११. अ–सर्गसमाप्तिर्नास्ति ॥

[वं-६०]= [एकोनषष्टितमः सर्गः] =[दा-६२]

श्रुत्वा ह[1]नुमतो वाक्यम्[2] अंगदः प्र-वरांऽगदः[2] ।
१] प्रत्य्-उवाच महा-तेजाः पिबन्तु हरयो मधु ॥१॥[3] [२
ततः कुमारस् तान् सर्वान् जाम्[4]बवत-प्रमुखान् हरीन् ।
N] अनु-मान्य ददौ तेषां नि-सर्गं[5] मधु-भक्षणे ॥२॥ [६०,६१
अवश्यं कृत-कार्यस्य कार्यं[6] हनुमतो वचः[6] ।
२] अ-कर्त्तव्यम् अपि प्राज्ञैः किम्-अंग पुनर् ईदृशम् ॥३॥[7] [३
एतत्[8] तु वचनं श्रुत्वा अंगदस्य मुखोद्-गतम्[9] ।
३] साधु साध्व् इति सं-हृष्टा वानराः प्रत्य्-अपूजयन् ॥४॥ [४
अंगदेनाऽभ्यनु-ज्ञाताः प्र-हृष्टास्[10] ते तु वानराः[10] । [N
४] पूजयित्वांऽगदं सर्वे[12] यूथ[11]-पं यूथ-पर्षभाः[11] ।
५पू] जग्मुर् मधु-वनं र[12]म्यं नदी-वेगा[13] इव द्रुतम्[14] ॥५॥ [५
N] ते प्र-विष्टा मधु-वनं पालान्[15] नांऽगणयंस् तदा ।
५उ] अति-हर्षाश्[16] च[16] पटवः सीताया दर्शनेन च ॥६॥ [६
६पू] उत्-पत्य च ततः सर्वे वन-पालान्[17] समन्त-तः ।
ताडयन्ति[18] स्म[19] तरसा[19] प्र-विशन्ति दिशो दश । [७

---

१. फ–हनू० । २. प्र ब म ल$_1$, ल$_2$–वाक्यं वानरप्रवरोंऽगदः । ३. अ–नास्ति । ४. च–जांबवान् प्र० । ५. प्र ब म ल$_1$, ल$_2$–विसर्गं । अ–निःसर्गं । ६. अ–वद । ७. अ–३-यश्लोकादारभ्य ७-मश्लोन्तः पाठो नास्ति । ८. रा प्र ब म ल$_1$, ल$_2$–एवं । ९. फ च प्र रा ब म ल$_1$, ल$_2$–मुखाच्च्युतम् । १०. च रा प्र म ल$_1$, ल$_2$–प्रहृष्टा वानरास्तु ते । ११. फ–यूथपा यूथपर्षभम् । १२. फ च रा म–सर्वे । १३. च रा म ०वेगा । १४. फ च रा म–द्रुमम् । १५. रा ल$_1$–फलान्यनमयस् । ब प्र ल$_2$–फलान्यानमयस् । । १६. फ च–०हर्षाच्च । रा प्र ब म ल$_1$, ल$_2$ ०हर्षादपटवः । १७. च रा प्र ब ल$_1$, ल$_2$–०पालाः । १८. रा ब म ल$_1$, ल$_2$–ताडितास्तैश्च । प्र–ताडिताश्चैव । १९. फ–त्वरितास्ते द्रवन्ति । च–तरसा द्रवन्ति च । रा ब प्र म ल$_1$, ल$_2$–तरसा द्रवन्ति स्म ।

N] त्रासयित्वा तु[1] तान् आशु वानरास् ते बलोत्कटाः ॥७॥[2] [N
६उ] अति-धृ[3](?स्ट)ष्टाः कुमारेण धीमता वालि-सूनुना ।
हरयः प्रत्य्[3]-अपद्यन्त द्रुमान् मधुकराऽऽकुलान् ॥८॥[4] [N
७] लोडयन्ति[5] स्म शत-शः सर्वं[6] मधु-वनं तदा ।[6]
भक्षयन्तः सु-गन्धीनि मधूनि[7] रस-वन्ति च[7] ॥९॥ [N
९] जग्मुः प्र-हर्षं[8] ते सर्वे[8] बभूवुश् च मदोत्कटाः ।[8] [N
मधूनि द्रोण-मात्राणि बहूनि परि-गृह्य ते ॥[9]१०॥
N] पिबन्ति कपयः केचित् संघ-शंस् ते[10] प्रहृष्ट-वत् ।
८उ] शातयन्ति च[11] ते हृष्टा भक्षयन्ति स्म चाऽपरे ॥११॥ [८
पीत्वा केचित् प्र-विध्यन्ति बन्धु[12]-यूथान् बली-मुखाः ।
१०] अपरे मधु-शिष्टेन जघ्नुर् अन्योऽन्यम् उत्कटाः ॥१२॥[13] [९
मधु पीत्वा[14] प्र-णादांश् चाऽप्य् उत्-सृजन्ति[14] महा-बलाः ।[15]
N] अन्ये सुखोप-विष्टाश् च जघ्नुर्[16] अन्ये मदोत्कटाः ॥[17]१३॥ [N
N] अपरे तरु[18]-शाखासु मदाऽऽविष्टा ललम्बिरे ।
अन्ये च वृक्ष-मूलेषु वि-हरन्तः प्लवं-गमाः ।
११] अत्य्-अर्थम् आशिता[19]ः क्रान्ताः पर्णान्य्[20] आ-स्तीर्य शेरते१४ [१०

---

१. च प्र ब म ल१–तु तान्सर्वान् । ल२–च तान्सर्वान् । २. अ–नास्ति ॥ ल१–अतिहृष्टाः । अ–ते विसर्गाः । ३. अ–समप० । ४. फ–नास्ति । ५. ल१–लोभयन्ति । ६. फ अ–नास्ति । ७. अ–मूलानि च फलानि च । ८. अतः परमधिकः पाठः–प्र–अतिधृष्टाः कुमारेण धीमता वालिसूनुना । फ–नास्ति । ९. अ–अत आरभ्य 'नृत्यन्ति हृष्टवत्' इत्यन्तः पाठो नास्ति । १०. फ–संघशस्तत्र हृ० । रा म ल१–संघशश्च प्र० । ११. प्र म ल१ ल२–स्म । १२. फ–सखीर्यूवान् । च रा प्र ब ल१ ल२–मधुयूथान् । म–मधूयूथान् । १३. च अ–नास्ति । १४. रा प्र ब म ल१ ल२–पीत्वाथ नादांश्च विसृजन्ति । १५. फ च–नास्ति । १६. ल१ ल२–जग्मुर् । १७. फ–नास्ति । १८. आ–ते तु शा० । रा–मधु० । १९. आ फ च–आसिताः । ल१–आश्रिताः । २०. फ च–पर्णाण्यास्तीर्य ॥

उन्मत्त-भूताः प्लव-गा मधु-पान-प्रहर्षिताः।
१२] क्ष्वेलाः[1] कुर्वन्ति[2] हास्यं च[3] कलहांश्[4] च प्र-कुर्वते ॥१५॥ [११
१४उ] अ-तृप्तवत् पिबन्त्य् अन्ये मधूनि मधु-पिंगलाः।
१३पू] केचित् तालान्[5] प्र-कुर्वन्ति केचिन् नृत्यन्ति हृष्ट-वत्[6]।
N] क्षिपन्ति च तथाऽन्योऽन्यं स्खलन्ति[7] च पृथक्-क्रियाः[8] ॥१६॥[9] [N
खादन्ति केचिद् वि-हरन्ति केचिद्
N] द्रवन्ति[10] केचित् प्र-हसन्ति[11] केचित्।[12]
१५उ] नदन्ति केचित् प्र-हसन्ति केचिद्[13]
N] धावन्ति[14] केचित् कथयन्ति[15] केचित् ॥१७॥ [N
१५पू] गायन्ति[16] केचिद्[16] वि-मृशन्ति[17] केचिद्[17]
नृत्यन्ति केचित्[17] प्र-पतन्ति[18] केचित्।[19]
ध्यायन्ति[20] केचित् प्र-पठन्ति केचित्[21]
N] क्रुध्यन्ति केचित् क्षमयन्ति[22] केचित् ॥१८॥[19] [N
स्तुवन्ति केचिद् वि-हसन्ति[23] केचिद्

---

१. प्र ल२–क्ष्वेडाः। ल३–क्ष्वेडः। २. आ–कुर्वन्विहास्यं। ३. ब–स्म। ४. रा म ल१–कलहं च। ब–कलहं स्म। ५. फ–तालानि कुर्वन्ति। ब–तालान्स्म कु०। ल२–कालान्प्र०। ६. फ–०वान्। ७. च–वलन्ति। ८. आ च–०क्रियाम्। ९. रा प्र ब म ल१ ल२–केचिद्क्षिपन्ति चान्योन्य चलन्ति च पृथक् क्रियाः। अ–हरयो मधुना मत्ताः केचित्सुप्ताः महीतले॥ १०. फ–रुदन्ति। ११. रा प्र ब ल१ ल२–प्रहरन्ति। १२. म अ–नास्ति। १३. च रा प्र ब म ल१ ल२ अ–नास्ति। १४. फ–स्वपन्ति। अ–प्लवन्ति। १५. रा प्र ब म ल१ ल२–प्रपतन्ति। १६. रा प्र ब म–स्मयन्ति। ल१ ल२–स्नायन्ति। १७. च–प्रमृशन्ति के०। आ–वितृशन्ति के०। रा प्र ब म–ल१ ल२–प्लवगाः प्रहृष्टाः। १८. च–केचिच्च नदन्ति। १९. रा प्र ब म ल१ ल२–नास्ति। २०. च–नमन्ति। २१. प्र ब ल१ ल२–नास्ति। २२. आ–क्षपयन्ति। अ–प्रशसन्ति। २३. अ–विवदन्ति।

दीव्यन्ति केचित् प्र[1]-पतन्ति केचित् ।
पिबन्ति[2] केचित् प्र-हरन्ति[3] केचित्
N] स्मयन्ति[4] केचित् प्लव-गाः प्र-हृष्टाः[4] ॥१९॥[5] [N
परस्परं केचिद् अ (?उ)पा[6]ऽऽश्रयन्ति[7]
परस्परं केचिद् अपाऽऽक्रमन्ति ।[9]
मही-तलं[10] केचिद् उदीर्ण-सत्त्वा
१६] द्रुतं द्रुमाऽग्रा[11]ण्य् [11]अभिसं-पतन्ति ॥२०॥ [N
प्र-गीतम् अन्य[12]स् तु हसन्[12]न् उपैति
प्र-हृस्य चाऽन्यै[13]ः प्र-नुदन्न् उपैति ।[14]
प्र-यान्त[15]म् अन्यः सहसाऽभ्य[16]-उपैति[16] ।
१७] हसन्तम् [17]अन्यः प्र-पतन्[18]न् उपैति[18] ॥२१॥[19] [N
द्रुमाद् द्रुमं केचिद् अपा[20]ऽऽक्रमन्ति

---

१. म अ-प्रलपन्ति । २. अ-स्वपन्ति । ३. म-प्रवसन्ति । अ-०द्रमयन्ति । ४. अ-हसन्ति केचित्प्रहरन्ति केचित् । ५. रा प्र ब ल$_1$ ल$_2$-नास्ति । ६. आ-अत्रासयन्ति । च म-अपास्रवन्ति । रा ब ल$_1$ ल$_2$-अपः स्रवन्ति । प्र-अपत्रपन्ति । ७. अतः परमधिकः पाठः—अ-नदन्ति केचिद्विवदन्ति केचित् पिबन्ति केचिच्च वदन्ति केचित् । स्मरन्ति केचित् प्रहरन्ति केचित् प्लवंगमाः साधुतया प्रहृष्टाः॥ ८. आ-अपात्रयन्ति । च-अपस्रवन्ति । रा ब ल$_1$ ल$_2$-अपत्रपन्ति । ९. अतः परमधिकः पाठः-च अ-परस्परं केचिदपत्रपन्ति । १०. रा प्र ब ल$_1$ ल$_2$-०गताः के० । म-०तले के० । अ-०तलं के० । ११. च रा प्र ब म ल$_1$ ल$_2$-द्रुमाग्राण्यपि सं०। अ-द्रुमाग्रानभि० । १२. आ-अन्ये प्रहसन् । च-अन्यं च ह० । १३. आ-प्रभृत्यमन्यः । १४. रा प्र ब म ल$_1$ ल$_2$-नास्ति । १५. प्र म-प्रयान्तुमन्यः । ल$_2$-प्रपतंतमन्यः । आ फ च ब- ०न्तमन्यं । १६. आ-सहसात्युपैति । ल$_2$-सहसाभ्युपेति । १७. फ च रा प्र ब ल$_1$ ल$_2$-अन्यं । १८. आ-प्रणवन्न् । फ-प्रपठन्न् । रा प्र ब म ल$_1$ ल$_2$-प्रपतन्तमन्यं । १९. अ-नास्ति ॥ २०. ल$_1$-अपक्र० ।

मही-तलात्[1] केचिद् अपाऽऽक्रमन्ति[2] ।
क्षितिं नगाऽग्रान्[3] नि-पतन्ति केचित्
N] क्षितेर् नगाऽग्रं नि-पतन्ति केचित्[4] ॥२२॥[5] [N
समा-कुलं तत् कपि-सैन्यम् आसीन्
मधु-प्रपानोत्कट[6]-सत्त्व-चेष्टम्[7] ।
न चाऽत्र[8] कश्चिन्[9] न बभूव मत्तो
१८] न चाऽत्र कश्चिन न बभूव[10] तृप्तः ॥२३॥ [N
ततो वनं तत् परि-भज्यमानम्[11]
द्रुमांश् च विध्वंसित-पत्र-पुष्पान् ।[12]
सम्-ईक्ष्य सर्वान् दधि-वक्त्र-नामा
१९] नि-वारयामास कपिः[13] कपींस् तान् ॥२४॥[N
स तैर् मदाद् अप्रति[14]-वीर्य-रूपैः[15]
बलाद् बलौघैः परि-वार्यमाणः[16] ।[17]
प्र-धर्षितस् सक्त-भयैः सम्-एत्य
N] प्र-कर्षितः कर्षितवान् परान् सः[18][19] ॥२५॥[N
स तैः प्र-मत्तैः[20] परि-भर्त्स्यमानो

---

१. फ–०तले । रा प्र ब म ल$_1$ ल$_2$–तलं । २. रा प्र ब म ल$_1$ ल$_2$–अति क्र० । ३. ल$_1$–तुगाग्रान् । ल$_2$–नगाग्राणि । ४. च रा प्र ब म ल$_1$ ल$_2$–केचित्क्षितेरम्बमाव्रजन्ति । ५. अ– नास्ति । अतः परं । च रा प्र ब म ल$_1$ ल$_2$–'प्रपठन्नुपैति' इति पूर्वपठितः पुनरावृत्तः ॥ ६. च–प्रपाणो० । ७. आ च–०चेष्टाः । अ–०दृष्टि । ८. अ–तत्र । ९. ल$_1$–केचिन् । १०. फ–वितृप्त एव । ११. म–०भक्ष्यमाणं । ल$_1$–०भुज्यमानं । ल$_2$–प्राविभक्ष्यमाणं । १२. अ–नास्ति । १३. अ–कपीश्वरस् । १४. आ–महात्माऽप्रति० । १५. अ–सुदुर्मदांश्चाप्रतिरूपधैर्यः । १६. म–०माणैः । १७. फ अ–बलाच्च तेनोपरि वार्यमाणैः । १८. ल$_1$–०परान्द्रः । १९. आ–प्रकृष्यताकर्षत चापरान्सः । अ–प्रकर्षिताकर्षत वा परस्परं । २०. प्र ल$_2$–प्रमत्तः । अ–प्रवृत्तैः ।

वनस्य गोप्ता हरि-वीर-वृद्धः[1] ।
चकार भूयो मतिम् उग्र-तेजा
वनस्य तस्य प्रति-वारणा[2]ऽर्थम् ॥२६॥ [N
उवाच कांश्चित् परुषाणि रुष्टः[3]
कांश्चित् तलेना[4]ऽपि जघान रोषात् ।
सम्-एत्य कैश्चित् कलहं चकार
N] तथैव साम्नोप-जगाम कांश्चित्[5] ॥२७॥[6] [N
नखैश् च तीक्ष्णैर्[7] दशनैर्[7] दशन्तस्
तलैश् च पादैश् च सम्-आप्नुवन्तः[8] ।
महा-कपिं ते[9] कपयः समेता
N] महा-वना[10]न् निर्-विषयं च[11] चक्रुः ॥२८॥ [N

[12]इत्यार्षे रामायणे सुन्दर-काण्डे[12] मधु-भक्षणं[13]
नामैकोनषष्टितमः सर्गः ॥५९॥

---

१.अ–०मुख्यः । २. च रा म ल$_1$ अ–०रक्षणार्थम् । ब प्र ल$_2$–०रक्षणाय । ३. फ अ–क्रुद्धः । ब प्र ल$_2$–धृष्टः । ल$_1$–दुष्टः । ४. रा ल$_1$ अ–तलेनाभिज० । ५. आ अ–कैश्चित् । ६. अतः परमधिकः पाठः–अ–स वानरो वानरयूथनाथः । अयं च सार्धश्लोकः २८–शश्लोकात् परं पठितः ॥ ७. ल$_1$–केचिद्दशनैर् । ८. फ–आघ्नुवन्तः । च रा प्र बम ल$_1$ ल$_2$–आप्लवन्तः । ९. फ म–तं । १०. म–०बलानि । ल$_2$–०वणान् । अ–०वने । ११. आ म ल$_2$ अ–स्म । १२. ल$_2$–इति सु० । अ–सुन्दरकाण्डे । ल$_1$–इत्यार्षे रामायणे । १३. अ–०भक्षणो ॥

तत्र[1] वै मधु-पाला ये स्थिता दधि-मुखाऽऽज्ञया[2] ।[3] [१.४पू
३] नाऽचिन्तयन्त[4] तान् सर्वान्[5] वार्य-माणाः[6] प्लवं-गमाः ॥[7]१॥ [N
ते[8] विक्रुष्टाश् च जानुभ्यां देव-मार्गाश्[9] च दर्शिताः ।[10] [१.५पू
४] वानरैर् बहुभिर् भीमैः[11] प्रति-षिद्धा दिशो[12] गताः ॥२॥ [१.४उ
अब्रुवन् परमोद्विग्नाः पाला[13] दधि-मुखं[14] तदा । [१.५उ
५] तारांऽगद-हनूमद्भिर्[15] हतं मधु-वनं कपे[16] ॥[17]३॥
वयं नि-घृष्टा[18] जानुभ्यां देव-मार्गाश्[19] च दर्शिताः ।[20] [१.६
६] यद् अत्राऽनन्तरं कार्यं तत् त्वं कर्तुम् इहाऽर्हसि ॥[21]४॥ [N
ततो दधि-मुखः[22] क्रुद्धो वन-पालाऽधिपस् तदा ।
७] हतं मधु-वनं मत्वा[23] हतांश्[24] चाऽऽश्वासयद्[24] हरीन् ॥५॥ [१७

---

१. ब म-तत्रैव । २. प्र-०दयः । ३. अ-ये तत्र मधुपालस्य प्रेक्ष्या दधिमुखस्य ते । अतः परमधिकश्च पाठः-तानुवाच हरिश्रेष्ठो हनूमान्पवनात्मजः । सुप्रीतमनसः ......मधु सेवत वानराः । अतः परं च ५९तमसर्गारम्भे त्यक्ताः कतिचिच्छ्लोकाः "श्रुत्वा हनुमतो वाक्य" मित्यारभ्य "हरयो मधुना मत्ताः" इत्यन्ताः पुनरालिखिताः । ४. फ-न चिन्तयतस्तान्सर्वे । ५. म-०णान् । ल२-०णः । ६. ब प्र ल२-०मान् । ७. अ-नास्ति ॥ ८. म ल१-तैर्विक्रुष्टाश्च । ल२-तैस्तैर्विक्रुष्टा । ९. रा ब प्र ल२-०मर्गाश्च । ११. अ-०वीरैः । १२. फ-दिवो ॥ १३. ल२-नात्वा ? । अ-गत्वा । १४. च-०मुखात् । १५. फ-तात्रांग० । १६. रा ब प्र म ल१ ल२-प्रभो । १७. अ-हनूमता दत्तवैरैर्हतं मधुवनं च यत् ॥ १८. च ब प्र ल२-प्रकृष्टा । रा म-विकृष्टा । १९. च ब प्र ल२ म-०मार्गाश्च । ल१-मार्गं च । २०. अ-जानुभिस्ते प्रघृष्टाश्च देवमार्गं प्रदर्शिताः । २१. अ-नास्ति ॥ २२. ल१-मुखं । २३. प्र म ल१ ल२-श्रुत्वा । २४. आ-हतान्शाखामृगान्हरीन् । अ-सान्त्वयामास तान्कपीन् । रा ब-हतानाश्वासयद्धरीन् ॥

एह्य्[1] आगच्छत[1] गच्छामो वानरान् अति-दर्पितान्[2] ।
८] बलेन वारयिष्यामो भक्ष-माणान् मधूऽत्तमम् ॥[3]६॥ [१८
श्रुत्वा दधि-मुखस्यैतद्[4] वदतो वानरर्षभाः ।[5]
९] पुनर् वीरा मधु-वनं तेनैव सहिता[6] ययुः ॥[7]७॥ [१९
ते लता-पादपांश् चैव पाषाणान् अपि वानराः ।
११] गृहीत्वाऽभ्य्[8] अगमन् क्रुद्धा यत्र ते कपि-कुञ्जराः ॥८॥ [२१
ते स्वामि-वचनं श्रुत्वा हृदयेष्व्[9] अव-शाप्य तत्र[10] ।
१२] हरयो[11]ऽपि गताः सर्वे[11] शाल[12]-ताल-शिलाऽऽयुधाः[12] ॥९॥[13] [२२
मध्ये चैषां[14] दधि-मुखः प्र-गृह्य द्रुमम् उत्तमम् ।
N] समभ्य् अधावद् वेगेन ते[15] च सर्वे[15] प्लवं-गमाः ॥१०॥ [२०
वृक्ष-स्थांश्[16] च स्थल-स्थांश्[17] च वानरा बल-दर्पितान् ।
N] अभि[18]-चक्रमिरे वीराः पालास्[19] तत्र[19] सहस्र-शः ॥[20]११॥ [२३

---

१. फ—तत्रागच्छत । प्र—एह्यागच्छामि । २. प्र—०हर्षितान् । ३. अ—वारयिष्यामि तान् गत्वा प्रभुञ्जानान् मधूत्तमान् ॥ ४. फ—०स्यैव व० । ५. अ—नास्ति । ६. फ—सहसा । ७. अतः परमधिकः पाठः—च रा ब प्र म $ल_1$ $ल_2$ अ–समभ्यधावन्योगेन† ते च सर्वे‡ प्लवंगमाः ॥ ८. फ—०त्वा व्यद्रवन् क्रु० । रा $ल_1$—०त्वाभ्यागमंस्तत्र ॥ ९. प्र—०षु विशाप्य । फ—०ष्ववसह्य । प्र च ब म $ल_1$ $ल_2$—०ष्ववसज्य । रा—०ष्ववसज्ज । प्र—षु विसज्य । अ—०ष्यवसज्य । १०. अ—च । ११. फ—हरयः समहृष्यन्त । अ—हरयोभिगताः सर्वे । १२. $ल_1$—सालतालशिखायुधाः । १३ आ अ फ च—अतः परं ७उ पुनः पठितः ॥ १४. अ—तेषां दधि० । ब प्र $ल_2$—दधि मुखश्चैषां । १५. अ—सर्वे चैव ॥ १६. आ—०स्थाश्च । १७. आ—०स्थाश्च । १८. च—अथ च० । रा ब प्र म $ल_1$ $ल_2$—उप० । अ—अतिच० । १९. रा ब प्र म $ल_1$ $ल_2$—लाः शतस० । २१. अ—कोषे सर्गः समाप्तिर्दृश्यते ॥

---

†म $ल_2$—०धावन्वेगेन । $ल_1$—०धावद्वेगेन । ‡$ल_1$—सर्वे च ।

बलान् निवारयिष्यन्त आ-[1]सेदुर् हरयो हरीन् ।
N] सं-दष्टौष्ठ-पुटाः क्रुद्धा भर्त्सयन्तो मुहुर् मुहुः ॥१२॥[2] [२४
अथ दृष्ट्वा दधि-मुखं क्रुद्धं[3] वानर-पुंगवाः ।
१३] अभ्य्[4]-अधावन् सुसं-क्रुद्धा हनूमत्-प्रमुखास् तदा[5]॥१३॥[6] [२५
स-वृक्षं[7] तं महा-बाहुम्[8] आ-पतंतं महा-बलः[9] ।[10]
१४] वेग-वन्तं[11] नि-जग्राह बाहुभ्यां कुपितोऽङ्गदः[12] ॥१४॥ [२६
मदान्धो[13] न कृपां चक्रे आर्यः[14] कोऽयं ममेति सः ।[15]
१५] अथैनं[16] निष्-पिपेषाऽऽशु वेगेन वसुधा-तले ॥१५॥ [२७
स भग्न-बाहूरु-मुखो विह्वलः शोणितोक्षितः ।
१६] सं-मुमोह महा-वीर्यो मुहूर्तं कपि-कुञ्जरः ॥[17]१६॥ [२८
स कथंचिद् वि-मुक्तस् तैर् वानरैर् वानरर्षभः ।[18]
६२,१] उवाचैकान्तम् आ-गम्य[19] तान् भृसान् समुपाऽऽगतान् ।[20] १७
तत्राऽऽगच्छत गच्छामो भर्त्ता[21] नो यत्र[22] वानराः ।
२] सु-ग्रीवो विपुल[23]-ग्रीवः सह रामेण[23] धीमता ॥१८॥ [३१
सर्वं चाप्यंगदे[24] दोषं श्रावयिष्यामि[25] वानराः ।

---

१. ल$_2$—आसीदुर् । २. अ—नास्ति ॥ ३. फ म—सर्वं । ४. फ—अभ्यद्रवन्त सं०। अ—०धावत सं०। ५. फ—०खाः कपिम्। म—०खा अपि। अ—०खास्तथा। ६. च रा ब प्र ल$_1$,ल$_2$—नास्ति ॥ ७. आ—स वृक्षस्तं । ८. म—०बाहुर् । ९. म—०बलं । १०. च रा ब प्र ल$_1$ ल$_2$—नास्ति । ११. ल$_2$—०वन्ता । १२. फ—कपिमङ्ग० ॥ १३. आ—मदन्यो । १४. फ—कार्यः । १५. अ—मदान्धश्च न वेदैनमार्यः कोऽयं ममेति यत् । १६. ल$_2$—अथेनां ॥ १७. रा ब प्र ल$_1$ ल$_2$—नास्ति ॥ १८. फ—वानरोत्तमः । १९. च—आगत्य । २०. रा ब प्र म ल$_1$ ल$_2$—समभाषत तान् सर्वान् वानरान्समुपागतान् । अ—उवाच कान्तिमागत्य तान् हरीन् समुपागतान् ॥ २१. ल$_1$—भर्त्तारो । २२. ल$_2$ अ—वानरः । २३. म ल$_1$,ल$_2$—०वो रामेण सह । २४. फ—वा अङ्गदे। च—वाप्यंगदे। २५. आ—०ष्याम ।

३] अ[1]-मर्षी न हि तां[2] श्रुत्वा[3] धर्षणां मर्षयिष्यति ।।१९।। [३२
प्रियं मधु-वनं ह्य् एतत् सु-ग्रीवस्य महाऽऽत्मनः ।
४] पितृ-पैतामहं दिव्यं दैवतैर् अप्य् अ-धर्षितम् ।।२०।।[4] [३३
स वानर[5]-पतिः श्रीमान् मधु-लुब्धान् गताऽऽयुषः[6] ।
५] घातयिष्याति दण्डेन तीक्ष्णेन ससुहृज्-जनान् ।।२१।। [३४
वधम्[7] एषां नृ-शंसानां नृपाऽऽज्ञा-परिदूषिणाम्[8] ।
६] धर्षणा[9]ऽऽमर्षितो रोषात् सर्वेषां कारयिष्यति[10] ।।२२।।[3] [३५
एवम् उक्त्वा दधि-मुखो वन-पालो महा[11]-बलः ।
७] जगाम सहसोत्-पत्य वन-पालैः समा[12]-वृतः ।।[13]२३।। [३६
निमेषाऽन्तर-मात्रेण[14] संप्राऽऽप्तः स वने-चरः ।
८] सहस्रांऽशु-सुतो धीमान् सु-ग्रीवो यत्र वानरः ।।२४।। [३७
राघवं[15] सह सु-ग्रीवं लक्ष्मणं च सम्-ईक्ष्य स[16]ः ।[13]
९] सर्व[17]-प्रतिष्ठां जगतीम् आकाशान् नि-पपात ह ।।[18]२५।।[३८
१०पू] स नि-पत्य महा[19]-वीर्यः सर्वैस् तैः परि-वारितः ।[18] [३९पू
स दीन-वदनो भूत्वा कृत्वा शिरसि चांऽजलिम्[20] ।
११] सु-ग्रीवस्य शुभौ[21] मूर्ध्ना चरणौ नि-पपात ह ।।२६।। [४०

---

१. फ–अमर्षन् । च–अमर्षी । २. फ–तैः । च–तान् । रा–तं । ब प्र ल१ ल२ अ–तच् । ३. ब प्र ल१ ल२ अ–छ्रु० ॥ ४. ल२–नास्ति ॥ ५. फ–वानरानिमान् सर्वान् । ६. आ–०युषा ॥ ७. अ–वधार्हान्सुनृशंसांश्च । ८. फ–०वारणात् । अ–०दूषकान् । ९. फ–धर्षितं । आ–धर्षणां म० । अ–मर्षतो । १०. फ–स कारिष्यति ॥ ११. ल२–हलायुधः । १२. फ–संमन्ततः । १३. ल१–नास्ति ॥ १४. आ–०रमार्गेण । १५. अ–स राघवं सहसु० । १६. म–ईक्षयतः । १७. आ अ–सर्वे प्र० । अ–०सर्वे प्रतिष्ठा ॥ १८. च रा ब प्र ल१ ल२–नास्ति । अतः परमधिकः पाठः–फ अ–हरिर्दधिमुखः पालः पालानां परमेश्वरः । म–हरिं दधिमुखः पालैर्वनपालाधिपस्ततः । १९. अ–०वीरः । २०. अ–वांऽजलिम् । २१. ल२–शुभो ॥

स तैः कथंचित् कपिभिर् वि-मुक्तः
सम्-एत्य[1] राज्ञा[2] प्र-वरो हरीणाम् ।
विवेचयामास वनं च भग्नं
N] मधूनि मुख्यानि च भक्षितानि[3] ॥२७॥ [N

इत्यार्षे[4] रामायणे[4] सुन्दर-काण्डे मधुवनं[5]-विलोपनो

नाम षष्टितमः सर्गः ॥६०॥

---

१. अ–समीत्य । २. फ–राज्ञे । ३. आ–लक्षितानि ॥ ४. ल२ अ–इति । ल१–इत्यार्षे सुं० । ५. फ–वाल्मीकीये मधुवनविलापनं । अ–०काण्डे मधुवनविलोपनं । अ–मधुभक्षणे सुग्रीवनिवेदनो । व–काण्डे मधुवनवि ०॥

ततो मूर्द्ध्ना नि-पतितं वन-पालं[1] कपीऽऽश्वरः[2] ।
१] दृष्ट्वैवोद्विग्न-हृदयं वाक्यम् एतद् उवाच ह ॥१॥ [१
उत्तिष्ठोत्तिष्ठ कस्मात् त्वं पादयोः पतितो मम ।
२] अ-भयं[3] ददामि ते वीर तत्त्वम् एवाऽभि-धीयताम् ॥२॥ [२
किं सं-भ्रमाद् विवक्षुर्[4] त्वं ब्रूहि यद् वक्तुम् इच्छसि ।
३] कच्चिन्[5] मधु-वने स्वस्ति श्रोतुम् इच्छामि वानर[6] ॥३॥ [३
स समा-श्वासितस्[7] तेन सु-ग्रीवेण महाऽऽत्मना ।
४] उत्थाय च[8] महा-प्राज्ञो वाक्यं दधि-मुखोऽब्रवीत् ॥[9]४॥ [४
ऋक्ष-राजेन यद् वा[10]ऽपि न त्वया[11]ऽपि न[11] वालिना ।[9]
५] वनं विसृष्ट[12]-पूर्वं हि वानरैस् तद् वि-नाशितम् ॥५॥[13] [५
न्य्-अवारयम् अहं[14] चैतान्[15] सहैभिर् वन-चारिभिः[16] ।
N] अ-विचिन्त्य तु मां हृष्ट्वा[17] भक्षयन्ति पिबन्ति च ॥६॥ [६

---

१. अ-०पालो । २. फ-महाकपिः । च रा प्र ब म ल१ ल२-हरीश्वरः ॥ ३. आ-ददामि ॥ ४. अ-विवक्तुम् । ५. आ-काश्चिन् । रा अ-किंश्चिन् । ६. आ-मानद । ल१-वाणर ॥ ७. आ-०श्वासितस् । ८. आ च प्र ब ल२-स म० । फ रा म-सुम० । ९. ल१-नास्ति ॥ १०. फ च रा प्र म ल२-यत्पूर्वं । अ-जम्भाश । ११. फ ल२ अ-त्वया न च । च रा प्र ब म-त्वया नापि । १२. ल१-निसृष्ट० । अ-निसृष्ट० । १३. अतः परमधिकः पाठः-फ-अङ्गदप्रमुखैः सर्वैर्वानरैस्तत्प्रदर्शितैः । म-हनूमता जाम्बुवता तारेण च नलेन च । कुमुदेन च मैन्देन सरभेनाङ्गदेन च ॥ सर्वैः प्रचण्डैर्हरिभिर्ध्वस्तं तैस्तन्महावनं । महाबलैस्तैः कपियोधमुख्यैः समन्ततः सम्परिवार्य सर्वैः । हतं प्रहृष्टैर्बहुमुख्यवानरैर्महावनं तत्प्रथितं महात्मनः ॥ भग्नं वृक्ष (?) मथितं समन्तात् प्रसादलब्धं मधु तत्पिबामः । अहं समागत्य च तान्न्यवारयम् न मे वचः कश्चिदपि शृणोति ॥ १४. आ फ-निवारयन्नहं । अ-न्यवारयमहं । १५. च-चैभिर्वानरैर् । १६. फ-०गोचरैः । १७. फ सर्वे ॥

के[1]चिच् च रोषाद् [1]गर्जन्ति वि-क्षिपन्ति तथाऽपरे ।
१०] प्र-स्फुरन्त्य् अपरे [2]क्रुद्धा भ्रुवोऽन्ये वि-क्षिपन्ति च ॥७॥ [N
१.२पू] इत्य् एवम् अति[3]सं-क्रुद्धाः सम्प्र-[4]हारं प्र-[5]कुर्वते ।
७उ] ते मया प्रति-षि[6]ध्यन्तो भर्त्सयन्ति बली-मुखाः ॥[7]८ [N
अहं [8]तु संरब्ध-तरैस् तथा तैः सम्प्र-धर्षितः ।
८] नि-[9]वारयामि वाहुभ्यां सहैभिर् [10]वन-गोचरैः ॥९॥ [९
ततस् तैर् बहुभिः [11]क्रूरैर् वानरैर् अंगदेन च ।
९] संरक्त-नयनैः [12]क्रूरैर् अहम् [13]उत्प(?पा)स्य ताडितः॥१०॥[१०
जगत्यां [14]कृष्य-माणश् [14]च [15]जानुभ्यां वि[16]नि-पातितः ।
११] प्र-[17]कृष्य च यथा-कामं देव-[18]मार्गं [18]च दर्शितः ।[११
१.२उ] तैः सर्वैः परम-क्रुद्धैर् वन-पालाश् च मामकाः ॥[19]११॥ [N
एवम् [20]अस्मि हतः शूरैस् त्वयि तिष्ठति भर्तरि ।
१३] कृत्स्नं मधु-वनं चैव प्र-कामं [21]सम्प्र-धर्षितम् ॥१२॥ [१२
एवं वि-ज्ञाप्यमानं तु सु-ग्रीवं [22]प्लवगर्षभम् ।

---

१. फ—केचिद्दोषात्प्रगर्जन्ति । आ—०द्दोषाद्गच्छन्ति । २. फ—क्रूरा ॥ ३. फ ल$_1$ ल$_2$—अभिसं० । ४. फ—०हारान । ५. फ अ—प्रचक्रिरे । ६. रा ब म ल$_1$ ल$_2$—०षिद्धाश्च । ७. अ—मया प्रतिनिषिध्यन्तस्तर्जयन्ति बलामुखाः । फ—नास्ति । अतः परमधिकः पाठः—च रा प्र ब म ल$_1$ ल$_2$—अति चैवोच्छ्रेय-स्तेषां ब्रुवन्ति परुषाणि च ॥ ८. रा प्र ल$_1$ ल$_2$—च । ९. फ—वारयामि स्म । रा—निवर्तयामि । १०. फ—वनचारिभिः ॥ ११. च रा प्र ब म ल$_1$,ल$_2$—सर्वैर् । १२. अ—क्रुद्धैर् । १३. ल$_1$—अहं प्रत्युत । फ अ—०मुत्पाद्य ॥ १४. फ—निहतश्चास्मि । च—कृष्यमाणश्च । १५. च—नानाभ्यां । १६. अ—च नि० । १७. च रा प्र ब ल$_1$ ल$_2$ अ—आकृष्य । १८. फ—०मार्गश्च । ल$_2$—०मार्गं स । १९. अ—नास्ति । अतः परमधिकः पाठः—म—वानरेश महाप्राज्ञ महाबल महाद्युते ॥ २०. ल$_2$—अस्ति । २१. आ—तं प्र० । ल$_1$—संप्रदार्षितं ॥ २२. फ प्र ब ल$_1$ अ—प्लवगेश्वरम् । रा म ल$_1$—वानरेश्वरम् ।

१४] अपृच्छत्[1] स महा-तेजा लक्ष्मणः पर-वीर-हा ॥१३॥ [१३
किम् अयं वानरो राजन् वन-पः प्रत्युप-स्थितः ।
१५] किं [2]चाऽर्थम् [3]अभिनिर्-दिश्य दुःखितो वाक्यम् अब्रवीत् १४ [१४
एवम् [3]उक्तस् [3]तु सु-ग्रीवो लक्ष्मणेन महाऽऽत्मना ।
१६] लक्ष्मणं प्रत्य्-उवाचेदं वाक्यं वाक्य-[4]विशारदः ॥१५॥ [१५
N] अयं लक्ष्मण सम्प्राऽऽप्तो [5]वन-पः शृणु कारणम् ।
वि-[6]चिंत्य दक्षिणाम् आशाम् आ-गतैर् हरि-यूथ-पैः[7] १६ [१६उ
१७] अंगद-प्रमुखैर् वीरैर् हतं मधु-वनं [8]मम ।[7]
आ-[9]ख्यातं चांगद-मुखैर् वानरैर् मधु भक्षितम् ॥१७॥ [१६पू
N] [10]तेषाम् अकृत-कार्याणां नेदृशः स्याद् व्यति-क्रमः । [१७पू
यद् [11]अर्थम् अभि-पन्नास् ते साधितं कर्म तैर्[12] ध्रुवम् ॥१८॥ [१८
N] आ-गतोऽसौ प्र-[13]हृष्टश् च यथा मधु-वनं हरिः । [१७पू
१८उ] प्र-[14]हृष्टैर् वानरैः सर्वैर् हनुमत्-प्रमुखैर् वृतः ॥१९॥[15] [N
धर्षितं च वनं कृत्स्नम् उप-भुक्तं च तन् मधु ।[15] [१७उ
१९] वारयन्तश् च सम्प्राऽऽप्ताः पाला जानुभिर् आ-हताः ॥२०॥
तथा न गणितश् [16]चौऽयं कपिर् दधि-मुखो बली ।
पतिर् मधु-वनस्याऽयम् अस्माभिः स्थापितः [17]स्वयम् । [१९

---

१. फ च रा प्र ब म ल$_1$—अपृच्छंत्सुम० । अ—अपृच्छत म० ॥ २. फ—किमर्थम० । च—कं चार्थमभिनिर्देशात् । प्र म—कं चार्थम० ॥ ३. अ—उक्तः सुसुग्रीवो । ४. अ—०विदां वरः । ५. आ—विभयः ॥ ६. आ—विचिंत्य । ७. अ—नास्ति ॥ ८. रा म ल$_1$—महत् । ९. फ—आख्याति पालानुत्क्रम्य वानरैर् । रा प्र—आख्याति ह्यंगदमुख्यैर् । १०. अ—नैषामकृतकार्याणामीदृशः ॥ ११. फ अ—तदर्थम् । च रा म ल$_1$—वनं यद् । प्र ब ल$_2$—वयं यद् । १२. फ—तद् । १३. फ—प्रविष्टश्च ॥ १४. आ—प्रवृष्टो ॥ १५. अ—नास्ति । १६. फ—चैव ॥ १७. अ—सदा ।

N] सं-सिद्धाऽर्थाश् च कपयः[1] पिबन्तु तृषिता[1] मधु ॥[2]२१॥ [N
दृष्टा[3] च मन्ये वैदेही[3] न चाऽन्येन हनूमतः[4] ।
N] महान्[5] स साधने हेतुः कर्मणस् तद्-विधो भवेत् ॥२२॥ [२०
हनूमतो हि सिद्धिश् च कपेर् मतिर् अतीऽव च ।
N] व्यव-सायश्[6] च वीर्यं च सूर्ये[7] तेज[7] इव ध्रुवम् ॥२३॥ [२१
जाम्ब-वान् यत्र नेता स्याद् अंगदश् च महा-बलः ।
N] हनूमांश् च प्रति-ष्ठाता न तत्र[8] गतिर्[9] अन्यथा ॥२४॥ [२२
अंगद-प्रमुखैर् वीरैर् हतं मधु-वनं किल । [२३पू
N] वि-चिंत्य[10] दक्षिणाम् आशाम्[11] आ-गतैः[11] कपि-कुंजरैः २५[12] [N
कामम्[13] अर्थम् अनुप्राऽऽप्तो[14] वक्तुं मधु-वनेश्वरः[15] ।
२०] नाम्ना दधि-मुखश् चैव कपिः प्रख्यात-विक्रमः ॥२६॥ [२४
दृष्टां[16] तु मन्ये[16] वैदेहीं सुमित्राऽऽनन्द[17]-वर्द्धन ।
२२] सं-सिद्धाऽर्था हि कपयः पिबन्तु[18] सहिता मधु ॥२७॥[19] [२५
अ-दृष्ट्वा[20] न[20] हि ते सीतां वानराः पुरुषर्षभ[21] ।
२३] धर्षयेयुर् मधु-वनं व्यक्तं दृष्टा हि जानकी ॥२८॥ [२६
तस्य तद् वचनं श्रुत्वा सु-ग्रीवस्य महाऽऽत्मनः ।
N] लक्ष्मणो मति-सम्पन्नो वानरेशम् अथाऽब्रवीत् ॥२९॥[22] [N

---

१. रा ल$_{1}$—तृषिताः पिबन्तु कपयो । म—तृषिताः पिबन्ति कपयो॥ २. अ—नास्ति । ३. फ—दृष्टा मन्ये च । च रा प्र ब म ल$_{2}$—दृष्टां तु मन्ये वैदेहीं । ल$_{1}$—दृष्टा तु मन्ये । ४. आ फ च रा प्र ब म ल$_{1}$—हनूमता । ५. फ रा प्र ब म ल$_{1}$ ल$_{2}$ अ—न ह्यन्यः ॥ ६. अ—व्यवसायं च । ७. अ—सौर्यतेज ॥ ८. अ—तस्माद् । ९. च—गतिम् ॥ १०. अ—विचिंत्य । ११. अ—आशां वानरैः । १२. फ—नास्ति ॥ १३. च प्र ब म ल$_{1}$ ल$_{2}$ अ—एतद् । १४. अ—प्राप्तुं । १५. अ—०वनं किल ॥ १६. अ—दृष्ट्वा ममेति । १७. आ—सुमित्रानन्दि० । १८. म—पिबन्ति ॥ १९. फ—नास्ति । २०. ल$_{2}$—अदृष्टानि । २१. च—०भाः ॥ २२. रा ल$_{1}$—२९-श्श्लोकादारभ्य ३४-श्श्लोकान्तः पाठो नास्ति ॥

अंगदो [1]यद्य् अनुप्राऽऽप्तो वि-चित्वा दक्षिणां दिशम् ।
N] प्र-[2]हृष्टर् वानरैः सर्वैर् हनूमत्-प्रमुखैर् वृतः ॥[3]३०॥ [N
धर्षितं च वनं सर्वम् उप-भुक्तं च तन् मधु ।
N] वारयन्तश् च सम्प्राऽऽप्ताः पाला जानुभिर् आ-हताः ॥३१॥[N
यथा न भणितश् चाऽयं [4]कपिर् दधि-मुखो [4]बली ।[3]
N] पतिर् मधु-[5]वनस्यांऽयं युष्माभिः स्थापितः स्वयम् ॥३२॥[N
दृष्टां तु मन्ये वैदेहीं शत-पत्र-निभाऽऽननाम् ।
N] कृत-कार्यास् ततः सर्वे [6]पिबन्तु हरयो मधु ॥३३॥ [N
नाऽनवाऽऽप्य हि सीतां ते वानरा [7]वानरेश्वर ।
N] धर्षयेयुर् मधु-वनं व्यक्तं दृष्टा हि जानकी ॥३४॥ [N
ततः प्र-हृष्टो धर्माऽऽत्मा राघवः सह-लक्ष्मणः ।
२४] श्रुत्वा कर्ण-[8]सुखां [8]वाणीं सुग्रीव-वदन-च्युताम् ॥३५॥
प्राऽहृष्यत भृशं रामो लक्ष्मणश् च महा-बलः । [२७
N] दृष्ट्वा दधि-[9]मुखं चैवं सु-ग्रीवश् चाप्य्-[10]अहृष्यत ॥३६॥
२५उ] वन-पालं पुनर् वाक्यं सु-ग्रीवः प्रत्य्-अभाषत । [२८
प्रीतोऽस्मि सौम्य यद् भुक्तं वनं तव कृत-कर्मभिः ॥३७॥
२६] तेषां च कृत-कार्याणां [11]मर्षणीयं वि-चेष्टितम् । [२९
गच्छ शीघ्रं मधु-वनं सं-रक्षस्व त्वम् एव हि ।

---

१. फ ब—यदि संप्राप्तो । प्र अ—यदनु० । २. फ म अ—प्रहृष्टो । ३. च प्र ब ल२—नास्ति ॥ ४. फ अ—युष्माभिः स्थापितः स्वयम् । ५. ल२—वनस्याहं । ६. फ म अ—पिबन्ति ॥ ७. म—वानरर्षभ । ल२—वानरेश्वराः । अ—०रः । ८. आ—कर्णसुखांवाणी ॥ ९. फ अ—दधिमुखस्यैतत् । १०. च प्र ब म—चाप्यभाषत । रा ल२ अ—चाभ्यभाषत ॥ ११. फ—मर्षनीयं ।

२७] तांश्[1] च प्रेषय सर्वांस् त्वं हनूमत्-प्रमुखान् कपीन्[2] ॥२८॥[३०

इच्छामि शीघ्रं हनुमत्-प्रधानान्

शाखा-मृगांस्[3] तान् मृग-राज-दर्पान् ।

द्रष्टुं कृताऽर्थान्[4] सह राघवाभ्यां

२८] श्रोतुं च सीताऽधि-गमं प्र-यत्नात् ॥२९॥ [३१

इत्यार्षे[5] रामायणे सुन्दर-काण्डे मधुवन-भंगे सुग्रीव-वाक्यं[6]

नामैकषष्टितमः सर्गः ॥६१॥

---

१. रा ल$_1$—तान्प्रेषयेह । ब-तान्प्रेषयस्त्र च । प्र ल$_2$—तान्प्रेषय च । फ प्र ब ल$_2$—हरीन् ॥ ३. आ-०मृगांश्च । ४. रा—कृतार्थास् ॥ ५. आ फ-आषर्यें रा० । ल$_2$—इति । ६. फ—दधिमुखसुग्रीववाक्यं नाम । ल$_2$ ल$_2$—मधुवनभंगो नाम । अ—सुग्रीववाक्यं नाम ॥

सु-ग्रीवेणैवम् उक्तस्[1] तु हृष्टो दधि-मुखः कपिः ।
१] उक्त्वा[2] धन्योऽहम् अस्मीऽति[2] चरणाव् अभ्य्-अवादयत्॥१॥[१
राघवं लक्ष्मणं चैव सु-ग्रीवं[3] चाऽभि-पूज्य[3] सः ।
२] वानरैः[5] सह शूरैस्[6] तैर्[6] दिवम् एवोत्-पपात ह ॥२॥ [२
यथैवं[7] चाऽऽगतः[7] शीघ्रं तथैव त्वरितं गतः ।
३] नि-पत्य गगनाद् भूमिं तद् वनं प्र-विवेश ह ॥३॥ [३
स प्र-विष्टो मधु-वनं ददर्श हरि-यूथपान् ।
४] वि-मदान् उत्-थितान् सर्वान् वेप[8]-मानान् मदाऽत्ययात्[9]॥४[४
सं[10] तांन् अनु-गतांन्[11] वीरो बद्ध्वा कर-पुटाऽञ्जलिम्[12] । [५पू
५] उवाच वचनं हृष्ट[13] इदं दधि-मुखः[13] कपिः ॥५॥ [N
सौम्या[14] रोषो न कर्तव्यो यद् अमीभिर् नि-वारिताः[15] ।
६] अ[16]-ज्ञानाद् यदि वा ज्ञानाद्[16] भवन्तः[17] संप्र-धर्षिताः[17]॥६॥ [६पू
N] उवाच वचनं श्लक्ष्णम्[18] अंगदं कनका[19]ऽगदम् । [५उ
७पू] युव-राज[20] त्वम् ईशश्[21] च[21] वनस्याऽस्य महा-बलः[22] ॥७॥ [७पू

---

१. ब प्र म ल$_1$-क्के । २. फ-उक्त्वात्मक्रोधं धन्योस्मि ॥ ३. अ-०वमभि० । ४. फ-स प्रणम्य तु सुग्रीवं राघवं लक्ष्मणं तथा । ५. अ-०रः । ६. प्र-स्थविरैस् ॥ ७. फ अ-स यथैवागतः ॥ ८. रा ल$_1$ ल$_2$-हीयमा० । ब प्र-नीयमानम० । ९. रा ल$_1$ ल$_2$-०यान् । म-०ये ॥ १०. प्र-सीताम् । ११. फ अ-०नयन् । च रा ब ल$_1$-०गतो । १२. म-०लीन् । १३. अ-हृष्टो हृदि जातः सुखः ॥ १४. फ-सौम्य । १५. फ-०तः । १६. अ-मया मूढेन चाज्ञानाद् । १७. फ-०भवद्भिश्च प्र० ॥ १८. अ-श्लाघ्यम् । १९. ब प्र ल$_1$ ल$_2$-कांचनां० । २०. आ-०राजस् । २१. अ-ईशोस्य । २२. रा ब प्र म ल$_1$ ल$_2$-०बल ॥

८पू] श्रान्तो दूराद् अनुप्राऽऽप्तो भक्षयस्व[1] स्वकं मधु । [६उ
N] सर्वम् एतद् यद् उक्तस् त्वं तत्र बद्धोऽयम् अञ्जलिः ॥८॥ [N
८उ] योऽयं मौर्ख्यात् प्रकारो मे तत्र त्वां सं-प्रसाद[2]ये ।
७उ] मया मौर्ख्यान् न वि-ज्ञातम् तत्र बद्धोऽयम् अञ्जलिः॥९॥[3] [७उ
यथैव हि पिता तेऽभूत् पूर्वं हरि-गणेश्वरः ।[4]
९] तथा त्वम् अपि सु-ग्रीवान् नाऽन्यो वै हरि-सत्तम ॥१०॥[5] [८
इहोप-यानं भवतां सर्वेषां वन-चारिणाम् ।
१०] गत्वा[6]ऽऽख्यातं मया तात[7] पितृव्यस्य तवाऽनघ ॥११॥ [९
स तु त्वाम् आ-गतं श्रुत्वा सहैभिः कपि-कुञ्जरैः ।[8]
११] प्र-हृष्टो न त्व् असं-हृष्टो वनं श्रुत्वा [10]प्र-धर्षितम् ॥१२॥ [१०
[11]मां त्व् अब्रवीत् पितृव्यस् ते सु-ग्रीवो वानरेश्वरः ।
१२] शीघ्रं प्रेषय तान् सर्वान् इति छन्देन गम्यताम् ॥१३॥ [११
श्रुत्वा दधि-मुखस्यैतद् वचनं श्लक्ष्णम् अंगदः ।
१३] अब्रवीत् तान् हरि-श्रेष्ठान् वाक्यं वाक्य-विशारदः॥१४॥ [१२
शंके[12] श्रुतो[13]ऽयं वृत्तान्तो राज्ञा वानर-यूथपाः ।
१४] अयं [14]च हर्षाद् आ-ख्याति तेन जानामि हेतुना॥[15]१५॥

---

१. फ—०यंस्त्वं ॥ २. च—०दयन् । ३. रा ब प्र म ल$_1$ ल$_2$ अ—नास्ति ॥ ४. रा प्र ल$_1$—नास्ति । ५. रा म ल$_1$—नास्ति । ब प्र ल$_2$—अतः परं ९-मश्लोको व्यत्यासेन पठितः ॥ ६. अ—मत्वाख्यातं । फ—ख्यातुं । ७. फ—तुभ्यं । ८. फ—महात्मनः ॥ ९. ल$_1$—अतः परं "यथैवं हि पिता ते भूत्" "तथा त्वमपि" "तत्र बद्धोयमञ्जलि" रित्यन्तो भिन्नक्रमः पाठो मूलीयैः—१०—९—८ संख्याकैः श्लोकैः समः पाठः । १०. अ—श्रुत्वापि ध० ॥ ११. फ अ—मामब्र० । च रा ब प्र म ल$_1$—मां चाब्र० । ल$_2$—स त्वब्र० ॥ १२. आ—शब्दैः । १३. प्र—वृत्तोपवृ० । १४. फ—हि । १५. प्र—नास्ति ॥

तव क्षेमं नेह नः स्थातुं कृते-कार्यैर् विशेष-तः । [१३
१५] पीतं मधु यथा-कामं वि-श्रान्ता वन-चारिणः ।
N] किं शेषं गमनं तत्र सु-ग्रीवो यत्र वानराः ॥१६॥ [१४
सर्वे यथा च वक्ष्यन्ति सम्-एत्य हरि-यूथपाः ।
१६] तथाऽस्मि कर्ता तद् वाक्यं भवद्भिः पर-वान् अहम् । [१५
१७पू] नाऽऽज्ञापयितुम् ईशोऽहं युव-राजोऽपि यद्य् अहम् ॥१७॥
N] अ-युक्ताः कृत-कर्माणो यूयं धर्षयितुं मया । [१६
१७उ] युक्तं (?क्ता) हि कृत-कर्माणो यूयं माम् (?मया) अनु-वर्तितुम् ॥ N
एवं तस्य ब्रुवाणस्य श्रुत्वा वचनम् उत्तमम् ।
१८] प्र-हृष्ट-वदना वाक्यम् इदं ऊचुर् वनौकसः ॥१९॥ [१७
कं एवं वक्ष्यते वाचं प्रभुः सन् वानरोत्तम ।
१९] ऐश्वर्य-मद-मत्तो हि सर्वोऽहम् इति मन्यते ॥२०॥ [१८
तव चैतत् तु सदृशं नाऽन्यस्य हरि-पुंगव ।
२०] सं-नतिर् हि तवाऽऽख्याति भविष्यच्-छुभ-भाग्यताम् ॥२१ [१९

---

१. आ—कृतं । रा ब म ल$_1$ ल$_2$—कृते कार्यैर् । २. आ रा ब म ल$_1$ ल$_2$—कृते कार्ये । ३. अ—पीते । ४. अ—०तव० । ५. फ—नास्ति । ६. आ—गमने । अ—गम्यते । ७. प्र—नास्ति ॥ ८. रा—वीक्ष्यन्ते । ब—वीक्षन्ते । ल$_1$—भीक्ष्यन्ते । ल$_2$—वीक्ष्यन्त । अ—यथावद्वक्ष्यामः । ९. रा—समेता । १०. फ—परिवारितः । ११. च—न ज्ञा० । १२. अ—ईशो वै ॥ १३. रा ब प्र म ल$_2$—न युक्तं । आ—अयुक्तं । १४. च—०कार्याणां । १५. रा म ल$_1$—युष्माकमनु० । अ—युष्माभिरनु० । १६. ब प्र ल$_2$—नास्ति ॥ १७. च—सत्यं ॥ १८. आ—एकान्तां । फ अ—कपीनां । १९. ल$_2$—वीक्ष्यते । २०. ब प्र म ल$_1$—वीर । २१. आ—स त्वा नरोत्तमा । फ अ—स त्वा नरोत्तमा ॥ २२. आ च—चैवन्तु सन्देशं । रा म ल$_1$—चैवं सु० सदृशं । अ—वेदं सुदृ० । २३. ब प्र ल$_2$ अ—हरि सत्तम । २४. आ—०त चाख्याति । अ—सन्निभिर्हितमा । फ—सन्ततिर्हितमा० । च—सन्नतिर्हितमा० । २५. अ—०छुभमीयते ।

सर्वे वयम् अपि[1] प्राज्ञ[2] गन्तुं तत्र कृत-क्षणाः[3] ।
२१] यत्राऽसौ वानर-श्रेष्ठः सु-ग्रीवो हेम[4]-पिंगलः ॥२२॥ [२०
त्वया त्व् अनु[5]-उक्तैर् हरिभिर् नैव शक्यं पदात् पदम् ।
२२] कश्चिद्[6] गन्तुं हरि-श्रेष्ठ[7] सम्-एवैतद् वदामहे[8] ॥२३॥ [२१
एवं तु ब्रुवतां तेषाम् अंगदः सम्[9]-अहृष्यत ।
२३] बाढं गच्छाम इत्य्-उक्त्वा खम् उत्[10]-पत्य(?पा) च[11](?त) भू[12]-तलात्[13] २४
तम्[14] उत्-पतंतम्[14] उत्-पेतुः सर्वे ते हरि-यूथ-पाः ।
२४] कृत्वाऽऽकाशं निर्-आका[15]शं यन्त्र[16]-क्षिप्ता इवोत्पलाः[17] ॥२५॥ [२३
तेऽम्बरं सहसोत्-पत्य वेग[18]-वन्तः प्लवं-गमाः ।
२५] वि-न[19]दन्तो महा-नादान् मेघा वातेरिता इव[20] ॥२६॥ [२४

इत्यार्षे[21] रामायणे सुन्दर-काण्डे[21] मधुवनाद् वानरोत्पतनं[22]
नाम द्विषष्टितमः सर्गः ॥६२॥

---

१. अ–इति । २. ब प्र ल२–प्राज्ञा । ३. अ–०क्षणां । ४. फ–हरिपुङ्गवः ॥ ५. अ–त्वयानुरक्तै । ६. आ फ–कश्चित्तु । ७. च ब प्र म ल१,ल२ अ–०श्रेष्ठं । ८ फ– ब्रुवामहे ॥ ९. आ–प्रत्यभाषत । अ–प्लवतां वरः । १०. फ–खे समुत्पत्य । ११. अ–तु । १२. आ–बभूव च । १३. अ–सर्गे समाप्तिर्दृश्यते ॥ १४. अ–उत्पतंतं स मु० । १५. च–फाशनिर्० । १६. अ–पंच क्षिप्ता । १७. च–०क्षिप्ताम् ॥ १८. अ–वेगेनैव । १९. प्र–विनंद० । २०. फ–यथा ॥ २१. रा– इत्यार्षे । ल२–इति सुन्दरकाण्डे । २२. फ–वानरप्रयाणो । ल२–वानरपतनं । अ–सर्गसमाप्तिर्न दृश्यते ।

अंगदे समनु[1]प्राऽऽप्ते सु-ग्रीवो[2] वानरे[3]श्वरः ।
१] उवाच शोक-सन्तप्तं रामं क[4]मल-लोचनम् ॥१॥ [२५
समा-[5]श्वसिहि भद्रं ते दृष्टा देवी न सं-शयः ।
२] नाऽऽगन्तुम् इह शक्यं तैर् [6]अतीत-समयैर् भयात् ॥२॥
N] अंगदस्य प्र[7]-हर्षं तु जा[8]नामि शुभ-दर्शनम् । [२६
न मे[9] सकाशम् आ-गच्छेत् [10]कृत्ये हि विनि-पातिते ॥३॥
३] [11]युव-राजो महा-प्रा[12]ज्ञः प्लवतां प्र-वरोऽगदः । [२७
N] दर्शनीयो महा-बाहुर् वालि-सूनुः कृत-श्रमः ॥४॥ [N
[13]यदि ह्य् [13]अकृत-कार्योऽसौ मत्-समीपम् अनु-व्रजेत् ।
४] भवेत् तु दीन-वदनः [14]भ्रान्तोऽविपुल-लोचनः ॥५॥ [२८
पितृ-पैतामहं चैव पूर्व-जैः[15] परि-रक्षितम्[15] ।
५] न मे मधु-वनं हन्याद् अ-दृष्ट्वा जनकाऽऽत्म-जाम् ॥६॥ [२९
६पू] कौस[16]ल्या सु-प्रजा राम समा-श्वसिहि सु-व्रत[17] ।
१२पू] सर्व-था खलु वैदेही लब्धिता नाऽत्र सं-शयः ॥७॥ [३०
७उ] यथा हि दर्पितो[18]द्-अग्राः सं-[19]गताः काननौकसः ।

---

१. प्र–०नुज्ञाते। २. च–सुग्रीवं। ३. रा म ल१–वानरर्षभः। च–०श्वरं। ४. ल२–राजीव० ॥ ५. आ–सम्यक् श्वसिहि । ६. ब ल२–आनीत० ॥ ७. फ म अ–प्रहर्षात् । च प्र ब ल१ ल२–प्रहर्षं । ८. ब–जानासि । ९. च रा प्र ब म ल१ ल२ अ–मत् । १०. फ रा–कृते ॥ ११. अ–युव० । १२. प्र–०राज्ञः ॥ १३. अ–यद्यपि कृत० । १४. आ–श्रवोवि० । प्र–शान्तोवि०। अ–श्रान्तोऽविप्लुत० ॥ १५. अ–पूर्वकं परिराक्षितुं ॥ १६. रा ब म ल१ ल२–कौसल्या । १७. प्र ल२–राघव ॥ १८ आ–दयितोदग्राः। रा–दर्पिता व्यग्राः। ब–दर्पितो व्यग्राः। प्र म ल१– ल२–दर्पिता व्यग्राः। १९. आ–संमताः ।

नैषाम् अ-कृत-कार्याणाम् ईदृशः स्यात् परा-क्रमः ।
८] वन-भंगेन जानामि मधूनां भक्षणेन च ॥८॥ [३४
१२उ] ततः किलकिला-शब्दः शुश्रुवे वि-मलेऽम्बरे ।
हनुमत्-कर्म-दृप्तानां सं-गतानां वनौकसाम् ।
१३] किष्किन्धाम् उप-यातानां सिद्धिं कथयताम् इव ॥९॥ [३५
ततः श्रुत्वा नि-नादं तं कपीनां कपि-कुंजरः ।
१४] आयतांऽञ्चित-लांगूलः सोऽभवद् हृष्ट-मानसः ॥१०॥ [३६
आ-गतास् त्व् अथ हरयो राम-सुग्रीव-दर्शनम् ।
१५] अंगदं पुरतः कृत्वा हनूमन्तं च वानरम् ॥११॥ [३७
तेंऽगद-प्रमुखा वीराः सं-हृष्टाः परया मुदा ।
१६] नि-पेतुर् हरि-राजस्य राघवस्य च सन्नि-धौ ॥१२॥ [३८
हनुमांश् च महा-कायः प्र-णम्य शिरसा ततः ।
N] नियताम् अ-क्षतां देवीं राघवाय न्य्-अवेदयत् ॥१३॥ [३९
निश्-चिताऽर्थस् ततस् तस्मिन् सु-ग्रीवः पवनाऽऽत्म-जे ।

---

१. आ—स्याद्यतिक्रमः । २. अतः परमधिकः पाठः—म—मैवं शोकसमायुक्तस्तिष्ठ त्वमतिविक्रमः । त्यज शोकं च चिन्तां च सीतां प्राप्स्यसि न संशयः ॥ ३. ब—तत्र । ४. फ—स तदांऽवरे । अ—विमलेऽम्बरे । ५. ब म—हनूमत्कर्म० । फ—०कर्मतृप्तानां । प्र—हनूमत्कर्महृष्टानां । अ—हनुमत्कपिदृप्तानां । ६. फ—नर्दतां काननौकसाम् । ७. अतः परमधिकः पाठः—म—अतिक्रम्य बहून् देशान् अन्योऽन्यपरिसर्पणात् । ८. ब प्र—किष्किंधादाप० । म $ल_1$ $ल_2$—किष्किंधाधाप० । अ—विधानमुपजातानां । ९. म $ल_1$ $ल_2$ अ—इह ॥ १०. च—आयताश्चित० । रा ब म $ल_1$ $ल_2$—आयताच्छ्रित० । प्र—आसमुच्छ्रित० ॥ ११. च प्र ब म $ल_1$ $ल_2$—ते तु । रा—ते च । अ—तेऽथ । १२. च रा प्र ब म $ल_1$ $ल_2$ अ—०वशासनात् ॥ १३. रा प्र ब म $ल_1$ $ल_2$—प्रहृष्टाः ॥ १४. फ ब अ—हनुमांस्तु । प्र म $ल_1$ $ल_2$—हनूमांश्च । १५. फ अ—गतः । १६. अतः परमधिकः पाठः—म—रामलक्ष्मणयोर्भ्रात्रोः सुग्रीवं चाभ्यवादयत् ॥

१८] लक्ष्मणः प्रीति-मांश् चैवं[1] बहु-मानम्[2] अवैक्षत[2] ॥१४॥ [४१
प्रीत्या[3] च परयोपेतो[3] राघवः सह-लक्ष्मणः ।
१९] बहु-मानेन महता[4] हनूमन्तम्[5] अवैक्षत ॥१५॥[6] [४२

इत्यार्षे[7] रामायणे[7] सुन्दर-काण्डे वानराणां[8] समागमे सीता-नन्दनो[8]
नाम त्रिषष्टितमः सर्गः[9] ॥६३॥

---

१. अ- चैनं । २. फ-बहुमानं त्ववैक्षत । च रा प्र ब ल, अ-बहुमानादवैक्षत ॥ ३.आ-प्रीत्या परमयो० । फ च अ-स प्रीत्या प० । ४.अ-बहुना । ५.रा ल, अ-हनुमन्तम् । ६. ब-नास्ति ॥ ७.ल-इति सु० । ८.फ-अंगदोपपानं नाम सर्गः । च रा प्र ब म ल, ल-वानरसमागमो नाम सर्गः । ९. अ-इति रामायणे सुन्दरकाण्डे उद्योगपर्वणि अंगदोपयानं नाम सर्गः ॥

[1]ते तु प्र[2]-स्रवणं शैलम्[3] आ-गताश् चित्र-काननम् ।
१] प्र-णम्य शिरसा रामं लक्ष्मणं च महा-बलम् ॥१॥ [१
युव-राजं पुरस्-कृत्य सु-ग्रीवम् अभि-वाद्य च ।
२] आ-ख्यातुं तत्र सीतायाः प्र-वृ[4]त्तिम् उप-चक्रमुः ॥२॥ [२
रावणाऽन्तः-पुरे[5] घोरे[6] राक्षसीभिश्[7] च तर्जनम् ।
३] अनु-रागं च वैदेह्या यश् चाऽपि समयः कृतः ।
एवम्[8] आ-चक्षि(?ख्य)रे वीरा हरयो राम-सन्निधौ ॥३॥ [३
४] वैदेहीम् अ-क्षतां श्रुत्वा[9] रामश् चोत्तरम् अब्रवीत् ।
क्व सीता वर्तते देवी कथं वा मयि वर्तते ॥
५] एतन् मे[10] सर्वम् आ-ख्यात वैदेहीं प्रति वानराः ॥४॥ [11] [४
रामस्य तु वचः श्रुत्वा हरयो राम-सन्निधौ ।[11]
६] चोद[12]यन्ति हनूमन्तं सीता-वृत्तान्त-कोविदम् ॥५॥ [५
श्रुत्वा तु व[13]चनं तेषां हनुमान्[13] मारुताऽऽत्म-जः ।
७] उवाच वाक्यं वाक्य-ज्ञः सीताया दर्शनं त[14]था ॥[15]६॥ [६
तं मणिं काञ्च[16]नं दि[16]व्यं दीप्य-मानं स्व-तेज[17]सा ।

---

१. ल$_1$-तत्ते । २. आ-प्रश्र० । म-प्रस्रवनं । ३. फ-चैवम् ॥ ४. अ-प्रवक्तुम् ॥ ५. च ब प्र ल$_2$ अ-०पुरं । ६. फ-रोधं । च ब प्र ल$_2$ अ-घोरं । ७. च ब प्र ल$_2$-०सीनां च । ८. फ-एतदाच० । रा म ल$_2$-समाच० । ब प्र ल$_1$-सर्वमा० ॥ ९. च रा ब प्र म ल$_1$ ल$_2$-रामः श्रुत्वा । १०. च-एतत्ते ॥ ११. आ ल$_1$ ल$_2$ अ-नास्ति । १२. फ-अवादयन् । आ-चोदयन्तो । ल$_2$-चोदयन्तं । अ-नोदयन्ति ॥ १३. रा ब प्र ल$_2$-हनुमांस्तेषां वचनं । १४. म ल$_1$-यथा । १५. फ-नास्ति ॥ १६. फ-कनकावद्धं । च-काञ्चनीं दिव्यम् । अ-काञ्चनं चैव । १७. रा ब प्र म ल$_2$-स्वरोचिषा । ल$_1$-सुरोचिषा ।

N] दत्त्वा रामाय हनुमांस्[1] ततः[2] प्रांऽजलिर् अ[3]-ब्रवीत्॥ ७॥ [७

समुद्रं लंघयित्वाऽहं शत-योजनम् आ-यतम्[5] ।

८] आ[6]-गच्छं जानकीं सीतां मार्गमाणो यदृच्छया ॥८॥ [८

तत्र लंकेति नगरी रावणस्य दुर्-आत्मनः ।

९] दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे[7] ॥९॥ [९

तत्र दृष्टा[8] मया सीता रावणाऽन्तः-पुरे सती ।

१०] सं[9]-न्यस्य त्वयि भावं सा राम राम-मनोरथा ॥१०॥ [१०

दृष्टा मे[10] राक्षसी-मध्ये भर्त्स्यमाना पुनः पुनः ।

११] राक्षसीभिर् वि-रूपाभी रक्षिता प्रमदा-वने ॥११॥ [११

दुःखं[11] सा[11] वर्तते सीता सुखानाम् उचिता सती । [१२

१२] रावणाऽन्तः-पुरे रुद्धा राक्षसीभिः सु-रक्षिता ॥१२॥

एक-वेणी-धरा दीना त्वद्-चित्ता त्वत्-परायणा ।[12] [१३

१३] अधः-शय्या वि-वर्णाऽगी पद्मिनीऽव हिमाऽऽगमे ।

१४पू] रावणाद् विनि-वृत्ताऽर्था मर्त्तव्ये[13] कृत-निश्चया[14] ॥१३॥ [१४पू

१५पू] इक्ष्वाकु-वंशं[15] वि-ख्यातं शनैः कीर्तयता मया ।

१४उ] कथंचिद् एवं[16] काकुत्स्थ वि-श्वासम् उप-पादितः(?ता) ।

१५उ] सा मया रघु-शार्दूल समा-श्वासम् उपाऽऽगता ॥१४॥ [१५

---

१.आ–रामं हनूमांश्च । २.रा–तत्र । ३.फ–आस्थितः । ४.अतः परमधिकः पाठः– फ–उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं तदा॥ इहासंगतः७मःश्लो०तु०२०शश्लो०। ५.ल$_2$–आगतः । ६.फ ब म ल$_1$–अगच्छं। प्र–आगच्छन् ॥ ७. फ–दुर्गमे॥ ८. फ रा–सीता मया दृष्टा । ९. आ–सन्न्यस्य ॥ १०. फ–संरुद्धा । अ–सा रुद्धा ॥ ११. ब–दुःखमाव० । प्र–दुःखिता । ल$_2$–दुःखया ॥ १२. अ–एकव्रतधरा शीता त्वयि तावत्परायणा ॥ १३. ल$_1$–मृत्यवे । १४. आ–०यम् ॥ १५. आ—०वंशाविख्यात । ल$_1$–०वंशे व्याख्यातं । प्र–०वंशविख्यातुं । फ च ल$_2$–०वशंवि० । १६. रा म ल$_1$–अपि ॥

समा-श्वास्य ततो देवीं (?वी) सर्वम् अर्थं[1] च ग्राहिता[1] ।
१६] राम-सुग्रीव-सख्यं च श्रुत्वा प्रीतिम् उपाऽऽगता ॥१५॥[१६
नियमः[2] समुदा-चारो भक्तिस् तस्यास् तथा त्वयि । [१७
१७] हन्ति यन् न दश[3]-ग्रीवं तन् महाऽऽत्मा[4] स राक्षसः[5] ॥१६॥[N
एवं[6] तदा मया दृष्टा सीता जनक-नन्दिनी ।
१८] उग्रेण तपसा युक्तां[7] त्वद्-भक्त्या[8] पुरुषर्षभ[9] । [१८
N] सा धारयति लोकेषु माहाऽऽत्म्यं गुण-भूषिता[10] ॥१७॥ [N
सर्व-था सीतया दग्धो राक्षसोऽसौ महा[11]-बलः ।
N] निमित्त-मात्रं त्वं तत्र वधे तस्य भविष्यसि ॥१८॥ [N
[12]मणिं च दिव्य-रूपं ते[13] प्राऽदाच्[14] छोकाऽऽकुलेक्षणा[14] ।
N] यद् अत्र प्रति-पत्तव्यं[15] तत् सर्वम्[16] उप[16]-पाद्यताम् ॥[17]१९॥[N
तं मणिं दिव्य[18]-रूपं च दीप्यमानं स्व-तेजसा ।[17]
१९] दत्त्वा रामाय हनुमांस्[19] तदा[19] प्राऽञ्जलिर् अब्रवीत् ॥२०॥[N
तासाम्[20] अन्तरम्[20] आ-साद्य राक्षसीनां वराऽऽनना ।
२०] [21]अब्रवीत् सा[21] तदा सीता[22] [23]राक्षसीभिः सु-रक्षिता[23] ॥२१॥[N

---

१. आ—अर्थश्च ग्राहिता । फ—अर्थं च श्राविता । अ—०र्थं च ग्राहितं ॥ २. फ अ—विनयः । ३. फ—०ग्रीवस् । ४. फ—महात्म्यात् । ५. आ—राघवः । रा म ल१—रावणः । अ—राक्षसां ॥ ६. रा ब प्र म ल१ ल२—एवं वृत्ता । ७. ल१—युक्तां । ८. फ—भक्त्या । ९. फ—०र्षभः । १०. फ—०भूषितम् ॥ ११. फ म ल१—न संशयः । ब प्र ल२—निशाचरः ॥ १२. अ—दृष्टं । १३. आ ल२—च । च रा ब प्र म ल१ अ—मे । १४. ल२—दीप्यमानं स्वतेजसा । १५. फ—०कर्तव्यं । १६. फ—सर्वं प्रतिपा० ॥ १७. ल२—नास्ति ॥ १८. फ—प्रातिरूपं । रा—दिव्यरूपां । १९. ब म ल१ ल२—हनुमान् पुनः ॥ २०. फ—सा ततोन्तरम् । २१. ब म ल१—०वीन्मां । २२. फ—देवी । २३. रा ब म ल१—०सीनां च सन्निधौ । प्र ल२ ०सीनां च सम्मतं ॥

वक्तव्यस्[1] ते महा-बाहो रामः सत्य-पराक्रमः ।
२१] नि-खिलेन च यद् दृष्टं राक्षसीनां च यच् छ्रुतम्॥२२॥[2] [N
गर्जितं राक्षसेंद्रस्य तर्जनं भीषणं तथा[3] ।
२२] द्वौ मासौ जीवितव्यौ[4] मे येश्[5] चाऽपि समयः कृतः ॥२३॥[N
२३पू] अयं चाऽस्मै प्र-दातव्यो यत्नात्[6] सुपरि-रक्षितः ।[7] [२१पू
२४पू] एष चूडा-मणिर् दिव्यो मया सुपरि-रक्षितः[8] ॥[9]२४॥
मनःशिलायास् तिलकं सं-स्मरस्वेति[10] चाऽब्रवीत्(?:)। [२२
२५] वि-ज्ञाप्यश्[11] च नर-व्याघ्रो यत्नाद् वायु-सुत त्वया ॥
अखिलेनेवं[12] यद् दृष्टम् इति माम् आह जानकी ॥२५॥[२०
२६] एष निर्-यातितः[13] श्री-मान् मया ते वारि-सम्भवः । [२३
२७उ] एनं[14] दृष्ट्वा प्र-हृष्यामि व्यू-असने[15] त्वाम् इवाऽनघ ॥२६॥
जीवितं धारयिष्यामि मासं[16] दशरथाऽऽत्म-ज ।
२८] ऊर्ध्वं[17] मासान् न जीवेयं रक्षसां[18] वशम् आ-गता ॥२७॥ [२४
अभि-ज्ञानं च मे दत्तं यथा-वृत्तं तवाऽन्तिके ।
N] चित्र-कूटे महा-प्राज्ञ वायसं प्रति मान-द ॥२८॥ [१९
भूयश् चेदम् अभि-ज्ञानं वैदेह्या शृणु राघव ।
२९] उत्तरे चित्र-कूटस्य पादे वृत्तं मनो-रमे ॥२९॥ [N

---

१. अ–वक्तस्ते महवो । २. रा ब प्र म ल$_1$ ल$_2$–नास्ति॥ ३. आ–तदा । ४. रा–जीवितव्यं । अ–जीवितव्ये । ५. फ–यथास्ति । रा–यच्चापि । अ–यथापि । ६. आ–यत्नाच्च सुपरीक्षितः । प्र ल$_2$–मया सु० । ७. अतः परमधिकः पाठः—आ रा च प्र ब ल$_1$ ल$_2$ अ–शृण्वन्त्या वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ ८ ल$_1$–स्म० । ९. फ ल$_2$–नास्ति । १०. फ–स्मारयस्वेति । रा ब म ल$_2$–संस्मरेदिति । प्र–संस्मरेति च । ल$_1$–संस्मरेदि च । ११. प्र–विज्ञसश्च । १२. फ रा ब प्र म ल$_1$ ल$_2$ अ–०नेह । १३. आ–निर्जा० । १४. फ–नूनं । १५. आ–प्रसवे । १६. आ–इमं । १७. आ–ऊर्ध्वमा० । १८. रा ब प्र म ल$_1$ ल$_2$–राक्षसेन समागता ॥

रटमानस्य काकस्य मांसाऽर्थे स्मर्तुम् अर्हसि ।
३०] क्षिप्ताम् इषीकां तत्राऽस्य रोषाद् एकांऽग-नाशिनीम् ।[4]
ऐषीकम् अस्त्रम् अपि ते कार्याऽर्थं संनि-पातितम्॥[5] ३०[N
३१] जहि पापम् इदं रक्षः क्रूरं दाराऽप-हारिणम् ।
इति माम् अब्रवीत् सीता तन्व्-अंगी धर्म-चारिणी ।
३२] रावणाऽन्तः-पुरे रुद्धा मृगीऽवोत्फुल्ल-लोचना ॥३१॥ [२५
उपायो दृश्यतां कश्चित् यथा नद-नदी-पतिम् ।
३४] [11]न चिरेण भवान् घोरं[11] स-सैन्यः[12] सागरं तरेत्[13] ॥[14] ३२॥ [N
एतत् ते सर्वम् आ-ख्यातं मया राघव तद् यथा ।[15]
३३] सर्व-था सागर-जले सं-तारैः[16] प्रति-चिन्त्यताम्॥[17] ३३॥ [२६
जाताऽऽश्वासौ राज-पुत्रौ विदित्वा
तत् साऽभिज्ञं[18] (?) राघवाय प्र-दाय ।[17]
देव्या वृत्तं सर्वम् एवाऽनु-पूर्व्या[19]
N] सम्यक् पूर्णं[20] वायु-पुत्रः शशंस ॥३४॥ [२७
मीत्या युक्तौ[21] राज-पुत्रौ निर्-ईक्ष्य[22]

---

१. फ—नोदमानस्य । अ—हृदमानस्य । २. आ—मांसार्द्धं । ल$_1$—मांसार्थैः । अ—मांसार्थं । ३. ल$_2$—दिप्ताम् । ४. प्र—नास्ति ॥ ५. अ—३० । ६. आ—०पिककार्यार्थं । च—०पिके भार्यार्थं । रा ब म ल$_1$ ल$_2$—०भिके भार्यार्थं । ७. आ—०रकम् । ९. ब म ल$_1$ अ—०हारकम् । १०. आ—०पतिः । ११. आ—न चिरेणैवाम्बुधौ घोरे । फ—अचिरेण भवान् घोरं । रा प्र म—अचिरेण महाघोरं । ल$_1$—न चिरेण महाघोरं । ब—ह्यचिरेण महाघोरं । १२. प्र—तथा राघव । १३. आ—०तरे । च अ ब—०तरेः । प्र—तद्यथा ॥ १४. ल$_2$—नास्ति । १५. प्र ल$_2$—नास्ति । १६. रा ब प्र ल$_1$—सन्तरः । १७. आ—नास्ति । १८. रा ब प्र म ल$_1$—साभिज्ञां । अ—तस्य च भिज्ञानं । १९. आ—वृत्तं सर्वमेवानुपूर्व्या । २०. आ—पूर्वं । २१. ल$_1$—युक्तो । २२. फ—प्रहृष्टौ ।

सं-सिद्धार्थौ[1] वानरेन्द्रश्[2] च राजा ।
गात्रैः[3] श्लिष्ट्वा वानरं[4] तं कृताऽर्थं
N] भूयो हृत्तं[5] कर्म-तश् चाऽऽशशांस[6] ॥[7]३५॥ [N

इत्यार्षे[8] रामायणे[9] सुन्दर-काण्डे मणि[10]-निर्यातनो
नाम चतुःषष्टितमः सर्गः ॥६४॥

—--:o:——

१. च ब–सिद्धार्थौ तौ । २. प्र म ल$_1$–वानराणां च । ३. आ–अ–गात्रैराश्लिष्य । ब म ल$_1$–आश्लिष्यैनं । प्र–आश्वास्यैवं । ४. ब म ल$_1$–वानरं वै । अ–वानरेन्द्रम् । ५. आ–दृष्टं । ६. आ–०शशंस । ७. रा–ल$_2$–नास्ति ॥ ८. ल$_2$–इति सुं० । ९. अ–उद्योगपर्वणि॥ १०. ल$_1$–मनि-निर्यातनो । ल$_2$–मनिनिर्यापनो । च अ रा ब प्र म–मणिनिर्यातनं ॥

[वं—६७ ]= [ पंचषष्टितमः सर्गः ] =[दा—६६]

एवम् उक्तो हनुमता रामो दशरथाऽऽत्म-जः ।
१] तं मणिं हृदये धृत्वा रुरोद सह-लक्ष्मणः ॥१॥ [१
[1]तं तु दृष्ट्वा [2]मणिं श्रेष्ठं राघवः शोक-कर्षितः ।
२] नेत्राभ्याम् अश्रु[3]-पूर्णाभ्यां सु-ग्रीवं वाक्यम् अब्रवीत् ॥२॥[२
यथैव धेनुः [4]स्रवते स्नेहाद् वत्सस्य [5]लालनात् ।
३] एवं मे[6] मणि-रत्नस्य वैदेह्या इव दर्शनम् ॥३॥ [३
मणि-रत्नम् इदं दत्तं वैदेह्याः श्वशुरेण वै[7] ।[8]
४] वधू-काले पुरा बद्धम्[9] अधिकं मूर्ध्न्य्[10] अ-शोभत ॥[8]४॥ [४
अयं हि जल-सम्भूतो [11]मणिः [12]परम-भूषणः ।[8]
५] यज्ञे परम-तुष्टेन दत्तः शक्रेण धीमता ॥५॥ [५
[13]इमं दृष्ट्वा मणि-श्रेष्ठं यथा [14]तत्त्वार्थ-दर्शनम् ।
६] अद्याऽभ्युपाऽऽगतं सौम्य वैदेह्या [15]इव दर्शनम् ॥६॥ [६
अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः ।

---

१. अ—एवं । २. फ च रा प्र ब म $ल_1$ $ल_2$ अ—मणिश्रेष्ठं । ३. प्र म $ल_1$ $ल_2$—अस्रु० ॥ ४. अ—प्रस्तौति । ५. फ रा प्र ब म $ल_1$ $ल_2$ अ—वत्सला । च—वत्सलात् । ६. आ—तं ॥ ७. आ—वैदेह्याश्चापि दर्शनम् । च प्र ब $ल_1$ $ल_2$ अ—०रेण मे । ८. रा—नास्ति । आ—अत आरभ्य 'मूर्ध्नि मे मणिः' इत्यन्तः पाठो नास्ति । ९. म $ल_1$ $ल_2$—विद्धम् । १०. अ—मूर्ध्नि शोभतात् । च प्र ब म $ल_1$ $ल_2$—मूर्ध्नि तस्याश्च शोभते । ११. च-मम । १२. च प्र ब म $ल_1$—प्रवर० ॥ १३. फ रा च ब प्र म $ल_2$—इदं । १४. $ल_1$ अ—तातस्य द० । १५. रा च ब म $ल_1$—वैदेह्याश्चापि ॥

७] यद् अस्यं[1] दर्शनेनाऽहं तां प्राऽऽप्ताम् इव चिन्तये ॥७॥ [७
किम् आह भीता वैदेही ब्रूहि सौम्य पुनः पुनः ।
८] पुरा शोकेन[2] दग्धोऽहं सिञ्च मां वाक्य[3]-वारिणा ॥८॥ [८
अतस् तु किं दुःखतरं ममेमं[4] वारि-सम्भवम्[5] ।
९] मणिं पश्यामि हनुमन्[6] वैदेहीम् आ-गतां विना[7] ॥९॥ [९
चिरं जीवति वैदेही यदि मां सं-स्मरिष्यति[8] ।
१०] क्षणं सौम्य न जीवेयं विना ताम् इति चिन्तये[9] ॥१०॥ [१०
नय माम् अपि तं देशं यत्र दृष्टा मम प्रिया ।
११] मुहूर्त्तं नाऽव-तिष्ठेयं प्र-वृत्तिम् उप-लभ्य हि ॥११॥ [११
कथं च[10] वद सु-श्रोणी भीरुर्[11] भीत-तरा सती ।
१२] मया[12] वि-हीना पापानां[12] मध्ये वसति रक्षसाम्[13] ॥१२॥ [१२
शारदस्[14] तिमिरान् मुक्तो[14] नूनं चन्द्र[15] इवाऽम्बरे[16] ।
१३] अद्य तद् वदनं तस्या न वि-राजत्य् अ-संशयम्॥[17]१३॥[१३
किम् आह सीता हनुमन् ब्रूहि सौम्य पुनः पुनः ।
१४] एतेन[18] खलु जीवामि[19] भेषजेन यथाऽऽतुरः ॥१४॥[20][१४

---

१. फ च रा प्र ब म ल$_1$ ल$_2$ अ—अस्याद्य ॥ २. रा प्र ब म ल$_1$ ल$_2$ अ—शोकाग्निनिर्दग्धं । फ—०न दह्येयं । च—०न दग्धानां । ३. रा प्र ब ल$_1$ ल$_2$ अ—वाष्पवा० ॥ ४. आ—ममेवं । च—ममेयं । ५. च—०वाम् । ६. फ अ—हनुमद् । ७. फ—प्रियाम् । ८. रा प्र ब म ल$_1$ ल$_2$ अ—संधरिष्यति । ९. फ—निश्चयः॥ १०. फ अ—सा । च रा प्र ब म ल$_1$ ल$_2$—वा । ११. आ प्र—भीरुभीत० । फ—भर्तुर्हीना मया । अ—भीरुर्भीता मया । १२. फ अ—भयावहानां घोराणां । १३. फ—जानकी ॥ १४. अ—शारदाम्बुदनिर्मुक्तो । आ—०रान् मुक्त्वा । १५. प्र—चन्द्रम् । १६. आ—इवाद्य ते । फ— इवाम्बुदैः । अ—इवाम्बुधौ । १७. अ—तदवश्यं मुखं तस्या न चिरायति राक्षसौ । फ—तदवश्यं मुखं तस्या न विजानाति राक्षसैः ॥ १८. आ—पथ्येन । १९. अ—जीविष्ये । २०. फ—नास्ति ॥

मधुरं मधुराऽऽभाषा किम् आह मम जानकी ।[1]
१५] मद्-विहीना वराऽऽरोहा हनुमन् कथयस्व मे ।[1]
N] दुःखाद् दुःख-तरं प्राऽऽप्ता कथं जीवति जानकी ॥१८॥[१५

इत्यार्षे[2] रामायणे सुन्दर-काण्डे राम-परिदेवनो[3]
नाम पंचषष्टितमः सर्गः ॥६५॥

——:०:——

१. फ–किमाह हनुमान् सीता तत्त्वतः कथयस्व मे ॥ २. ल२–इति सुं०।अ–उद्योगपर्वणि। ३.फ–मणिनिर्यातनं।प्र व म ल१ ल२–०परिदेवनं। रा–रामदेवनं ॥

१पू] एवम् उक्तः[1] स हनुमान् राघवेण[2] महाऽऽत्मना ।
N] सीतायाः[3] भाषितं सर्वं न्य्-अवेदयत राघवे ॥१॥ [१
N] एवम्[4] उक्तवती देवी जानकी पुरुषर्षभ[5] ।
१उ] पूर्व-वृत्तम्[6] अभि-ज्ञानं चित्र-कूटे यथा[7] तत्र ॥[8]२॥ [२
तत्र सुप्ता त्वया सार्धं[9] जानकी पुनर् उत्-थिता[10] ।[11]
२] वायसः[12] सहसोत्-पत्य[12] वि-ददार स्तनाऽन्तरे[13] ॥[14]३॥ [३
३उ] पुनश् च किल पक्षी स देव्या जनयति[15] व्यथाम्[15] । [४उ
ततः पुनर् उपाऽऽगम्य वि-ददार भृशं किल[16] ॥[17]४॥[18]
४] अथ त्वं प्रति-बुद्धोऽसि[19] शोणितेन सम्-उक्षितः[20] ।[21] [५
वायसेन च तेनैव[22] सततं तोद्यमानया[23] ।[24]

---

१. अ फ–उक्तस्तु । २. ल$_1$ ल$_2$ अ–राघवेन । ३. प्र ल$_1$ ल$_2$–वैदेह्याः ॥ ४. फ–इदम् । ५ अ–०भाः । ६. अ–०दत्तम् । ७. रा प्र ब म ल$_2$–तदा । ८. ल$_1$–२य श्लोकपूर्वार्धादारभ्य ४१शपूर्वपादं यावदेकं पत्रं लुप्तम् ॥ ९. रा प्र ब म–साकं । १०. ब–परितुष्यिता । ११. आ–२य ४र्थ श्लोकौ व्यत्यासेन पठितौ । १२. आ–ततः पुनरुपागम्य । म–अथास्याः वायसोऽभ्येत्य । १३. फ च–०रम् । १४. प्र–नास्ति । अतः परमधिकः पाठः–फ च–पर्यायेण च सुप्तस्त्वं देव्यंके पुरुषर्षभ । म–पर्यायेण च सुप्तोंके तस्यास्त्वं भरताग्रजः ॥ १५. म–जनयते भयम् । १६. आ च म–स्तनान्तरे । १७. म–नास्ति । १८. रा प्र ब ल$_2$ अ–नास्ति ॥ १९. आ–भ्रान्तिबुद्धश्च । फ–अथावक्रुद्धस्त्वं तत्र । २०. आ–०तां । फ– समुत्क्षितः । २१. च रा प्र ब ल$_2$ अ–पादोऽयं ३श्लोकपूर्वार्धात्परं पठितः । २२. ल$_2$–तत्रैव ।२३. फ–क्षरया तया । च रा प्र ल$_2$ म–ताड्यमानया । २४. ब अ–नास्ति ।

५] बोधितः[1] किल देव्या[2] त्वं सुखं सुप्तः परं-तप ॥ ५॥ [६
तच् च दृष्ट्वा महा-बाहो प्र-तुन्नं वै स्तनाऽन्तरम् ।[3]
६] आशी-विष इव क्रुद्धस्[4] ततो वाक्यं त्वम् ऊचिवान्[4] ॥६॥ [७
नखाऽग्रैः केन[5] ते भीरु वि-तुन्नं[6] वै[7] स्तनाऽन्तरम्[8] ।
७] कः क्रीडति स-रोषेण भुज-गेन[9] वराऽऽनने ॥७॥[10] [८
अवेक्ष्य(?क्ष)[11] माणश् च[11] ततो वायसं सम्-अपश्यथाः[12] ।
८] नखैः स-रुधिरैस् तीक्ष्णैर् माम् एवाऽभि-मुखं स्थितम्॥८[13] [९
सूनुः[14] स किल[14] शक्रस्य वायसः पततां[15] वरः[15] ।
९] धाराऽन्तर-गतः[16] शीघ्रं पवनस्य गतौ समः ॥९॥[13] [१०

---

१. च रा ब म ल$_२$—वेदितः । २. अ—नास्ति ॥ ३. आ—ततश्च दृष्ट्वा महव्रणं वैदेह्या वा स्तनान्तरम् । च रा—तच्च दृष्ट्वा महादेव्या वैदेह्या स्तनान्तरम् । प्र ब म—तच्च दृष्ट्वा महादेव्या वैदेह्या स्तनान्तरे । ल$_२$—तच्च दृष्ट्वा महादेव्या वैदेह्यास्त्वं स्तनांतरे । अ—नास्ति । ४. रा—ततस्तां वाक्यमब्रवीत् ॥ ५. आ—रंके । ६. आ च—विभिन्नं । रा प्र ब म ल$_२$—भिन्नं वै । ७. आ—वा । रा—तत् । ८. रा—स्तनांतरे । ९. आ—०ण । १०. अतः परमधिकः पाठः—आ—केन तेनांग वामोरु❀ विक्षिप्तं वै स्तनांतरम् । आसीविषमिव क्रुद्धं कालाग्निमिव सन्निभम् । च—आशीविषमिव क्रुद्धस्ततो वाक्यं त्वमूचिवान् ‡ । प्र ब ल$_२$—आशीविषमिव क्रुद्धं कालाग्निसमतेजसम् ॥ ११. आ च रा—०माणः स । १२. आ च रा—०त । १३. फ.—नास्ति ॥ १४. अ—पुत्रः किल स । १५. आ—प्लवतां वर । १६. आ—०गतिः ॥

---

❀ म—केन तेऽनागसो भीरु । ल$_२$—केन तेनामलं भीरु । ‡ च—अतः परं 'नखाग्रैः केन भीरुरित्यादि आशीविष इव क्रुद्ध' इतिश्लोकान्तं यावत्पुनरुल्लिखितः पाठः ।

ततस् तस्मिन् महा-बाहो कोप-संवर्तितेक्षणः ।
१०] वायसे कृत-वान् क्रूरां मतिं मति-मतां वर[1] ॥१०॥ [११
गृहीत्वा सं-स्तराद्[2] दर्भं ब्राह्मैर् मन्त्रैर् अयोजयः[3] ।
११] स[4] दीप्त इव कालाऽग्निर् जज्वालाऽभि-मुखं गतः[5] ॥११॥ [१२
स त्वं[6] प्र-दीप्तं चिक्षेप दर्भाऽग्रं[7] वायसं प्रति ।
१२] ततस्[8] तु वायसो[9] दीप्तः स-दर्भोऽभि-संसार[10] ह ॥१२॥ [१३
पित्रा स तु[11] परि-त्यक्तः सुरैः[12] सर्वैः सहर्षिभिः ।
१३] त्रींल् लोकान् स ततो[13] गत्वा त्रातारं नाऽध्य्-अगच्छत[14] १३[१४
ततो नि-पतितं भूमौ शरण्यः[15] शरणाऽऽगतम् ।
१४] वधाऽर्हम् अपि काकुत्स्थ हतवान् नाऽसि वायसम् ॥१४[16] [१५
१५पू] मोघम् अस्त्रम् अति-शक्यं[17] कर्तुम् इत्य्-एव राघव ।
१६उ] दक्षिणं किल काकस्य घातितं[18] नयनं त्वया ॥१५॥ [१६
राम तुभ्यं नमस्-कृत्य राज्ञे दशरथाय च ।
१७] वि-सृष्टः स त्वया काकः प्रति-पेदे स्वम् आ-लयम् ॥१६॥ [१७
एवम् अस्त्र-विदां श्रेष्ठ सत्त्व-वान् बल-वान् अपि ।
१८] किम्-अर्थम् अस्त्रं रक्षोभ्यो[19] न योजयसि[20] राघव ॥१७॥ [१८

---

१. आ-वरः ॥ २. आ-संस्तराद्दर्भं । अ-संस्तरान्दर्भान् । ३. आ अ-०यत् । रा-०ये: । ४. च प्र ब ल२-संदीप्त । ५. अ-खगं ॥ ६. प्र ल२-तं । रा ब-तत् । ७. अ-दर्भाग्र्यं । ८. ल२-ततः स । ९. अ फ म-वायसं । १०. अ-सदर्भौ तु स० । फ-संदर्भोनुस० । म-सदर्भोभि० । ११. ल२-च । १२. फ-स तैः । १३. आ-तं । १४. ब-नाधिगच्छत ॥ १५. आ-शरण्यं । १६. अतः परमधिकः पाठः—आ-धारान्तरगतः शीघ्रं पवनस्य गतौ समः । ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः । वायसे कृतवान्क्रूरां मतिं मतिमतां वरः ॥ १७. फ-मोघं शस्त्रमशक्यं च । रा-मोघशस्त्रं न शक्यं च । प्र ब म ल२-मोघमस्त्रं न शक्यं च । १८. अ-शातितं न० । फ-नयनं घातितं ॥ १९. फ-रक्षःसु । २०. आ-०यति ॥

न नागा ना[1]ऽपि गन्धर्वा नाऽसुरा न मरुद्-ग[2]णाः ।
१९] तव राम रणे शक्ता वेगं प्रति सम्-आसितुम् ॥१८॥ [१९
तव वीर्य-वतः कश्चिद् य[3]दि वै मेऽस्त्य्[4] अनु-ग्रहः ।
२०] क्षिप्रं सु-रुचिरैर् बाणैर् हन्यतां यु[5]धि रावणः ॥१९॥ [२०
भ्रातुर् आ-देशम् आ-दाय लक्ष्मणो वा परं-तपः ।
२१] स किम्-अर्थं नर-वरो न मां रक्षति राघवः ॥२०॥ [२१
शक्तौ तौ पुरुष-व्याघ्रौ वाय्व्[6]-अग्नि-सम-विक्रमौ ।
२२] सुराणाम् अपि दुर्-धर्षौ किम्-अर्थं माम् उपेक्षतः[7] ॥२१॥[२२
ममैव दुष्-कृतं किञ्चिन् महद् अस्ति न सं-शयः ।
२३] सम्-अर्थौ तौ न मां वीरौ वीऽऽक्षेते[8] यत् परं-तपौ॥[9] २२ [२३
वैदेह्या वचनं श्रुत्वा करुणं साधु भाषितम् ।
२४] पुनर् अप्य् अहम् आ[10]र्यां ताम् इदं वचनम् अब्रुवम्[11] ॥२३॥[२४
त्वच्-छोकाऽभि-यु[12]तो रामो देवि सत्येन ते शपे ।
२५] राम (ः) शोका[13]ऽभि-भूतश् च लक्ष्मणः परि-तप्यते २४॥[२५
कथञ्चिद् रुदतीं[14] दृष्ट्वा न कालः पुनर् आ[15]सितुम ।

---

१. ल₂—अपि । २. ल₂—०गणः ॥ ३. अ—यथा मय्यस्त्यनु० । फ च रा प्र ब म ल₂—मय्यस्त्यनु० । ४. प्र ब म ल₂—तु रु० । ५. फ—यद्धि ॥ ६. आ—वाय्वग्नि० । रा प्र ब म ल₂—कालाग्निसमतेजसौ । फ—वाय्वग्निसदृशप्रभौ । ७. आ—उपेक्ष्यतः । अ—उपेक्षितः ॥ ८. आ—न संवीरौ वीक्ष्येते । अ—महात्मानौ वी० । ९. फ—समर्थौ सह तौ यन्मां न त्रायेते परन्तपौ । रा—समर्थावपि न तौ मां वीरौ वक्षाते यत्परन्तपौ । ब—समर्थावपि न तौ मां वीरौ वीक्षते यत्परस्परम् । प्र—समर्थौ शयितौ मां वीरौ वीक्ष्यते यः परस्परम् । म ल₂—समर्थावपि तौ मां वीरौ वीक्षेते यत्परस्परम् ॥ १०. आ—आपन्निम् । ११. च रा—अब्रवीत् ॥ १२. प्र—०भिहतो । १३. अ—रामो दुःखाभि० ॥ १४. अ—भवता । फ म—भवती । १५. अ—आशितुम् ।

२६] न चिराद् देवि[1] दुःखानाम् अन्तं द्रक्ष्यसि भामिनि[2] ॥२५॥[२६
ताव् इमौ नर-शार्दूलौ राज-पुत्राव् अरिं-दमौ[3] ।
२७] त्वद्-दर्शन-कृतोत्साहौ लंकां भस्मी-करिष्यतः[4] ॥२६॥ [२७
हत्वा च समरे क्रूरं रावणं सह-बान्धवम्[5] ।
२८] राघवस् त्वां महा-भागः[6] स्वां पुरीं प्रति-नेष्यति ॥२७॥ [२८
यत् तु रामो वि-जानीयाद्[7] अभि-ज्ञानम् अ-निन्दिते ।
२९] प्रीति-सञ्जननं तस्य तन् मे त्वं दातुम् अर्हसि ॥२८॥ [२९
साऽभिवीऽऽक्ष्य दिशः सर्वा वेण्य्-अग्राद् अथ भामिनी[8] ।
३०] मुक्त्वैवं[9] प्र-ददौ मह्यं मणि-रत्नम् इदं शुभम्[10] ॥२९॥ [३०
प्रति-गृह्य मणिं देव्यास्[11] [11]चलितोऽहं रघूऽत्तम ।
३१] शिरसा च प्र-णम्यैतां[12] गमनाय[13] मनो[13] दधे[14] ॥३०॥ [३१
गमने च कृतोत्-साहं मां वीऽऽक्ष्य वर-वर्णिनी ।
३२] वि-वर्द्धमानं च भृशं विनिश्-श्वस्याऽऽयतेक्षणा॥३१॥ [३२
अश्रु-पूर्ण-मुखी दीना वाष्प-गद्गदया गिरा ।
३३] माम् उवाच ततः सीता[15] स-भाग्योऽसि महा-कपे ॥३२॥ [३३
यो[16] द्रक्ष्यसि महा-बाहुं रामं कमल[17]-लोचनम् ।
३४] लक्ष्मणं च महा-भागं देवरं मे यशस्-विनम् ॥३३॥ [३४
सीतया त्व् एवम् उक्तोऽहम् अब्रुवं मैथिलीं तदा ।
३५] पृष्ठम् आ-रोह मे देवि क्षिप्रं जनक-[18]नन्दिनि ॥३४॥ [३५

---

१. फ–चिरात्त्वं तु दुः० । २. फ–भाविनि ॥ ३. अ फ–अनिंदितौ । ४. अ–०थ ॥ ५. अ–स सुहृत्सुतम् । ६. फ च प्र म ल$_2$–०भागे ॥ ७. रा ल$_2$ अ–रामोभिजा० ॥ ८. फ–भाविनी । ९. फ–मुक्त्वा च । १०. अ फ–प्रभो ॥ ११. अ फ–देव्यास्तत्र हेतो । १२. अ–०म्यैनां । च रा प्र ब ल$_2$–०म्येतां । १३. च रा प्र ब ल$_2$–मतिमागमने ।१४. अ–दधौ ॥ १५. अ–शीता ॥ १६. रा ब ल$_2$–यद् । १७. रा प्र ब म ल$_2$–राजीव० ॥ १८. ल$_2$–०नी ॥

यावत् ते दर्शयाम्य् अद्य स-सुग्रीवं स-लक्ष्मणम्[1] ।
३६] राघवं च महा-भागं भर्त्तारम् अ-सितेक्षणम्[3] ॥३५॥ [३६
साऽब्रवीन् मां तदा[4] देवी नैष धर्मो महा-कपे ।
३७] यत् ते पृष्ठं[5] नि-षेवेऽहं[6] भार्या रामस्य धी-मतः ॥३६॥ [३७
अ-वशां[7] यद्य् अहं वीर स्पृष्टा गात्रेण रक्षसा ।
३८] तत्राऽहं[8] किं करिष्यामि कालेन[9] परि-पीडिता ॥३७॥ [३८
गच्छ त्वं [10]हरि-शार्दूल यत्र तौ राम-लक्ष्मणौ[11] ।
३९] इत्य्[12]-एवं सा[13] समा-भाष्य भूयः सं-द्रष्टुम्[14] आ-स्थिता ॥[15]३८[३९
हनुमन्[16] सिंह-संकाशौ ताव्-उभौ राम-लक्ष्मणौ ।
४०] सु-ग्रीवं च महा-बाहुं[17] सर्वान् ब्रूया [18]ह्य् अनम्-आमयम् ॥३९। [४०
यथा [19]च स[20] महा-बाहुर् मां तारयति राघवः ।
४१] अस्माद् दुःखोपसं-रोधात् तथा त्वं कर्तुम् अर्हसि । [४१
N] गत्वा राम-समीपं त्वं शीघ्रं वानर-पुंगव ॥४०॥ [N
इमं तु तीव्रं मम शोक-वेगं
रक्षोभिर् [20]एभिः परि-भर्त्सनं च ।
रामस्य पार्श्वे[21] हि [21]गतो वदेस्[22] त्वं
४२] निसं शिवं तेऽस्तु हरि-प्रवीर ॥४१॥ [४२

---

१. आ-सुग्रीवं सहलक्ष्मणम् । २. अ-सुम० । ३. अ फ प्र-०णे ॥ ४. फ रा प्र ब ल$_2$ अ-ततो । ५. रा प्र ब म ल$_2$-पृष्ठे । ६. फ च रा प्र ब म ल$_2$ अ-निषेवेयं ॥ ७. फ प्र-अवश्यं । ८. फ-तत्र किं तु । ९. प्र ब म ल$_2$ अ-कालेनोपानिपीडिता । च-कालेनोपरि० । रा-कालेन विनि० ॥ १०. प्र म-कपि० । ११. फ अ-नृपतेः सुतौ । १२. फ-इत्येव । १३. फ ब म-मां । १४. आ-संप्रष्टुम् । फ-संद्रष्टुम् । १५. रा प्र ल$_2$-नास्ति ॥ १६. आ-हनुमत् । १७. अ-०बाहो । १८. फ च-अनामयम् ॥ १९. रा ब-स च । अ-च सुम० ॥ २०. ल$_1$-एनं । २१. रा प्र ब म ल$_1$-पार्श्वं हि । फ-पार्श्वेऽभिमतो । ल$_2$-पार्श्वेविगतो । २२. ल$_2$-वदस् ॥

एवं तदा[१]ऽऽर्या नृप-सिंह[२]-वीर
सीता वचः प्राऽऽह विषाद-युक्तम्[३] ।[४]
एवं[५] च श्रुत्वा गदितं यथा[६] त्वं
४३] सीतोप-लम्भे[७] च[८] कुरुष्व यत्नम् ॥[९]४२॥ [४३

इत्यार्षे[१०] रामायणे सुन्दर-काण्डेऽभिज्ञान-दर्शनो[११]
नाम षट्षष्टितमः सर्गः ॥६६॥

---

१. रा—तदा मां । २. ब म ल$_1$ ल$_2$—नृपवीरसिंह । ३. रा ब म ल$_1$ ल$_2$—०युक्ता ४. च—नास्ति । ५. फ अ—एतच्च । ६. अ—मया त्वं । फ—मया ते । रा म ल$_1$ ल$_2$—तथा । ७. अ—सीताप्रलम्भे प्रकु० । फ—०लम्भे प्रकु० । च ब म ल$_1$ ल$_2$—सीतोपलम्भाय । ८. फ अ—बुद्धिम् । ब म ल$_1$ ल$_2$—शीघ्रम् । ९. प्र—नास्ति॥ १०. ल$_2$—इति सुं० । ११. फ—०न प्रदानो । रा प्र ब म ल$_2$—०नदर्शनं ॥

अथेदम् उत्तरं देव्या[1] पुनर् उक्तम्[2] अ[2]-सम्भ्रमम् ।
१] तव स्नेहान् नर-व्याघ्र हृदयं[3] चाऽनु[4]-दर्शितम् ॥१॥ [१
तथा[5] बहु-विधं वाच्यो रामो दाशरथिस् त्वया ।
N] यथा माम्[6] आ-प्नुयाच्[6] छीघ्रं हत्वा रावणम् आ-हवे ॥२॥ [२
यदि वा[7] मन्यसे वीर वसैका[8]ऽहम् अरिं-दम ।
२] कस्मिंश्चित् सं-वृते देशे वि-श्रान्तः श्वो गमिष्यसि ॥३॥ [३
मम वै[9] चाऽल्प-भाग्यायाः सान्निध्यात् तव शत्रु[10]-हन् ।
३] शोकस्याऽस्याऽप्र-मेयस्य मुहूर्तं स्याद् अपि क्षयः ॥४॥ [४
[11]गते हि हरि-शार्दूल पुनः सम्प्राऽऽप्तये त्वयि ।
४] प्राणानाम् अपि सं-देहो मम स्यान् नाऽत्र सं-शयः ॥५॥ [५
तथो[12] दर्शनम् अप्य्[12] एतद् भूयो मां[13] तापयिष्यति ।
५] दुःखाद् दुःख-तरं भूत्वा दुःखितां[14] दुःख-भागिनीम् ॥६॥ [६
अयं च वीर सं-देहस् तिष्ठतीऽव ममाऽग्र-तः ।
६] सु-महांस् त्वत्[15]-सहायेषु वानरेषु महा-मते ॥७॥ [७
कथं नु[16] खलु दुष्-पारं तरिष्यन्ति महोदधिम् ।
७] तानि हर्य्-ऋक्ष-सैन्यानि तौ वा[17] नृप[17]-वराऽऽत्म-जौ ॥८॥ [८

---

१. आ–भिन्नाः–देव्याः । २. अ–उक्तस्त्वसं० । ३. फ च रा प्र ब म ल१ ल२ अ–सौहृदं । ४. रा प्र च फ म ब ल१ ल२–चारु द० ॥ ५. च–यथा । ६. रा–समाप्नुयाच् ॥ ७. आ च–मां । ८. आ–वशै० ॥ ९. रा प्र ब म ल१ च फ–चैवाल्प० । १०. आ च फ–वीर्यवान् ॥ ११. अ–ततो ॥ १२. फ रा च ब म ल१ ल२ अ–तवाद० । प्र–उवाच दर्शनं प्येतद् । १३. आ–सा । १४. आ–दुःखिता दुःखभागिनी ॥ १५. फ प्र–तत् ॥ १६. फ अ–तु । १७. आ–वा नर० ॥

त्रयाणाम् एव भूतानां सागरस्यो[1]ऽति-लंघने ।
८] शक्तिः स्याद् वैनतेयस्य तव वा मारुतस्य वा[2] ॥९॥ [९
तद् अस्मिन्[3] कार्य-नियोगे देवैर् अपि दुरो[4]-क्रमे ।[5]
९] किं पश्यसि समा-धा[6]नं त्वं वै कार्य-विदां वर ॥१०॥ [१०
कामम् अस्य त्वम् एवैकः कार्यस्य परि-साधने ।
१०] पर्य्-आप्तः पर-वीर-घ्न[7][8] यशस्यस्[9] ते[10] बलोदयः॥११॥ [११
बलैः समग्रैर् यदि मां जित्वा रावणम् आ-हवे ।
११] अयोध्यां स्वां पुरीं रामो नयेत् तत् स्याद् यशस्-करम् १२[१२
यथा तस्य नृ-वीरस्य वचनैं[11] वि-विधा कृतां ।
१२] रक्षसा तद्-भयाद् एवं[12] न तथा[13]ऽर्हति राघवः ॥१३॥ [१३
बलैस् तु सं-कुलां कृत्वा लंकां पर-पुरं-जयः ।
१३] मां नयेद् यदि काकुत्स्थम् तत् तस्य सदृशं भवेत्॥१४॥ [१४
तद् यथा तस्य वि-क्रान्तम् अनु-रूपं महाऽऽत्मनः ।
१४] भवत्य् आहव-शूरस्य तथा त्वम् उप[14]-पादय ॥१५॥ [१५
तद्[15] अर्थोप-हितं वाक्यं प्र-सृतं[16] हेतु-संयुतम्[17] ।
१५] प्र-शस्याऽहं ततस् तस्या वाक्यम् उत्तरम् अब्रुवम्[18] ॥१६॥ [१६

---

१. आ—सागरस्याभि० । रा प्र ब म ल$_1$ ल$_2$—०स्यास्य लं० । २. प्र अ—च ॥ ३. ल$_2$—उक्तं । ४. ल$_2$—दुरक्रमे । ५. अ—तदस्मिन् कार्यनियोगैर्वानिरैर्दुरतिक्रमे । ६. आ—०यानं ॥ ७. अ—०घ्नः । ८. आ—परशत्रुब० । फ च अ—यशस्यस्तु ॥ ९. प्र ल$_2$—तां । १०. रा प्र ब म ल$_1$ ल$_2$—वनादपहृता पुरा । च—वनादुपहृता पुरा । ११. फ अ—यथाहं तस्य वीरस्य वनादुपहृता पुरा । १२. च रा प्र ब म ल$_1$ ल$_2$—एवं । १३. आ फ—हन्ति ॥ १४. ल$_2$—उदपादये । रा प्र ल$_2$—०पादयेः । च ब म—०पादये । १५. अ—एवमुक्तसुभं । १६. प्र रा ब म ल$_1$ ल$_2$—प्रश्रितं । १७. प्र ल$_2$—०संश्रितम् । १८. च रा—अब्रवीत् ॥

देवि हर्य्-ऋक्ष-सैन्येन सं-वृतः प्लवतां वरः ।
१६] सु-ग्रीवः सत्त्व-सम्पन्नस् तवाऽर्थे कृत-निश्चयः ॥१७॥[३][१७
तस्य विक्रम-सम्पन्नाः सत्त्व-वन्तो महा-बलाः ।
१७] मनः-संकल्प-सिद्धाऽर्थाः नि-देशे हरयः स्थिताः॥१८॥[१८
तेषां नोपरि नाऽधस्तान् न तिर्यक् सज्जते गतिः ।
१८] न च कर्मसु सीदन्ति महत्स्व् अमित-तेजसः ॥१९॥ [१९
तैश् चाऽपीऽयं महा-भागैस् ससागर-वरा धरा ।
१९] प्रदक्षिणी-कृता शीघ्रं सत्त्व-वद्भिर् महाऽऽत्मभिः॥२०॥[२०
मद्-विशिष्टाश् च तुल्याश् च सन्ति तत्र वनौकसः ।
२०] मत्-तः प्रत्य्-अवरः कश्चिन् नास्ति सुग्रीव-सन्निधौ २१॥[२१
अहं तावद् इह प्राऽऽप्तः किं पुनस् ते महा-बलाः ।
२१] न हि प्र-कृष्टाः प्रेष्यन्ते प्रेषयन्त्य् अ-वरान् वराः ॥२२॥ [२२
तद् अलं परि-तापेन देवि मन्युर् अपैतु ते ।
२२] एकोत्-पातेन ते लंकाम् एष्यन्ति कपि-कुञ्जराः ॥२३॥[१४][२३
हृष्ट-तुष्टा हि वैदेहि भविष्यस्य् अ-चिराद् इव ।
२३] त्वत्-सकाशं महा-भागौ नृ-सिंहाव् आ-गमिष्यतः२४॥[१४][२४
अरि-घ्नं सिंह-विक्रान्तं क्षिप्रं द्रक्ष्यसि राघवम् ।

---

१. फ च रा प्र म ब ल२–हर्यक्ष० । अ–हर्यक्षसैन्यानामीश्वरः । २. फ–त्वदर्थे । ३. अतः परमधिकः पाठः–फ–शीघ्रमेष्यति वैदेहि मा भूत्ते वात्र संशयः॥४. रा–तिर्यग् ।५. आ–लज्जते । ल१–क्षमज्जते। ६.रा च प्र ब म ल१,ल२अ–०धराधरा। ७.अ–पूर्वं । ८.ब म रा–०द्भि र्वसुन्धरा। अ–महाबलैः । ९. फ–नास्ति ॥ १०. ल२–वनोकसः । ११. ल१–स तु । १२. फ–दूत्येनामिततेजसः । अ–प्रेष्यन्ते हीतरे जनाः ॥ १३. आ च–उपैतु । ब रा–अपैति । १४. फ–नास्ति ॥ १५. रा प्र ब म ल१ ल२ अ–हृष्टा तुष्टा । १६. रा प्र ब म ल१ ल२–च । अ–तु । १७.ब–भविष्यसि चि० ॥ १८. फ–तदलं । १९. अ–०सङ्काशं । २०. फ–द्रक्ष्यसि ।

२४] लक्ष्मणं च धनुष्-पाणिं[१] लंका-द्वारम् उप-स्थितम्[२]॥[३]२५॥ २५
नख-दंष्ट्राऽऽयुधान् वीरान् सिंह-शार्दूल-विक्रमान् ।
२५] वानरान् वा[४]नरेन्द्रं च[५] क्षिप्रं द्रक्ष्यसि सं-हतान्[५] ॥२६॥ [२६
शैलाऽम्बुद-निकाशानां लंका-मलय-सानुषु ।
२६] कपीनां नर्दताम् आर्ये श्रो[६]ष्यसे न चिराद् गिरः॥[६]२७॥ [२७
निवृत्त[७]-वन-वासं तु[८] त्वया सार्धम् अरिं-दमम्[९] ।
२७] अभि-षिक्तम् अयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम्॥२८॥[१०][२८
तथा मया वाग्भिर् अ-दीनभाषिणी
शिवाभिर्[११] आर्या[१२] त्वरितं प्र-सादिता ।
चकार शान्तिं मम मैथिलाऽऽत्म-जा
२८] [१२]तवाऽपि शोकेन [१३]तथाऽति-पीडिता ॥२९॥ [२९

इत्यार्षे[१४] रामायणे सुन्दर-काण्डे उत्तरोत्तर[१५]-वाक्यं
नाम सप्तषष्टितमः सर्गः ॥६७॥

---

---

१. अ—०मन्तं । २. रा प्र ब म $ल_1$ $ल_2$—उपागतम् । ३. फ—नास्ति । ४. फ—वानरेन्द्रांश्च । ५. फ रा प्र ब $ल_1$ $ल_2$ अ—संगतान् ॥ ५. फ—०सि । ६. रा प्र ब म $ल_1$—कपीनां नदतामार्ये न चिराच्छ्रोष्यसे गिरः । $ल_2$—नास्ति ॥ ७. फ अ—निर्वृत्त० । ८. प्र ब म $ल_1$—च । ९. फ प्र ब म $ल_2$ अ—अनिंदिते । १०. $ल_2$ रा—नास्ति । ११. आ—शिवाभि राम । १२. आ $ल_2$ रा प्र ब म च $ल_1$ अ—न चापि । १३. आ—तथापि पी० । प्र ब म $ल_1$ अ—तथा निपी० । रा—तथा प्रपी० ॥ १४. आ—आर्षे । $ल_1$ $ल_2$—इति रा० । रा—इत्यार्षे सु० । अ—सुन्दरकाण्डे । १५. ब म च—उत्तरवाक्यं ॥

श्रुत्वा हनुमतो[1] वाक्यं यथा-वद् अभि[2]-भाषितम् ।
१] रामः प्रीति-समायुक्तम् उत्तरं[3] वाक्यम् अब्रवीत् ॥१॥ [१
कृतं हनु-मता कृत्यं सु-महद्[4] भुवि दुष्[4]-करम् ।
२] मनसाऽपि यद् अन्येन कर्तुं[5] खलु न[5] शक्यते ॥२॥ [२
न हि तं प्रति[6]-पश्यामि यस् तरेत्[7] तु[7] महाऽर्णवम् ।
३] अन्यत्र गरुडाद् वायोर् अन्यत्र च हनू-मतः ॥३॥[8] [३
देव-दानव-यक्षाणां गन्धर्वोरग-रक्षसाम् ।
४] अ-प्रधृष्या पुरी लंका रावणेनो[9]ऽभि-पालिता ॥४॥[10] [४
दूरं[11]-गा दुर्ग-गिरेर् मूर्ध्नि वीरेणैकेन धर्षिता ।
५] को वीर्य-बल-सम्पन्नः[12] समः स्याद् हि हनू-मतः[13] ॥५॥ [६
भृत्य-कार्यं हनु-मता सु-ग्रीवस्य कृतं[14] महत्[14] ।
६] अ-सन्निधौ[15] तत् स्व[15]-बलं सदृशं वि-क्रमस्य तु? ॥६॥[16] [७
यो[17] हि भृत्यो नि-युक्तः सन्[18] तत्र-तत्-कर्मणि दुष्-करे ।
७] कुर्यात्[19] तद् अनू-असूयुर्[19] वै तम् आहुः पुरुषोत्तमम् ॥७॥[८

---

१. फ–हनू० । २. आ–अति० । ३. फ रा प्र ब म ल$_{1}$–उत्तमं ॥ ४. ल$_{2}$–सुमहच्चातिदु० । प्र–सुमहद्दुष्कृतं कृतम् । ५. ब म रा अ–न कर्तुं खलु ॥ ६. प्र ब म ल$_{2}$–परिप० । ७. प्र–तरेत । फ–तरेत्सुम० । ८. अ–नास्ति ॥ ९. आ–०नापि पालिता । अ–०नानुपालिता ।१०. ल$_{2}$–४र्थ-श्लोकादारभ्य ९म-श्लोकपूर्वार्धाऽन्तः पाठो नास्ति ॥ ११. आ–दुर्ग्गा दुर्ग० । फ अ ल$_{1}$ ल$_{2}$–दुर्गा दुर्गगि० । १२. फ–०संपत्या । १३. रा प्र ब म ल$_{1}$–हनूमतः ॥ १४. ल$_{1}$–हनीमतम् । १५. फ–असन्निधाद्य स्त्र० । आ–०धौ यश्च वलं ॥ १६. रा प्र ब म ल$_{1}$–नास्ति ॥ १७. म–को । १८. ल$_{1}$–सन् भर्त्यकर्मणि दुष्करं । म–सन्भर्तृकर्मणि दुष्करं । फ अ–सन्भर्त्रा क० । १९. फ म–कुर्यात् तद् अनुरूपं । अ–कुम्पर्यादनसूयुर् ॥

भृत्यो वै नृ-पतेः कार्यं [1] न कुर्याद् यः समा-हितः ।[2]

८] [3]शक्तो न [3]यः सम्-अर्थश् च तम् आहुः पुरुषाऽधमम्[4] ॥८॥[१०

तन् नियोग-नियुक्तेन कृतं कर्म हनूमता ।

९] न चाऽऽत्मा लघुतां नीतः सु-ग्रीवश् चाऽपि तोषितः[5]॥९॥[११

अहं च रघु-वंशश् च लक्ष्मणश् च[6] महा-बलैः[6] ।

१०] वैदेह्या दर्शनेनाऽद्य धर्म-तः परि-रक्षिताः[7] ॥१०॥ [१२

[8]एतत् तु मम दीनस्य मनो भूयः प्र-कर्षति ।

११] यद् [9]इहाऽस्यं प्रियाऽऽख्यानैर्[10] न कुर्यां सदृशं प्रियम्॥११॥[१३

एष [11]सर्वस्व- भूतस् ते परि-ष्वङ्गः कृतो मया ।

१२] अवस्था-काल-सदृशं गृहाण त्वम् [12]इमं मम ॥१२॥ [१४

N] शुभं वाक्यम् इदं श्रुत्वा तव वक्त्रान् महा-मते । [N

सर्व-था [13]तु [13]कृतं तावत् सीतायाः परि-मार्गणम् ॥१३॥

१६] सागरं तु समा-साद्य पुनर् मे व्यथितं मनः । [१७

कथम् [14]एते [15]समुद्रस्य दुष्-पारस्य [16]महाऽऽत्मनः ।

१७] हरयो दक्षिणं [17]तीरं गमि[17]ष्यन्ति समा-गताः ॥१४॥ [१८

प्राऽऽप्तश्[18] च[18] खलु वैदेह्या वृत्तान्तम् तावद् अद्य मे ।

---

१. रा प्र म–कुर्याद्यो न । अ–कुर्याद्वै । २. फ–यो भृत्यः परमं कार्यं न कुर्यान्नृपतेः प्रियम् । ३. म–शक्तो युक्तः । च अ–शक्तो नयस० । फ–स्वस्थो युक्तः । ४. ल$_1$–नास्ति ॥ ५. रा प्र ब म ल$_1$ ल$_2$–शोभितः । च–पोषितः ॥ ६. ल$_1$ ल$_2$–चापि तोषितः । च रा प्र ब म–चापि पोषितः । ७. च रा प्र ब म ल$_1$ ल$_2$ अ–०रक्षितः ॥ ८. आ–एवं । ९. ब–इहाद्य । १०. फ च रा ब प्र ल$_2$–प्रियाख्याने । ल$_1$–प्रियाध्याने । म–प्रियाख्याते ॥ ११. फ–धर्मस्थभू० । १२. अ–इदं ॥ १३. ल$_2$–सुमयं । फ च रा प्र ब ल$_1$ अ–सुकृतं ॥ १४. अ–अन्तः स० । १५. प्र रा ब म ल$_1$ ल$_2$–गमिष्यन्ति । १६. म–महाम्बुधेः । रा ब–महोदधेः । १७. रा प्र ब म ल$_1$ ल$_2$–पार्श्वं समुद्रस्य ॥ १८. फ रा प्र ब म ल$_2$ अ–प्राप्तः स ।

१८] समुद्र-पार-गमने[1] हरीणां हि किम्[2] उत्तरम्[3] । [१९

कथं सर्वे तरिष्यन्ति[4] वातोद्धृत[5]-तरंगिणम् ॥१५॥

इत्य्-उक्त्वा शोक-सम्भ्रान्तो[6] रामो शत्रु-निर्बर्हणः[7] ।

१९] हनूमन्तं महा-वेगं ततो ध्यानम् उपाऽऽगतः[8] ॥१६॥ [२०

इत्यार्षे[9] रामायणे सुन्दर-काण्डे श्रीराम[10]-वाक्यं
नामाऽष्टाषष्टितमः सर्गः ॥[11]६८॥

---

१. म—०गमनं । २. आ—स्वम् । ३. च—उत्तमम् । ४. ल$_1$ ल$_2$ म ब रा च फ प्र अ—गमिष्यन्ति । ५. रा ब च म—वातोद्धूत० । फ प्र—वातोद्धूत० । अ—वातोद्धूततरंगिणः ॥ ६. आ—०सम्प्राप्तो । फ—संतप्तो । ७. ल$_1$ ल$_2$—०विबर्हणः । ८. आ—उपागमं । ल$_2$—उपागताः । ९. ल$_2$—इतिसुं० । १०. ल$_1$ च म प्र ब रा—रामवाक्यं ना० । अ—उद्योगे हनूमं◌ा नाम सर्गः । ११. फ—सर्गसमाप्तिर्न दृश्यते ॥

ततः[1] शोक-परि[2]द्यूनं रामं दशरथाऽऽत्म-जम् ।
१] उवाच वचनं श्री-मान् सु-ग्रीवः शोक-[3]नाशनम् ॥१॥ [१
किम्-अर्थं[4] तप्यसे वीर यथाऽन्यः प्राकृतस् तथा ।
२] मैवं भूस् त्यज सं-तापं कृत-घ्न इव सौहृदम् ॥२॥ [२
३उ] सं-तापस्याऽर्थं[5] वै स्थानं न हि[6] पश्यामि राघव ।
प्र-वृत्त्याम्[7] उप-लब्धायां ज्ञाते[8] हि नि-लये[9] रिपोः ॥ [10]३॥[३
४] धृति-मान्[11] शास्त्र-वित् प्राज्ञः पण्डितश् चाऽसि राघव ।
N] त्वं[12] नैतां प्राकृतां [13]बुद्धिं कृताम् एवाऽऽत्म-दूषिकाम्[13] ॥४॥ [४
वानरेषु स[14]मा-सक्तं न[15] ते कार्यं वि-प[15]त्स्यते ।
१०] अ-चिराद् द्रक्ष्यसे सीतां तीर्त्वा रा[16]घव सागरम् ॥५॥ [२०
नह्य् एषाम् अस्त्य् अ-कर्त्तव्यं त्वद्-अर्थे किंचिद् एव तु ।[17]
N] वीर्य-विक्रम-सम्पन्ना बल-वन्तो हि वानराः ॥६॥ [N
तद् अलं वि-क्ल[18]वां बुद्धिं कृत्वा सर्वाऽर्थ-नाशिनीम् ।
N] पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्याऽप-कर्षणः[19] ॥७॥ [१९

---

१. फ च रा प्र व म ल$_1$ ल$_2$—वं तु । २. फ—०परिक्रान्तं । ३. प्र—कपिनायकः । ४. अ—किं त्वं सन्तप्यसे ॥५. आ च रा प्र ब म ल$_1$ ल$_2$—०स्यास्य। ६. आ—विप० । ७. फ च प्र व म ल$_1$ ल$_2$—प्रवृत्तावुप० । ८. अ—ज्ञातो । फ—विज्ञाते । च ब म ल$_2$ प्र—ज्ञातो वै । ल$_1$—ज्ञातोऽयं । ९. च—निलया । ब म ल$_1$ ल$_2$—निर्णयो । प्र—निलयो । १०. रा—नास्ति ॥ ११. अ—बुद्धिमान् । १२. रा—त्यज्यतां । १३. अ—वीर तामेवात्म-प्रदूषिकाम् । १४. फ—समायुक्तं । १५. अ—तत्ते कार्यं विनश्यति । १६. च—रावण । १७. अ—राम ह्येवमर्थकार्यं त्वदर्थं किंचिदेव तत् ॥ १८. आ—विक्लवं । १९. अ—शौर्योपकर्षकः । फ—शौर्यापकर्षकः ॥

यत् तु कार्यं मनुष्येण शौ[1]ण्डीर्यम् अव-लम्बिना[1] ।
६] अस्मिन्[2] काले महा-प्राज्ञ[3] तत्[4] त्वम् आ-तिष्ठ तेजसा ॥८॥[१६
शूराणां हि मनुष्याणां त्वद्-विधानां महाऽऽत्मनाम् ।
७] वि-न[5]ष्टानां प्र-नष्टानां क्षमं[5] न ह्य् अनु-शोचनम्[6] ॥९॥ [१७
त्वं तु बुद्धि-मतां श्रेष्ठः सर्व-शस्त्र-भृ[7]तां वरः ।
८] सार्धम् अस्मद्-वि[8]धैर् भृ[9]त्यैर् अ[10]रीन् जेतुम्[10] इहाऽर्हसि १०॥[१८
न हि प[11]श्याम्य् अहं किञ्चित्[11] त्रिषु लोकेषु राघव ।
९] गृहीत-धनुषो यस् ते तिष्ठेद् [12]अभि-मुखो रणे ॥११॥ [१९
११पू] तद् अलं शोक[13]म् आ-विश्व(?श्य) धैर्य[13]म् आ-लम्ब्य राघव ।
N] क्षात्र-धर्मम् उ[14]पाऽऽतिष्ठ सर्वो दण्डाद् [15]बिभेति हि[15] ॥१२॥[२१
लंघना[16]ऽर्थे हि[16] घोरस्य सागरस्य न[17]दी-पतेः ।
N] स[18]हाऽस्माभिर् महा-बाहो सू[19]क्ष्मा बुद्धिर् वि-धीयताम् १३॥[२२
समुद्रं लंघयित्वा [20]तुं बहु-नक्र-झषाऽऽकुलम् ।
N] लंकां [21]तां वि-धमि[22]ष्यामो जे[23]ष्यामश् च रणे रिपून् ॥५॥[९

---

१. फ–सौटीर्यमवलम्बता । प्र ब ल$_{2}$–शौटीर्यम० । २. अ–यस्मिन् । ३. आ–०प्राज्ञः । ४. अ–तां त्वमुत्तिष्ठ । फ च रा प्र ब म ल$_{1}$ ल$_{2}$–स त्वमा ॥ ५. अ–विनष्टे विप्रनष्टे वा क्षणं । फ–विनष्टे वा प्रणष्टे वा क्षमं । ६. च रा ब म ल$_{1}$ ल$_{2}$–०शोचितुं ॥ ७. रा प्र ब म ल$_{1}$–०विदां । ८. च–०भूतैर् । ९. ल$_{1}$–वृत्यैः । १०. रा प्र ब ल$_{1}$–न शोचितुम् । म–अरिं जेतुम् । ल$_{1}$–कार्यं कर्तुम् । च–अरीन् क्षयेतुम् । आ–अरीन् क्षेप्तुम् ॥ ११. ल$_{1}$–पश्यामहे कंचित् । १२. च अ–अति० ॥ १३. अ–शोकवेगेन क्रोधम् । १४. रा प्र म म ल$_{1}$ ल$_{2}$–उपाश्रित्य । १५. अ–विभेत्यहे ? ॥ १६. अ–०र्थं सुघो० । फ च रा प्र ब म ल$_{1}$ ल$_{2}$–लंघनार्थं हि । १७. अ–महीपते । १८. ल$_{2}$–महा० । १९. ल$_{1}$–सूक्ष्मबुद्धिर् ॥ २०. ल$_{1}$ अ– च । २१. अ–च । २२. प्र ल$_{2}$–विधमिष्यामि । २३. ल$_{2}$–जेष्यामि ॥

निरुत्-साहस्य दीनस्य शोक-पर्याकुलाऽऽत्मनः ।
N] सर्वाऽर्था व्यव-सीदन्ति सत्त्वं[1]-हीनस्य राघव ॥१५॥ [६
११उ] इमे सम्-अर्थाः[2] शूराश्[2] च सर्वे वै हरि-पुंगवाः ।
त्वत्-प्रियाऽर्थं कृतोत्-साहाः प्र-वेष्टुम् अपि पावकम् ॥१६॥ [७
१२] एषां[3] हर्षेण[3] जानामि तर्कश् च सु-दृढो मम[4] । [८
वि-क्रमेणाऽऽहरिष्यामः[5] सीतां हत्वा[6] रिपून्[7] रणे[7] ॥१७॥ [९पू
१३] सेतुर् बध्येत[8] हि यथा यथा[8] पश्याम[9] तां पुरीम् ।
तस्य राक्षस-राजस्य तथा त्वं कर्त्तुम् अर्हसि ॥१८॥ [१०
१४] दृष्टा[10] सा हि पुरी लंकां[10] त्रिकूट-शिखरे[11] स्थितां[11] ।
१५पू] समरे च हतं[12] शत्रुं[12] दर्शनाद् अव[13]-धारय ॥१९॥ [११
१६उ] इमे हि समरे शूरा वानराः काम-रूपिणः ।[14]
१७पू] तां पुरीं वि-धमिष्यन्ति शिला-पाषाण[15]-दारु[15]भिः ॥[16]२०॥[२४
१८उ] सेतुर्[17] बद्धः समुद्रे तु[17] लंका च[18] वशम् आगता[18] ।

---

१. अ–व्यसनार्त्तस्य । फ–व्यसनीयस्य ॥ २. अ–सर्वार्थश्च० । रा–सर्वार्थाः ॥ ३. अ–एवं कर्षेण । ४. अ–महान् । ५. अ–०णानयिष्यामि । प्र ब $ल_2$–०णानयिष्यामः । ६. अ–हित्वा । ७. फ प्र ब $ल_2$ अ–रणे रिपून् ॥ ८. फ–हि वंधेत तथा । च ब $ल_1$ $ल_2$–बंधेन हि यथा । रा–वंधेन हि तथा । प्र–वंधेन ह्ययथा । ९. रा प्र फ च ब म $ल_1$ $ल_2$ अ–पश्येम ॥ १०. अ–दृष्ट्वा चेद्धिपुरी लङ्कां । प्र म $ल_1$–दृष्टा हि सा पुरी । ११. अ–०रो स्थितां । प्र म $ल_1$–०रस्थिता । १२. आ फ रा प्र $ल_1$ $ल_2$ ब च म–हतः शत्रुर् । १३. फ–एव धा० ॥ १४. रा $ल_1$ अ–नास्ति । १५. फ च प्र ब म $ल_1$ $ल_1$–शिलापादपयोधिनः । १६. रा अ–नास्ति ॥ १७. रा–सेतुर्बन्धः स० । अ–सेतुं बद्धं सागरं च । ब–सेतुं समुद्रे बद्धा तु । १८. अ–आगतम् । फ रा–वशमुपागता ।

१६७] सर्वं[1] तीर्णं च[2] नः[3] सैन्यं सर्व-था वि-जयी भवान्[4] ॥२१॥[4] [१३

बहु चिन्तयितव्यं ते संग्रामोऽर्थे[5] नरेश्वर ।[6]

N] महतश् च समुद्रस्य लंघनाऽर्थम् अरिं-दम ॥[7]२२॥[8] [N

इत्यार्षे रामायणे सुन्दर-कांण्डे सुग्रीव-वाक्यं

नामैकोनसप्ततितमः[9] सर्गः ॥६९॥

---

१. आ-सर्वंतीर्णं । २. अ-च तत् । रा-तु तत् । ३. अ-जितं एवोपराधय । ४. फ च रा ब म प्र ल₁ ल₂-अयं श्लोकः १९शश्लोकात्परं पठितः । अतः परमधिकश्च पाठः-फ रा च ब म प्र ल₁ ल₂-कथं चिदेव पश्यामस्ते[1] वयं वरुणालयम् । अ-कथंचिदेव जानीथा सैन्यस्तं वरुणालयम् । ५. आ-समुद्रार्थे । ६. अतः परमधिकः पाठः-फ च प्र म ल₁ ल₂ अ-किमुक्त्वा[2] बहुनैतेनं[2] सर्वथा विजयी भवेत् । ७. अ-नास्ति । ८. अतः परमधिकः पाठः-म अ-तस्मादुद्योगमातिष्ठ प्रयत्ने सिद्धिमास्थितः । म-इति वचनं सूर्यपुत्रे ब्रुवाणे सुरपतिसमरसारे सूर्यवंशावतंसे । नियमितपरितापस्तापनो राक्षसानां सपदि हृषितरोमा राघवः संबभूव ॥ ९. अ-उद्योगे सु० । ल₂-इति सुन्दरकाण्डे । १०. आ-उद्योगे पर्वणि उत्तरोत्तरवाक्यं नाम । रा म ल₂-उत्तरोत्तरवाक्यं नाम । प्र-उत्तरोत्तरं नाम ।

---

१. फ च-तं । २. अ-बहुनात्र किमुक्तेन ।

स[1] वि-नीतम् अनु-आयासं सु-ग्रीवेण[2] प्र-हर्षितः[2] ।
१] सु-ग्रीवम् अभि-नंद्यैव हनूमन्तं[3] ततोऽब्रवीत्[3] ॥१॥ [१उ
तपसा सेतु-बन्धेन सागरोच्-छोषणेन च[4] ।
२] सर्वथा सुसम्[5]-अर्थो हि सागरस्या[6]ऽति-लङ्घने ॥२॥ [२
बलस्य परि-माणं च[7] द्वार-दुर्ग-क्रियाम् अपि ।
३] गुप्ति[8]-कर्म च लंकायां[9] रक्षसां साधनानि च ॥३॥ [४
यच्[10] च यावच्[11] च यादृक् च लंकायाम्[12] अभि-दृष्टवान्
४] तथा तत्[13] सर्वम् आचक्ष्व[14] सर्वस्य[15] कुशलो [16]ह्य् असि[16] ॥४॥[५
श्रुत्वा रामस्य वचनं हनुमान् मारुताऽऽत्म-जः ।
५] वाक्यं वाक्य-विदां श्रेष्ठः प्रोवाच समव-स्थितः[17] ॥५॥ [६
श्रूयतां सर्वम् आख्यास्ये[18] दुर्ग-कर्म-विधानतः ।
६] यथा गुप्ता पुरी लंका यथैव च सु-रक्षिता ॥६॥ [७
७पू] प्रहृष्ट[19]-मुदिता रम्या मत्त[20]-द्विप-समाऽऽकुला । [१०पू
N] सं-हता[21] रथ[21]-संपूर्णा रक्षो-गण-निषेविता ॥७॥ [N

---

१. फ–सुविनीय तथाकामं । अ–संविनीतमनायासं । २. फ–सुग्रीवेन प्रचोदितः । ३. अ–०न्तमथाब्रवीत् ॥ ४. फ–वा । ५. आ–सुमर्थोहं । म–०हं सुसमर्थो सा० । ६. रा प्र म ल$_1$ ल$_2$–०रस्यास्य लं०। ७. रा–तु । ८. ल$_2$–गुप्त०। ९. ल$_1$–लङ्काया राक्षसा सा० ॥ १०. ल$_1$ ल$_2$–यश्च । फ–यथा । ११. अ–यातद्यथवच्च । १२. च ल$_1$ ल$_2$–०यामपि दृ० । म प्र ब रा–०यामसि दृ०। अ–०यां परिदृ०। १३. ल$_1$–तं स० । १४. ल$_1$–चक्षु । १५. ल$_1$–सर्वस्यं दुशलो । अ–सर्वथा कु० । १६. अ–ह्यादि ॥ १७. अ–समुपस्थितः । १८. अ–आख्यास्य ।१९. ल$_1$ च ब रा म–प्रहृष्टा मु०।२०. प्र–हयद्विप० । २१. आ–सहसा रससं०। ल$_1$ ल$_2$ म ब रा–संहतारभंस०। म–संघता रथसं०। च–संहिता रथसं०॥

७उ] दृढबन्ध-कपाटानि[१] महापरिघ-वन्ति[२] च ।
चत्वारि नि-पुणान्य्[३] अस्या द्वाराणि सु-महान्ति च॥[४]८॥[११
८] यन्त्रेषूऽपरि[५] यन्त्राणि बल-वन्ति[६] महान्ति[६] च ।[७]
१०उ] आ-गच्छन्त्य्[८] अपि सैन्यानि वार्यन्ते तानि तैर्[९] अपि॥९॥[१२
द्वारेषु वि-पुला विद्धि[१०] कालाऽऽयस-मयीः[१०] शिलाः ।
९] शत-शश् चाऽर्चिता[११] वीरैः शत-घ्न्यो[१२] रक्षसां गणैः॥१०॥[१३
शात-कौम्भ-मयस् तस्याः प्रा-कारो दुष्प्र-धर्षणः[१३] ।
११] मणि-विद्रुम[१४]-वैडूर्य-मुक्ता-विरचिताऽन्तरैः[१५] ॥११॥ [१४
अ-गाधा ग्राहवत्यश्[१६] च परि-खा मीन-संकुलाः[१७] ।
१२] ताः सर्वाः [१८]सुमहा-दुर्गाः शीताऽमल[१९]-जलाः शुभाः ॥१२॥[१५
तासां चतुर्षु द्वारेषु सं-क्रमाः[२०] परमाऽऽयसाः[२०] ।
१३] यंत्रैर् उपेता[२१] बहुभिर् बलवद्भिः स्वधि-ष्ठितैः ॥१३॥ [१६
त्रयस्[२२] तु[२२] सं-क्रमास् तस्याः[२३] पर-सैन्याऽऽगमे[२४] सति ।
१४] यंत्रैर् अभ्यव[२५]-कीर्यन्ते परि-खासु समन्त-तः ॥१४॥ [१७

---

१. ल$_{१}$ म प्र ब—०कवाटानि । अ—०कपटानि । २. अ—०ववाञ्चितः ।
३. म अ—विपुलान्यस्य । ४. ल$_{२}$—नास्ति ॥ ५. फ—०षूपलयं० । ६. ल$_{१}$ल$_{२}$ म प्र रा—बहूनि सुमहान्ति । फ—बलवन्ति बलानि । ७. अ—नास्ति । ८. रा—आगच्छंत्यस् । ९. ल$_{१}$ल$_{२}$—स्तानितेरपि । प्र ब—स्तानितैरपि ॥ १०. ल$_{२}$ ब अ—भीमाः कालायससमाः । ल$_{१}$ म रा—भीमा काञ्चनाद्रिसमाः । प्र—भीताः कालायससमाः । च—भीमाः कायाल्गेससमाः । ११. आ—० श्चरिता । १२. अ—शतघ्नां ॥ १३. आ—०धर्षिणः । १४. ल$_{१}$—विक्रमवैतूर्य० । १५. आ—०चिमान्तरः । अ—०चितां वराम् । १६. आ—०वन्त्यश्च । अ—०वन्तश्च । १७. ल$_{१}$—०सङ्कुताः । १८. ल$_{१}$ रा—समहा० । १९. अ—शीततोयमयाः ॥ २०. आ—सद्रुमा परमायसाः । ल$_{१}$ ल$_{२}$ म प्र ब रा—संक्रमः परमो यथा । २१. प्र ब च रा ल$_{२}$—उपेतो । ल$_{१}$—उपेतब० । २२. ल$_{१}$—त्रयः सु० । २३. ल$_{१}$—संक्रमस्तस्याः । फ—०मास्तस्यां । २४. ल$_{२}$—०गमे प्रति । प्र—०गमं प्रति । २५. ल$_{१}$—अत्यत्र० । प्र—अपि वि० ॥

एकस् त्व्[1] अ-कम्पो बलवान् सं-क्रमः परमो[2] दृढः ।
१५] काञ्चनैर् बहुभिः स्तम्भैर् वेदिकाभिश्[3] च सं-वृतः[3] ॥१५॥ [१८
ते मया सं-क्रमा[4] भग्नाः[4] परि-खाश्[5] चाऽपि-पूरिताः ।
१६] दग्धा[6] च नगरी लंका[7] सा[8]ऽद्रि-प्राकार-तोरणा ॥१६॥ [२९
येन केन[9] तु मार्गेण तं[10] रामो वरुणाऽऽलयम्[11] ।
१७] हतां[12] च[12] नगरीं[13] लंकां[13] वानरैर् उप-धारय[14] ॥१७॥ [३१
अंगदो द्विविदो[15] मैन्दो[15] जाम्बवान् निषधो[16] नलः ।
१८] नीलः[17] सेना[17]-पतिश् चैव बल-शेषेण किं तव ॥१८॥ [३२
प्लवमाणाश्[18] च गत्वैते[19] लंकां रावण-पालिताम् ।
१९] स-प्राकारां[20] स-भवनां[21] नाशयिष्यन्ति[21] राघव ॥१९॥ [३३
स समाऽऽज्ञापय क्षिप्रं बलानां सर्व-संग्रहम् ।
२०] मुहूर्त्तेन च[22] युक्तेन प्र-स्थानम् अभि-रोचय ॥[23]२०॥ [३४
पुनर् एवाऽथ पप्रच्छ राघवो मारुताऽऽत्मजम्[24] ।
७३,१] बुद्धिमन्तं हनूमन्तं दुर्ग-कर्म-विधिं प्रति ॥२१॥ [N

---

१. आ—त्वेकस्य । ल₁ ल₂ म प्र ब रा च फ-त्वेकस्तु । २. अ—सुमहादृढः । ३. ल₁ल₂ म प्र ब रा च फ—वेदिकाभिश्च सर्वतः । अ—वेदिकाभिः समन्ततः ॥४. आ—सद्रुमा भग्नाः । फ—संक्रमा भिन्ना ।५. अ—परिखाः वापि पूरिताः । आ फ—परिखाः परिपूरिताः । ६. ल₂—लङ्का । ७. ल₂—दग्धा । ८. ल₁—सांधप्रा० ॥ ९. आ च—तेन । १०. आ—स रामो । च—सा रामो । अ—प्रतीर्य । ११. ल₁—मकरालयम् । १२. आ अ—हतेव । फ—हतैव । ल₂ म प्र ब रा च—हता च । १३. आ फ—नगरी लङ्का । १४. आ—०धारया ॥ १५. ल₂ ब रा—द्विविधो मैंदो । ल₁—द्विविधो सैन्धो । १६. म प्र—निषदो । १७. ल₂—नीला सीना० ॥ १८. ल₁ल₂ म प्र ब च फ—०मानाश्च । १९. रा—गत्वैतं ।२०. ल₁—सप्र० । २१. आ—सभवना मानयि० । म—समवनां नाशयि० । २२. ल₁ ल₂ रा—स । ब च—सु० । २३. अ—अत्र सर्गः समाप्यते । फ—अतः परमधिकः पाठः—राक्षसानामभावाय सीतासन्तर्पणाय च ॥ २४. अ—वायुनन्दनम् ॥

कानि दुर्गाणि दुर्गं च कीदृशं तद्[1] ब्रवीहि मे ।[2]
२] श्रोतुम् इच्छामि तत्त्व-ज्ञ वक्तुम् अर्हति तद् भवान्[3] ॥२२॥ [N
स पृष्टो राज-पुत्रेण रामेणाऽक्लिष्ट-कर्मणा ।
३] आ-चचक्षे यथेन्द्रेण[4] पुरा पृष्टो बृहस्पतिः ॥२३॥ [N
परां[5] गुप्तिं च लंकायाः सागरस्य च[6] भीम-तां ।
४] त्रि-भागं च बलौघस्य निर्[7]-देशं रावणस्य च ॥२४॥ [N
स्वयं प्रकृति-सम्पन्नो[8] युयुत्सू राम रावणः[9] ।
५] उत्-थितश् चाऽप्र-मत्तश्[10] च बलानाम् अनु-दर्शने ॥२५॥ [१९
६पू] लंका पुनर् दुरा-लम्बा[11] देव-दुर्ग-महा-भया ।
N] नादेयं[12] पार्वतेयं[13] च खानित्रं चाऽम्बु[14] वर्तते[14] ॥२६॥ [२०
७पू] द्वीपो[15] मध्ये समुद्रस्य दूर-पारस्य राघव ।
N] नौ-पन्थाश् चाऽपि नाऽस्त्य् अत्र निरुद्-देशश्[16] च सर्व-तः[17] २७ [२१
शैलाऽग्रे रुचिरा दिव्या सा पुरी देव-निर्मिता ।
८] वाजि-वारण[18]-संपन्ना लंका परम-दुर्गमा ॥२८॥ [२२
परि-खाश्[19] च शत-घ्न्यश्[20] च यन्त्राणि वि-विधानि च ।
९] शोभयन्ति पुरीं लंकां रावणस्य दुर्-आत्मनः ॥२९॥ [२३

---

१. ल$_1$—कीदृशस्या ब्रवीहि मे । फ—कीदृशं तद् ब्रवीतु मे । अ—कीदृशं तद्वदाशु मे । २. म—अतः परमाधिकः पाठः—राक्षसानामभावाय सीता-संहर्षणाय च । ३. अ—वानर ॥ ४. आ—यथेन्द्रस्य । ५. ल$_1$—परं । ६. आ—च भीमताः । ल$_2$ म प्र रा—सुभीमताम् । आ च—च सारताम् । ७. आ—निर्देशे रावणस्य च । ल$_2$ म प्र ब रा च फ—निर्देशं वाहनस्य च । अ—निर्देशं वावहस्य च ॥ ८. ल$_2$—०सम्पन्नौ । ९. ल$_2$—रावणौ । १०. आ—चाप्रमेयश्च । म—चाप्रमत्यस्य । ११. ल$_1$ ल$_2$ म प्र ब रा च—०लम्ब्या । फ—०लम्भा । १२. ल$_1$ रा ब—नादीयं ॥ १३. ल$_1$ रा—पार्वतीयं । १४. ल$_2$—चावबुध्यते । ल$_1$ रा—चात्र विद्यते । ब—चार्य बुध्यते । फ—चानुविद्यते । अ—वावुविद्यते ॥ १५. ल$_1$ प्र—द्वीपमध्ये । १६. ल$_1$—निरुद्देशे च । १७. अ—सर्वशः ॥ १८. ल$_1$—वाजिवानर० ॥ १९. ल$_1$ ल$_2$ म प्र ब रा च फ अ—परिघाश्च । २०. आ—शतघ्नश्च ।

अ-युत रक्षसां तत्र पूर्व-द्वारम् उपाऽऽश्रितम् ।
१०] शूल-हस्ता दुरा-धर्षाः सर्व एवाऽग्र-योधिनः ॥[1]३०॥[२४
पद्मं राक्षस-वीराणाम् उत्तरं द्वारम् आ-श्रितम् ।[2] [२७पू
N] शक्त्य्-ऋष्टि-कार्मुक-धराः सर्वे समर-योधिनः ॥३१॥ [N
अर्बुदं रक्षसां तत्र पश्चिमं[3]-द्वारम् आ-श्रितम् ।
११] रथिनश् चाऽश्व-वाराश् च कुल-पुत्राः सु-पूजिताः । [२७उ
खड्ग-शूल-धराः शूराः सर्वे सर्वाऽस्त्र-योधिनः ॥३२॥
१०] निर्युतं[4] रक्षसां तत्र दक्षिणं[5] द्वारम् आ-स्थितम्[6] ।[7] [२६
N] पदाति[8]-रथिनश् चैव शूरा[9] विक्रान्त-योधिनः ॥[10]३३॥ [N
शतं शत-सहस्राणां मध्यमं गुल्मम्[11] आ-श्रिताः ।[12]
१२] यातु-धाना दुरा-धर्षा[13] रावणं पर्य्-उपाऽऽसते ॥३४॥ [२८
१३पू] श्रुत्वा हनुमतो वाक्यं यथा-वृत्तं[14] परमाऽर्थ-वृत्तं[15] ।
N] प्रत्य्-उवाच हनू-मन्तं रामः सत्य-पराक्रमः ॥३५॥ [N
यत्र मां वेदयसे लंकां भीमां[16] भीमस्य रक्षसः ।
अहम् एको हनिष्यामि[17] सत्यम् एतद् ब्रवीमि ते ।
N] ममाऽस्त्रैः[18]ऽग्निं प्र-वेक्ष्यन्ति शलभाः पावकं यथा ॥३६॥ [N

इत्यार्षे[19] रामायणे सुन्दर-काण्डे दुर्ग-विधान वर्णनं[20]
नाम सप्ततितमः सर्गः ॥[21]७०॥

---

१. फ रा प्र—नास्ति ॥ २. $ल_1 ल_2$ म श्र ब रा च फ अ—नास्ति ॥ ३. $ल_2$—पच्छिमं द्वारम् । प्र—दक्षिणं द्वा०। अ च रा—उत्तरं द्वा०।४. प्र—अयुतं । ५. $ल_1$ $ल_2$ रा—उत्तरं । ६. $ल_1$ $ल_2$ रा—आश्रितम् । ७. फ—नास्ति । ८. $ल_2$—पादातार० । ९. $ल_2$—सुरा० । १०. फ अ—नास्ति ॥ ११. फ—आस्थितम् । अ—आश्रितम । १२. $ल_1$ $ल_2$ म ब रा च—पद्मं राक्षस वीराणां उत्तरं गुल्ममाश्रितम् । १३. $ल_2$—दुरामर्षा ॥ १४. $ल_1$ ब रा—यथार्थं पर० । १५. म—०र्थवित् । फ अ—०र्थतः । १६. $ल_1$ $ल_2$ म ब रा—तस्य । फ अ—पुरीम् । १७. $ल_2$ म प्र ब रा—वधिष्यामि । $ल_1$—वदिष्यामि । १८. $ल_1$—ममास्त्राणां ॥ १९. $ल_2$—इति सुन्दरकाण्डे । रा—इत्यार्षे सु०। २०. आ—उत्तरोत्तरवाक्यं नाम । २१. प्र—नास्ति ॥

श्रुत्वा [1]हनूमतो वाक्यं रामो रिपु-निसू (?षू) दनः ।
१३] सु-ग्रीवं विपुल-ग्रीवम् इदं वचनम् अब्रवीत् ॥१॥ [१
अस्मिन् मुहूर्त्ते सु-ग्रीव प्र-याणम् अभि-रोच[2]ये ।
१४] [3]युक्तो(?क्ते)मुहूर्त्तो(?र्त्ते)वि-जयः प्राऽऽप्तो मध्यं[3] दिवा-करः२[३
फाल्गु[4]न्याम्(?व्)उत्तरे ह्य् अस्य[4] मम चैवाऽर्थ-साध[5]ने ।
१५ ] अभिप्र-या[6]मि सु-ग्रीवं[7] सर्वाऽऽनीक[8]-समावृताः ॥३॥ [६
निमित्तानि च[9] धन्यानि यानि प्रादुर्-भवन्ति मे ।
१६] नि-हत्य रावणं सीताम् आ-हरिष्ये न सं-शयः ॥४॥ [७
उपरिष्टाद् हि नयनं स्पन्दमा[10]नम् इवा[11]ऽन्-अघ ।
१७] वि-जयं समनुप्राऽऽप्तं शंसतीऽव [11]मनो मम[12] ॥[12]५॥ [८
सीतां[13] श्रुत्वाऽभि-यानं च[13] प्राणान् सं-धारयिष्यति[14] ।
N] जीविता[15]ऽन्तेऽमृतं दृष्ट्वा हित्वा मृत्युम् इवाऽऽतु[16]रः ॥६॥ [५

---

१. च प्र ब म ल$_1$ ल$_2$ अ–हनुमतो ॥ २. अ–०रोचयः । फ प्र म–०रोचते । च–०रोचय । ३. अ–मुहूर्ते विजयः प्राप्तो युक्तो मध्यं । प्र ल$_2$–युक्तो मुहूर्त्तो विजयो मध्यं प्राप्तो ॥ ४. फ–उत्तराफाल्गुनी ह्यस्य । च प्र–उत्तराफाल्गुनी ह्यद्य । रा–उत्तराफाल्गुणी ह्यत्र । ब म ल$_1$ ल$_2$–उत्तराफाल्गुनी ह्यत्र । ५. फ च–०साधिनी । रा–०साधनी । ६. फ रा प्र ब म ल$_1$ ल$_2$–०प्रयामि । च–०प्रयासि । ७. ल$_2$–सुग्रीवं । ८. ल–मयानीक० । फ च रा प्र ब म ल$_1$–सर्वानीक-समावृतः ॥ ९. फ अ–हि ॥ १०. प्र ल$_2$–धारयिष्यति जीवितम् । फ–स्पन्दमानमिदं मम । ११. फ–महामते । १२. प्र ल$_2$–नास्ति ॥ १३. फ–श्रुत्वा सीता प्रयाणं मे । म अ–०भियानं मे । १४. रा ब म–सीता च श्रुत्वाभिज्ञानं धारयिष्यति जीवितम् । प्र ल$_2$–नास्ति । १५. ब प्र म–यथा चैवामृतं । ल$_1$ ल$_2$–तथा चैवामृतं । १६. अ–इवापराः । रा प्र ब म ल$_1$ ल$_2$–इवामराः ॥

प्र-चिकीर्षं समुद्र-योगं दधे लंका-वधे मनः ।
N] दिधक्षुः सर्व-भूतानि युगाऽन्त इव पावकः ॥७॥ [N
अग्रे याहि बलस्याऽस्य नील मार्गम् अवेक्षितुम् ।
१८] वृतः शत-सहस्रेण वानराणां तरस्-विनाम् ॥८॥ [१०
फल-मूल-वता नील शीत-कानन-वारिणा ।
१९] पथा मधु-मता चाऽऽशु सेनां सेना-पते नय ॥९॥ [११
दूषयेयुर् दुर्-आत्मानः फल-मूलम् अथोदकम् ।
२०] राक्षसाश् चापि रक्षेथास् तेभ्यस् त्वं नित्यम् उद्यतः ॥१०॥[१२
निम्नेषु गिरि-दुर्गेषु वनेषु च नखाऽऽयुधाः ।
२१] अभि-पत्याऽभि-पश्येयुः सर्वे तेषाम् इदं बलम् ॥११॥[16] [१३
सागरौघ-निभं[17] भीमम् अग्राऽनीकं महा-बलम् ।
२३] कपि-सिंहाः प्र-कर्षन्तु सर्वे कुक्षिं गिरेर् इव ॥१२॥ [१६
गजश् च गज-संकाशः शरभश् च रणोत्कटः ।

---

१. फ–प्रविकीर्णस० । म–प्रचिकीर्षुः । २. फ–लंकाबलवधे । म–दध्रे लंका० । ३. ल$_2$–पुनः । ४. आ–दिधिक्षुः । ५. ल$_2$–दिधक्षुरिव ॥ ६. आ–वृतं ॥ ७. फ–चैव । म–वीर । ८. आ फ रा प्र म–यथा । च–पंथा । ९. आ फ–मधुमत्तायाशु । १०. रा प्र म–सेनापते नयेः । फ ल$_1$ ल$_2$–सेनापतेर् ॥ ११. अ–भोजनं च सुसम्पन्नं । फ–दूषयेयुर्महात्मानः । १२. अ–रक्षसा यदि ॥ १३. फ रा–सर्वेषु । १४. ल$_1$–परिखासु नखायुधाः । रा–वनेषु परिखायुधाः । १५. आ–सर्वेषामिह तद्बलम् । च–सर्वेषामिदं तद्बलम् । १६. अतः परमधिकः पाठः—फ–यच्च पार्श्वबलं किंचित्तदिहैवावतिष्ठतु । एतद्धि कृत्यं घोरायां विक्रमेष्वप्रयुज्यते ॥ १७. अ–०निभां । १८. अ–भीमां तवानीकं महाबलः । च प्र ब म ल$_1$ ल$_2$–भीममथानीकं म० । फ–०कं महाबलाः । १९. आ–प्रकर्षंतु । २०. आ फ च प्र ब ल$_1$ ल$_2$ अ–अपि ॥ २१. अ–०श्च राजसंकाशः । ल$_2$–गजाश्च गजसंकाशाः । २२. ल$_2$–शरभाश्च रणोत्कटाः ।

२४] गवाऽत्तश्[1] चाऽग्र-तो यातु[2] गवां वृष[3] इवर्षभः[4] ॥१३॥ [१६
वीरो वानर-वाहिन्या वानरौघ[5]-वतां (?न्तं) तथा[5] ।
N] बलस्य दक्षिणं पार्श्वम् ऋषभः[6] परि-रक्षतु ॥[7]१४॥ [१७
गन्ध-हस्ती[8] च[8] दुर्-धर्षस् तरस्-वी गंध-मादनः ।[7]
२६] यातु वानर-वाहिन्या वामं[9] पार्श्वम् अधि-ष्ठितः॥[10]१५॥ [१८
यास्यामि बल-मध्येऽहं बलौघम्[11] अनु[11]-पालयन् ।
२७] अधि-रुह्य हनूमन्तम् ऐरावणम् इवाऽरि-हा ॥१६॥ [१९
अंगदेनेषु[12]-मात्रेण लक्ष्मणोऽनन्तरं[13] मम ।
२८] भूत-यानेन भूतेशो[14] द्रविणाऽधि-पतिर् यथा[14] ॥१७॥ [२०
जाम्बवांश् च सु-षेणश्[15] च वेग-दर्शी[16] च[16] वानरः ।
२९] ऋक्ष-राजश् च दुर्-धर्षः कक्षां[17] रक्षन्तु[17] मे स्वयम् ॥१८॥ [२१
यदि मे सागरो मार्गं[18] प्र-स्थितस्य न दास्यति ।
N] ममाऽस्त्र-बल-निर्दग्धो भविष्यत्य्[18] अपरो मरुः[18] ॥१९॥ [N
राघवस्य वचः श्रुत्वा सु-ग्रीवो वाहिनी-पतिः ।
३०] व्या-दिदेश महा-वीर्यान् वानरान् वानरर्षभः ॥२०॥[19] [२३
ते वानर-गणाः सर्वे सं-मन्त्र्य च युयुत्सवः ।

---

१. ल$_1$—गवयश् । ल$_2$—गवयाश् । २. ल$_2$—यान्तु । ३. अ—पृच्छ । फ—पृष्ठ । ४. ल$_2$—०भाः ॥ ५. प्र च अ—वामपार्श्वमधिष्ठितः । रा ब म ल$_1$ ल$_2$—वामं पार्श्वमधिष्ठितः । आ—वानरौघवती तथा । ६. आ—ऋषतः । ७. ल$_1$ ल$_2$—नास्ति ॥ ८. फ रा प्र ब म—०हस्तीव । ९. प्र—वामपा० । १०. ल$_1$ ल$_2$ अ—नास्ति ॥ ११. अ—बलौघं परिपालयन् ॥ १२. आ—अंगदेन तु मा० । अ—अंगदे तेषु मा० । ल$_1$—०षुमंत्रेण । १३. अ—लक्ष्मणोमन्तरं ? । १४. ल$_2$—भूतेश द्रविणाधिपते यथा ॥ १५. फ—सुषेनश्च । १६. फ—मेघदर्शी च । आ—वेगदर्शीव । १७. ब—कक्ष्या रक्ष्यन्तु । प्र म—कक्ष्यां रक्षन्तु ॥ १८. ल$_1$—भविष्यति पुरो मम । रा प्र ब म ल$_1$ अ—अपरो मम । १९. आ रा च प्र ब म ल, ल$_2$ अ—नास्ति ॥

३१] गुहाभ्यः शिखरेभ्यश् च ततः पुप्लुविरे द्रुतम्[1] ॥२१॥ [२४
सागरौघ-निभं घोरं[2] तद् वानर-बलं महत् ।
N] वि-ससर्प[3] महा-वेगं भीम-वेग इवाऽर्णवैः[4] ॥२२॥ [४०
तस्यै[5] दाशरथी[6] मध्ये बलस्य कपि-कुञ्जरौ[7] ।
N] आ-पुप्लुवाते तूर्णं तौ[8] सद्-अश्वाव् इव वेगितौ[9] ॥२३॥ [४१
कपिभ्याम् उह्यमानौ[10] तौ शुशुभाते नरर्षभौ ।
N] महद्भ्याम् इव सं-हृष्टौ ग्रहाभ्यां चन्द्र-भास्करौ ॥२४॥ [४२
सर्व[11]-वानर-राजेन लक्ष्मणेन च[12] पूजितः[12] ।
३२] जगाम रामो धर्माऽऽत्मा स-सैन्यो दक्षिणां दिशम् २५[२५,४३
शतैः शत-सहस्रैश् च कोटीभिश्[13] च संहस्र[14]-शः ।
३३] वानराणां सु-घोराणां श्री-मतां परि-वारितः ॥२६॥[15]
३४पू] तं[16] यान्तम्[16] अनु-याति स्म महती हरि-वाहिनी । [२६
N] सा[17] स्म याति दिवा-रात्रौ[17] प्र-वहन्ती[18] नदी यथा[18] ॥[19]२७॥[N
N] ते[20] विन्ध्यं[20] गिरिम् आ-साद्य मलयं च महा-गिरिम् । [N

---

१. अ—भृशं । च—०रेऽद्रुतम् ॥ २. फ अ—भीमं । ३. अ—प्रस० । ४. अ—०वे॥ ५. ल$_1$—तस्या । ६. प्र—दासरथी । ७. अ—०सत्तमौ । ८. आ—आपुप्लुवे महार्णन्तौ । च—आप्लुवाते तु पूर्णं तौ । रा ब म—०ते तु विक्रम्य । प्र ल$_2$—०ते ततः द्रुतः । ल$_1$—पुप्लुवाते तु विक्रम्य । ६. अ—सत्तमौ ॥ १०. च—आरुह्यमाणौ । रा ब—आरुहतौ । प्र ल$_1$ ल$_2$—आरुहन्तौ ॥ ११. प्र ल$_1$ ल$_2$ अ—ततो । १२. च—सु० ॥ १३. अ च प्र ल$_2$ रा ब म ल$_1$—कोटिभिश् । १४. रा ब म ल$_1$—समन्ततः । १५. फ—नास्ति ॥ १६. आ—ततस्तमनु० । १७. च—याभिर्दिवा० । रा ल$_1$—याति दिवारात्रं । ब म ल$_2$—याभिर्दिवारात्रं । १८. आ च रा ब—महती हरिवाहिनी । प्र—सागरं ते समागताः । म—प्रीतिमन्तोऽनुजग्मतुः । ल$_2$—दिवेत्यारभ्य ०नीत्यन्तस्त्रुटितः । १६. फ अ—नास्ति । २०. च—संविंध्य । आ—सा वि० । प्र ब म ल$_2$—स विंध्यं । ल$_1$—ते विंध्यगि० ।

३४उ] प्र-हृष्टाश्[1] च[2] प्र-मत्ताश् च सुग्रीवेणाऽभि-पालिताः ॥२८॥
आ-प्लुवन्तः प्लुवन्तश् च गर्जन्तश्[3] च प्लवं-गमाः।
३५] [5]क्ष्वेडन्तो धावमानाश् च व्रजन्तश् च प्र-दक्षिणम्[4] ॥२९॥ [२७
भक्षयन्तः[6] सु-गन्धीनि मधूनि[7] च फलानि[7] च।
३६] उद्-हरन्तो महा-वृक्षांश् शैल-शृङ्गाणि चैव हि॥३०॥ [२८
अन्योऽन्यं सहसा दृप्ता भुजैर् आ-हृत्य पातिताः।[8]
३७] पतितान् उद्-क्षिपन्त्य् अन्ये पातयन्तस् तथाऽपरान् [9]३१[२९
रावणो नो नि-हन्तव्यः सर्वे च रजनी-चराः।[10]
३८] इति गर्जन्ति हरयो राघवस्य समीप[11]-तः ॥३२॥ [३०
पुरस्तात् पनसो[12] वीरो नलः[13] कुमुद एवं[14] च[14]।
३९] पन्थानं शोधयन्ति[15] स्म वानरैर् बहुभिः[16] सह[16] ॥३३॥ [३१
मध्ये तु[17] राजा[17] सु-ग्रीवो रामो लक्ष्मण एव च।

---

१. अ—प्रहृष्टा मुदिता सर्वा। फ—प्रहृष्टा मुदिताः सर्वे। रा ब $ल_1$ $ल_2$—प्रहृष्टाश्चाप्र०। २. फ—सुग्रीवपरिपालिताः॥ ३. फ अ—नदन्तश्च। ४. रा प्र ब म $ल_1$ $ल_2$—दिवानिशम्। ५. अ—क्ष्वेडन्तो विवदन्तश्च जग्मुस्ते दक्षिणां दिशम्। फ—क्ष्वेडन्तो विरमन्तश्च जग्मुस्ते दक्षिणां दिशम्॥ अतः परमधिकः पाठः—फ अ—शतैः शत-सहस्रैश्च कोटिभिरयुतैरपि। अर्बुदैरर्बुद-शतैर्वानरेन्द्रो महाबलः॥ वानराणां सुघोराणां श्रीमतां परिवारितः। अ फ च रा ब प्र म $ल_1$ $ल_2$-हृष्टाः किलकिलायन्तः शिलापादपयोधिनः॥ ६. फ अ—भक्षयन्ति। ७. रा—फलानि च मधूनि च॥ ८. अ—अन्योन्यं सह संहृष्टा निपतन्ति क्षिपन्ति च। फ—अन्योन्यं सह स हृष्टा स्वभुजं निक्षिपन्ति च। ९. फ अ—पतितांश्चोत्क्षिपन्त्यन्ये पातयन्त्यपि चापरे। अतः परमधिकः पाठः—फ च प्र ब म $ल_1$ $ल_2$ अ—मैथिलीमानयिष्यामो हत्वा तं राक्षसं रणे। लङ्कां च विधमिष्यामः सर्वांश्च रजनीचरान्॥ १०. फ अ—नास्ति। ११. अ—तु सन्निधौ। फ—च सन्निधौ॥ १२. आ अ—पनशो। १३. च अ—नीलः। १४. आ—मे वच। १५. $ल_1$—शोषयन्ति। १६. फ—बहुभिर्वृताः। $ल_1$—बहुभिस्सह॥ १७. फ रा प्र ब म $ल_1$ $ल_1$—राजा तु।

४०] हरिभिर्[1] बहुभिर्[1] भीमैर् वृताः शत्रु-निबर्हणैः ॥३४॥ [३२
हरिः शत-बलिर् भीमः कोटीभिर्[2] दशभिर् वृतः ।
४१] दक्षिणं[3] पक्षम् आ-श्रित्य[3] ररक्ष हरि-वाहिनीम् ॥३५॥ [३३
कोटी[4]-शत-परीवारः केसरी[5] पनसो[6] गजः ।
४२] ऋक्षश् चाऽति-बलः पार्श्वम् एकं सैन्यम्[7] अपालयत्[7] ३६ [३४
अंगदो जाम्बवांश् चैव वानरर्क्ष-समन्वितौ ।[8]
४३] सु-ग्रीवं पुर-तः कृत्वा जघनं सं-ररक्षतुः ॥३७॥[9] [३५
तेषां सेना-पतिर् वीरो नीलो वानर-पुंगवः ।
N] सं-पतन्[10] प्लवतां श्रेष्ठः स्व[11]-बलं पर्य्-अपालयत्[11] ॥३८॥ [३६
दधि-मुखः[12] प्र-जंघश्[13] च जम्भो[14]ऽथ शरभः[14] कपिः ।
N] सर्वे पार्श्वान्य् अधावन्त रक्षणाऽर्थं नृपाऽऽज्ञया[15]॥३९॥[16] [३७
अथाऽगद-गतो[17] रामं लक्ष्मणः पर-वीर-हा ।
४९] उवाच परि-पूर्णाऽर्थं वचनं प्रति-भानवान्[18] ॥४०॥ [४४
अवाऽऽप्य सीतां वैदेहीं हत्वा रावणम् आ-हवे ।
५०] समृद्धाऽर्थाः[19] समृद्धाऽर्थौ[19] यास्यामो नगरीं ततः ॥४१॥ [४५

---

१. फ अ ब–बलिभिर्हरिभिर् ॥ २. फ रा प्र ब म $ल_1$ $ल_2$ अ–कोटिभिर् । ३. अ–पार्श्वमेकमवष्टभ्य । फ–दक्षिणं पार्श्वमासाद्य ॥ ४. रा–कोटि० । ५. अ–केशरी । ६. अ–पनशो । रा–पनसा । ७. रा प्र ब $ल_1$ $ल_2$–सैन्यस्य चावृणोत् । ८. फ–जांबवान् कुमुदश्चैव ऋक्षैश्च बहुभिर्वृतः । ९. अ–नास्ति ॥ १०. म $ल_1$–संपयन् प्लवतां । आ–संपश्य पवतां । ११ फ च रा प्र ब $ल_2$–सबलं परिपालयन् । १२. अ फ–दरीमुखः । च रा ब $ल_2$–दधीमुखः । १३. अ फ–प्रभंजश्च । प्र–प्रजंवश्च । १४. अ–जंभोयशरदः । च रा ब $ल_1$–जंघोथ स० । प्र–जंवोथ स० । १५. फ अ–सर्वतस्तं ययुर्वीरास्त्वरयन्तः प्लवंगमाः । म $ल_1$–नास्ति । १६. फ रा च ब म प्र $ल_1$ $ल_2$–३८-श ३९-श श्लोकौ व्यत्यासेन पठितौ । १७. आ–०गजो । १८. आ–०भावयन् ॥ १९. फ रा प्र ब $ल_1$ $ल_2$–समृद्धार्थौ समृद्धार्थाः ॥

महान्तीऽह निमित्तानि दिवि भूमौ च राघव ।
५१] शुभानि तव दृश्यन्ते प्रसन्नान्य् अर्थ-सिद्धये॥४२॥ [४६
अनु-वाति शिवो वायुः सेनाया वि-जयाऽऽवहः ।
५२] [1]पूर्ण-वल्गु-स्वरा हीऽमे प्र-वदन्ति मृग-द्विजाः ॥४३॥ [४७
प्रसन्नाश् च दिशः सर्वाः प्रसन्नश् च दिवा-करः ।
५३] उशनाश्[2] च प्रसन्नाऽर्चिर् वि-मलो भार्गवः स्थितः ॥४४॥[४८
तेजसा च प्र-दीप्यन्ते प्रवि-शुद्धा[3] महर्षयः ।
५४] अर्चिष्मन्तश् च सं-यान्ति[4] ध्रुवं सर्वे प्र-दक्षिणम् ॥४५॥[४९
त्रि-शंकुर् वि-मलो भाति राजर्षिः स-पुरोहितः ।
५५] पिता-महः पुरोऽस्माकं भवायँ तव[5](?वा)धि-ष्ठितः ॥४६॥ [५०
वि-मले ते[6] वि[7]-रोचेते वि-[7]शारदे निरुप-द्रवे ।
५६] नक्षत्र[8]-वरम् अस्माकम् इक्ष्वाकूणां महा-रथे[9] ॥[10]४७॥[५१
नैर्-ऋ[11]ऽत्यां निर्-ऋतानां [11]च नक्षत्रम् अप-र[12]ज्यते ।
५७] मूलं[13] मूल[14]-वता स्पृष्टं[15] दीप्यते धूम-केतुना ॥४८॥ [५२

---

१. आ–पूर्वं फल्गुस्वरा । फ–पूर्वं वल्गु० । च–पूर्वफल्गुन्युत्तराहीं । रा–पूर्वफल्गुन्युत्तरा मे । ब–पूर्वफाल्गुन्युत्तराही मे । प्र–पूर्वफाल्गुन्युत्तरा च । म–पूर्वफाल्गुन्युत्तराही । ल$_1$–पूर्वफाल्गुन्युत्तराभ्यां। ल$_2$–पूर्वफाल्गुन्युत्तराश्च ॥ २. आ–उशना च ॥ ३. च–प्रतिशुद्धा । प्र ब म ल$_1$ ल$_2$–अतिशुद्धा । ४. अ–सज्जन्ति ॥ ५. आ–तव भावाय धिष्ठतः । अ–तव भावाय धिष्ठितः ॥ ६. च रा प्र ब म अ–च । ल$_1$–न । ७. ल$_1$–विरोचन्ते विशालो । ८. आ–नक्षत्राणां वरोऽस्माकम् । म–निक्षत्रवरम् । ९. आ अ–महारथः । १०. प्र ब ल$_1$ ल$_2$–नास्ति ॥ ११. आ च प्र–नैऋते नि० । अ–नैर्ऋतानां च सर्वेषां । रा ब म–नैनृतं निनृतानां च । ल$_1$–नैनृतां निनृतानां च । ल$_2$–नैर्ऋते नैर्ऋतानां तु । १२. अ–उपयुज्यते । फ–अपि राजते । च प्र–अपराज्यते । रा–अपभुज्यते । १३. आ–मूले । १४. ल$_2$–मघवता । १५. फ–दृष्टं । च–मृष्टं ॥

सर्वथैषां[1] वि-नाशोऽयं राक्षसानाम् उप-स्थितः ।
५८] कालैः[2] काल-परीतानां नक्षत्रे[3](?त्र-) ग्रह-पीडिते[3](?तः)४९ [५३
प्रसन्नाः सु-रसाश्[4] चाऽपो वनानि फल-वन्ति च ।
५९] प्र-वात्य्[5] अभ्य्-अधिको गन्धैर्[5] वर्त्तन्ते पुष्पिता द्रुमाः ५० [५४
व्यू-ऊढानां[6] कपि-सैन्यानां[7] प्र-काशो[8] विप्र-काशते ।
६०] देवानाम्[9] इव सैन्यानां सं-ग्रामे तारका-मये ॥५१॥ [५५
एतद्[10] आश्चर्यम् ईक्ष्य[10] त्वं प्रीतो भवितुम् अर्हसि ।
६१] इति भ्रातरम् आ-श्वास्य[11] प्रणयाल्[11] लक्ष्मणोऽन्व्-अयात् । [५६
N] निमित्तानि[12] च संप्रेक्ष्य रामः प्र-मुदितोऽभवत् ॥५२॥ [N

इत्यार्षे[13] रामायणे[13] सुन्दर-काण्डे सेना-प्रकर्षो[14]
नामैकसप्ततितमः सर्गः ॥७१॥

——:o:——

१. अ–सर्वथैव विनाशाय । फ–०षां विनाशाय । २. च–त्राचः । म–कालका० । ल$_{1}$–घोरका० । आ फ अ–ततः । ३. अ–०त्रे ग्रहपीडितौ । फ–०त्रग्रह-पीडितः । ४. फ–विमलाश् । ल$_{1}$–सरसाश् । ५. आ–प्रवातोऽभ्यधिको गंधे । अ–प्रवाति विविधो गंधो । च रा प्र ब म ल$_{1}$–०धिको गंधो । ल$_{2}$–प्रवात्यभ्याधिकं गंधो ॥ ६. आ–व्यूहानी । च–व्यूहानां । ७. आ च ल$_{2}$–०सेनानां । ८. ल$_{2}$–प्रकाशैर्विप्रकाशतैः । ९. ल$_{2}$–दैवानाम ॥ १०. अ–एतदर्थं समीक्ष्य । फ–एतदार्यं समीक्ष्य ॥ ११. आ–आख्याय प्रणम्य । अ–आश्वास्य परया । १२. म–लक्षणानि । ल$_{1}$–लक्ष्मणानि ॥ १३. आ–आर्षे रामीयणे । ल$_{2}$–इति सुं० । १४. अ–निमित्तदर्शनं नाम । रा प्र म ल$_{1}$ ल$_{2}$–सेनाप्रकर्षणं नाम । ब–सेनापकर्षो नाम ॥

अथाऽऽवृत्य[1] महीं कृत्स्नां[2] जगाम महती चमूः ।
६२] ऋक्ष-वानर-सम्पूर्णा[3] नख-दंष्ट्रा-प्रहारिणी[4] ॥१॥ [५७
कराऽग्रैश् चरणाऽग्रैश् च वानरैर् उद्धतं रजः ।
६३] भीमम् अन्तर्-दधे लोकं नि-र्वार्य[5] सवितुः प्रभाम् ॥२॥ [५८
सा[6] स्म याति[6] दिवा-रात्रौ[7] महती हरि-वाहिनी ।
६९] प्र-हृष्टा[8] मुदिता सर्वा[9] सु-ग्रीवेणाऽभि-पालिता[10] ॥३॥ [७०
जवेन त्वरिता[11] यान्ति वानरा बल-दर्पिताः ।
६६] समा-निनीषवः[12] सीतां मुहूर्त्तं नाऽवसन्[13] क्वचित् ॥४॥ [७१
एवं ते हरि-शार्दूला गच्छन्तो बल-दर्पिताः ।
४५] पश्यन्ति[14] स्म गिरि-श्रेष्ठं[15] विन्ध्यं द्रुम-लताऽऽकुलम् ॥५॥ [N
७४स.] ततः पादप-संबाधं नाना-द्विज-लताऽऽकुलम्[16] ।[17]
१] विन्ध्यं[18] पर्वतम् आ-साद्य वानरांस्[19] ते समाऽरुहन् ॥६॥[20] [७२

---

१. अ—अपावृत्य । २. प्र ब रा म ल$_1$ल$_2$—सर्वां । ३. आ—०संपूर्णां । ४. आ—०णाम् ॥ ५. प्र—निर्वार्य ॥ ६. म—संप्रयातां । प्र—सा प्रयाति । रा ब—सा प्रयाता । ल$_1$ल$_2$—सा स्म यातां । ७. रा प्र ब म—०रात्रं । ८. फ—प्रहृष्टमु० । ९. आ—सर्वे । प्र—चैव । च—सर्वाः । फ—रम्या । १०. आ—०ताः । प्र—०तं । फ—०तां ॥ ११. च—त्वरितं । १२. ल$_1$—समानिनीक्षवः । फ अ—आनयिष्यामहे । १३. च प्र रा ब म फ अ—नाश्वसन् ॥ १४. आ ल$_2$—अपश्यन्त । फ—पश्यन्ति हि । १५. ल$_1$—पश्यन्ति स । ल$_2$—गिरिविंध्यं नानाद्रु० । ल$_1$—०श्रेष्ठं विंध्यद्रु० । प्र—गिरिं विंध्यं नानाद्रु० । अ—०श्रेष्ठं विद्युद्द्रुमलताकुलाम् ॥ १६. रा ल$_1$—०समाकुलम् । प्र म—०गणाकुलम् । १७. ब—नास्ति । १८. ल$_1$—विंध्यप० । फ—दिव्यप० । १९. ल$_1$—वानरस्तं समारुहं । फ—समारूढा प्लवंगमाः । २०. अ—नास्ति ॥

कान्नानि वि-चित्राणि नदीः[1] प्र-स्रवणानि च ।
२] पश्यन्न् अथ[2] ययौ रामो विन्ध्यस्य मलयस्य च[3] ॥७॥ [७३
चम्पकांस्[4] तिलकांश्[5] चूतान् अशोकान्[5] सिन्धु[6]-वारकान् ।
३] कर[7]-वीरांस् तिन्दुकांश् च भञ्जन्तश्[8] च प्लवं-गमाः ॥८॥ [७४
फलान्य्[9] अमृत-कल्पानि मूलानि सुरभीणि च ।
६पू] भक्षयन्तो महा-वेगाः प्र-ययुस् तत्र वानराः ॥९॥[10] [९०
७उ] द्रोण-मात्र-प्रमाणानि लम्बमानानि[11] वानराः ।[12]
ययुः[13] पिबन्तो मिष्टानि[13] मधूनि मधु-पिंगलाः ॥१०॥ [९१
८] पादपान् अव-भञ्जन्तो वि-कर्षन्तस् तथा लताः ।
वि-धमन्तो गिरि-वरान्[14] प्र-ययुर्[15] वानरर्षभाः ॥११॥ [९२
९] वृक्षाद्[16] एके तु नर्दन्तः[16] कपयो मद[17]-दर्पिताः ।[18]

---

१. आ-नदः । रा च ल$_1$ अ-नदी । २. आ च रा प्र ब म ल$_1$ ल$_2$ अ-अपि । ३. आ-वा ॥ ४. रा प्र ब म ल$_2$-चण्यकांस् । अ-चम्पकास् । ५. फ-तिलकाशोकान् पिप्पलान् । अ-तिलकाशोकान् पिप्पलीन् । आ-शोकात् । ६. आ च फ-सिन्दु० । ७. ल$_2$-तिन्दुकान्करवीरांश्च । म-तिमुकान्कुरवीरांश्च । फ अ-करवीरांस्तमालांश्च । ८. प्र रा ब ल$_1$-रुजान्ति स्म । म-रुहन्ति स्म । आ-व्रजान्ति स्म ॥ ९. ल$_1$-फलानि मृत० । १०. फ अ-नास्ति । अतः परमधिकः पाठः—फ रा ब म ल$_1$ ल$_2$ अ-पुष्पाण्यतिसुगन्धीनि मूलानि च फलानि च । बभंजुर्वानरास्तत्र पादपानां बलोत्कटाः ॥ ११. अ-बलमा० । १२. प्र-नास्ति । १३. अ-जग्मुः पिबन्तः संहृष्टा ॥ १४. रा प्र ब म ल$_1$ ल$_2$-०वरं । १५. अ-ययुस्ते प्लवगर्षभाः ॥ १६. ब ल$_2$-वृक्षानेके न मर्दन्तः । रा ल$_1$-वृक्षानेके नु मंदन्तः । म-वृक्षानेके नु मर्दन्तः । प्र-वृक्षानेके मर्दयन्तः । च-वृक्षानेके नु नर्दन्तः । १७. रा प्र ब म ल$_1$ ल$_2$-मधु० । १८. फ-वृक्षांश्चैके तु कपयो ननन्तो बलदर्पिताः । अ-वृक्षांश्चैके तूत्पतन्ति नदीभ्यो बालदर्पिताः । अतः परमधिकः पाठः—फ च रा ब म ल$_1$ ल$_2$ अ-वृक्षेभ्यो निपतंति स्म प्रलंवन्त्यपि चापरे ।

अन्य[1]स्मिन् नि-पतन्ति स्म प्ल[2]वमानाः प्लवं-गमाः ॥[3]१२॥[९३
१०] बभूव वसुधा तैस् तु सम्-पूर्णा मधु-पिंगलैः[4] ।
११पू] यथा क[5]लम-केदारैः पक्वाऽग्रैश् च वसुं[6]-धरा ॥[7]१३॥ [९४
१३उ] स विन्ध्यं गिरिम् आ-साद्य मलयं च महा-गिरिम् । [९७पू
N] वनानि चाऽद्य्[8] अति-क्रम्य नदीश् च विमलोदकाः॥१४॥ [N
१४पू] आ-ससादाऽऽनुपूर्[9]व्येण समुद्रं भीम-निस्वनम्[10] । [९७उ
N] अनिलोद्[11]धूतम् आ[12]काशं प्र-चलि[13]तम् इवोर्मिभिः ॥१५॥ [N
११उ] महेन्द्र[14]म् अथ सम्[14]प्राऽऽप्तो रामो राजीव-लोचनः ।
अध्याऽरोहन् महा-बाहुः शिख[15]राऽग्रं सु-पुष्पितम् ॥१६॥[९५
१२] स त[16]च् छिखरम् आ-सा[16]द्य रा[17]मो दशरथाऽऽत्म-ज[17]ः ।
१३पू] कूर्म-मीन-झषाऽऽकीर्णम् अपश्यत् सलिलाऽऽक[18]रम्॥१७॥[९६
१४उ] अव-रु[19]ह्य त[20]तश् चा[20]ऽऽशु वेला-वनम् उपाऽग[21]मत् ।
रामो रमयतां श्रेष्ठः सु-ग्रीव[22]श् च स-ल[22]क्ष्मणः॥१८॥[23][९८
१५] अथ धौतोपल-शि[24]लां तोयौघैः सहसाऽऽ[25]वृताम् ।

---

१. प्र म ल$_2$–अन्ये च । २. आ–प्रवेपमानाः । ३. फ रा ब ल$_1$ अ–नास्ति ॥ ४. अ–०ले । ५. ब–कालम० । ६. ब म ल$_2$–वसुन्धराः । ७. अ–यथा शरार्पिकेदारैरपि पक्वैः समावृताः ॥ ८. अ–चानितिक्रम्य ॥ ९. अ–०पूर्वेण । १०. अ–०दर्शनम् । ११. प्र रा ब म अ–०द्भूतम् । १२. प्र ब रा म–आकाशे । १३. आ–अवस्थितम् । अ–प्रचलंतम् । रा प्र ब म–व्यवस्थितम् ॥ १४. अ–महेन्द्रं प्रथमं प्राप्तो । फ च रा प्र ब म ल$_1$ ल$_2$–अथ संप्राप्य । १५. अ–शिखिराग्रं ॥ १६. फ अ–तं शिखरमारुह्य । १७. अ–रामः सुग्रीवमब्रवीत् । १८. अ–कूर्ममीनसमाकीर्णं सपश्यत् सलिलाशयं ॥ १९. रा ब म ल$_1$–०तीर्य । २०. आ ब म रा प्र ल$_1$ ल$_2$–जगामाशु । २१. रा प्र ब म ल$_1$ ल$_2$–अनुत्तमम् । २२. फ–सुग्रीवः सहलक्ष्मणः । २३. अ–नास्ति ॥ २४. ल$_1$–०शिलं । २५. फ–सहसोद्धताम् । ल$_1$–सहसा वृतम् ।

वेलाम् आ-साद्य वि-पुलां रामो वचनम् अब्रवीत्॥१९॥[2] [९९
१६] एते वयम् अनुप्राऽऽप्ताः सु-ग्रीव वरुणाऽऽलयम् ।
सं-तारश् चिन्त्यताम् अत्र पूर्वं यः प्रसम्-अर्थितः॥२०॥[2] [१००
१७] अतः परम् अ-गाधोऽयं सागरः सरितां पतिः । [१०१पू
सम्प्राऽऽप्तो मन्त्र-कालो नः सागरस्याऽथ लंघने॥२१[१०४उ
N] इहेदानीं वि-चिन्त्यो हि नयः पूर्वं समा-हितैः । [N
न चाऽयम् अन्-उपायेन शक्यस् तर्त्तुं कथश्चन ॥२२॥[१०१उ
१८] तद् इहैव समा-विश्य मन्त्रः सं-चिन्त्यतां सखे ।
१९पू] यथेदं वानर-बलं पा(?प)रं पारम् अवाऽऽप्नुयात्२३॥[१०२
स्वां स्वां सेनाम् अति-क्रम्य मां च केचित् कथश्चन ।[13]
N] गच्छन्तु वानराः स्वैरं ज्ञेयं छन्नं भयं हि नः ॥२४॥[१०५
१९उ] इत्य्-एवं स महा-बाहुः सीता-हरण-कर्षितः ।
२०पू] रामः सागरम् आ-साद्य वासम् आ-ज्ञापयत् तदा ॥२५॥[१०३
२२उ] रामस्य वचनं श्रुत्वा सु-ग्रीवः सह-लक्ष्मणः ।[18]

---

१. फ–रामः सुग्रीवम् । २. अ–नास्ति ॥ ३. फ–लवणोदधिम् । ४. आ–संभारश् । ५. आ–देवैर्यो मथितः पुरा । ल$_1$–पूर्वं यः प्रसमुत्थितः ॥ ६. आ–परमयात्रायां । अ–परमपारोयं । ७. प्र ब रा म ल$_2$–सागरस्य च लंघने । आ–सागरस्याद्य वंधने । फ च–सागरस्यावलंघने । अ–०थ लंघनो ॥ ८. प्र–एहि धानी ॥ ९. फ–समादिश्य । १०. अ–संमन्त्र्यतां ॥ ११. अ–सेनां समुत्सृज्य । १२. अ–मां । १३ आ–'तादिहैव' इत्यारभ्य 'कथञ्चन' इत्यन्तः पाठो नास्ति । १४. प्र ल$_2$–सर्वे वासार्थं सुसमाहिताः । रा ब म ल$_1$–स्वैरं वासार्थं सुसमाहिताः । च–स्वैरं ज्ञेयं छन्नं भयं हरिः । अ–शूरा ज्ञेयं छिन्नं भयं हि नः ॥ १५. आ–०कर्शितः । १६. च रा प्र ब म ल$_1$ ल$_2$–आज्ञापयच्च सः ॥ १७. रा ब म ल$_1$ ल$_2$–ससुग्रीवाः सलक्ष्मणाः । १८. अतः परमधिकः पाठः—फ प्र च रा ब म ल$_1$ ल$_2$ अ–भीमगंभीरनिर्घोषाः† प्राज्यसत्त्वा महाबलाः‡ ।

---

†अ–भीमं गंभीर० । च रा ब म–भीमनिर्घोषगंभीराः । ‡अ–प्राज्ञसत्वां महाभयं ॥

स-सैन्यकोऽ[1]वसत् तीरे दक्षिणस्य[2] महोदधेः ॥२६॥ [१०६
२३] वि-रराज समीप-स्थं सागरस्य बलं[3] च तत् ।
साधु-वीर[4]-जलः श्रीमान् द्वितीय इव सागरः[5] ॥२७॥ [१०७
२४] वेला-वनम्[6] उपाऽऽगम्य ततस् ते हरि-पुंगवाः ।
२५पू] विनि-विष्टाः परं पारं कांक्षमाणा महोदधेः ॥२८॥ [१०८

इत्यार्षे[7] रामायणे सुन्दर-काण्डे समुद्र-तीर[8]-निवासो नाम द्वासप्ततितमः सर्गः[9] ॥७२॥

---

१. च रा प्र ब म ल$_2$—सा सेना न्यवसत् । फ—सेना सा न्यवसत् । अ—सेनां स न्यवसत् । २. आ—सागरस्य द्रुमायुधः । अ—दक्षिणस्यां महोदधे ॥ ३. रा ब म ल$_1$—बलं महत् । फ अ—तु तद्बलम् । ४. च प्र म ल$_2$ रा ब ल$_1$—मधुपांडुजलः श्रीमान् । आ—०वीर जलं श्रीमद् । अ—मधुपांडु ततः । ५. रा ब ल$_1$—भास्करः ॥ ६. अ—०वलम् ॥ ७. ल$_2$—इति सु० । ८. अ—समुद्रतीराभिगमनं । ९. फ—सर्गसमाप्तिर्न दृश्यते ॥

२६उ] सा महाऽर्णवम् आ-साद्य तस्थौ वै[1] हरि-वाहिनी ।
वात-वेग-समुद्धूतं प्रेक्ष्य(?क्ष)माणा[2] महोदधिम् ॥१॥ [१११
२७] दूर-पारम् अ-संबाधं यादो-गण-निषेवितम् ।
आ-साद्य वरुणाऽऽवासं नि[3]-षेदुर् हरि-यूथ[3]-पाः॥[4]२॥ [११२
२८] चलन्[5]-मीन[5]-ग्रहं घोरं महा-नागा[6]ऽसुर-क्षयम् ।
चन्द्रोदय-सं[7]मुद्-भूतं वियद्-बिम्बम् इवाऽपरम् ॥३॥ [N
N] चन्द्र-पाद-महा[8]-जालं नक्र-मीन-विलालितम्[9] । [N
भीम-भोगै[10]ः समा-कीर्णं भुजंगै[11]र् मणि-भूषणै[11]ः ॥४॥
३०] अवगाढ-महाशैलं[12] नदी-नद-शताऽऽकुलम्[13] ।
दुर्गं दुर्गम-मार्गं[14] तम्[14] अ-गाधं[15] वरुणाऽऽलयम् ॥५॥ [११५
३१] मकरैर् नाग-भोगैश् च पिनद्धै[16]र् इव ताडितैः[17] ।
उत्-पत्य[18] नि-पतद्भिश् च[18] प्र-वृत्तं[19] जल-राशिभिः ॥६॥ [११६

१. रा प्र ब म ल₁ अ–वानरवा० । फ–च हरि० । २. म–प्रेषमाणा ॥ ३. रा ब ल₂–विषेदुर्वानरर्षभाः । म–निषेदुर्वानरर्षभाः । च–०वासम् इषे-दुर्ह० । ४. फ–नास्ति ॥ ५. च रा प्र ब म–चञ्चन्मीन० । अ-चलन्मील० । ६. ल₁–०नागस्वरक्षयम् । अ–०नागसुर० । ७. फ–०समुद्धूतं ॥ ८. अ–चन्द्रपालमहापालं । ९. च प्र ब म ल₁ ल₂ अ–०विलोडितम् । फ–०विक्लोलितम् । रा–०विलाडितम् । १०. ब–०वेगैः । ११. म–भोगिभिर्म० । प्र–भुजंगमणिभूषितैः । रा–भोगिभिर्मणिभूषितैः । ब–०भूषितैः । अ–०भूषितम् ॥ १२. अ–०शैलैर् । १३. रा प्र ब म ल₁–०शतावृतम् । १४. ल₁–दुर्गममत्यन्तम् । रा–दुर्गसमाचारम् । च–दुर्गममगन्तम् । अ–दुर्गममग्रन्तम् । १५. च–अगाधैर् । ल₁–अपारं । १६. च रा प्र ब म ल₁–विरूढैर् । फ–विहंगैर् । अ–विनदैर् । १७. अ–ताडितं । १८. अ–उत्पतद्भिः निपतद्भिः । १९. रा प्र ब म ल₁–प्रवृद्धैर्जलचारिभिः । फ–प्रनृत्यन् ज० । अ–प्रवृद्धं ज० । च–प्रवृद्धजल० ॥

३२] अग्नेश्[1] चक्रम् इवाऽऽविद्धं [2]भासुरं सु-मनो-हरम् ।
सुराणां नि-लयं भीमं [3]पातालं वि-षमं तदा[4] ॥७॥ [१.१७
३३] अम्बरं सागर-प्रख्यं सागरश्[5] चाऽम्बरोपमः ।
सागरश्[6] चाऽम्बरं [7]चोभौ निर्वि[8]-शेषं बभूवतुः ॥८॥ [१.१८
३४] सं-पृक्तं नभसा[9] ह्य् अम्भः सं-पृक्तं च नभोऽम्भसा ।
तुल्य-रूपे स्म दृश्येते नाना-रूप-समाकुले ॥९॥ [१.१९
३५] समुत्पतित-तोयस्य[10] मेघ-जालाऽऽकुलस्य च ।
विशेषो नोभयोर्[11] आसीत् सागरस्याऽम्बरस्य च ॥१०॥ [१.२०
३६] अन्योऽन्यैर्[12] आ-हतास्[12] तत्र स-स्वनुर्[13] भीम-विक्रमाः[14] ।
अम्बु-वेगाः[15] समुद्रस्य महा-भेर्य इवाऽऽहताः[16] ॥११॥[17] [१.२१
३७] रत्नौघ-जल-संमिश्रं वि-भक्तम् इव वायुना ।[17]
उत्-पतन्तम्[18] इवाऽऽकाशे [19]रत्नौघ-शत-संकुलम् ॥१२॥ [१.२२
३८] ददृशुस् ते महा-नादं वाताऽऽहतं[20]-समाकुलम् ।[21] [१२३उ

१. आ—अग्नेः पूर्वम्। प्र—०श्चक्रम् इवावद्धं। अ—अग्नेः चक्रमिवानद्धं। २. अ ल₂—भास्करं। ३. आ—पारातः। अ—पाताले। ४. रा प्र ब म ल₁ ल₂—यथा॥ ५. आ—सागरं चाम्बरोपमम्। ल₁ ल₂—सागरं चा०। ६. फ च अ—सागरं। ७. प्र ब रा फ च ल₂—चोभे। ८. रा च फ म ल₁ ल₂—निर्विशेषे। ९. ल₁—नभसांभाश्च। रा ब—नभसांभश्च। अ—नभसा ह्यश्च॥ १०. अ—समुद्धतजलौघस्य। ११. ल₁ अ—न तयोर्॥ १२. ल₁—अन्योन्यैः साहसास्। प्र—अन्योन्येनाहतस्। रा ब—अन्योन्येनाहतस्। फ—अन्योन्यैराहतस्। १३. ब ल₁—संवरुर्। रा म—प्रस्वरुर्। प्र—संभरुर्। १४. ल₁—०विक्रमः। फ—०निस्वनाः। १५. प्र—०वेगः। १६. प्र—इवाहतः। १७. अ—नास्ति। १८. च—उत्पततमिवाकाशे। आ—उत्पतन्त इवाकाशे। १९. अ— रत्नौघशत०॥ २०. म ब रा ल₂—वाताहतिस०। २१. फ—नास्ति।

३९उ] भ्रान्तोर्मि-सलिलाऽऽवर्त्तं नीलं[1]-मीन-महोरगम्॥१३ [१.२४उ

इत्यार्षे[2] रामायणे सुन्दर-काण्डे समुद्र-दर्शनो[3]
नाम त्रिसप्ततितमः सर्गः ॥[4]७३॥

---

१. प्र—नीलमेघ०॥ २. आ—आर्षेय । ल$_2$—इति सुं०। ३. फ च ब म ल$_1$—
-०दर्शनं । प्र अ—समुद्रवर्णनं । ४. रा—इत्यार्षे समुद्रदर्शनं नाम सर्गः ॥

सा तु नीलेन विधि-वद् रक्षिता सुसमा-हिता ।
१] सागरस्योत्तरे तीरे[1] रेजे[2] सेना नि[3]-वेशिता ॥१॥ [१
मैन्दश् च द्वि-विदश्[4] चैव तत्र वानर-पुंगवौ[5] ।
२] ररक्षतुस् तौ महतीं सेनां तां सर्वतो-दिशम् ॥२॥ [२
नि-विष्टायां तु[6] सेनायां तीरे नद-नदी-पतेः[7] ।
३] पार्श्व-स्थं लक्ष्मणं दृष्ट्वा रामो वचनम् अब्रवीत् ॥३॥ [३
शोकस् तु खलु[9] कालेन गच्छता किल[8] शाम्यति ।
४] मम चाऽपश्यतः कान्ताम् अहन्य्-अहनि वर्द्धते ॥४॥ [४
न मे दुःखं प्रिया दूरे न मे दुःखं[10] हृतेति सा ।
५] एतद्[11] एवाऽनु-शोचामि वयस् तत्राऽति[12]-वर्तते ॥५॥ [५
वाहि[13] वात[14] यतः कान्ता तां स्पृष्ट्वा माम् अपि स्पृश[15] । [६पू
८] वह[16] एतत्[17] कामयानस्य शक्यम् एव न[18] जीवितुम् ॥६॥ [१०पू
तेन मे[18] दहति गात्राणि विषं पीतम् इवाऽऽतपे ।
९] महा-सत्त्वेति येन्[19] मां सा ह्रियं[20]-माणा वचोऽब्रवीत् ॥७॥ [७

---

१. आ रा—भागे । २. अ—येन । ३. रा—विशेषिता ॥ ४. रा व द्विविधश् । ल२—द्विवधश् । ५. अ रा ल२—पुंगवं ॥ ६. फ—च । ७. अ—०पते ॥ ८. रा व प्र ल२—किल । ९. रा व—खलु ॥ १०. ल२—प्रयेति । ११. अ—एतद्देवा० । च—एतदवा० । १२. आ अ—तस्याति० । च—तस्यापि व० ॥ १३. फ—वह मां ? । च रा ल२—वाहि । १४. रा—वाति । ल२—वाह । १५. अ—स्मरन् । १६. फ—वक्षे तत् । १७. आ—शक्यते तेन । च रा प्र व ल२—शक्यमेवेन । १८. आ—दवो । १९. ल२—मां यत् । २०. अ—ह्रियन्ती वाक्यमब्रवीत् ॥

तद्-वियोग-समुत्थेन तच्-चिन्ता-ज्वलनेन च[1] ।
६] रात्रौ[2] दिवा[2] शरीरं मे दह्यते मदना[3]ऽग्निना ॥८॥ [८
अव-गाह्या[4]ऽर्णवं स्वप्स्ये सौमित्रेऽव[5]-हितो भव[5] ।
७] कथञ्चित् प्र-[6]ज्वलन् कामो न[7] मां सुप्तं[8] जले[8] दहेत्[9] ॥९॥ [९
बहु एतत् कामयानस्य नैतद् अल्पं वि-जानतः ।
१०] यद्[10] अहं सा च वामोरूर् एकां धरणिम्[11] आ-श्रितौ ॥१०॥ [१०
केदार[12]स्येव केदारः[12] सोदक[13]स्येव निर्-जलः[13] ।
११] उप[14]-स्वेदेन जीवामि जीवन्तीं[15] यच् छृणोमि ताम्[15] ॥११॥ [११
कदा नु खलु वैदेहीं[16] शत-पत्र-निभा[16]ऽऽननाम् ।
१५] वि-जित्य शत्रून्[17] द्रक्ष्यामि सीतां स्फीताम् इव श्रियम् ॥१२॥ [१२
कदा शोकम् इमं घोरं मैथिली-विप्रयोग-जम् ।
१६] सहसा विप्र-मोक्ष्यामि वासः शुक्ले[18]तरं यथा ॥१३॥[19] [२१
कदा नु चारु-दन्तौष्ठं तस्याः पद्म-निभं मुखम् ।[20]
१२] ईषद् उन्-नाम्य[21] पास्यामि[21] रसायनम्[22] इवोत्तमम्[23] ॥१४॥ [१३
तौ तस्याः[24] सं-हतौ पीनौ स्तनौ ताल-फलोपमौ ।

---

१. फ अ—०विपुलार्च्चिषा । ब प्र रा ल$_2$—०ज्वलितेन च । २. प्र ब रा ल$_2$—दिवारात्रं । ३. आ—बहुधाग्निना ॥ ४. ल$_2$—अवगाह्यांवरं । ५. अ—सौमित्रे हि तया विना । ६. आ च रा—प्रज्वलेत् । अ—प्रह्वलेत् । फ—प्रज्वलत् । ७. आ फ अ—स । च—तं । ८. आ—यदा हरेत् ॥ ९. फ—०ता । १०. आ—तद् । ११. फ—तरणिम् ॥ १२. अ—केदारस्य च । फ—केदारस्व च केदारं । १३. फ—सोदकस्य निरूदकम् । अ—०व निर्जलं । रा—०वं निर्जले । १४. रा प्र ल$_2$—तप० । १५. रा ल$_2$ अ—जीवंती तां श्रृणोमि यत् । प्र—जीवंती तां श्रृणोमि तत् ॥ १६. अ—सुश्रोणीं… चन्द्रनिभा० । फ—सुश्रोणीं पूर्णचन्द्रनि० । १७. फ च रा ल$_2$ अ—शत्रुं ॥ १८. रा—०तरो । १९. फ अ—अयं श्लोको व्यत्यासेन २०-श श्लोकात्परं पठितचरः द्र० । २०. अ—कदा त्वहं सुदन्तौष्ठं मुखं पद्मनिभेक्षणम् । २१. अ—उन्नामयिष्यामि । २२. च—०यणम् । २३. रा—०त्तरम् ॥ २४. आ—चास्याः ।

N] कदा नु खलु सोत्-कम्पौ[1] हसन्त्या मे भविष्यतः ॥१५॥ [१.४
१.३पू] सा नूनम् अ-सिताऽपांऽगी राक्षसी-मध्यम् आ-स्थिता[2] । [१९पू
१४] वि-धूय जल-दांस् तूर्णं शशि-लेखेव निर्-मला ॥[3] १६॥ [१७उ
स्वभाव[4]-तनुर् अत्य्-अर्थं[4] शोकेनाऽन्न[5]-अशनेन तु[6] ।
१७] भूयस् तनु-तरा जाता मद्-भाग्यस्य[7] वि-पर्ययात् ॥१७॥ [१८
सा[8] प्रकृत्यैव[8] तन्व्-अंगी मद्-वि-योगेन[9] कर्षिता ।
N] अन्-अभ्यसन-शीलस्य विद्येव तनुतां गता ॥१८॥ [N
कदा नु[10] राक्षसेन्द्रस्य नि-धायोरसि[11] सायकान्[12] ।
१८] सीतां प्रत्या-हरिष्यामि[13] वि-शोकः[14] शोक-नाशिनीम् ॥१९॥ [१९
कदा नु[15] खलु मां[16] सीतां[17] मम[17] सर्वाऽङ्ग-शोभना ।
N] सोत्-कण्ठं कण्ठम् आ-लम्ब्य मोक्ष्यत्य्[18] आनन्द-जं जलम् [२०[19]
एवं वि-लपमानस्य[20] राघवस्य[21] महाऽऽत्मनः[21] ।

---

१. प्र रा ब ल२—सोत्कण्ठौ ॥ २. अ—कदा विधूय रक्षौघां सा वधूरुत्पतिष्यति । फ—कदा विधूय रक्षांसि सा वधूरुत्पतिष्यति । अतः परमधिकः पाठः—च रा प्र ब ल२—मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति । कदा विधूय रक्षौघान् सा वधूरापतिष्यति । ३. अ—विधूय जलदं नीलं शशिलेखा यथांबरे । फ—विधूय च जलं नीलं शशिलेखेव जानकी ॥ ४. फ अ—स्वभावेन तनुर्नूनं । रा—सुभाव० । प्र—स्वभावतो विरत्यर्थं । ५. आ—शकेशानयनेन । ६. फ च रा प्र ल२ अ—च ॥ ७. फ रा प्र अ—मम भाग्यवि० ॥ ८. फ—प्राप्तकृच्छ्रा च । अ—प्रकृत्येव । ९. फ—वियोगाच्च ॥ १०. आ—तु । ११. अ—विधा० । १२. रा प्र ल२—सायकम् । १३. अ—प्रत्यानयिष्यामि । १४. अ प्र ल२—विशोकां ॥ १५. फ—तु । १६. फ—मे । प्र ल२—सा । १७. फ—साध्वी सीता । १८. फ अ—सोत्कंठोत्कंठमालिंग्य मोक्षत्य् । च प्र ल२—सोत्कंठा कं० । १९. अतः परमधिकः पाठः—अ फ—सा नूनमसितापांगी राक्षसीमध्यगा शुभा । अनाथा नाथहीनेव त्रातारं नाधिगच्छति । २०. अ—विलपतस्तस्य । च—०माणस्य । २१. अ—रामस्याशुभमात्मनः । फ—रामस्य विदितात्मनः ।

१९] दिन-क्षयान् मन्द-वपुर् भास्करोऽस्तम् उपाऽऽगतः[1] ॥२१॥ [२२

इति स वनितया विना-कृतः[2][3]
सुर-पति-तुल्य-वपुर् नरेश्वरः ।
लवण-जलम्[4] उद्-ईक्ष्य दुस्[5]-तरं
N] जनक-नरेन्द्र-सुताम् अशोचत ॥२२॥ [N

[6]इत्यार्षे रामा[6]यणे सुन्दर-काण्डे [7]राम-विलापो
[7]नाम चतुःसप्ततितमः स[8]र्गः ॥[8]७४॥

---

१. फ अ–उपागमत् । रा–उपाययौ ॥ २. अ–विनाक्षसः सत् । ३. फ–इति स विनयतया निराकृतः । ४. अ–लवणसमुद्रम् । ५. फ–दुस्तरं च ॥ ६. $ल_2$–इति सु० । ७. आ–रामविलापे समुद्रतीरगमनो नाम । च रा प्र $ल_2$–समुद्रतीरगमनं नाम । ८. च प्र $ल_2$–समाप्तमुद्योगपर्व दिग्विजयश्च ॥

हनूमतस् ततः[1] कर्म घोरं[2] श्रुत्वा[2] भयाऽऽवहम् ।
N] दग्धां च नगरीं दृष्ट्वा[3] साऽट्ट-प्राकार-तोरणाम् ॥१॥
ततः परम-दुःखाऽऽर्ता जननी रक्षसां पतेः ।
२] सुतं विदित-तत्त्वाऽर्थम्[4] इत्य्[4] उवाच विभीषणम् ॥२॥
नष्टान्[5] दारान् मृगयता प्रेषितो हनुमान् इह ।
३] रामेण[6] विनर्थ[6]-ज्ञेन सा च दृष्टा विभीषण ॥३॥[7]
पुत्र राक्षस-राजस्य महान्[8] चैवम्[8] उप-प्लवैः[9] ।
४] विदितस् ते महा-प्राज्ञ[10] यथा भवितुम् अर्हति ॥४॥
५पू] अ-धर्मेण[11] हि धर्म-ज्ञ भुज्य-मानं सुखं[12] सदा[12] ।
N] नाशयत्य् आशु तत्[13] पापम् अ-धर्मो विदितस् ततः[14] ।[15]
५उ] आ-हरत्य् आपदं घोराम्[16] असुहृत्-प्रीति-वर्द्धनीम्[16] ॥[17]५॥
तद् इदं गर्हितं कर्म कृतं भ्रात्रा तवाऽनघ ।
६] न प्रीणयति मां[18] भुक्तम्[18] अ-पथ्यम् इव भोजनम् ॥६॥

---

१. अ फ–तु तत् । २. अ–श्रुत्वा घोरं । फ–श्रुत्वा कर्णभ० । ३. अ–लंकां सा०। फ–ज्ञात्वा सा० आ–दृष्ट्वा सादि०॥ ४. फ च रा अ–विदितवृत्तान्तमि० । प्र ल$_2$–विदितवृत्तान्तं प्रत्युवाच ॥ ५. रा–नष्टा दारान् । प्र–नष्टान्सुरान् । आ–दृष्टान्दारान् । ६. च रा प्र ल$_1$–रामेणाविदितज्ञेन । ७. अ–नास्ति॥ ८. फ च रा प्र ल$_3$ अ–महानयम् । ९. रा प्र ल$_1$–उपप्लवः । १०. फ च रा प्र ल$_2$ अ–महाप्राज्ञ ॥ ११. अ–अधर्मेन । १२. अ फ च रा प्र ल$_2$–महत् । १३. आ–सं । १४. आ–ततः । १५. फ च अ–नास्ति ॥ १६. अ–घोरं सुहृत्प्रीतिविवर्द्धनी । १७. प्र–नास्ति । च रा ब म ल$_1$ ल$_2$–श्लोकोऽयं पूर्वार्धपरार्धव्यत्यासेन पठितः । अतःपरमधिकः पाठः–च रा ब ल$^1$ म ल$_2$–रामेण हि † सधर्मेण भुज्यमानं सुखं सदा । १८. अ–सुव्यक्तम् ।

---

† रा ल$_2$–तु ।

न हि सीतां[1] हृतां ज्ञात्वा धर्म[2]-शास्त्राऽर्थ-कोविदः ।
७] न करिष्यति धर्माऽऽत्मा रामः सदृशम् आत्मनः ।
N] न हि सत्य-व्रतश्[3] चाऽस्य मृधे शक्रो[4]ऽपि मोक्ष्यते ॥[5]७॥
स हि सत्य-व्रतश् चैव दिव्ये[6] चाऽस्त्र[7]-बले स्थितः ।
८] गृहीत-चापः सं[8]-क्रुद्धः शोषयेद्[9] अपि सागरम् ॥८॥
ये[10] च युद्धे पुरा तेन हत-शेषा निशा-चराः ।
९] इह प्राऽऽप्ताः [11]परि-त्रस्तास् तद्-वीर्य-हत-पौरुषाः ॥[12]९॥
दुर्-विषह्यं[13] दुरा-धर्षं क्रुद्धस्य शर-दुर्दिनम् ।
१०] तस्य वीरस्य विस्तीर्णं वर्णयन्ति निशा-चराः[14] ॥१०॥
चतुर्दश-सहस्राणि रक्षसां क्रूर-कर्म्मणाम् ।
११] को नु[15] मर्त्यस् तदा हन्याद् एकः[16] परम-संयुगे ॥११॥
नूनं[17] चरति लोकेऽस्मिन् स कालो दुरति-क्रमः[18] ।
१२] तादृशं न हि मर्त्येषु[19] वीर्यम् अस्ति सुरेष्व् अपि ॥१२॥
खरस्यैव[20] वधान् मन्ये मारीचस्य[21] वधाद् अपि ।

---

१. अ—सीता । २. अ—स शस्त्रगतिकोविदः । फ—सर्वास्त्रविधिकोविदः । ३. रा—सत्यवतः काश्चिन् । ४. च रा—शक्तोपि । ५. फ अ—नास्ति ॥ ६. अ—दिव्य । ७. आ—चास्त्रवले तु यः । अ—चास्त्रे वले । रा—चापेवलस्थितः । ८. च—स क्रुद्धः । ९. आ—शोषयेत्तु स । १०. आ—याहि युद्धेषु रामेण हतशोषाः । फ—ये हि युद्धेष रामेण हतशेषाः । च प्र ल$_2$—ये हि युद्धेषु रामेण । रा—ये हि युद्धेषु रामेण हतयोषाः । ११. अ—भयत्रस्ता । १२. च रा प्र ल$_2$—नास्ति । १३. अ—दुर्विगाहं । फ—दुर्विगाधं । १४. अ—निशाचरं । १५. प्र—न । १६. अ—ऐको रामाद्धि संयुगे । १७. रा—एवं । १८. फ—लोकांस्त्रीन्स कालो नरविग्रहः । १९. अ—देवेषु गन्धर्वेष्वमरेषु च । फ—देवेषु वीर्यमस्त्यसुरेषु वा । च रा प्र ल$_2$—देवेषु वीर्यमस्त्यसुरेष्वपि । २०. फ प्र ल$_2$—खरस्य च । २१. फ—मारीचनिधनादपि ।

१३] न राम-सदृशो ह्य्[1] अस्ति निशाचर-गणेष्व्[2] अपि ॥१३॥[3]

तम्[4] एवं गुण-सम्पन्नं मत्वा[5] दशरथाऽऽत्म-जम् ।

१४] न शान्तिम्[6] उप-गच्छामि भयात् प्र-व्यथितेन्द्रिया ॥१४॥

तद् यथा प्राऽऽप्त-कालं ते[7] वीर न व्यति-वर्त्तते ।

१५] तथाऽऽचर विशालाऽक्ष बुद्ध्या परम-सूक्ष्मया ॥१५॥

हितं वचनम् आ-यत्यां तदात्वे च[10] महोदयम् ।

१६] श्रावयाऽद्यैव वाक्यां[11]ऽर्थं रावणं यदि शं[12]क्यते ॥१६॥

इदम्[13] उद्भ्रान्त-हृदयं[13] धर्माच्च चलित-मानसम् ।

१७] न ह्य् एनं[14] पतिताऽऽत्मा[14]नम् उत्सहे ह्य्[15] अनु-शंसितुम् १७॥

सीतां निर्-यातयस्वेति वचनं वदतां वर ।

१८] पौलस्त्यः श्रा[16]व्यतां शीघ्रम् एतत्[17] तु विदितं भवेत् ॥१८॥

कर्मभिर् दा[18]रुणैः श्रा[19]न्तं [20]हतं मन्मथ-निद्रया[20] ।

१९] धर्म-वाक्याऽनिलैः [21]शीतैर् बा[21]लिशं प्रति-बोधय[22] ॥१९॥

---

१. अ—०शोऽस्तीह । फ—०शोऽस्तीति । २. फ—०गणेषु वै । ३. रा—नास्ति । ४. फ—तदेवं । रा—तमेव । ५. अ—रामं । ६. प्र ल$_2$—अधिगच्छामि ॥ ७. अ—तथाद्य प्राप्तिकालान्ते । आ—तद्यथा प्राप्य कालन्ते । ८. फ—च न । रा प्र ल$_2$—कुरु । ९. रा—०सूचया । १०. अ—आयुष्यं तदात्वैव । फ—आयत्यां कटुकं च । रा—आयत्यं तदात्वं च । ल$_2$—आयत्ये तथात्वेव । ११. फ—वाक्यज्ञं । १२. फ च रा—शक्यसे ॥ १३. अ—क्रूरमुद्भ्रांत० । फ—अहं सुभ्रांत० । १४. अ—नह्येनमजितात्मानम् । फ—न ह्येनमकृतात्मानम् । प्र च रा ल$_2$—नह्येतं । १५. अ—जातु शा० । १६. आ—श्लाघ्यतां । १७. अ च—एतदद्य हितं । फ—एतदेव हितं । रा प्र ल$_2$—एतदंते हितं । १८. प्र—दारुणं । १९. अ—शान्तैर् । फ—श्रान्त० । ल$_2$-श्रोतुं । २०. अ—हतमज्ञानमिन्द्रियं । फ—हतमज्ञाननिद्रया । रा ल$_2$—मन्मथनिंद्रया । प्र—मन्मथनिर्दयं २१. अ—शीतैर्बालिशं । फ—शान्तैर्बालिशं । २२. प्र—प्रतिरोधय ॥

अस्मिन् रक्षो-गणाऽऽकीर्णे दारुणे पाप-कर्मणि[1] ।
२०] त्वम् एव भ्राजसे कीर्त्त्या घनैर् मुक्त इवांऽशुमान् ॥२०॥
त्वया हि[2] एकेन सर्वोऽयम्[3] अधर्म-प्रस्थितो[3] जनः ।
२१] धार्यते[4] न्याय-वृत्तेन वेलयैव[5] महोदधिः[6] ॥२१॥
यथा त्व् अ-धर्मेण[7] हि[8] नैव युज्यते[9]
यथा न कीर्त्त्या परया वि-युज्यते[10] ।
तथा तथा स्वार्थ-हितं नु दर्शयन्[11]
२२] यथा न[12] मृत्योर् वशम् एति[12] सर्व-शः[13] ॥२२॥
यतस्[14]-ततो मद-सुरभिर्[15] द्रवन् यथा
नि-वार्यते[16] परम[17]-शितैर् महाऽङ्कुशैः ।
महा-द्विपो रजनि-चराऽधिपस् तथा
२३] नि-वार्यतां हित-वचनाऽङ्कुशैस्[18] त्वया[19] ॥२३॥
अथैवम्[19] उक्तश् चरणौ नि-पत्य[20] तौ
सुतो[21] जनन्या वि-षमे[22] विभीषणः[22] ।

---

१ अ—०गणावासो दारुणोपायसंकुले । फ—०गणावासे दारुणे रोम-हर्षणे । २. अ—त्वयादिना न । ३. रा—सर्वत्रमधर्मप्रस्थितो । अ—सर्वोय-मधर्मे संस्थितो । ४. फ—वार्यते । ५. रा—वेल एव । ६. अ—महोदधिं । फ—महोदधेः ॥ ७. अ—स्वधर्मेन । ८. फ—च । ९. आ—युज्यसे । फ अ-गृह्यते । १०. आ—विमुच्यसे । फ—वियुज्यसे । ११. अ—तथा यतश्चात्र हितानु-दर्शने । फ च रा ल१ ल२—तथा यतस्वाद्य हितानुदर्शने । १२. आ—हि मृत्योर्न वशे हि । रा—वृत्योटवषमेति । ल२—न मृत्योर्वशमेषि । १३. आ—तिष्ठसि । फ—सर्वथा । रा—सत्रंतः । १४. फ—इतस्ततो । १५. च—०करीभिद्रवन्यथा । अ—०सुरभिर्यथा द्रव्य । फ—०सुराभिर्यथा द्रवन् । १६. अ—नेवार्यते । १७. आ—०सितैर । रा—०शीतैर् । १८. आ—भो वचनांकुशैर्बलात् । च रा प्र ल२—०कुशैर्बलात् । १९. प्र—तयैव । ल२—तवैव । २०. रा प्र ल२—निपत्य वै । फ अ—निपीड्यतौ । २१. फ अ—शुभौ । २२. अ—विषये ह्यमत्सरी । फ च रा ल२—विषयेष्वमत्सरी । प्र—विषयेषु मत्सरी ।

कृताऽभ्यनु[1]-ज्ञश् च ततः कृताऽञ्जलिर्

२४] जगाम रक्षोऽधिप[2]-दर्शनोत्सुकः ॥२४॥

इत्यार्षे[3] रामायणे सुन्दरे[3]-काण्डे विभीषणे[4]-मातृभाषणो

नाम पञ्चसप्ततितमः सर्गः ॥७५॥

---

१. आ–०ज्ञः स ततः । फ–०नुज्ञस्तु तया । च प्र ल$_2$–०नुज्ञः स तया । २. अ–रक्षोपदर्द्द० । ३. ल$_2$–इति सुन्दरकाण्डे । ४. ल$_2$ रा–विभीषणमातृवचनं नाम । अ–कैकसीवाक्यं नाम । फ–विभीषणवाक्यं नाम । च प्र–विभीषणमातृभाषणं नाम ॥

ततः[1] प्रत्य्-ऊषसि[2] प्राऽऽप्ते प्राऽऽप्त[3]-धर्म्माऽर्थ-निश्चयः ।
राक्षसाऽधि-पतेर् वेश्म भीम-कर्मा वि-भीषणः ॥१॥ [१
श्वेताऽभ्र[4]-वृन्द-संकाशं शैल-शृङ्गम् इवोच्-छ्रितम् ।
सुवि-भक्तं[5] महा-कत्तं[5] महा-रथ-परिग्रहम् ॥२॥ [२
मति-मद्भिर्[6] महाऽमात्यैर्[6] अभि-युक्तैर्[7] अधि-ष्ठितम्[8] ।
रक्षोभिश्[9] चाऽप्य् अ-पर्यन्तैः[9] सर्व-तः परि-वारितम् ॥३॥ [३
मत्त[10]-मातङ्ग-निश्वासैः[10] संकुली-कृत-मारुतम्[11] । [४पू
परस्पर-कृतोत्साहैः[12] प्र-वराऽश्वैर्[13] अलंकृतम् ॥४॥ [N
प्रमदा-शत-सम्बाधं प्रमदा-हास्य[14]-मिश्रितम् ।
रक्त-विद्रुम[15]-निर्यूहं भूषणोत्तम-निस्वनम्[16] ॥५॥ [५
गन्धर्वाणाम् इवाऽऽवासम् आ-लयं मरुताम् इव ।
रत्न-संचय-सम्बाधं[17] भुवनं[18] भोगिनाम्[19] इव[19] ॥६॥[20] [६
तन्[21] महाऽभ्रम् इवाऽऽदीप्तं[21] तेजो-राशिम् इवो-ज्ज्वलम् ।[22]

---

१. रा-ययौ । प्र-गतः । २. आ रा अ-प्रत्युषसि । ३. अ-प्राप्ते धर्म्मार्थं० ॥ ४. आ-स्वेताभ्रपुष्पसङ्काशं । ५. फ च अ-सुविभक्तमहा० । रा ल२-सुविभक्तमहाकक्ष्यं । आ-सुविभक्त महाभक्तं ॥ ६. आ-मतिमद्भिः सहा० । ७. फ-०युक्तम् । ८. फ-अनुष्ठितम् । प्र-अधिष्ठिते । ९. आ-च सपर्यन्तैः । अ-चापि प० ॥ १०. अ-महामातंगनिस्वासैः । आ फ-०ङ्गनिस्वासैः । ११. अ-०तमन्तरम् । अ-०तं मारुजम् । १२. आ-अभ्युच्छ्रितैर्महोत्साहैः । फ-०कृतोत्साहं । १३. फ-प्रवलाश्वैर ॥ १४. फ अ-प्रवल्गितमिवौजसा । १५. प्र-रक्तविन्दुसमायोगं । रा-०मसंयोगं । च-०मणियोगं । अ-०मनियोगं । १६. अ-०मनिश्चितम् । च-०निःश्वनम् । १७. आ च प्र-०यनिर्बाधं । १८. आ फ च प्र ल२-भवनं । १९. अ फ-योगिनाम् । अ-योगिनामपि । २०. रा-नास्ति ॥ २१. फ-तं महाभूतिना दीप्तं । २२. आ-नास्ति ।

अग्र-जस्याऽऽलयं वीरः प्र-विवेश वि-भीषणः ॥७॥ [७
शृण्वन्[2] पुण्याऽह-शब्दांश्[2] च वेद-विद्भिर् उद्-ईरितान् ।
शुश्राव सुमहा-तेजा भ्रातुर्[3] विजय-संहिताम्[3] ॥८॥ [८
पूजितां[4] (न्) दधि-पात्रैश् च सुसर्प्पिः-सुमनोऽक्षतैः[5] ।
तत्र वेद-विदो विप्रान् ददर्श सुमहा-यशाः ॥९॥[6] [९
सं-सेव्यमानं[7] रक्षोभिर् दीप्य-मानम् इवौजसा[8] ।
आसन्न[9]-स्थं महा-भागं ववन्दे नैर्ऋतर्षभम्[10] ॥१०॥ [१०
स राजाऽऽदिष्टम् आ-वेष्टुम्[11] आसनं हैमम् आप्तवान्[12] ।
जगाम समुदा-चारं[13] प्रयुज्याऽऽचार[13]-कोविदः ॥११॥ [११
स राक्षसो[14] महा-तेजा वि-धेयं[15] स्वामि-सन्निधौ ।
उवाच हितम् अत्य्-अर्थं वाक्यम् आयति[16]-निश्चितम् ॥१२॥ [१२
प्र-साद्य[17] भ्रातरं ज्येष्ठं[18] साध्वसोप-क्रमांऽऽस्थितम्[19] ।
देश-कालाऽभिसम्प्रांऽऽप्तं[20] दृष्ट्वा[21] चाऽमित[22]-विक्रमः ॥१३॥ [१३
यदा प्र-भृति वैदेही सम्प्राऽऽप्तेह परं[23]-तप ।
तदा प्र-भृति दृश्यन्ते नि-मित्तान्य् अ-शुभानि च[24] ॥१४॥ [१४

---

१. फ अ—महाद्युतिः ॥ २. अ—पुष्टन्पुण्याहघोषांश् । फ—हृष्टन्पु० । ३. फ रा—विनयं स्वामिसन्निधौ । अ—०संहिताः ॥ ४. प्र च रा ल२ अ—पूजितां । ५. रा—सर्प्पिस्सु च म० । प्र—ससर्पिः सम० । ल२—ससर्पिः सुम० । अ फ—०मनोऽक्षितैः । ६. फ—अत आरभ्य १२ श्लोकस्य पूर्वार्द्धं यावन्नास्ति ॥ ७. आ—०मानो । ८. प्र—इवोजसा । ९. रा—आसन्नस्थं । १०. च—नैर्ऋतर्षभाः ॥ ११. आ—आदिष्ट । १२. अ—आप्नुयात् । १३. अ—०चारः प्रपूज्याचार० । १४. रा ल२—हर्यक्षो । प्र—हरक्षो । १५. अ च रा प्र ल२—विनयात् । १६. रा—आयाति नि० ॥ १७. फ च रा ल२ अ—आलाद्य । १८. अ—श्रेष्ठं । १९. अ—साध्वसोपक्रमस्थितम् । च—०पक्रमास्थिमम् । ल२—०पक्रमं स्थितम् । २०. अ—०भिसम्पन्नं । च रा प्र ल१—०सम्प्राप्तिं । २१. अ—दृष्ट्वा । २२. अ—चारपराक्रमम् । फ—कपिपराक्रमम् । २३. अ—परंतपा । । २४. फ—ह ।

वि-स्फुलिंगः[१] प्र-शान्तोऽर्चिः स[२]-धूमः कलुषोदयः[२] ।
मन्त्र-तप्तं[३] तर्पितो[३] वह्निर् न सम्यग् अभि-पद्यते॥१५॥ [१५
अनु-इष्टां[४] ह्य् अग्नि[४]-शालासु तथा ब्रह्मा[५]ऽऽसनेषु च ।
सरी-सृपा वि-सर्पन्ति[६] हव्येषु च पिपीलिकाः ॥१६॥ [१६
गवां पयांसि[७] स्कन्नानि[७] वि-मदाश् चाऽपि कुञ्जराः ।
दीनम् अश्वाः प्र-हेषन्ति[८] न च[९] ग्रासोऽभि-नन्दिनः॥१७॥ [१७
खरोष्ट्रा[१०]ऽश्व-तरा राजन् भिन्न-रोमा[११]ऽश्रु-वर्षिणः ।
स्व[१२]भावेनैव [१२]तिष्ठन्ति वि-धानैर् अपि सं-युताः॥१८॥ [१८
वायसाः संघ[१३]-शः क्रूरा व्या-हरन्ति[१४] समन्त[१४]-तः ।[१५]
समवेता[१६]श् च दृश्यन्ते वि-मानाऽग्रेषु साम्प्रतम्[१७] ॥[१८] १९॥[१९
गृध्राः[१९] सम्पर्य्-अटन्ते[१९] च पुरीम् उपरि मण्डिताः[२०] ।[१८]
उप-रक्ते च संध्ये[२१] द्वे[२१] व्या-हरन्त्य्[२२] अ-शिवं[२२] शिवाः॥[२३]२०॥२०
शिवा-क्रव्याद[२४]-मृगाणां च पुर[२५]-द्वारि समन्त-तः ।

---

१. च प्र ल१ अ–विस्फुलिंगप्र० । फ–०गः समन्तार्चिः । २. फ–सधूमक० । ३. अ–मन्त्रवत्तर्पितो । फ–मन्त्रवत्तप्यते । ल२–सतुषस्तर्पितो ॥ ४. रा–अग्निषु ह्यग्नि० । ल२–अग्निष्वप्यग्नि० । आ च–ह्यग्निशालास्तु । ५. च–ब्रह्मासनेषु । ६. च रा प्र ल२–प्रसर्पन्ति । आ–विसर्प्यन्ति । ७. अ–पयांस्यगान्धानि । ८. फ–प्रहेष्यन्ते । च रा प्र–प्रहेष्यन्ति । ९. अ–चाग्रासाभि०॥ १०. फ–खरोष्ट्राश्च तथा । प्र–खरोष्ट्राः शतशो । ११. फ–भिन्नरोमा रुदन्ति च । रा–०रोमास्कबार्हिणः । प्र–रोमास्रुव० । १२. अ–भिन्नाः–स्वभावेनानुतिष्ठन्ति ॥ १३. फ–संघसः । १४. फ–०न्ति ततस्ततः । रा–व्याहरन्त्यशिवं शिवाः । १५. अ–नास्ति । १६. प्र–समवेगाश्च । १७. फ–सम्प्रति । १८. रा अ–नास्ति ॥ १९. फ–गृध्राश्च पर्य० । २०. फ–पीडिताः । ल२–पुंडिताः । २१. अ–संख्ये द्वे । ल२–द्वे संध्ये । २२. आ–०रन्त्याशिवाः शिवाः । प्र–व्याहरंति शिवं । २३. रा–नास्ति ॥ २४. अ–क्रव्यादीनां । फ च रा ब प्र ल२–क्रव्यादानां । २५. अ फ च रा–पुरीद्वारि । प्र–द्वारि द्वारि । ल२–शब्दारिष्टं ।

श्रूयन्ते परुषा वाचः[1] स-विस्फूर्जित-गर्जिताः ॥२१॥ [२१
तद् एवं[2] प्र-स्थिते[3] कार्ये प्रायश्-चित्तम् इदं महत् ।
रोचते[4] यदि वैदेही[5] राघवाय प्र-दीयताम् ॥२२॥ [२२
इदं हि यदि वा मोहात् स्नेहाद् वोद्-ईरितं मया ।[6]
श्रुत्वाऽपि खलु मे[7] राजन् न रोषं[8] कर्त्तुम् अर्हसि ॥२३॥ [२३
अयं हि दोषः[9] सर्वस्य जनस्याऽस्योप-लक्षितः[10] । [२४पू
प्राऽऽपणे[11] ह्य् अस्य कार्यस्य नि-वृत्तास् तव मन्त्रिणः २४॥
अवश्यं तु[12] मया वाच्यं दृष्टं वा यदि वा श्रुतम् । [२५
सम्प्र-धार्य यथा[13]-न्याय्यं तद् भवान् कर्तुम्[14] अर्हसि ॥२५॥ [२६
हितं हि[15] तस्मै मृदु-हेतु-संयुतं
व्यपेत[16]-दोषाऽऽयति-सम्प्रति-क्षमम् ।
वि-लक्षयन्[17] कार्यम् उपस्थित[18]-ज्वरं
प्रसन्न-वाग् उत्तरम् उक्तवान् इदम् ॥२६॥ [२७
भयं न पश्यामि कुतश्चिद् अप्य् अहं
न राघवः प्राऽऽप्स्यति जातु मैथिलीम् ।

---

१. आ–घोराः ॥ २. फ–तदेवं प्रथिते । रा–तदैवोपस्थिते । प्र ल$_२$–तदेवोपस्थिते । च–तदेवो प्रथिते ३. अ–कर्मे । ४. फ–मोच्यतां । ५. अ–वीर सीतेयं । फ–वीर वैदेही ॥ ६. अ–इयं हि यदि मोहात्तु स्नेहाद्वोदीरिता मया । ७. अ–अत्रापि परमं । फ–अत्रापि खलु मे । ८. फ–दोषं । ९. च रा–रोषः । १०. अ–जनस्यास्य न लक्षितः । ११. अ–प्रयत्ने । प्र–प्रयाने ॥ १२. अ–च । फ–हि । १३. आ–तथा । फ रा प्र ल$_२$ अ–यथान्यायं । १४. फ अ–वक्तुम् ॥ १५. फ–स । १६. च–व्यपेत दोषो यति० । फ अ–व्यतीतदो० । १७. अ–विपक्षयत् । फ–विलक्ष्ययत् । अ–विलक्षयं । १८. आ–०स्थितद्वारं । अ–०स्थितत्वात् । फ प्र ल$_२$–०स्थितक्षयं । च रा–उपस्थितं क्षयं ॥

सुरैः सहेन्द्रैर्[1] अपि सं-गतैः[2] कथं
ममाऽग्र-तः स्थास्यति लक्ष्मणाऽग्र-जः ॥२७॥[२८

इत्यार्षे[3] रामायणे सुन्दर-काण्डे विभीषणे[4]-वाक्यं
नाम षट्सप्ततितमः सर्गः ॥ ७६॥

———

१. आ–सहैन्द्रैर् । अ–सुरेन्द्रैर् । फ–समस्तैर् । २. च–संगता । प्र–संयुतः ॥ ३. आ–आर्षेयरा० । ल२–इति सु० । ४. अ च–लंकापर्वण्यौत्पातिकदर्शनं । फ–औत्पातिकं नाम ॥

लंकायां तत्[1]-कृतं दृष्ट्वा[2] घोरं कर्म भया[3]ऽऽवहम् ।
१] राक्षसेन्द्रो हनुमता[4] संक्रुद्धेन्द्रिय[5]-मानसः ॥[6]१॥
अमात्यान् अब्रवीद्[7] वीरो राक्षसान् स-विभीषणान् । [१
२] सं-रब्धो[8] रक्त-नयनः कोपात् किंचिद् अवाङ्-मुखः॥२॥[N
३पू] आ-गतश् च प्र-विष्टश् च हनूमान् नगरीम् इमाम् ।[9]
N]मन्त्र-कालः समुत्-पन्नो मन्त्र्यताम् अत्र यद्[10] धितम्॥३॥ [N
३उ] दृष्टा तेन हि[11] वैदेही प्र-विश्याऽन्तः[12]-पुरं मम ।[13][N
प्रासादो धर्षितश् चैत्यः प्र-वरा राक्षसा हताः ॥४॥
४] आकुला[14] च पुरी लंका सर्वा हनुमता कृता[15] । [३
किं करिष्यामहे तत्र वि-धानं[16] युक्तम् उत्-तमम्[17] ॥५॥
५] उच्यतां यत् समर्थं[18] नः किम् अत्र सु-कृतं भवेत् । [४
६पू] मन्त्र-मूलं हि वि-जयं प्राऽऽहुर् विजय-कांक्षिणः ॥६॥[19][५पू
त्रि-विधाः[20] पुरुषा लोके उत्तमाऽधम-मध्यमाः ।

---

१. प्र–कथं । २. रा प्र ल$_2$–श्रुत्वा । ३. ल$_2$–त्वयाव० । ४. फ–हनूमता । ५. च प्र ल$_2$ अ–श्लाघनीयं सुदुष्करम् । फ–शक्रेणेव महात्मना । ६. रा–नास्ति ॥ ७. फ अ–अब्रवीत्सर्वान् । ८. आ–संर…रक्तन० । फ–संरब्धरक्त० । च–संरक्तस्वारक्तवयन । ल$_1$–संरक्तः घोरनयनः॥ ९. रा–नास्ति । १०. फ–मन्त्रवद्० ॥ ११. फ अ–च । १२. फ अ–प्रधृष्यान्तःपुरं । आ–प्रविष्टोन्तःपुरं । १३. अतः परमधिकः पाठः–फ च रा प्र ल$_2$ अ–धर्षितेयं पुरी लङ्का दुष्प्रवेशा सुरैरपि । तेन वानरमात्रेण प्राकृतेन कुबुद्धिना । १४. अ–आकुली । १५. अ–तथा । १६. फ अ–किं वा युक्तमनन्तरम् । रा प्र ल$_2$–नं युक्तमुत्तरम् । च–नं युक्तमुत्तरः ॥ १७. अ–सधर्मं । १८. फ अ–आर्या मनस्विनः । १९. अतः परमधिकः पाठः–फ च रा प्र ल$_2$ अ–तस्माद्वो रोचतां मन्त्रो रामं प्रति महाबलाः ॥ २०. ल$_2$–विविधाः ।

७] तेषां च[1] समवेतानां गुण-दोषान्[2] वदाम्य् अहम् ॥७॥ [६
मन्त्रिभिर् हित-संयुक्तैः समेतैर्[3] मन्त्र-निश्चयैः[3] ।
८] अमात्यैर् वा सम-एसाऽर्थो बान्धवैर् अपि वा हितैः[4]॥[5] ८॥[७
सु-मन्त्रं मन्त्रयित्वा यः कार्याऽऽरम्भे प्र-वर्तते ।[6]
९] दैवे[7] च[7] कुरुते यत्नं तम् आहुः पुरुषोत्-तमम् ॥९॥ [८
एको[8]ऽर्थे वि-मृशत्य्[9] एको धर्मे च[9] कुरुते मतिम् ।
१०] एकः कार्याणि कुरुते तम् आहुर् मध्यमं[10] नरम्[10] ॥१०॥ [९
गुण[11]-दोषाव् अ-निश्चित्य[11] दैवं[12] एक-परायणः[12] ।
११] करिष्यामीऽति[13] यः[13] कार्यम् उपेक्षेत्[14] स नरा[14]ऽधमः ११[१०
यथैव[15] पुरुषा लोके[16] उत्तमाऽधम-मध्यमाः ।
१२] एवं मन्त्रोऽपि वि-ज्ञेय उत्तमाऽधम-मध्यमः ॥१२॥ [११
ऐक-मत्यम्[17] उपा[18]ऽऽगम्य शास्त्र-दृष्टेन कर्मणा[19] ।
१३] मन्त्रिणो[20] मन्त्र[20]-निरतास् तम् आहुर् मन्त्रम् उत्तमम्॥१३॥[१२

---

१. अ–तु । २. अ–०दोषाद् ॥ ३. रा प्र अ–समर्थैर्मन्त्रनिश्चये । फ–समर्थैर्मन्त्रसंशये । ४. रा–संहितैः । ५. अ–मंत्रयेत सदा राजा समानार्थैः कुलोद्गमैः । फ–मित्रैर्वापि सदा राजा समानार्थैः कुलोद्गमैः ॥ ६. अ–सहसा मन्त्रयित्वा यः कर्मारम्भेषु वर्तते । फ–सह संमंत्र्य सन्धियं कर्म सम्भं प्रवर्तते । ७. अ–दैवज्ञः । फ–धैर्याच्च । च–दैवाच्च । रा प्र ल२–देवाच्च ॥ ८. अ–एकोऽर्थाद् । फ–एकोऽर्थान् । ९. आ–विमृशन्येऽधर्म्मे प्रकु० । च–विमृषत्येको धर्मे च कु० । रा ल२–विमृवत्येको धर्मे प्रकु० । प्र–विमृषत्येको धर्मेपि कु० । १०. च रा प्र ल२–पुरुषं परम् । ११. आ–०दोषौ विनि० । अ–०दोषाद्विनि० । फ–०दोषान्वि० । ल२–०दोषावि० । १२. अ–त्यक्तदैत्यमपाश्रयः ? । फ–नरो धर्मव्यपाश्रयः । ब रा ल२–त्यक्तधर्मव्यपाश्रयः । १३. फ–यत् । १४. फ–उपेक्षेत न० ॥ १५. फ–यथैवं । १६. फ अ–नित्यम् । १७. अ–एकमर्त्यम् । आ–ऐक्यमत्यम् । च रा–एकमत्यम् । प्र–ऐकपत्यम् । १८. आ–उपागम्य । १९. अ–चक्षुषा । २०. अ–मंत्रितं मन्त्रनियमस्त० । फ–मन्त्रिणां मन्त्रनियमस्त० ॥

बह्वयोऽपि मतयो गत्वा मन्त्रिणाम् अर्थ-सिद्धये ।[3]
१४] पुनर् यत्रैकतां यान्ति स मन्त्रो मध्यमः स्मृतः॥[6] १.४॥ [१.३
मन्त्रं कृतं वि-लुम्पन्ति अन्यथा परि-भाष्यते ।[7]
न चैकमत्य-लेशोऽस्ति मन्त्रः सोऽधम उच्यते॥१.५॥[9] [१.४
तस्मात् सु-मन्त्रितं कृत्वा भवन्तो मन्त्रि-सत्तमाः ।
१६] कार्यं च प्रति-पद्येत भवेत् कृत्स-तमं मम ॥१६॥ [१५
१७पू] वानराणां सु-वीराणां सहस्रैः परि-वारितः ।
N] रामो ह्य् एति पुरीं लंकां नूनं मम विरोध-तः ॥१.७॥ [१.६
१७उ] तरिष्यति च सु-व्यक्तं राघवः सागरं सुखम् ।

---

१. ल₂—बह्वोपिम०। अ—त्वध्योपिम० । २. अ—मंत्राणामर्थनिश्चये । प्र—कुर्वन्ति मंत्रनिश्चयम् । ल₂—प्रकुर्यान्मन्त्रानियश्चम् । ३. फ—बह्वीमपि मतिं कृत्वा मन्त्रिणामर्थसिद्धये । च रा—बह्वयोपि मतयो मत्वा मन्त्रिणो मन्त्र-निश्चयम् । ४. फ—मन्त्रैकतां । ५. अ—याति । ६. रा—१४-श श्लोक४र्थपादमारभ्य १८-शश्लोक३यपादान्त: पाठो नास्ति ॥ ७. आ फ अ—अन्योन्यमतिमास्थाय[1] यत्र सम्प्रतिभाष्यते[2] । ८. च अ—चैकमत्यश्लेषो । आ—चैकमत्येश्लेषो। फ—चैकमंत्रश्लेषो । प्र—चैकमतिलेशो । ९. अतः परमधिकः पाठः—आ—बह्वीरभिमतीः श्रुत्वा मन्त्रिणो मन्त्रनिश्चयम् । नैव यत्रैकतां यान्ति स तु मन्त्रोऽधमः स्मृतः ॥ मन्त्रं कृतमित्यनन्तरम्—यादृशं प्रक्रमन्ते च स मन्त्रोऽधम उच्यते । १०. फ अ—साधु । प्र—ज्ञात्वा । ल₂ अ—गत्वा । च—मत्वा । ११. फ अ—भवेद्यन् । रा-स मन्त्रो । १२. आ—मन्त्र० । १३. अ—कार्यसम्प्रतिपत्यर्थम् । च प्र ल₂—कार्यं सम्प्रतिपद्यध्वं । रा—कार्यं सम्प्रतिपद्यध्वं । १४. अ—एतत्कार्यं मतं । फ—एतत्कार्यनयं । १५. फ अ—हि । १६. अ—शरसैः । १७. फ ल₂—रामोऽभ्येति। प्र—रामोभ्येत्य । १८. फ अ—लंकामस्माकमवरोधकः ॥ १९. फ—स च व्यक्तं ।

---

१. आ फ—अन्योन्यं मन्त्र० । २. आ अ—भाषते ।

१८पू] तपसा युक्त-रूपेण स-बलः सं-पदाऽनु[1]-गः ॥१८॥[2] [१७
तस्मिन्न्[3] एवं-विधे काले वि-रोधाद्[4] वानरैः सह ।
१९] हितं पुरे च सैन्येन तत् सर्वं मन्त्र्यतां मम ॥[5]१९॥ [१९

इत्यार्षे[6] रामायणे सुन्दर-काण्डे रावण[7]-मन्त्रो
नाम सप्तसप्ततितमः सर्गः ॥ ७७॥

---

१. आ—सपदारुगः । २. च रा प्र ल$_2$—नास्ति ॥ ३. ल$_2$—तस्मिन्नैवं-विधे । फ अ—तस्मिन्नेवं गते कार्ये । ४. फ अ—विरोधे । ५. फ प्र अ—यदस्माकं क्षमं ब्रूत तच्छीघ्रं प्रविमृश्य हि । च—यदस्माकं क्षमं ब्रूत तच्छीघ्रं प्रतिमृश्य हि । रा—यदस्माकं क्षमं ब्रूत शीघ्रं प्रविमृश्यामहे । ल$_2$—यमस्माकं क्षमं ब्रूत तच्छीघ्रं प्रविमृश्य हि॥६. आ—आर्षेय रा०। ल$_2$—इति सु०। ७. रा—नास्ति । फ—रावणवाक्यं ॥

इत्य् उक्त्वा राक्षसेन्द्रेण राक्षसास् ते महा-बलाः ।
१] ऊचुः प्राऽञ्जलयः सर्वे[1] रावणं राक्षसाऽधि-पम् ॥१॥ [१
आ-पद्[2] इयं[2] महा-राज या[3] प्राऽऽप्ता[3] प्राकृताज् जनात् ।
२] हृदि नैषा त्वया कार्या तान् वधिष्यॉम[4](?मो) वानरान् ॥२॥ [N
राजन् परिघ[5]-शक्त्य्-ऋष्टि-शूल-पट्टिश-संकुलम्[5] ।
३] सु-महत् ते बलं कस्माद् वि-षादं[6] भजते भवान् ॥[7]३॥ [२
कैलास[8]-शिखरं गत्वा यक्षैर् बहुभिर् वृतम् ।
४] नीता यक्षा त्वया शान्तिं वशे च धन-दः कृतः ॥४[7]॥ [३
स[9] महेश्वर[9]-सख्येन श्लाघ[10]-मानस् त्वया वि-भो ।
५] निर्-जितः समरे[11] रोषाल्[11] लोक-पालो महा-बलैः[12] ॥५॥ [४
विनि-हत्य[13] च यक्षौघान् वि-क्षोभ्य च वि-गृह्य[14] च ।[15]
६] त्वया कैलास[16]-शिखराद् वि-मानम् इदम् आ-हृतम् ॥[17]६॥ [५
मयेन दानवेन्द्रेण त्वद्-भक्त्या[18] सख्यम्[18] इच्छता ।

---

१. च—राक्षस? (साः) । रा प्र $ल_2$—तामिदं ॥ २. अ—आपदेयं । फ—॰देषा । च रा प्र $ल_2$—॰दुहीयं । ३. च रा प्र $ल_2$ अ—प्राप्ता वै । फ—यत्प्राप्ता । ४. फ—वधिष्यामि ॥ ५. अ—परिधिसंकर्षि शूलमुद्गरसंकुलं । फ—॰शक्त्यर्ष्टिशूलमुद्गरधारिणाम् । च—॰शक्त्युष्टिशूलमु॰ । रा प्र $ल_2$—परिघनिस्त्रिंशशूलशक्त्यृष्टिसंकुलम् । ६. रा प्र $ल_2$—कुरुते । ७. आ—नास्ति ॥ ८. फ—कैलाश॰ ॥ ९. आ—सुमंहर सख्येन । १०. आ अ—श्लाघ्यमानस् । च—श्लाघ्यमाणस् । ११. अ—समरो रोषः । रा—समरो दोषाल् । $ल_2$—समरो । १२. $ल_2$—॰बला ॥ १३. फ—विनिर्जित्य । १४. फ—निगृह्य । १५. अ—नास्ति । १६. फ—कैलाश॰ । १७. रा—नास्ति ॥ १८. अ—स्वज्ञयात्सांधिम् । च—भक्त्या च । रा $ल_2$—भक्त्या वै । प्र—भक्त्यैव ।

७] दुहिता तव भार्या[1]ऽर्थं दत्ता राक्षस-पुङ्गवे[2] ॥७॥[3] [६
निर्-जितास् ते[4] महा-बाहो नागा गत्वा रसा-तलम् ।
९] वासुकिस् तक्षकः शङ्खो[5] जटी चैवं[6] वशी-कृताः ॥८॥ [८
अ-क्षया बल[7]-वन्तश् च शूरा लब्ध[8]-वराः पुनः ।
१०] त्वया संवत्सरेणा(?णो)ग्राः समरे दानवा जिताः ॥[9]९॥[९
स्वं[10]-बलं समुपाऽऽश्रित्य[11] नीता वशम्[12] अरिं-दम[12] ।
११] आ-हृताश् च बलात् कन्या बह्वयो राक्षस-दुर्लभाः[13]॥१०॥[१०
शूराश् च बल-वन्तश् च वरुणस्य सुता रणे ।
१२] निर्-जितास्[14] ते महा-राज चतुर्विध-बलाऽऽवृताः[15]॥११॥ [१२
मृत्यु-दण्ड[16]-महा-ग्राहं शाल्मलि-द्रुम[17]-मण्डितम् । [१३पू
१३] अव-गाहितवान्[18] राजन् यमस्य बल-सागरम् ॥१२॥
यशश् च वि-पुलं प्राऽऽप्तं मृत्युश् च [19]प्रति-षेधितः । [१४

---

१. फ च रा प्र अ-भार्यार्थे । २. फ अ-०नन्दन । ३. अतः परमधिकः पाठः—फ अ-दानवेन्द्रो महाबाहो वीर्योत्सिक्तो दुरात्मवान् । फ च रा प्र ल$_2$—प्रसह्य च वशमानीतः कुम्भवास्यः ? सुखावहः ॥ ४. अ-निर्जितस्ते । रा-दानवेन्द्र । ५. अ-संख्ये जटायुर्वै । ६. फ-विशेषतः । आ अ-वशीकृतः ॥ ७. अ-कल० । प्र ल$_2$—बलमत्ताश्च । ८. फ अ-लब्धवरास्तथा । रा प्र ल$_2$—लघुतराः पुनः । ९. अ-त्वया संवत्सराद्योग दानवाः समरे हताः । फ-त्वया संवत्सरं घोरा दानवाः समरे हताः । प्र-त्वया समत्सरेणोग्रा समदा दानवा जिताः । ल$_2$—त्वया समत्सरेणोग्रा समस्ता दानवा जिताः ॥ १०. प्र-सबलं । ११. म-०श्रित्य । १२. अ-वसमरिंदमः । १३. रा-०दुर्जयाः ॥ १४. अ-विजित्यस्ते । फ च रा प्र ल$_2$—विजितास्ते । १५. फ अ-चत्वारः सपदानुगाः । रा-०बलान्विताः ॥ १६. अ-मृत्युदंष्टं म० । च-मृत्युदण्डं म० । १७. अ-शालिविद्रुममंडिता । १८. अ-अवगाह्य त्वया राजन्प्रविश्य । फ च रा ल$_1$—अवगाह्य त्वया राजन् ॥ १९. अ-प्रतिषेधतः । फ-परिषेधितः ।

१४] सु-युद्धेन च[1] ते सर्वे लोकास्[2] तत्र स्म तोषिताः[3] ॥१३॥ [१५
क्षत्रियैर् बहुभिर् वीरैः शक्र-तुल्य-पराक्रमैः ।
१५] आसीद् वसु-मती कीर्णा महद्भिर्[4] इव पादपैः ॥१४॥ [१६
ते हताः समरे सर्वे त्वयैकेन बलीयसा[5] ।
N] स त्वम् एवं-विधो राजन्न् उद्यमं[6] कर्तुम् अर्हसि ॥१५॥ [N
किं पुनः फल-सन्तुष्टा[7] वानरा[8] वन-गोचराः ।
N] तौ च दाशरथी वीरौ[9] तापसौ मन्द-चेतसौ ॥१६॥ [N
कथं न हन्यां[10] राजेन्द्र यस्य[11] ते वीर्यम् ईदृशम् ।
मा वि-षीद महा-बाहो जेष्यसे[12] वानरान् रणे ।
N] प्रकृत्या चपलास्[13] ते[13] हि मानुषौ क्षीण-जीवितौ[14] ॥१७॥ [N

इत्यार्षे[15] रामायणे सुन्दर-काण्डे रावण-स्तवो
नामाऽष्टासप्ततितमः सर्गः ॥[16] ७८॥

---

१. फ अ-हि । २. च-लोकास्तु वै । रा प्र ल₂-लोकास्सुबहुतो० । आ-लोकास्तत्र स्मयोषिता ॥ ३. प्र ल₂-पूर्णा । ४. रा-महद्भिश्च दिवमादयै ॥ ५. अ-महात्मना । ६. फ रा प्र ल₂-अभयं । च-अद्रं ॥ ७. फ-०सन्तुष्टान् । ८. अ-न वा नत्ता विजेष्यसि । फ-वानराश्चविजेष्यसि ॥ ल₂-वाणरा वन० । ९. अ-वीर । फ-भीरू । १०. च-हन्यौ । ११. अ-यश्च । १२. प्र ल₂-जेष्यामो । १३. फ-तौ तु । १४. फ-हीनविक्रमौ ॥ १५. आ-आर्षेय । १६. ल₂-इति सुन्दरकाण्डे रावणप्रबोधो नाम सर्गः । फ-सर्गसमाप्तिर्न दृश्यते ॥

## [वं-७९]= [एकोनाऽशीतितमः सर्गः] =[ दा-८ ]

ततो नीलाऽम्बुद[1]-प्रख्यः प्र-हस्तो नाम राक्षसः ।
१] उवाच प्राऽञ्जलिर् वाक्यं[2] शूरः सेना-पतिस् तदा ॥१॥ [१
देव-दानव-गन्धर्वाः पिशाच-पतगोरगाः ।[3]
२] न त्वां धर्षयितुं शक्ताः किं पुनर् वानरा रणे ॥२॥ [२
सर्वे प्र-मत्ता वि-श्वस्ता वञ्चिताः स्मो[4] हनूमता ।
३] न हि नो यततां[5] गच्छेज् जीवन्[6] स वन-गोचरः ॥३॥ [३
सर्वां सागर-पर्यन्तां स-शैल-वन-काननाम् ।
४] कुर्मो निर्-वानराम् उर्वीम् आ-ज्ञापयतु [7]नो भवान् ॥४॥ [४
रक्षांश् चैव वि-धास्यामश् चारांश् च जय-वर्धनान् ।[8]
५] आ-गमिष्यति[9] नो दुःखं किञ्चिद् आत्माऽपराध-जम् ॥५॥ [५
अब्रवीच् च[10] सं-क्रुद्धो दुर्-मुखो नाम राक्षसः ।
६] इदं न क्षमणीयं[11] मे[12] सर्वेषां नः प्र-धर्षणम्[13] ॥६॥ [६

---

१. फ अ—जीमूतसंकाशः । २. फ अ—भूत्वा ॥ ३. आ—पुरा वै देवताः सर्वे गन्धर्वपतगोरगाः । ल२—पुरा वै दैवताः सर्वा गन्धर्वपतगोरगाः । रा—पुरा वै देवताः सर्वा गन्धर्वपतगोरगाः ॥ ४. आ—स्म । ५. आ—न हि ते जीवितो । फ—न हि नो जीविनां । ६. अ—जीवत्स पद्वन० । फ—जीवेन सह वानरः ॥ ७. फ—मां ॥ ८. अ—रक्षाम्प्रति विधास्यामि चरांश्च जयतां वर । फ—रक्षांसि प्रणिधास्यामि चारांश्च जयतां वर । च—रक्षसांश्च विधास्यामश्चारांश्च जयवर्द्धन । रा—रक्षसांश्च वधिष्यामश्चारांश्च जयवर्द्धनाः । प्र—रक्षसांश्व विधास्यामश्चारांश्च जयविवर्द्धनान् । ल२—रक्षसांश्च विधाष्यामश्चारांश्च जयवर्धनाः । ९. फ—न गमिष्यति । च—नागामिष्यते । रा प्र ल२—नागामिष्यति ॥ १०. ल२—चारसंक्रुद्धो । ११. च—क्षमनीयं । १२. प्र—च । ल२—ते । १३. अ—प्रधर्षिणां ॥

अ[1]थ परि-भवो घोरो वानरेण विशेष-तः ।
१०] श्रीमतो राक्षसेन्द्रस्य पुरस्याऽन्तः-पुरस्य च ॥७॥ [७
११.पू] अस्मिन् मुहूर्त्ते हत्वा तं नि-वर्त्तिष्यामि वा[2]नरम् ।
N] प्र-विष्टं सागरं घोरम् अथवा धरणी-तलम् ॥८॥[3] [८
अथाऽब्रवीत् सुसं-क्रुद्धो व[4]ज्र-दंष्ट्रो महा-बलः ।
६] प्र-गृह्य परि-घं घोरं मांस-मेदोऽव[5]-लेपितम् ॥९॥ [९
किं वा[6] ह[7]नुमता कार्यं कृपणेन निशा-चराः ।
७] रामे तिष्ठति दुर्-धर्षे सु-ग्रीवे च स-ल[8]क्ष्मणे ॥१०॥ [१०
अद्य रामं स-सुग्रीवं परि-घे[9]ण स-लक्ष्मणम् ।
८] आ-गमिष्यामि हत्वैको वि-क्षोभ्य हरि-वाहिनीम् । [११
११.उ] न[10]ह्य् अहं धर्ष[11]णां घोरां भर्त्तुर् मर्षयिता प्र[12]-भोः ॥११॥ [N
ततो य[13]ज्ञ-हनुर् नाम राक्षसः पर्वतोप[14]मः ।
१२] क्रुद्धः परि-लिहन् वक्त्रं जिह्वया वाक्यम् अब्रवीत् ॥१२॥ [२१
N] स्वैरं कुर्वन्तु कर्माणि भवन्तो विगत-ज्वराः ।
एकोऽहं भक्षयिष्यामि सर्वां तां हरि-वाहिनीम् ॥१३॥ [२२
१३] मोदन्तां राक्षसाः सर्वे प्रियाभिः सह सं-गताः ।[15] [२३
१४उ] अहं रामं वधि[16]ष्यामि सु-ग्रीवं स[17]ह-लक्ष्मणम् ॥१४॥ [२०उ
कुम्भकर्ण-सुतो वीरः कु[18]म्भः परम-कोपनः ।[19]

१. फ च रा प्र ल१ अ—अयं ॥ २. प्र ल२—वानरान् । ३. अ—प्रविष्टं सागरे घोरे ? मथवा धरणीतले । ४. म—दंष्ट्रो नाम । प्र— वक्त्रदंष्ट्रो । ५. अ—० मेदोवलेपितम् । फ—० मेदोपलेपितम् । च—० मेदावलेपितम् । रा —० मेदोविलेपितम् ॥ ६. फ रा—वो । ७. प्र—हनू० । ८ अ—दुर्द्धर्षौ सुग्रीवे च सुलक्ष्मणो ॥ ९. फ रा ल२—परिघेन ॥ १०. फ— न त्वहं । ११. अ—धर्षणं घोरं । १२. फ अ—प्रभो ॥ १३. आ च रा प्र ल२—यज्ञ० । १४. आ—पवनोपमः । च रा अ—पर्वतोत्तमः ॥ १५. रा प्र ल२—नास्ति । १६. ल२—हनिष्यामि । १७. आ ल२—च सलक्ष्मणं ॥ १८. फ—निकुम्भः । १९. रा प्र—नास्ति ।

१८] अब्रवीत् परम-क्रुद्धो[1] रावणं लोक-रावणम् ॥१.५॥ [१९
१.६पू] सर्वे भवन्तम् तिष्ठन्तु महा-राजेन सं-गताः ।[2] [२०पू
अहम् एको वधिष्यामि सु-ग्रीवं सह-लक्ष्मणम् ।
१७] अंगदं स[3]-हनूमन्तम् अन्यांश्[4] च[4] कपि-कुंजरान् ॥१.६॥ [२४

इत्यार्षे[5] रामायणे सुन्दर-काण्डे मन्त्रि-वाक्यं[6]
नामैकोनाऽशीतितमः सर्गः ॥७९॥

---

१. अ-परमः क्रुद्धा । २. रा ल$_2$—नास्ति ॥ ३. ल$_2$—च हनूमन्तम् । ४. प्र—अन्यान् स ॥ ५. आ फ—आर्षे । ल$_2$—इति सु० । ६. च रा प्र ल$_2$—औत्पातिकदर्शनं । आ—लंकापर्वण्यौत्पातिकदर्शनो । अ—लंकापर्वणि मन्त्रवाक्यं ॥

ततो नि-कुम्भो रभसः[1] सूर्य-शत्रुर् निशा-चरः ।
१] सुप्त[2]-घ्नो यज्ञ[3]-कोपश् च महापार्श्व-महोदरौ[4] ।।१।। [१
अग्नि-कोपश्[5] च दुर्-धर्षो रश्मि-केतुश् च वीर्य-वान् ।
२] इन्द्र-जिच् च महा-बाहुर् बल-वान् रावणाऽऽत्म[6]-जः ।।[7]२।। [२
प्र-घसोऽथ वि-रूपाऽक्षो वज्र-दंष्ट्रो महा-बलः ।[7]
३] धूम्राऽक्षोऽथ[8] प्र-हस्तश्[9] च दुर्-मुखश् चैव राक्षसः ।।३।। [३
प्र-संभो[10] वज्र-नाभश् च भूरि-वेगश् च राक्षसः ।
N]विद्युज्-जिह्वोऽथ त्रि-शिखो मेघ[11]-वर्ण-धरस् तथा[11] ।।४।। [N
परि-घान् पट्टिशांश्[12] शक्तीः[12] खड्ग[13]-शूलाऽसि-मुद्गरान् ।
४] चापानि[14] शित[15]-बाणानि खड्गांश् च वि-पुलान्[16] शितान्[17] ।।५।। [४
प्र-गृह्य परम-क्रुद्धाः[18] समुत्-पत्य च राक्षसाः ।
५] तेऽब्रुवन् रावणं [19]सर्वे प्र-दीप्ता इव तेजसा ।।[20]६।। [५
अद्य[21] रामं हनिष्यामः सु[22]-ग्रीवं च[22] स-लक्ष्मणम् ।
६] कृपणं च[23] हनूमन्तं[23] लंका येन प्र-धर्षिता[24] ।।७।। [६

---

१. अ-भरसः । फ-नामा स । २. फ-शत्रुघ्नो । प्र ल$_{2}$-सुप्तघ्नो । ३. अ-यक्षकोपश्च । ४. अ-महोदरः ।। ५. फ अ-अग्निकेतुश्च । ६. फ-रावणाग्रजः । ७. अ-नास्ति ।। ८. ल$_{2}$-धूम्राक्षोथ ।। ९. अ-प्रहस्तस्य ।। १० फ-पनसो । ११. आ-मेघवर्णः खरस्तथा । अ-मेघवर्णखरस्तथा ।। १२. अ-पट्टिशान्प्राशान् । १३. अ-शक्तिशूलानि मु० । प्र ल$_{2}$-शक्तिशूलासिमु० । १४. अ-न चापानि । आ फ च प्र ल$_{2}$-चापानि च । १५. आ-सर्वाणि । फ च ब ल$_{2}$-सबाणानि । प्र-सबाणानि । १६. आ फ च प्र ल$_{2}$-विमलान् । १७. आ फ च ल$_{2}$-सितान् ।। १८. फ च रा प्र अ-परमः क्रुद्धः । १९. ल$_{2}$-क्रुद्धं । २०. अ-नास्ति ।। २१. अ-वयं । २२. अ-ससुग्रीवं । फ च-सुग्रीवं सह । २३. च-तं हनुमंतं । प्र ल$_{2}$-तं हनूमन्तं । २४. रा-प्रदर्षिता ।।

तान् गृहीतां[1]ऽऽयुधान् सर्वान् वारयित्वा वि-भीषणः ।
७] अब्रवीत् प्राऽञ्जलिर् वाक्यं पुनः प्रत्युप-वेश्यं तान्[2] ॥[3] ८॥[७
अभ्यु[4]-उपायैस् त्रिभिर् भ्रातर् योऽर्थः प्राऽऽप्तुं न शक्यते ।
८] तस्य विक्रम[5]-कालं तु कथयन्ति मनीषिणः ॥९॥[6] [८
प्र-मत्तेष्व्[7] अभि-युक्तेषु दैवेनोप[8]-हतेषु च ।
९] वि-क्रमास् तात सिद्ध्यन्ति[9] परीऽऽक्ष्य[10] विधि-वत् कृताः[11] १० [९
अप्र-मत्तं कथं रामं वि-जिगीषुं बले[12]-स्थितम् ।
१०] जात-कोपं सुदुर्-धर्षं प्र-धर्षयितुम् इच्छसि[13] ॥११॥ [१०
समुद्रं लंघयेद् यो वै घोरं नद्-नदी-पतिम् ।
११] वधं हनूमतो लोके[14] कश्[15] चिन्तयितुम् अर्हति ॥१२॥ [११
बलान्य् अ-परिमेयाणि[16] वीर्याणि च निशा-चराः ।
१२] परेषां सहसाऽव-ज्ञा न कर्त्तव्या कदा-चन[17] ॥१३॥ [१२
किं च राक्षस-राजस्य रामेणाऽप-कृतं पुरा[18] ।
१३] आ-जहार जन-स्थानाद् भार्यां यस्य[19] यशस्-विनीम् ॥१४॥[१३

---

१. च—गृहीत्वा० । २. अ—०वेशितान् । अ—०वेश्य ताम् । ३. रा—उवाच वाक्यं वाक्यज्ञः शृण्वतां रक्षसामिदम् । प्र ल$_2$—उवाच वचनं धीमान् युक्तिमद्युक्तिकोविदः । च—नास्ति ॥ ४. अ—अप्युपायैस्त्रिभिस्ततो । फ—अभ्युपायैस्त्रिभिस्ततो । ५. फ अ—विक्रमकालांस्तीन् । ६. च रा प्र ल$_2$—नास्ति ॥ ७. अ—प्रथमन्तेष्वभियुक्तेषु । फ—प्रसक्तेषु नियुक्तेषु । ८. फ—देवेनोप० । च—दैवेनाप० । ९. ल$_2$—विक्रमस्त्यतिसिद्ध्यन्ति । अ—तात षिध्यन्ति । १०. ल$_2$—निरीक्ष्य । ११. रा—विवसत्कृताः ॥ १२. अ फ च रा ल$_2$ प्र—बले स्थितम् । १३. अ—इच्छथ ॥ १४. अ—हनुमतो लोके । रा प्र ल$_2$—हनुमतस्तस्य । १५. अ—कर्तुं कस्तस्य लंभ्यते । रा—न किञ्चित्कर्तुमिच्छसि । प्र—न कश्चित्कर्तुमर्हसि । ल$_2$—न कश्चित्कर्तुमर्हति ॥ १६. अ—अपरिमेयानि । १७. च—कथंचन ॥ १८. अ—तु सः । १९. अ—यस्य भार्यां ॥

खरो यद्य् अति-वृत्तस्[1] तु रामेण सम्-अरे हतः ।
१४] अवश्यं प्राणिभिः प्राणा रक्षि-तव्या यथा-बलम् ॥१५॥ [१४
राज-पुत्री-निमित्तं हि सु-महद् भयम् आ-गतम् ।
१५] तस्मात् सीता परि-त्याज्या कुलाऽर्थे नाऽत्र संशयः ॥१६॥ [१६
कुलं[2] राज्यं च बन्धूंश् चं[2] लंकां चैव स-राक्षसाम् ।
१६] ऐश्वर्यं चैव[3] दुष्प्राऽऽप्यं वीऽऽक्ष्य सीता प्र-दीयताम् १७ [N
नं[4] ते[4] क्षमं वीर्य-वता तेन धर्माऽनु-वर्तिना ।
१७] वैरं निर्-अर्थकं कर्तुं दीयताम् अद्य[5] मैथिली । १८॥ [१७
यावन् नाऽश्व-गजाऽऽकीर्णां बहु-राक्षस-संकुलाम् ।[6]
१८] पुरीं[9] दारयते[7] रामस्[8] तावत् सीता प्र-दीयताम् ॥१९॥ [१८
बल-वान् अस्त्र-विद् रामो यावत् ते राक्षसीं चमूम्[10] ।
N] न वि-ध्वंसयते क्रोधात् तावत् सीता प्र-दीयताम् ॥२०॥ [N
यावल् लक्ष्मण-बाणौघैर् भिन्न-प्राकार-तोरणा । [N
१९] न भस्मी-क्रियते लंका तावत् सीता प्र-दीयताम् ॥२१॥[11] [१९उ
प्र-सादये[12] त्वां बन्धुस्[13] त्वं[13] कुरुष्व वचनं मम ।

---

१. आ-यद्यनिवृतस्तु । फ-यद्यतिवीर्यस्तु । ल₂-यद्यतिवृत्तस्तु ॥ २. अ-राक्षसराजं च । फ च रा ल₂-राक्षसराज्यं च । ३. अ-च सुदुष्प्रासं । फ-यं च सुदुष्प्राप्यं । रा प्र ल₂-चैव दुष्प्रापं ॥ ४. च-तं न । ५. अ-दीयतां तस्य ॥ ६. अ-जावल्लक्ष्मणबाणौघैर्भिन्नप्राकारतोरणा । ७. अ फ-न भस्मीक्रियते। आ-पुरीं दारायते । ८. अ फ-लंका । रा-यावत् ॥ ९. प्र ल₂-पुरीम् । १०. च प्र ल₂-लंकां । ११. अतः परमधिकः पाठः-फ च रा प्र ल₂-विनश्येद्धि† पुरी लङ्का शूराः सर्वे च राक्षसाः । रामस्य यदि पत्नी सा न स्वयं प्रतिदीयते‡ । यावत्सुघोरा महती दुर्धर्षा हरिवाहिनी । * यावत्कन्दति नो लङ्कां तावत्सीता प्रदीयताम् ॥ १२- रा-प्रसाधये । १३. अ-बन्धुस्ते । आ-च बन्धुस्थं ।

---

†च रा प्र-विनश्येद्धि । ल₂-विनश्यति । ‡च-प्रतिदीयतां । *च रा-नावस्कन्दति ।

२२] ब्रवीम्य् अहं हितं पथ्यं दीयतां तस्यै मैथिली ॥२२॥[2] [२१

न ते क्षमं वीर्य-वता महौजसा

धर्माऽऽत्मना धर्म-परेण धीमता ।

निर्-अर्थकं वैरम् अ-मित्र-घातिना

२३] प्र-दीयतां दाशरथाय मैथिली ॥२३॥[3] [N

पुरी[4] वि-शाला गज-वाजि[5]-शोभिता[6]

प्र-भूत-रत्ना[7] वर-राक्षसैर् वृता ।[8]

न चेद् इयं[9] नश्यति वानराऽर्दिता

२४] प्र-दीयतां दाशरथाय मैथिली ॥२४॥ [N

महा-बलैः[10] शस्त्र-बलैः समा-हता

विशीर्ण--शस्त्र--ध्वज--वर्म--कार्मुका ।

पुरा रणे नंक्ष्यति राक्षसी[11]-चमूः

N] प्र-दीयतां दाशरथाय मैथिली ॥२५॥ [N

पुरा रणे राघव-बाण-पीडिता

द्रवन्त्य् अमी शोणित-रक्त-मूर्द्धजाः[12] ।

निशा-चराः सं-यति वानराऽर्दिताः

२६] प्र-दीयतां दाशरथाय मैथिली ॥२६॥ [N

महेन्द्र-वज्र-स्वन-वर्द्धनान्[13] बहून्

---

१. अ--तात । २. च--नास्ति ॥ ३. अ--नास्ति । ४. अ फ--पुरा । ५. अ--गजराज० । ६. फ--पुरी तवेयं वररत्नशोभिता ॥ ७. फ--प्रभूतरक्षोवर० । ल२--प्रभूतरत्नाकर० । ८. अ--प्रभूतरत्नावरराक्षसा युता । फ--प्रभूतरत्नावरराक्षसैर्युता । ९. अ--अयं । १०. च रा प्र--०बलस्यास्त्रबलैः । ११. च रा प्र--राक्षसाकुला ॥ १२. रा प्र--द्रवन्त्यनीशाः खलु रक्तमुद्रहाः ॥ १३. अ--०स्वनमूर्जवर्चसम् । च रा प्र ल२--०मूर्जवर्द्धनम् ।

धनुर्-वरं[1] कांचन-रत्न[2]-चित्रितम् ।
पुरा शरान् मुञ्चति वज्र-संनिभान्[3]
N] प्र-दीयतां दाशरथाय मैथिली ॥२७॥[4] [N
पुरा सु-घोरा हरि-वाहिनी पुरीम्
इमाम् अव-स्कन्द्य बलात्[5] प्र-धर्षति ।
दुरा-धरां रावण[6]-बाहु-पालितां
२७] प्र-दीयतां दाशरथाय मैथिली ॥२८॥[7] [N
न ते वि-नश्येन् नगरी स-राक्षसा
सुदुर्-लभं जीवितम् एव[8] चाऽनर्थं[9] ।
कुरुष्व सत्यं सुहृदस् त्व् इदं वचः[10]
२८] प्र-दीयतां दाशरथाय मैथिली ॥२९॥[7] [N
पुरा शरान् सूर्य-मरीचि-संनिभान्[11]
नृपाऽऽत्मजोऽसौ नि-शितान्[12] सु-पर्वणः ।
सृजत्य् अ-मोघान् वि-विधान् वधाय ते
२५] प्र-दीयतां दाशरथाय मैथिली ॥३०॥ [२२
इमां परि[13]-त्राहि पुरीं स-राक्षसां
सम्-ऋद्धम् अन्तः-पुरम् अग्न्य्-निश्रयं[14](?य) ।
त्वद्-आश्रयं[15] बन्धु[16]-जनं च[17] रावण

१. अ च–धनुर्द्धरं । ल$_2$–धनुर्धरं । आ–धनुर्धरः । २. अ–०नसूर्य-सन्निभम् । आ–०रत्नचित्राम् । फ–०रत्नचित्रान् । ३. रा प्र ल$_2$–शरान् रणे मुञ्चति रत्नसन्निभान् । ४. फ–नास्ति ॥ ५. अ–बलां प्रकर्षति । फ–बलात्प्र-कर्षति । ६. च–राघव० । ७. रा प्र ल$_2$–नास्ति ॥ ८. आ–एव वानरैः । अ–अद्य रावण । ९. अ–प्रगृह्य । १०. फ–कुरुष्व त्वं सुहृतं तमेव च ? ॥ ११. प्र–नास्ति । १२. प्र–निशिताः ॥ १३. च–पुरीं पाहि । १४. अ–अग्ननिश्रयं । आ–अग्ननिश्चये । फ–अग्न्यनिस्वनाम् । १५. फ–वेदाश्रयं । १६. अ फ–भृत्यजनं । १७. च–वराहृता । फ–च राघवात् ।

२९] प्र-दीयतां दाशरथाय मैथिली ॥३१॥[1] [N

त्यजस्व का[2]मं सुख-धर्म-नाशनं
भजस्व धर्मं कु[3]ल-कीर्ति-वर्द्धनम् ।
प्र-सीद जीवेम स-[4]बान्धवा वयं
३०] प्र-दीयतां दाशरथाय मैथिली ॥३२॥[5] [२३

इ[6]त्यार्षे रामायणे सुन्दर-काण्डे विभीषण-वाक्यं
नामाऽशीतितमः सर्गः ॥८०॥

---

१. रा प्र ल$_{2}$—नास्ति । अतः परमधिकः पाठः—अ च प्र—पुरा शरैर्भास्कररश्मिसन्निभैः प्रसन्नधौतैः सुशितैः† शिलीमुखैः । महाहवे भस्म करोति राक्षसान् प्रदीयतां दाशरथाय मैथिली ॥ २. च रा प्र ल$_{2}$—कोपं । ३. ल$_{2}$—बलकीर्ति० । ४. अ—सपुत्रबान्धवाः । ५. फ—नास्ति ॥ ६. फ—आर्षे रामायणे । ल$_{2}$—इति सुन्दरकाण्डे ॥

† च—०धौरश्च सितैः । रा प्र—०धौरश्च शितैः ॥

## [एकाऽशीतितमः सर्गः]



विभीषण-वचः श्रुत्वा धर्मोऽर्थ[1]-सहितं तदा[2] ।
१] मन्त्रिभिः[3] सह मेधावी मन्त्रयामास रावणः ॥१॥
वाक्य-विद् वाक्य-कुशलो[4] दक्षो दक्ष-जन-प्रियः ।
२] राक्षसाऽधि-पतिर्[5] वाक्यं युक्ताऽर्थम् इदम् आ-ददे[6] ॥२॥
स्व-शक्तिं पर-शक्तिं च देश-कालौ[7] च तत्त्व-तः[8] ।
३] सम्-ईक्ष्याऽऽरभते[9] कर्म यः[10] स बुद्धि-मतां[11] वरः ॥३॥
कर्मणाम्[12] अनु[13]-बन्धं च विदित्वा[14] सर्व-कर्मसु ।
४] अर्थाऽनर्थाऽनु[15]-बन्धं च पर्य्-एषति[16] स पण्डितः[17] ॥४॥
सुव्यवस्थित-मन्त्रेण पर-मर्माऽभिघातिना[18] ।
५] भवितव्यं नरेन्द्रेण न काम-वश-वर्तिना ॥५॥
६पू] ऐश्वर्य-मद-मत्तेन सर्व-लोक[19]-विमानिना ।
१८उ] न हि धारयितुं शक्यं राज्यं चिरम् अन्-आमयम् ॥६॥
यः कार्य-निश्चयं[20] कृत्वा विषयान्[21] विषयाऽधि-पः ।

---

१. रा अ–धर्मार्थ० । २. अ–हितम् । ३. रा–मन्त्रिभिस् ॥ ४. प्र–०कुशलैः । ५. रा–०पति । ६. च ल$_2$ प्र ब म रा ल$_1$–अब्रवीत् ॥ ७. ल$_1$–देशकालो । फ च–देशकालै । ८. च अ म रा ब प्र ल$_2$–सर्वेशः । ल$_1$–सर्वतः । ९. प्र–समीक्ष्याचरते । १०. रा प्र–यस् । ११. फ रा प्र–बुद्धिरिहोच्यते ॥ १२. अ–स्वकार्यम् । १३. फ रा अ–अनुसम्बन्धं । फ–त्रुटितः पाठः । १४. रा अ–विदीत्वा । १५. फ च ल$_1$ ल$_2$ म प्र रा ब अ–अर्थमर्था० । १६. फ–यः पर्यस्यति । ल$_1$ ल$_2$ म प्र रा ब अ–च यः परीक्षेत् । च–पर्यस्यति । १७. रा–पडीतः ॥ १८. ल$_1$ म प्र फ ब च रा–परकर्म्मा० ॥ १९. च रा ब–०लोकाविमानिना । म प्र ल$_2$ अ–०लोकावमानिना ॥ २०. आ–०विजयं । २१. फ–०विषये ।

१९] [1]प्राऽऽप्तुं [2]कामयते [3]लोके स राज्य-फलम् अश्नुते ॥७॥
[4]अर्थाऽनर्थौ [5]वि-मृशता [6]चेष्ट-मानेन [7]निश्-चितम् ।
२०] [8]भवितव्यं वि-शेषेण राज्ञा नित्यं कृताऽऽत्मना ॥८॥
N] [9]सु-चेष्टया महाऽऽत्मानः [10]संततं वै वि-शेषतः ।
N] अ-[11]लक्ष्याः सर्व-भूतानां [12]भवन्ति बहु-कारिणः ॥[13]९॥
अ-[14]लक्ष्या हि [15]यथा लोके व्योम्नि [16]चन्द्राऽर्कयोर् गतिः ।
२१] नक्षत्राणां [17]ग्रहाणां च तथा [18]वृत्तं महाऽऽत्मनाम् ॥[19]१०॥
यं च पन्थानम् आ-क्रम्य प्र-[20]याति मनुजेश्वरः ।
२२] [21]तेनेश्वराऽभि-यातेन पथा [22]याति ध्रुवं जनैः ॥११॥
यथा लोके तथा [23]राज्ञां [24]वृत्ताऽनु-गमनं नयः ।

---

१. फ-प्राप्यं । ल$_1$ च रा प्र ब-आप्तुं । ल$_2$-आस्तुं । २. फ-प्रापयते । ३. फ-काले । अ-वाक्यं । ल$_2$-लोकैः ॥ ३. फ-अथानर्थौ । ल$_2$-अर्थानर्थौ । ५. आ-विमृषता । च-विष्टषता । रा-विमृष्येत । अ-विमृश्यत । ६. फ-चेछमानेन । अ-वेष्टमानेन । ल$_2$-नैष्टमानेन । ७. फ-निस्चितं । अ-निश्चलं । ८. प्र-भवितव्यमशेषेण ॥ ९. फ-चेछमानाः कृतात्मानः । च-चेष्टया हि महात्मानः । ब म रा प्र ल$_2$-चेष्टयन्तो म० । ल$_1$-पूर्वं विचार्यं बुद्धयें ? । अ-पूर्वं विचार्य म० । १०. फ च म रा प्र ल$_1$ ल$_2$-सद्वासद्वा । अ-शततं वै । फ च म रा प्र ब ल$_1$ ल$_2$-नास्ति । ब-सद्वासद्वापि शेषतः ११. आ-अलक्षः । अ-अलक्षां । १२. आ-भवति । १३. रा च ब प्र ल$_1$ ल$_2$-नास्ति ॥ १४. ल$_1$-अलक्ष्य । १५. ल$_1$-कथं । ल$_2$-न वा । १६. आ-चन्द्राकयोर् । १७. च-ग्रहणां । १८. आ-वृतं । १९. प्र रा ब ल$_1$ ल$_2$-नास्ति ॥ २०. च-प्रजातिर् । २१. फ-तेन शूरप्रयुक्तेन । च-तेनेश्वरातिगीतेन । ब-नेश्वराभिगीतेन । ल$_1$ ल$_2$ रा प्र अ-तेनेश्वराभिगीतेन । आ-तेनेश्वराभिजातेन । २२. फ ल$_1$ ल$_2$ रा प्र अ ब म-यान्ति ध्रुवं जनाः ॥ २३. ल$_1$-राज्ञं । ल$_2$-राज्ञो । २४. आ-वृत्तान्तानुगतो नयः । च-सद्वृतानुगतो नयः । च-सद्भूतागतो नयः । ब-तदुद्धतानुगतो नयः । प्र-धर्माद्भूता ? गतो नयः । म-वृतांतानुगतो नृपः । ल$_1$-भवेद्वृत्तो नयः । ल$_2$ अ-भूत्वागतो नयः ।

२३] बलस्य चतुर्-अङ्गस्य नायको[1]ऽनु-गतो नयः ॥[2] १२॥
पर्य्-आप्तं चाऽप्य् अभि-ज्ञानम्[3] इह स्वाऽधीनतां प्रति ।
२४] यत्[4] प्राऽऽप्ताम् अपि वैदेहीं नैव मे स्पृशते मतिः ॥१३॥
तत्र केऽप्य्[5] अ-कृताऽऽत्मानस् तपस्वि-जन-धर्षणम्[6] ।
२५] गर्हेरंस्[7] तत्र मे[8] बुद्धिर् इयं प्राग् एव निश्-चिता[9] ॥१४॥
तापसानाम् अलं-कारं त्वंतं[10] धारयतीं[11] कथम् ।
२६] बाण-चापाऽसि-हस्तेन वि-द्राव्या वने[12]-चारिणः ॥१५॥
ननु[13] शान्ताऽऽत्मभिर् वाऽपि[14] सर्व-भूत-दया-परैः ।
२७] भवितव्यं फलाऽऽहारैर् नित्यम्[15] आश्रम-वासिभिः ॥१६॥
सूक्ष्म-रक्ताऽम्बर-धरा[16] तप्त-कुण्डल-धारिणी[16] ।
२८] का द्वितीया यथा सीता वसत्य्[17] आश्रमे[17]-वासिनी ॥१७॥
केन नूपुर-निर्-घोषा[18] (:) सकलाऽऽभरण[19]-स्वनाः ।

---

१. आ—नायकाङ्कगते । प्र—नायकानुगते । २. अ—नास्ति ॥ ३. प्र—ज्ञानत्वमिह । ४. फ—तत्प्राप्यामपि । म रा ल$_1$ ब—तत्प्राप्तामपि । प्र—तत्प्राप्तुमपि ॥ ५. आ अ म—केचित्कृता० । च—के न कृता० । फ—०तात्मानं । च—०तात्मा वस्० । ६. फ—तपस्विजनमर्धर्मिणम् । च—०जनघर्षणम् । प्र—तपस्वितेन मर्षणम् । ल$_2$ रा ब म—०जनमर्षणम् । अ—०जनममर्षणम् । ७. फ अ—गर्हेयुस् । ८. ल$_1$—त्रै । ९. प्र—निर्मिता ॥ १०. आ म—त्वने । ११. अ च—धारयतां । फ प्र—धारयते । १२. आ—वनवारिण: ॥ १३. आ—न तु शां० । प्र—नानुशां० । १४. फ ल$_1$ ल$_2$ च—०भिर्नाम । म रा ब—०भिर्नाम । प्र—०भिर्वा ? न्व ? । अ—०भिश्चैव । १५. रा ब—नित्य आ० ॥ १६. च—०धरास्तप्तकुण्डलधारिणा । १७. अ—भवत्याश्रम० । च—त्रसत्याश्रमवासिनां ॥ १८. फ—०निर्घोषं । प्र—०निर्घोषः । १९. फ—कलत्राभरणस्वनः । च—सुकलाभरणा-स्वना । अ—सुकलाभरणस्वना । ब—सुवर्णाभ० । प्र—स्वरक्ताभरणनिःस्वना । म—सकलाश्चाभरणस्वनाः । ल$_1$—सुवर्णभरणस्वनाः । ल$_2$—सुरक्ताः भरण-स्वनः ।

२९] श्रुत-पूर्वा[1] मनुष्येण धर्मार्थं[2] वसता वने[2] ॥१८॥
तद्[3] एवं[3] धर्माऽऽचरणाद् विनि-वृत्तः स राघवः ।
३०] राक्षसानां वधं कृत्वा[4] ते गतास् त्रि-दिवं पुनः[5] ॥१९॥
६३] अ[6]-तर्क्यम् अप्य् अ-निश्चेयं[6] [7]दैवं कर्म् तु वि-लंघयेत्[8] ।
अर्थाऽनू-अर्थं फलं लोके सर्व-प्राणिषु वर्तते ॥२०॥[9]
७] तत्र[10] यन्[11] मानुषं कर्म तत् सर्वं सु[12]-परीऽऽक्षितम् ।
यच्[13] च वै[13] मानुषाद्[14] अन्यद्[15] दैवं च तत् सम्-ईक्षितम्[15] ॥२१॥[16]
८] [17]सर्वे समनु-पश्यन्ति यां गतिं बुद्धि[18]-चिन्तकाः ।
तां कृताऽन्तः[19] प्रभुर् भूत्वा यथेष्टम् अपि[20]-कर्षति ॥२२॥
९] कथं वानर[21]-मात्रेण लंका हीऽयं वि-गाहितुम्[22] ।
शक्या दैवाद् ऋते[23] तस्माद्[23] दैवं सु-महद्[24] अद्भुतम् ॥२३॥
१०] वि-पन्नेष्व्[25] अपि कार्येषु[26] यथा[27] मन्त्रा[27] महा[28]-बलाः ।

---

१. फ—श्रुतपूर्वं । प्र—श्रुतपूर्वो । २. फ—धर्मार्थाश्रमवासिना ॥ ३. प्र—तद्दैवं । ल$_1$ म ल$_2$—तदैव । ४. फ—श्रुत्वा । ५. फ रा अ—ध्रुवं ॥ ६. आ—अत्यर्थमथ निश्चित्य । फ च—अतर्क्यमपि निश्चित्य । म—अतर्क्य-मविनिश्चेयं । ७. प्र -दैव । ८. आ—कर्म सनातनम् । ९. अ—नास्ति ॥ १०. म—यत्र । ११. च म—यत् । १२. रा—स परीक्षितम् । १३. आ फ—यथैव । च म—यच्चैव । रा ल$_1$ ल$_2$ ब—यश्चैव । १४. आ रा—दैवता । १५. अ—अन्यैर्दैवं तत्प्रसमीक्षितम् । म—अन्यद्दैवं तच्च समीक्षितम् । आ—अन्यद्दैवतं त० । च—अन्यद्दैवततं सं० । ल$_2$ ब—अन्यद्दैवं तश्च समीक्षितम् । ल$_1$ ल$_2$—दैवं तश्चस-मीक्षितम् । १६. प्र—नास्ति ॥ १७. आ म—पूर्वं । फ—पूर्वे । १८. फ—मतिं । १९. प्र ल$_2$—कृतार्थः । २०. प्र ल$_2$—यथेष्टमपि । अ—यथेष्टमनु० ॥ २१. ल$_2$—चारणमन्त्रेण । २२. अ—विगार्हितुं । ल$_2$—विगाहितं । २३. फ च—यस्मात्तस्माद् । आ—ह्यस्माद्दैवं । अ ल$_1$ ल$_2$—तस्माद्दैवं । २४. फ च—महद् ॥ २५. प्र—विषमेष्वपि । ल$_2$—विभन्नेष्वपि । २६. फ—चार्थेषु । २७. फ—यस्माद्भुतं । च—यस्मान्मन्त्रो । अ ल$_2$—तस्मान्मन्त्रो । रा—यस्मान्मन्त्रं । ब म—यस्मान्मन्त्रे । प्र—यस्मान्मन्त्रे । ल$_1$—यस्मान्मन्त्र । २८. फ अ ल$_1$—महाबलः । ल$_2$—महाबला ।

अरयोऽपि वशं यान्ति तस्मान्[1] मन्त्र-वशो नयः[1] ॥२४॥
११] ब्राह्मणानां यथोंकारः[2] प्राऽधीतानां[3] सदा[4] भवेत् ।
मन्त्र-मूलानि कर्माणि तथा[5] राज्ञां[6] वि-शेषतः ॥२५॥
१२] गीयते हि यथा लोके श्रुति-मार्ग-प्रदर्शनम्[7] ।
तद्-विधं[8] कुरुते विद्वान्[9] मन्त्र-कर्म-परिग्रहम्[10] ॥२६॥
१३] यादृशैः[11] सह मन्त्रैश्[12] च[12] परि-रक्षा[13] च यादृशैः[14] ।
राज्ञां[15] नय-वशान् मन्त्रैः[16] सर्वम् एतत् सुनिश्-चितम्[17] ॥
१५] विपरीतं[18] ततः सर्वं[19] वर्जनीयम्[20] इति श्रुतिः ॥२७॥
तस्मात् सर्वैर्[21] गुणैर् युक्तैर्[22] भवद्भिः सह[23] मन्त्रणम्[23] ।

---

१. ब प्र रा—०तस्मात्मन्त्र० । म च रा ब प्र ल$_1$—मन्त्रपरो जयः । ल$_2$—०मन्त्रपुरो जयः ॥ २. अ—सदाकारः । ३. आ च रा ल$_1$ अ—प्रधीतानां । म ल$_2$—पठताम् । ४. फ—यथाभवत् । च अ—यथा भवेत् । रा प्र ब—पुरोभवत् । म ल$_2$—पुरो भवेत् । ल$_1$—परो भवेत् । ५. रा—राज्ञां । ६. फ—राज्यं । ल$_1$—राज्ञो । रा—चैव ॥ ७. फ—०मार्गः सनातनः । च—०मार्गं प्रदर्शितं । प्र रा ब म, ल$_1$ ल$_2$—०मार्गः प्रदर्शितः । ८. फ—तं विद्यात् । अ—तद्बुद्धिं । आ म ल$_1$ ल$_2$—तद्विधः । ९. आ म ल$_1$ ल$_2$—यद्वन् । फ—धर्मत । १०. फ—परिग्रहात् ॥ ११. ल$_1$ प्र रा—यादृस् । ल$_2$—यादृशः । १२. फ—मन्त्रं स्यात् । ब—मन्त्रैश्च । अ—मन्त्रेन । १३. आ—०रक्षश्च । च—०रक्षात्मा । अ—०रक्षाश्च । १४. फ म—तादृशी । च ल$_1$ प्र रा ब ल$_2$—यादृशी । अ—यादृशा । १५. फ—राज्यं । रा-राज्ञा । १६. फ—०वशान्मन्त्राः । रा—०वशान्मन्त्रस् । ब—०वशात्मन्त्रः । १७. रा—तद्धि निश्चितम् । ल$_2$—तद्धिनिश्चितम् । अ—तत्सुनिश्चितम् । १८. फ अ—विपरीतस्त्वतः । रा—विपरितं । १९. फ अ—सर्वौ । २०. फ—वर्जनीय इति स्मृतम् । च—वर्जनीयमिति श्रुतेः । अ—वर्जनीय इति श्रुतिः ॥ २१. आ—पूर्वैं । म ल$_1$ रा ब प्र ल$_2$—सर्वै । २२. ल$_1$ ल$_2$ ब—रा—युक्तं भवद्भिः । म—युक्तं भवद्भिस् । २३. प्र—सर्वमंत्रणं । ल$_2$—सर्वमंत्रिणं । अ—सह मंत्रिभिः ॥

१६] तत्राऽयं सर्व-संक्षेपः श्रूयतां निश्-चयो मम ॥२८॥
ऐकं[1]-मत्येन भवतां[2] प्र-कुर्याद् रिपु[3]-बन्धनम् ।
१७] कार्यम् एकाऽर्थतां दैवं[4] मम चैव परस्य वा[5] ॥ २९॥
१८पू] विदित्वा[7] मन्त्र्यतां[8] मन्त्रः समं[9] निश्चय-लक्षणम् ।
N] मन्त्र-निश्चयम् आ-पन्नो वि-धास्ये यद् अनन्तरम् ॥३०॥

इत्यार्षे[10] रामायणे सुन्दर-काण्डे रावण-वाक्यं
नामैकाऽशीतितमः सर्गः ॥८१॥

---

१. आ–एकमस्येन । रा ब म–एकमन्येन । अ–एकमस्ये तु । २. रा ब प्र म ल$_3$–भक्त्या च न कुर्याद् । अ–भवतां यः कुर्याद् । आ–भवतां न कुर्या । ३. आ रा ब प्र ल$_1$–अपि ब० । अ–विप्रब० । फ–रिपुनिग्रहम् । ल$_1$–रिपुवर्धनम् । ४. च ल$_2$ रा ब अ प्र ल$_1$ म–चैव । ५. च ल$_1$ रा ब म–च । अ प्र ल$_2$–हि । ६. म–कार्यमनिश्चयमात्रो विधास्ये यदन्तरम् । फ–कार्यमेकार्थतां चैव परेषां मम एव हि ॥ ७. फ–विचिन्त्य । ८. रा.–मंत्रता मत्रस । अ–मंत्रता । ९. आ–सामनि० । च–सवस्ये नि०। ब–उमिक्षित सलक्षणः । प्र–समेत्य शुभलक्ष्मणः । म–समैक्षत सलक्षणः । ल$_1$–ससैन्य मम लक्ष्मणः । ल$_2$–समालक्ष्य च लक्ष्मणः । अ–सूक्ष्मलक्ष्मण-लक्षितः । रा–तमैक्षत स लक्ष्मणः ॥ १०. फ–इति रामायणे ॥

## [वं-८१]= [ द्व्यशीतितमः सर्गः ] =[दा-N]

३१ उ] अ-विह्वलश्[1] च विद्यासु सं-युगेऽथं[2] परा-क्रमे ।[3]
प्र-हस्तः प्रथमं वाक्यम् इदं[4] वक्तुम् उपाऽऽददे ॥१॥
३२] यत् किञ्चिद् गुण-सम्पन्नम्[5] अनु-रूपं महाऽऽत्मनाम्[6] ।
चेष्टितं सर्व-भूतेषु तद्[7] राजंस् त्वयि वर्तते ॥२॥
३३] को[8] हि नाम बलैर् युक्तस्[9] तैस् तैर्[10] एवं महा-गुणैः ।
मन्त्र-मूलानि[11] कर्माणि[11] कुरुते[12] त्वद्-ऋते नरः[12] ॥३॥
३४] भवन्ति हि वि-शेषेण नियम् उन्मत्त-चारिणः[13] ।
राजानः प्र-सभं[14] लोके स-रोषा[15] इव हस्तिनः ॥४॥
३५] न[1] हि किञ्चिद्[16] अ-कर्त्तव्यं कृतं नाऽपि[17] करिष्यसि[18] ।

---

१. फ–अविहस्तस्तु । च–अविहस्तस्त्ववि० । रा प्र ब म–अविहस्तश् । $ल_1$–अविहस्तः च । अ–अविहस्तः वि० । २. फ च रा प्र ब म $ल_1$–संयोगेऽथ । अ–संयोगे च । ३. अतः परमाधिकः पाठः–आ–को हि नाम बलैर्युक्तैस्तैस्तैरेव महागुणैः । पुनरुक्तश्चायं ३यपूर्वार्धेन । ४. आ–इदमुत्तरमाददे । फ $ल_2$–इदं शूत्तरमाददे । ब–इदं शूर उपादधे । प्र–इदं शूरमुपाददे । च रा म $ल_1$–शूतर उपाददे ॥ ५. फ च रा प्र ब म $ल_1$ $ल_2$–०संयुक्तम् । ६. आ–महात्मनः । ७. आ–तद् राजं । फ अ–तत्सर्वं । च–तद् राजन् ॥ ८. च रा ब म $ल_1$ $ल_2$–को हि राजन् । प्र–को राजन् । ९. आ–युक्तैस् । ब म $ल_1$ $ल_2$–युक्तः । १०. रा प्र ब म $ल_1$ $ल_2$–तैश्चैव ॥ ११. रा प्र म $ल_1$ $ल_2$–त्वद्विधो मंत्रमूलानि कार्याणि । फ अ–०मूलानि कार्याणि । १२. फ अ–राजात्मनि विभावयेत् । रा प्र म $ल_1$ $ल_2$–कुरुते नरः ॥ १३. फ–उतम० । ब–उत्मभ० । प्र–उत्तम० । १४. $ल_1$ अ–प्रथमं । १५. फ–मुदोषा । ब म–सरोष । $ल_2$–सरोषः । अ–सदोषा ॥ १६. फ $ल_2$–हि कश्चिद् । म–किञ्चिद्धि । १७. आ फ च अ–वापि । १८. आ फ–करिष्यति ।

न ह्य् एवं-लक्षणाद्[1] धर्माद् वि-चलन्ति[1] नयाऽनु-गाः[2] ॥५॥
३६] अथेमे सर्व-कार्येषु[3] चत्वारः[4] समुदा-हृताः ।
उपायाः[5] कार्य-सिद्ध्यर्थं तान्[6] नि-बोध यदीऽच्छसि[7] ॥६॥
३७] साम[8] चैव प्र-दानं च भेदो दण्डश् च[9] सर्व-शः[11] ।[10]
एते सर्वाऽऽत्मना राज्ञा प्र-योक्तव्या विधान[11]-तः ॥७॥[12]
३८] तत्र[13] साम प्र-योक्तव्यम्[14] आर्येषु[14] गुण[15]-वत्सु च ।
दानं[16] लुब्धेषु[16] भेदश्[17] च शंकितेष्व् इति निश्[17]-चयः ॥८॥
३९] दण्डः[18] लब्धेषु[19] पापेषु[20] नित्यं[21] राजन् दुर्-आत्मसु ।
४०पू] अप-कारिषु[22] नित्यं च सोऽयं शास्त्र-विनिश्चयः ॥९॥
उपायांस् त्रीन् अति-क्रम्य तत्त्व[23]-योगांस् तथैव च ।
N] दुर्-बलेन[24] तु रामेण वयं दण्डेन तर्जिताः ॥१०॥[25]
४१उ] न[26] तु[26] नाम वयं युक्तास्[27] तेन[27] सामाऽऽदिभिर् गुणैः ।

---

१. फ—०लक्षणो धर्म्मौ विचरन्ति । रा—दक्षिणा धर्म्मद् वि० । प्र—धर्मान्न चलन्ति । ल$_{2}$—धर्मान्न चलान्ति । २. ल$_{2}$—तथानुगाः । रा—तथानुगा ॥ ३. प्र ल$_{2}$—०लोकेषु । ४. म—चत्वरः । ५. रा—उपाया । ६. आ च रा—तन् । ७. च—यदिच्छसि । रा ब ल$_{1}$—यथेच्छसि ॥ ८. फ समश्चोपप्र० । आ—सामयानप्र० । अ—साम चोपप्र० । ९. फ च—दण्डस्तथैव च । १०. च—नास्ति । ११. फ ब म ल$_{1}$ल$_{2}$अ—विभागशः । रा—विभागसः । १२. प्र च—नास्ति ॥ १३ रा—तच । १४. अ—प्रयोक्तव्यं कार्येषु । १५. फ—गुरूत्र(म)त्सु । १६. च—साम वाथ प्रदानं लुब्धेषु । रा—दानलुब्धेषु । ल$_{2}$—दानं लोष्टेसु । १७. आ—देयं स्याच्छंकितेष्वितरश्च यः । फ ब—भेदश्च संकि० । रा—भेदश्च शंक० । प्र—शंकितष्वाभिनिश्चयः ॥ १८. ल$_{1}$—दण्डाः । १९. फ—तथैव । रा—स्तब्देषु । अ—सत्येषु । २०. फ अ—पात्यस्तु । च प्र रा ब म ल$_{1}$ ल$_{2}$—पात्यश्च । २१. फ अ—नित्यकालं । आ ब ल$_{1}$—राजं । २२. आ—अघकारिषु ॥ २३. आ अ—द्वंद्वयोगात् । फ०तत्त्वयोगंस् । प्र—दण्ड-योगांस् । २४. फ—दुर्लभा न तु । २५. रा—नास्ति ॥ २६. फ प्र म ल$_{1}$ ल$_{2}$ अ—ननु । २७. फ—युक्तास्तथा । च—युक्तांस्तेन ।

दुर्-बलेन बलैर्[1] युक्ताः सर्व-[2]शस्त्रैः प्र-सा(?दि)धि[2]तुम् ॥११॥[3]

४२] [4]दण्डस् [4]तस्य तु पर्य्-[5]आप्त एतद् एवाऽत्र [6]कारणम् ।

उपायांस् त्रीन्[7] अति-क्रम्य यद्[8] दण्ड-रुचिर् एव [8]सः ॥१२॥

४३] एवं [9]कृत्वा यथा-[10]न्यायं दण्डस् [11]तस्य तु [11]साधकः ।

N] दण्डस् तस्य तु[12] यो[12]क्तव्यो ह्य् अनु-रूपश् च सर्व-[13]था ॥१३॥

सुखं चैव हि नो युक्तम् अनु-रूपं च [14]सर्वदा ।[15]

४४] [16]अथवा अस्य वैगुण्यं बुद्धेः प्रत्या-दिशन्ति च[17] ॥१४॥

[18]सामाऽऽदीन् [18]अग्र-तः कर्त्तुं[19] भवेद् [19]युक्तं नि-[19]दर्शनम् ।

४५] तत्राऽपि सु-[20]महान् दोषः सर्व-[21]तः प्रति-भाति मे ।

---

१. अ-०न च बलैर् । ब-त्रळैः । म ल$_1$-त्रयं । २. फ-सर्वे दण्डाः प्रपीडिताः । च-सर्वयत्नै प्रयाचिता । ब-सर्वयत्नैः प्रयाचिता । प्र-सर्वयत्न-मुपाश्रितम् । म ल$_1$ अ-सर्वयत्नैः प्रयाचितुम् । म-सर्वशस्त्रै प्रयाचन्त । ल$_1$-सर्वयत्नैः प्रयाचितुः । ३. रा-नास्ति ॥ ४. फ-श्चस्तस्यास्य । च प्र म ल$_1$ ल$_2$-स्तब्धस्यास्य । ब-स्तब्धास्यस्य । अ-तस्माच्चास्य । ५. फ च प्र ब म ल$_1$ ल$_2$ अ-पर्याप्तं । ६. फ-लक्षणम् । ७. रा-त्रीन्न् । ८. आ-यदनुचिरेव सः । फ-यद्दंडेऽनुचिरे वशः। च-यद्दण्डे रु०। ल$_2$-०र् एव स । ९. प्र ल$_2$-यथा । १०. अ-ज्ञेयं । ११. आ ल$_2$-तस्यार्थसा० । प्र-तु कारणं। १२. आ-हि मोक्तव्यो । रा-अनुयोक्तव्यो । १३. अ- नास्ति ॥ १४. आ-योक्तुं नोऽनु-रूपं च सर्वथा । १५. च रा प्र ब म ल$_1$ ल$_2$-नास्ति । १६. फ प्र च ब ल$_2$-अथासनवै० । ल$_1$-अथवासनवै० । रा-अथवा स तु । अ-अथवा शरवै० । आ-'अथवा अस्य' इति सन्ध्यभाव आर्ष द्रष्टव्यः । १७. च ल$_2$-बुद्ध्येतत्प्रत्यादिशन्ति च । रा- बुद्ध्येश्चीत्यादिशन्ति च । म-बुद्ध्येत्प्रत्यादिशन्ति च । ल$_1$-बुद्ध्येप्रेत्यादिशन्ति च । अ-बुद्धौ प्रत्यादिशन्ति च । १८. फ ल$_2$ अ-सामादीनामितः । च रा-सामादीनपि तत् । ब म ल$_1$-सामादिनापि तत् । प्र-सामादिना न तत् । १९. आ-उक्त्वा तु द० । च-युक्ताद्धि द० । रा ब म ल$_1$-युक्तं तु धर्षणम् । प्र-युक्तं यद्दर्शनम् । २०. फ-स महान् । आ-सुमहाशेषः । २१. आ फ च-सर्वशः ॥

४६पू] यत् परः[1] सहसा[2] कुर्याद् वि-ग्रहं[3] बल-वान् इव[3] ॥१५॥
N] शास्त्र-विद् वाक्य-कुशलः[4] सुहृत्[5] स-प्रतिभः शुचिः ।
कुले महति चोत्-पन्नो दूत एष[6] सतां मतः[7] ॥१६॥
४७] विपरीत[8]-गुणो राजन्[9] रामेण प्र-हितश्[10] चरः ।
आत्म-कार्य-विघातार्थम् अ-नयं[11] सम्प्र[12]-दर्शयन्[13] ॥१७॥
४८] ईदृशस्य[14] ततः[15] कर्तुं[16] कथं युक्तं भवेद् इह ।
युद्ध-काले सहायस्य बुद्धि-मोहाद् इहेश्वर[17] ॥१८॥
४९] एवम् अभ्या-हितः[18] श्री-मान् युद्ध-कालो[19]ऽयम् आ-गतः ।
चिरात् प्रभृति योधानाम्[20] अनिशं युद्ध-काङ्क्षिणाम् ॥१९॥
५०] गदाश् चापाश् च खड्गाश् च नूनं परश्वधाश् च नः ।[21]

---

१. रा ब म ल१ ल२—पुनः । २. फ अ—सर्वथा कुर्यात्प्रसभं । ३. फ—दूरविग्रहम् । अ—दूतविग्रहम् । रा—बलवानिव ॥ ४. रा—०कुशल । ५. प्र च ल१—सुहृत्सु० । रा—सुहृत्स० । ब—शरत्स० । आ—सुहृत्सु प्रतिभूः । ६. फ च रा ब म ल१ अ—एव । ७. फ—मतम् ॥ ८. म— विपरीता गुणो । ९. आ—राजं । प्र—राज्ञा । १०. आ—प्राहितः स च । रा ब प्र म ल१ ल२—प्रहितश्च सः । ११. फ—अनार्यं । १२. प्र च रा म ल१ ल२—तमपश्यता । ब—तमपश्यथा । १३. अ—नास्ति ॥ १४. आ रा प्र ब म ल१ ल२—इदृशस्य । फ—ईदृशस्य (अस्माकम्) । १५. फ च रा प्र ब म ल१ ल२—च नो भर्त्तुः । १६. फ—कार्यं (युक्तं) प्रनाशनम् । च—कार्यंप्रसंशनम् । रा—कार्यं प्रसंशनम् । प्र ब म ल१ ल२—कार्यं प्रशंसनम् । १७. आ—मे रजनीचर । प्र—इहेश्वरः । च— इहश्वर ॥ १८. फ च रा प्र ब म ल१ ल२ अ—अभ्यर्थितः । १९. ल१ अ—युद्धकाले० । २०. आ—यो धीमाननिशं । फ—युद्धानामनिसं । रा—लोकानाम् । प्र ब—योद्धानाम् ॥ २१. फ आ—गदा चापानि खड्गानि नूनं परस्वधाश्च नः । फ—गदाश्चापाणि खड्गाश्च शराः परस्वधाः शुभाः । च—गदाश्चापाश्च खड्गाश्च नूनं परशकस्वनाः । रा ब म—गदाश्चापाश्च खड्गाश्च शराश्चैव परश्वधः । प्र ल२—गदा खड्गाश्च चापाश्च शराश्चैव परस्व(श्व)धाः । ल१—गदापादाश्च चापाश्च नूनं शराश्चैव परश्वधाः । अ—गदाश्चापानि खड्गाश्च नूनं परमवस्तथा ॥

युद्धेष्व् अ-मर्षम् इच्छन्ति[1] योधैर्[2] विक्रम[3]-भूषणैः ॥२०॥
८१] सु-व्यक्तं[4] तृषिता[5] भूमिः शोणितं पातुम् इच्छति ।
हतानां सं-युगेऽस्माभिर्[6] वानराणाम् इहेश्वर[7] ॥२१॥
८२] लक्ष्मणः सह रामेण सु-व्यक्तं शयनं गतः ।
भविष्यत्य्[8] अ-चिरे काले[9] दुःस्वप्न-प्रतिबोधितः[10] ॥२२॥
८३] कबन्ध[11]-विकटा भूमिः शोणिताऽऽर्द्राऽनु[12]-लेपिता ।
हतैर् योधैर् वि-दंशनैर्[13] नूनं हसितुम् इच्छति ॥२३॥
८४] व्या-देशः सर्व-योधानाम्[14] अद्यैव क्रियताम् इह[15] ।
येन यैः[16] सं-युगे राजन्[17] हन्तव्यो रिपुर् आ-हवे[18] ॥२४॥
उद्[19]-यताभिर् गदाभिश् च राक्षसैर् बाहु[20]-शालिभिः ।
८५] रणस्[21] ताल-वना[22]ऽऽकारो भवत्व्[23] अद्भुत-दर्शनैः[23] ॥२५॥

इत्यार्षे रामायणे सुन्दर-काण्डे प्रहस्त[24]-वाक्यं
नाम द्व्यशीतितमः[25] सर्गः ॥८२॥

---

१. म-इच्छन्तो । २. आ म-योधे । फ-योधै । अ-ये वै । ३. फ-०शालिभिः । अ-०भूषणा । ४. रा-सुव्यक्त० । ५. ल$_1$-भूषिता । ६. ब-०गेऽस्माभिः । ७. आ-इहेश्वरः ॥ ८. आ म-भविष्यत्यधिकं । च रा प्र ब म ल$_1$ ल$_2$-भविस्वायधिकं । अ-भविस्यसधिकं । ९. म-समये । अ-कालं । १०. आ-०बोधनः । च रा ल$_1$-०बोधतः । अ-०बोधनं । ११. फ-मेदोस्थिवाहिता च रा प्र ब म ल$_1$ ल$_2$-०विकचा । १२. फ-शोणिताभानुलेपना । च-शोनितार्द्रानुलेपना । रा ब-शोषितार्द्रानुलेपना । प्र म ल$_2$ अ-शोणितार्द्रानुलेपना । ल$_1$-शोणितान्यानुलेपना । १३. फ-निर्दंशनैर् । च-विदर्शनैः । १४. फ-०शूराणाम । रा च प्र ब म ल$_1$-०देशानाम् । १५. प्र ल$_2$-इति । १६. प्र रा ब म ल$_1$-नः समरे । अ-नः सं० । १७. आ-राजं । १८. फ च रा प्र ब म ल$_1$ ल$_2$ अ-आगतः । १९. प्र-उदिताभिर् । २०. रा ब ल$_1$-बलशा० । २१. फ-रणं । २२. ल$_2$-०वणाकारो । फ-०वनाकारं । २३. आ-भवत्यु । फ-०दर्शनम् ॥ २४. फ-प्रहस्तमन्त्रो । २५. रा-त्र्यशीतितमः सर्गः ॥

महा-बुद्धिस्[1] तु युद्धेषु[1] यातु[2]-धानोऽब्रवीद् वचः[3] ।
१] इदं मति-मतां मध्ये मति-युक्तो[3] महोदरः ॥१॥
वि-स्पष्टं[4] राज-चन्द्रेण बुद्धि-रश्मि[5]-मयं महत् ।
२] यद् उक्तं तद् वचः सर्वं[6] सं-दिश्यम्[6] इव भाषितम् ॥२॥
संस्कृतं[7] हेतु[7]-सम्पन्नम् अर्थ-वच् च यद् उक्त-वान् ।
३] प्र-हस्तो वचनं सर्वं[8] दिष्ट्या[9] मत्य्-एकतां गतम्[9] ॥३॥
ममाऽपि वचनं राजन्[10] ब्रुवतः[10] श्रोतुम् अर्हसि[11] ।
४] प्राग् एव तु त्वया[12] बुद्ध्या[12] यद्[13] वि-मृश्य[13] परीऽऽक्षितम्[14] ॥४॥
सर्वेषाम् एव नः सर्वम् एतत् सु[15]-विदितं यथा[16] ।
५] भिन्नैर्[17] यन् मंत्रिभिर्[17] मन्त्रो[18] नान्योऽन्येनाऽभिसं-हितम्(ऽतः)५
सं-हता ह्य्[19] अभि-वर्त्तन्ते[19] प्रीति[20]-योगात् परस्परम् ।

---

१. आ–॰बुद्धिश्च यु॰। च–बुद्धिंस् तु यु॰। रा–॰बुद्धिस्सुयुद्धेषु। ब ल₁ल₂–॰बुद्धिः सुयु॰। प्र–॰बुद्धिः स यु॰। २. आ–जातुधानो यशस्करः। फ–जातुधानो॰। ३. आ–प्रत्युवाच। प्र रा ब ल₁ल₂–युक्तियुक्तं ॥ ४. ल₁–विसृष्टं। ५. म–॰रश्मिमयं। ६. आ–संदिग्धमिव। च–दिग्धमिव ॥ ७. अ–संस्तुते। प्र–संस्कर्तुं। च–संस्कृतं हि तु। ८. च रा ब म ल₁ ल₂–युक्तं। प्र–यत्र। ९. आ–दिष्ट्या मध्ये तथागतम्। फ–दिष्ट्या मे श्रोत्र(क) तां गतं। रा ब–दिष्ट्या मध्ये एकतां गतं। प्र–दिष्ट्येकतां गतं। ल₂–दिष्ट्यात्येकतां गताम्। अ–दिष्ट्यात्येकतां गतम् ॥ १०. आ–राजं ब्रुवतः। ल₁–राजं ब्रुवता। फ–राजन् वदतः। प्र–राजन्भवतः। ११. च–अर्हति। १२. फ–महाबाहो। प्र च रा ब म ल₁ल₂–मया बुद्ध्या। अ–तथा बुद्ध्या। १३. म–यदि सृष्य। फ प्र ल₁ ल₂–यद् विमृष्य। १४. ल₂–॰क्षुम ॥ १५. ल₁–सुविधितं। १६. रा–मया। १७. फ–भिन्नै योगं त्रिभिर्। १८. आ प्र च रा म ल₁–मन्त्रमन्योन्ये॰। फ–मन्त्रो नान्योन्यं नाऽभि॰ ॥ ल₂–॰नाभिसंयुतम् ॥ १९. आ–ह्यभिवर्तते'''व्। रा ब म ल₁ ल₂–ह्यति॰। २०. प्र–प्रति॰।

६] भिन्ना नैकाऽर्थतां[1] यान्ति[1] कालेष्व्[2] अ-सुहृदो[2] यथा ॥६॥
७पू] परस्पर-मतै राजन्न् इह चित्ताऽनु-वर्त्तिभिः ।[3]
N] भवत्य्[4] आ-प्यायितो मन्त्रस् तद्[4]-भेदः प्रसम्-ईक्ष्यताम्[5] ॥७॥
७उ] अ-विभिन्नस् तु राजेन्द्र भवत्य् एकाऽर्थतां प्रति ।
यदि निश्-श्रेयसो[6] मन्त्रस् तव[7] परं भूति-लक्षणम्[7] ॥८॥
८] एवं[8] मन्त्रस्य[8] भेदश् च सं-घातश्[9] च न शोभनः ।
उभाव्[10] एतौ[10] महा-बाहो[11] त्याज्यौ[12] मन्त्र-विनाशनौ[13] ॥९॥
९] हेतुत्वं[14] भज[15]-मानो हि स-विशेषं परीऽऽक्षितः[16] ।
सु-श्रावितो[17] वि-शुद्धत्वं[18] मन्त्रैः[19] समुप-गच्छति ॥१०॥

---

१. आ ल$_1$–नैकार्यतां । अ–नैकार्थसंयान्ति । ल$_2$–नैकार्थता । २. आ च रा प्र ब ल$_2$–कालेषु सुहृदो । ल$_1$–कालेषु प्र ( ? अ ) ह्यदो । अ–लोकेषु सुहृदो ॥ ३. आ म ल$_1$–परस्परमते राजन्निह चि० । फ–अन्योन्यं स गतो ( परस्परमतं ) राजन् ब्रुवतां श्रोतुमर्हसि । ४. आ–तवात्याप्यार्पितो म० । फ–भवत्याख्यायितो म० । च–भवत्याख्यायि मंत्रो न भेदं । रा ब–तत्रात्याख्यापितो मंत्रो न भेदः । प्र–भवत्यादयितो मंत्रो न भेदः । म ल$_1$ ल$_2$–०तो मंत्रो न भेदः । अ–भवत्याप्याहितो म० । ५. फ च रा प्र ब म ल$_1$ ल$_2$ अ–०ईक्ष्यते ॥ ६. ब–नः श्रे० । ल$_1$–निःशेयसो । ७. रा च ब म ल$_2$–तद्भेदो हि भयावहः । प्र–तद्भेदो हि भयात्ततः । ल$_1$–तं भेदो हि भयावहः ॥ ८. आ प्र–मन्त्रश्च । अ–मंत्र सुभेदश्च । ९. म–समूहतश्च । ल$_2$–संघाताश्च । अ–संघातशुभशोभनः । १०. ल$_1$–उभाते ता । ११. ब–०बाहौ । १२. आ ब अ–त्वाष्ट्रौ । ल$_1$–त्याज्यो । १३. रा ल$_2$ ०विनाशिनौ । फ–०विनाशकौ । अ–०विनाशनैः ॥ १४. फ–हेतुं तु । च रा प्र म ल$_1$ ल$_2$–हितं तु । ब–हितं हि । १५. प्र–त्यजमानो । अ–भुजमानो । १६. आ च रा म ल$_1$ ल$_2$ प्र–परीक्षितुम् । ब–परीक्षितम् । १७. फ–आश्रावितो । च रा ब ल$_1$ ल$_2$–सुश्रावितस् । प्र–आश्रावितस् । अ–सुश्रावितं । १८. च रा ब ल$_1$ ल$_2$–तु शुद्धत्वं । प्र–तच्छुद्धत्वं । अ–विशुध्यर्थं । १९. अ–मंत्रं ॥

१०] युद्ध-कालम् इमं सर्वे[1] वयं विद्मः स-कारणम् ।
बुद्धि-मद्भिर् वि-चेतव्यं[2] तस्माद् राजन्[3] बलाऽबलम्[3] ॥११॥[4]
११] के वयं के परे[5] युद्धे कानि प्र-हरणानि च ।
देश-काल-बलं[6] किं[7] च किं च केषां[7] सुखाऽऽवहम् ॥१२॥
१२] परे च निरधि-ष्ठाना:[8] साऽधि-ष्ठानाश् च यद् वयम् ।
एषं[9] चाऽप्यं[10] अधिकोऽस्माकं गुणैः[11] श्रीमान्[12] महीयते[13] ॥१३॥
१३] रक्षसां रजनी-कालैः[14] सं-युगेषु युयुत्सताम् ।
तस्माद् राजन् निशा[15]-युद्धे जयोऽस्माकं न संशयः[15] ॥१४॥
१४] तत्र[16] योधैर् युयुत्सद्भिः[16] शस्त्राणि कवचानि[17] च ।
यत्नेन[18] महता राजन्न् उपा[19]ऽऽर्यानि विशेष[19]-तः ॥१५॥[20]
१५] तन्त्राणां[21] कारणं[22] हेतु[23]-गुण-भूतं गुणाऽऽवहम् ।
मंतश्[24](?तं)चाऽभ्य्[24]-अधिको (?कं)युद्धे चारित्रं[25] महताम् इव १६
१६] एवं देशश्[26] च कालश् च[26] शक्तिश्[27] च[27] बहुभिर् गुणैः ।

---

१. प्र ल$_{2}$–सर्वं । २. च–बुद्धिमद्भिमद्भिर्विचेतव्यं । ३. आ–विद्यान्महाबलम् । अ–विद्याद्बलाबलम् । ४. ल$_{1}$–नास्ति ॥ ५. आ–पदे । ६. आ फ–०बलः । ७. फ–कश्च तेषां किंच । रा–किंचित् किं च केषां । प्र–किंचित् केषां किञ्चित् । आ–कश्चित् केषां किंचित् । ल$_{1}$–किंच केषां । ल$_{2}$–किञ्च केषां किञ्च । अ–किंचित्केषां चापि ॥ ८. म–०ष्ठान: । आ–०ष्ठाना: । ९. प्र–एवं । १०. आ च रा प्र ब म ल$_{1}$ ल$_{2}$–चाभ्यधिको० । ११. आ च–गुणं । १२. प्र–श्रीमन् । १३. फ–महामते । च रा ब प्र म ल$_{1}$ ल$_{2}$ अ–महीपते ॥ १४. रा–०कालं । १५. अ–निशायुद्धं कर्त्तव्यं सुमहत्प्रियम् ॥ १६. ल$_{2}$–युयुत्सुभिस्तत्र योधैः । च–०र् युयुत्सुभिः । १७. आ–वचनानि । १८. रा–यत्नेन । १९. आ–उपास्यानि वि० । फ–उपाध्यार्यान्यशेषत: । च–उपाश्यानि वि० । २०. अ–नास्ति ॥ २१. फ अ म–कर्तॄणां । २२. म–करणं । २३. प्र च ब म–हेतुर् । २४. रा–मंत्रश्चाभ्युधिको । ब ल$_{1}$ ल$_{2}$–मंत्रश् च० । फ–मतश् चाप्यधिको । प्र–मन्त्राश् चा० । अ–०श् चाभ्यधिकं । २५. फ–चारित्राणि । च–चारित्र्यं । ल$_{1}$–चारितं । ल$_{2}$–चरित्र्यं ॥ २६. प्र म ल$_{2}$–देशाश्च कालाश्च । २७. रा प्र ब,म ल$_{1}$ ल$_{2}$–राजन्वै ।

भवत्य्[1] अधिकम्[1] अस्माकं मन्त्र-पूर्वं[2] परीऽऽक्षणात्[2] ॥१७॥
१७] शस्त्राणां कवचानां च कृत्वा सम्यग् उपाऽर्जनम् ।
युद्धम् एवाऽभि-गच्छामो नयाद्[3] गुण-समन्वितम् ॥१८॥
१८] नि-कृ[4]त्तानां रणे तावद् वानराणाम् इहेश्वरे[5] ।
पिबन्तु रुधिरं साधु राक्षसास्[6] तृषिता[7] इव[8] ॥१९॥[9]
१९] राघवस्य[10] रणे तावद्[11] रण[12]-शौण्डैः समाऽऽहतम् ।
भवत्व्[13] अति-रथैः[13] क्षिप्रम्[14] आननं क्षत-जोक्षितम्[15] ॥२०॥
२०] अ-भयं याच-मानैस्[16] तु[18] वि-क्षतैश्[17] च सहस्र-शः ।
वानरैर्[18] लक्ष्यतां[19] भूमिः किञ्चित्[20] प्र-व्यथिता[21] यथा ॥२१॥
येन[22] व्यू[22]-ऊहेन वा[23] व्यू[23]-ऊहं योद्धव्यं[24] वा यथा[24] त(?य)था ।

---

१. आ–भविष्यत्यधिकोऽस्माकं । च–भवत्यत्यधिकोऽस्माकं । अ–भवत्यत्यधिकम् । २. अ– मंत्रपूर्वंपरीक्षितम् । आ च रा प्र ब म ल१ ल२–०र्वं परीक्षणं ॥ ३. आ– भयाद् । च–नयगु० । रा–नयो । ल२–यावद् ॥ ४. आ–निकृतानां । रा–निकृतानि । ५. आ–इहेश्वरः । ६. रा–वानरास् । ७. ल१–त्वषिता ? । ८. प्र ल२–इह । ल१–त्रह ? । म–इव ( इह ) । ६. ब–नास्ति ॥ १०. अ–रावणस्तु । ११. फ–राजन् । १२. रा–०शौंडै समाहितां । अ–०शौंडः समाहतः । प्र–०शौंडसमाहतं । १३. आ–भवत्यति० । रा–भवन्त्यतिरथेः । १४. फ–वीरैर् । १५. फ–क्षतजोभितं । रा–क्षतगोक्षितं ॥ १६. फ अ–०मानैश्च । १७. फ रा–विकृतैश्च । ल१ ल२–विक्षितैश् । अ–विक्षिप्तैश्च । १८. ब–वानैरः । फ च प्र म ल१ ल२–वानरै । १९. आ–भक्षता । अ–लक्षिता । २०. फ–कचित् । २१. फ–प्रव्यथितैर् । च ब प्र ल१ ल२–प्रकाथिता । रा–प्रकुथिता । म–प्रक (व्य) थिता । अ–प्र······व्यथा ॥ २२. आ रा प्र ब म ल१ल२–यदि व्यु० । च–यदि व्यूहेन । २३. आ–व्यूहं । फ–योद्धव्यं । २४. फ–वयमत्र यथा० । आ–०व्यं चायथा० । अ–०व्यं च यथा ।

२१] तद् इहाऽथैव[1] सर्वैस्[2] [2]तैः सं[3](?सं) मन्त्रयितुम् अर्हसि ॥२२॥
अ-शक्यः सागरस् तर्त्तुम् अ-प्रधृष्या पुरी तथा[4] ।
N] रथा[5]ँ हया[6]ँ गजा[7]ँ माया ज्ञातयश्[8] चा[9]ऽपि नोऽधिका[10](:) ॥२३॥

इत्यार्षे रामायणे सुन्दर-काण्डे महोदर-वाक्यं
नाम त्र्यशीतितमः सर्गः ॥८३॥

---

१. रा—इहायैव । २. फ अ—नः सर्वै । च रा प्र—नः सर्वैं । म ल₁—नः सर्वैः । ३. आ—स मन्त्रणम् इहार्हसि । फ—०तुम् अर्हस्य ? । रा—सममन्त्रणमिहार्हसि । च ब—स (सं)मंत्रणमिहार्हसि । प्र—स मन्त्रिमिहार्हसि । म—सः मन्त्रणमिहार्हसि । ल₁—संमात्राणमिहार्हसि । अ—संमंत्रितुमिहार्हसि । ४. रा—तत्र । ५. अ—गजा । ६. च—हयो । ७. आ—गजामात्या । ल₁—गजसेना । अ—माया । ८. रा—ज्ञातयच् । ल₁—जातयश् । ९. अ—व हि । १०. आ—वोधिकम् । रा—नो अधिकम् । प्र ब ल₁ ल₂ अ म—नोधिकम् ।

बृहस्पतेः[1] समो बुद्ध्या सम्-अरे च दुरा-सदः ।
१] वि-रूपाऽक्षो[2] रणाऽपेक्षो[2] वचनायोप-चक्रमे ॥१॥
पदाति-रथ-नागाऽश्वैर्[3] व्यू-ऊह्यते[3] सम्-अरे बलम् ।
२] राक्षसानां भुजाः[4] पीनाः[4] सर्वम् एतच्[5] चतुष्टयम् ॥२॥
३पू] व्यू-ऊढं[6] व्यू-ऊढोत्तरां सेनां[6] बाहवः[7] परि-घोपमाः[8] ।
N] शास्त्र-तः[9] सम्-अरेऽस्माभिः सु-व्यूहाः[10] शकटाऽऽदयः[11] ॥३॥
३उ] न नि-वर्तितुम्[12] अर्हन्ति[12] वि-ततां[13] बाहु-वागुराः[14] ।
N] अस्माकम् असि[15]-हस्तानां वागुरां[16] इव वानराः ॥४॥
स्थैर्यं चलित-चित्तेषु[17] वानरेषु न विद्यते ।

---

१. प्र रा ब ल$_2$ अ–बृहस्पतिसमो । २. आ–विरूपाक्ष्यो रणापेक्ष्यो । फ–विरूपाक्षः समापेक्ष्यो । म–विरूपाक्ष र० ॥ ३. आ–०नागाश्वं व्यूह्यते । फ–०नागाश्वं व्यूह्यताम् । ब रा च–०नागाश्वै व्यूह्यताम् । ल$_1$–०नागैश्च व्यूह्यताम् । प्र म ल$_2$ अ–०र् व्यूह्यताम् । ४. रा–भुजा पीनास् । ब–भुजा पीना । ५. रा–एव ॥ ६. फ–बृहव्यूढोत्तरा सेनां । च–व्यूह्यं व्यूह्योत्तराप्सानां । प्र रा ब ल$_2$–व्यूहं व्यूह्योत्तराशानां । म–व्यूहं व्यूहान्तरगता । ल$_1$–व्यूहं व्यूहोतुराद्दी तां । अ–व्यूह्य व्यूह्योत्तरा सेनां । ७. अ–बाहुभिः । ८. आ फ म ल$_1$ अ–परिघोपमाः । ९. आ म ल$_1$–शास्वताः । च रा प्र–शाश्वताः । ब ल$_2$–शाश्वतः । १०. फ–सव्यूह० । च–सुवुह्याः । रा–सव्यूहाश् । म–सुव्यूहा (स्वभ्यस्ता) । ल$_1$–सव्यूर्या । ११. ब–शाक० । ल$_1$–शकजादयः । ल$_2$–सकटादयः ॥ १२. आ च म–निवर्त्तितुमिच्छन्ति । फ–निर्वर्त्तयितुमर्हन्ति । रा ब ल$_1$–निवर्तितुमिच्छन्ति । १३. प्र–चिंतता । १४. आ–बहुराक्षसाः । फ रा–बहुवा० । ल$_1$–बहुवाद्गुणाः । १५. रा–अपि ह० । १६. आ–वागुराम् ॥ १७. आ–०वित्तेषु ।

४] न च नश्[1] चल-चित्तत्वम्[1] अस्ति यद्[2] वानरेष्व् इह[2]॥५॥
गर्जिताऽऽस्फोटितैस्[3] तत्र बाहुभिः स-कर[4]-स्वनैः ।
५] अनू-अवस्थित-चित्तानां[5] द्रवन्तीं[5] पश्य[6] वाहिनीम् ॥६॥
राक्षसैर् नि-हतानां च शरीराणि[7] वि-भाग[8]-शः ।
६] दृश्यन्तां[9] वानरेन्द्राणां प्र-मुप्ताः[10] कलभा[11] इव ॥[12]७॥
बाहुभिः[13] पीडिताः सन्तु[14] सम्-अरे सर्व[15]-वानराः ।
N] रात्र्य्-अन्तेषु वि-शुद्धाऽऽस्याः कमलानाम् इवाऽऽकराः ८[16]
राक्षसाऽम्भसि मग्नानां[17] शरीराणि वि-भाग-शः ।
६] दृश्यन्तां[18] वानरेन्द्राणां प्लवा इव वि-सर्पिणः ॥९॥
शिला-मध्य-गताः सन्तु समर-स्था हि[19] वानराः ।
७] मेघाऽन्तर-विनिर्मुक्ताः[20] सुप्ताः[21] इव रवि-प्रभाः[22] ॥१०॥
८पू] ताडितानां वि-शीर्णाश्[23] च[23] वि-मला दन्त-पंक्तयः ।
N] वानराणां प्र-दृश्यन्ते(न्तां)[24]भुवि ता दन्त-राशयः ॥११॥
N] यथा तुषार-निर्मुक्ताः कीर्णा इव रवि-प्रभाः[24] ।
८उ] वानराणां प्र-दृश्यन्तां[25] तुषार-निकरा इव ॥१२॥

---

१. फ च प्र ब म—निश्चलचि०। आ ल१—नः खलु चिन्तत्वम् । रा—निश्चितचि०। २. रा—य वानरे बले । फ च प्र ब म—यद् वानरे बले । ल१—यद् वानरबले ॥ ३. आ—०स्फोटितस । ४. आ—शंकर०। प्र—सकरांबुजैः । म—सुकर० । ५. आ—०चिन्तानां द्रवतीं । च—श्नां द्रवन्ती । ६. अ—चिन्त ॥७. रा—शरिराणि । ८. आ—विभागसः । ९. फ—दृश्यतां । १०. रा—प्रमत्ता । ११. फ—करभा । १२. आ ल२—नास्ति ॥ १३. अ—बाहुभ्यां । १४. रा—सन्तः । १५. म—सर्वे वा०। १६. आ रा च प्र ब म ल२ ल१ अ—नास्ति ॥ १७. अ—मग्नार्कश०। १८. अ—दृश्यते । आ—दृश्यतां ॥ १९. अ—सुवानराः । २०. फ—०विनिर्मुक्ता । २१. फ—विस्तृता । अ-कीर्णा । २२. अ—०प्रभा ॥ २३. आ—विशीर्णाश्च । फ—विशीर्णास्तु । रा—विशीर्णाच्च । अ—विशीर्णा सुवि० ॥ २४. आ फ च रा ब प्र म ल१ ल२—नास्ति । २५. ल१—प्रदृश्यन्तां ।

तत्र तत्र च राजेन्द्र वानरैर् नि-हतैश् चिता ।
९] भवत्य् अधिकम् आ-लक्ष्या वल्मीक-शमलै(?ले)व भूः ॥१३॥
राक्षसानां तु युद्धेन भवन्त्य् अद्य रणाऽजिरे ।
१०] आहार-कलिताः सर्वे युगपत् क्रव्य-भोजिनाम्(?नः) ॥१४॥
शिलाभिश् चैव मुक्ताभिर् वानरा विनि-पातिताः ।
N] लक्ष्यन्तां रण-भूमि-ष्ठाः सं-सक्ता इव पर्वताः ॥१५॥
राक्षसैर् वि-हताऽङ्गाश् च वानराः प्र-स्थिता भुवि ।
१२] रुधिर-प्रस्रवैः सन्तु गैरिकाणाम् इवाऽऽकराः ॥१६॥
अस्माकं सम्-अरे तावन् नि-शिताः शस्त्र-पाणयः ।
१३] शत्रुभ्यो जीव-पुष्पाणि प्र-चिन्वन्तु वनाद् इव ॥१७॥

---

१. रा—तत्ते । २. अ—हि । ३. अ—चिरात् । ४. ब—भवत्वाधिकमा० । ल$_1$—भवत्वधिकमालक्ष्य । प्र—०कम् आलक्ष्य । रा—०कमालाक्ष्या । फ—भवत्यधिकलक्षं च । ५. रा प्र ल$_1$—वाल्मीकश० । आ—वाल्मीकशकलेव । ६. ल$_1$—भुः ॥ ७. फ—नास्ति । ८. फ—यु ( सु )द्धेषु । ९. आ अ—भवंत्यद्य । १०. प्र ब म ल$_1$ ल$_2$—रणाजिरं । ११. रा अ—०कलिता ॥ १२. आ—वानरैश्च नि० । रा प्र ब म ल$_2$—वानराश्च नि० । ल$_1$—विनिपातिताः । १३. रा—लक्ष्यंतो । आ फ प्र म ल$_1$ ल$_2$—लक्ष्यतां । १४. फ—०भूयिष्ठाः । च ब—०रभूमिस्थाः । रा प्र म ल$_1$ ल$_2$—०भूमिस्थाः । १५. फ—संसक्ता ॥ १६. आ—विहतांगानां । फ—विहि(ह)तां० । रा—निहतांगातां । म प्र ब ल$_1$ ल$_2$—निहतां० । १७. आ च अ ब ल$_1$—वानरप्रस्तरा । फ—वानरा प्रस्तरां । रा—वानरा प्रस्तरा । म—वानरप्रस्तरां । १८. ल$_2$—प्रस्थितैः । फ—प्रसवैर् । १९. फ—भूरि (वापि) । २०. आ—ततशः शस्त्रविक्षताः । फ—वानराः विनिपातिताः । च ब म अ—गैरिकानाम् इ० । प्र—०णाम् इवाकरः ॥ २१. अ—ते च निश्चिताः । आ च रा प्र ब म ल$_1$—तावन् निश्चिताः । २२. आ अ—शास्त्रपा० । च—०स्त्रपाणय । २३. आ—०मुख्यानि । फ च—०पुष्पानि । २४. आ च रा प्र ब म ल$_1$ ल$_2$ अ—विचिन्वन्तु । २५. आ—नगा । फ—वनात् । च रा प्र ब म ल$_1$ ल$_2$ अ—नगाद् ॥

[1]उद्-भूतं धूम-संकाशं रण-[2]मर्दन-जं रजः ।
११] शत्रूणां प्र-शमं [3]यातु [4]हतानां शोणिताऽम्बुना ॥१८॥
सम्-अरे वानराः सन्तु शत-[5]शः शस्त्र-विक्षताः ।
१४] शोणिताऽम्बु-परिक्षे[6]पाः स-निर्यासा इव द्रुमाः ॥१९॥
हतैः शत्रु-शरीरै[7]श् च शतशोऽथ गर्ताऽसुभिः ।
१५] [9]भाराऽऽर्त्ता [10]भूमिर् अस्त्व् [10]आशु किंशुकाऽऽ[11]कार-सन्निभा ॥२०॥
[12]व्या-देशः क्रियतां तावन् मम वीर्याऽभि-[13]मानिनः ।
१७] यस् तस्मिन् प्र-वरः [14]शत्रुर् [15]हन्तव्यः [16]सम्-अरे [16]मया ॥२१॥
तं [17]च गत्वा [18]वधिष्यामि [19]यश् चैनम् [19]उप-गच्छति ।
१८] भविष्यन्ति द्वि[20]षन्तो नो [20] ये च तस्य पदाऽनु-गाः ॥२२॥
शाखा-[21]मृगाणां सम्-अरे शरीरैः [22]पश्य भू-[22]तलम् ।
१९] वायुना कर्णि-[23]काराणां वनम् [23]उन्-मथितं यथा ॥२३॥
इत्यार्षे [24]रामायणे सुन्दर-काण्डे विरूपाक्ष[25]-वाक्यं नाम चतुरशीतितमः सर्गः ॥८४॥

---

१. फ–उद्भूतं । रा–उद्भूतधू० । ल$_1$–तद्भूतं । २. फ प्र ब ल$_1$ ल$_2$ अ–रणसंमर्दजं । च रा–रणसंमर्दनं । म ल$_3$–रणमर्दजं । ३. रा–ध्यातु । ४. च–हताना ॥ ५. रा–शतशश् चास्त्रवि० । फ–०शः शस्त्रपीडिताः । ल$_1$–०शः शस्त्राविक्षिताः । ६. अ–०परिक्षेपात् । फ च रा प्र ब म ल$_1$ ल$_2$–०परिक्षिप्ताः ॥ ७. आ च–०शरीरैः । ८. च रा–गताऽऽशुभिः । ९. ल$_1$–भारात्तु । प्र म–भारान्ता । १०. फ–भू विरस्यास्तु । आ ल$_1$–भूमितस्त्वाशु । अ–भूभिरस्त्वासु ॥ ११. आ ल$_1$–किंशुकाकारसन्निभाः । फ–०रसन्निभाः ॥ १२. च रा प्र ब म ल$_1$ ल$_2$–आदेशः । १३. रा प्र–०मानिना । १४. आ–शत्रुं रा प्र ब म ल$_1$ ल$_2$–शत्रुस्स । १५. रा प्र ब म ल$_1$ ल$_2$–हन्तव्यो । १६. फ अ–स मया रणे । रा प्र ब म ल$_1$ ल$_2$–रणे मया ॥ १७. फ अ–तत्र । १८. ल$_1$–वदिष्यामि । १९. प्र–यच्चैनमनु० । अ रा ब ल$_2$–यश्चैनमनु० । २०. फ–०तो मे । च प्र ब म ल$_1$ अ–द्विषंतोन्ये । रा–द्विषं ह्यन्ये ॥ २१. फ प्र ब–०मृगानां । २२. आ ब–पश्यताकुलम् । प्र–शरीरैराकुलम् । अ–महदाकुलम् । ल$_2$–……कुलम् । २३. रा–कर्णिकाराणां वसुन्मथितं ॥ २४. फ–रामायने । २५. फ–राक्षसमन्त्रो । ब–विभीषणवाक्यं । च रा प्र म ल$_1$ ल$_2$ अ–विरूपाक्षवाक्यं ॥

धर्मे चाऽर्थे च[1] कुशलो वीर्येण च समन्व्-इतः[2] ।
१] अब्रवीन्[3] मधुरं वाक्यम् इदं भूयो वि-भीषणः ॥१॥
यत् प्रियं च हितं चैव साधु-धर्मं[4] च[4] सर्व-शः[5] ।
२] कुर्युस्[6] तन्[6] मन्त्रिणो वाक्यं मन्त्रय-माणा[7] विशेष-तः॥२॥[8]
प्राऽऽप्य कार्यं[9] गरीयस् तु नेतुर्[9] वा गुण-सम्पदाम् ।[10]
३] प्रियम् उत्-सृज्य वक्तव्यं हितम् एवेह[11] मन्त्रिणा[12]॥३॥
तव राजेन्द्र वि-स्तीर्णैर् गुणैर् वि-श्रब्धतां[13] गतः[13] ।
४] इमम् अर्थं प्र-वक्ष्यामि हितं[14] बुद्ध्या परीऽऽक्षितम्[14]॥४॥[12]
इह धर्माऽर्थ-कामानाम् अवाऽऽप्तिः[15] फलम् इष्यते[16] ।
५] तत्राऽर्थस्[17] सह कामेन परीऽऽक्ष्यो[18] धर्म-चक्षुषा ॥५॥
परि-त्यज्य हि यो धर्मम्[19] अर्थम्[19] अर्थाय पश्यति ।
६] कामं वा[20] काम-लोभा[21]ऽर्थं न स[22] बुद्धि(?द्धे)षु बुद्धि-मान्॥६॥

---

१. फ-तु । २. रा-समन्विते ; ३. रा म-अब्रवीत् ॥ ४. फ-साधुवच्चैव । च व म ल१,ल२-०साधु धर्म्यं । रा-०धु धर्मं । म-०धु धर्मश् । ५. फ-सर्वतः । ६. च-कूर्यूस् । म-ब्रूयुस्तत् । आ-ऊचुस् । ७. च-वक्ष्यमाणो । आ म-०माणे । ८. रा प्र ब ल१ ल२-नास्ति ॥ ९. च-कार्यंग० । आ-कार्यशरीरं तु नेतुं । १०. फ-प्राप्तकार्यममित्रेषु सेतुं वा सर्व्वसम्पदाम् । प्र रा ब ल१ ल२-नास्ति ॥ ११. रा ब अ-एव हि । १२. आ-नास्ति ॥ १३. फ-विप्रथितं मया । च-विश्रम्भतां । रा-विस्रब्धवतां । ब म ल१,ल२-विस्रब्धतां । अ-विस्तीर्णतां । १४. म-हितां बुद्ध्या परीक्षिताम् ॥ १५. आ-अवा हि । च रा प्र ब म-अवाप्तुं । १६. फ-उच्यते । १७. आ-तत्वार्थः । फ-तत्रार्थाः । अ-तत्रार्थं । १८. आ-यदीक्ष्यो ॥ १९. आ-धर्मं धर्मम् । रा-धर्मं धर्मम् । २०. फ-च । २१. फ च प्र रा ब म-०लाभाय । २२. फ-बुबु० ॥

मन्त्रितो यो[1] बहु-विधो निस्-सारः सार-दर्शिभिः[2] ।
७] अमात्यैर् मन्त्रिभिर्[3] मन्त्रः[3] सन्नि(?नि) योगान्[4] न शोभनः ॥७॥
परदाराऽभि-गमनं[5] को धर्म[6] इति वर्णयेत् ।
८] मति-मान् राज-शास्त्रेषु यथा-वत्[7] कृत-निश्चयः ॥८॥
यत्[8] त्व् इदं कथ्यते[8] ना(?रा)[9]म-कृतं व्युतिथत-लक्षणम्[10] ।
९] नाऽऽगः सं-लक्ष्यते[11] रामे धर्म-व्युत्थित-लक्षणम् ॥९॥[12]
वने हि[13] वसते रामः[13] पितुर् निर्देश-वत्सलः ।
N] यत् तद्[14] अस्य[14] न सं-देहो धर्मो(?र्मा)ऽव्युत्थित[15]-लक्षणम् ॥१०॥[16]
रक्षणं[17] तापसानां[17] च क्षत्र[18]-धर्मे स्थितो[19]ऽऽत्मना ।
N] यत् कृतं शस्त्रम्[20] आ[20]-दाय तद् व्यक्तं धर्म-लक्षणम् ॥११॥[21]
दानं साम[22] समुत्-सृज्य स(?य)द् विक्रमम्[23] इहा[24]ऽऽस्थितः ।

---

१. आ अ-यं । २. अ-०बुद्धिभिः । ३. फ-मन्त्रितो मन्त्रः । च-मंत्रिभि मित्रैः । ४. आ-०योगान्तशो० । फ-०योगान्तसो० ॥ ५. फ-०भिमर्ष हि । अ-०भिमर्शेषु । ६. आ रा अ-धर्मम् । ७. आ-यथा च । ८. आ-त्वयेदं कथितं । $ल_1$-यद्विदं क० । अ-यदि त्व कथ्यसे । ९. फ-राजन् । प्र च रा ब म $ल_1$ $ल_2$-रामे । अ-रामो । १०. म-०धर्षणम् । $ल_1$-०लक्ष्मणम् । ११. फ-किं लक्ष्यते । १२. आ-अत्र संलक्ष्यते नाम धर्मस्यार्थस्तु लक्षणम् । म-अत्र किं लक्ष्यते नाम धर्माद्व्युत्थितलक्षणम् । च रा प्र ब $ल_1$ $ल_2$ अ-नास्ति । १३. ब-वसति रामो हि । १४. म-तत्तस्य । १५. आ-धर्मोऽभ्युषित० । १६. च रा प्र ब $ल_1$ $ल_2$ अ-नास्ति ॥ १७. आ-लक्षणन्ता० । च-रक्षणं क्षणं ता० । १८. फ-यत्र धर्मे । अ-क्षत्रिधर्मे । १९. आ अ-धृतात्मनां । फ-कृतात्मनां । $ल_1$-वृतात्मनाम् । २०. च-शस्त्रमदाय । ब-शास्त्रम् । २१. $ल_2$-अत आरभ्य 'धर्माद्विचलितः कथम्' इत्यन्तः पाठो नास्ति । २२. रा-दान नाम । ब-दान साम । म-दैन्यं राम । २३. आ-यदि धर्म्मम् । म-य,(स) दि धर्म्मम् । २४. च-इह स्थितः । रा-इति स्थितः । प्र $ल_1$-इति स्थितिः । ब-इति स्थिति । म-इहाऽऽस्थितः ( इति स्थितिः ) ।

N] व्यक्तम् एतत् परं[1] तस्य रामस्या[2]ऽक्लैव्य-लक्षणम् ॥१२॥[3]
यन् निदर्शन-भूतं[4] च धर्मिष्ठानां महाऽऽत्मनाम् ।
N] सु[5]-लभं तद्[6] ध्रुवंल्[7] लोके गुण-जातं महाऽऽत्मसु[8] ॥ १३॥
यदा च भवनाद् रामश् चाप-पाणिर् विनिर्-गतः ।
१०] तत्त्वम् एवाऽभि-सन्धाय धर्माद् वि-चलितः कथम् ॥१४॥
यदि[9] किञ्चित् व्यति-क्रान्तं भवेद्[10] रामस्य चेद् इह ।
११] किं जातु[11] कस्य दोषो[12]ऽपि न भवेद् वन-वासिनः ॥१५॥
यथा हि बल-वान्[13] कश्चिद्[13] आ-हारान्[14] वि-गुणान्[15] अपि ।
१२] भुक्त्वा[16] जरयते[16] तद्-वद् रामः पाप-प्रणाशनः[17] ॥१६॥
एवं कृत्वा[18] मम[19] मतं[19] यद् रामः स्वं[20]-परिग्रहम् ।
१३] प्राऽऽप्नुयाद् गुण-सम्पन्नम्[21] त्वाम् अवाऽऽप्य महा-बलम्[22] १७
तत्र हेतुः[23] प्र-दाने[24] च सु-महान् प्रीति-वर्द्धनः ।

---

१. रा–पदं । २. फ ब प्र–रामस्य क्लै० । ३. अ–नास्ति ॥ ४. प्र च रा ब ल$_1$ म–०भूतश्च । म–निदर्शभूतं (तश्) । ५. फ–सुलंभं । ६. अ–च ध्रुवं । ७. फ–महत्सु च । ८. प्र च रा ब–ध्रुवं लोके गुणीजातः सुलभश्च महात्मसु ॥ ल$_1$–ध्रुवं लोके गुणे जातः सुलभश्च महात्मसु । म–ध्रुवं लोके गुणजातं सुलभश्च महात्मसु ॥ ९. ब–यत्तु । १०. प्र–भजेद् ॥ ११. फ–कियान् वा तस्य । च–क्रियां सुतस्य । रा ब प्र म ल$_1$–क्रियासु तस्य । १२. ल$_2$–दोषो हि ॥ १३. म–बलवानाग्निर् । १४. फ.–आहाराद्० । १५. आ–निगुणान् । १६. फ–भुक्त्वा हि जरयेत् । रा–भुक्त्वा जारयते । १७ फ ल$_2$–प्रनाशनः ॥ १८. आ अ–कृत्वा । १९. अ–सुमतं स । २०. प्र ल$_1$ ल$_2$ अ–स्वं परि० । २१. आ ल$_1$–०सम्पनं । रा–०सम्पन्न । प्र ब ल$_2$ अ–०सम्पन्नं । २२. आ रा प्र ब ल$_2$ अ–०बलः ॥ ल$_1$–०मतिम् । २३. प्र–हर्तुः । २४. फ–प्रसादे च । च म रा ब प्र– प्रदानेन ।

N] य[1]न् न सा व्युत[1]-थिता सीता त्वाम् अवाऽऽप्य महा-मतिम्॥१८॥
पितुर् वा वचना[4]द् धर्म्या[4]द् वन-वासम् उपाऽऽग[5]तः । [6]
N] वशम् अभ्याँ[7]-गतश् चे[7]ति रामः सीताम् इहाँ[8]ऽर्हति ॥१९॥
त्वाम् अवाऽऽप्य गुणैर् युक्तं को हि न प्राऽऽप्नुयाद् गुणान्[9]।
१४] [10]त्वं तु प्रीति-करो राजन् गुण-[11]हीनेऽपि स[12]ज्-जनः॥२०॥
कार्यम् आत्माऽनु-रूपं वा[13] धर्मो वा यदि र[14]क्ष्यते ।
१५] त्वत्-प्रसादा[15]च् छुभां सी[15]तां राजन् मोक्तु[16]म् इहा[17]ऽर्हसि ।
N] [18]सामान्येऽपि जये वा[18]ऽपि न युद्धं तेन[19] ते क्षमम्[19] ॥ [20]२१॥

[21]इत्यार्षे रा[21]मायणे सुन्दर-काण्डे विभीषण-वाक्यं
नाम पंचाऽशीतितमः सर्गः ॥८५॥

---

१. आ–यत्र सा व्यु० । च–यत्नमाव्यु० । रा ब–यत्र साभ्यु० । अ–यत्र साक्षे स्थिता । २. फ–यत्र सोथ हि तां सीतामवाप्य स महामतिः । ३. ल$_1$–नास्ति । ४. रा–वचनाधर्माद् । आ–०द् धर्माद् । ५. रा–उपागता ? । ६. फ–पितुर्वचनधर्माच्च वनवासमुपागतः । ७. आ–अभ्यागतां वेत्ति । च–अभ्यागतो वेत्ति । रा–अभ्यगतश् । ८. म–इहार्हसि ॥ ९. प्र ब म ल$_1$ ल$_2$ अ–गुणम् । १० प्र–तं । ११. रा ब अ–०हीनोपि । १२. फ–सज्जने ॥ १३. रा प्र ब ल$_1$ ल$_2$–चेद् । १४. आ प्र ब ल$_1$ ल$_2$–राक्षितः । रा–रक्षताः । १५. फ–०प्रशादात्तु तां । च रा प्र म ल$_1$ ल$_2$–०च् छुभा सीता । १६. प्र रा म ल$_1$ ल$_2$–मोक्षम् । १७. रा प्र म ल$_1$ ल$_2$–इहार्हति । १८. अ–सामान्ये विजये वापि । प्र–सामान्य-विजये वापि । रा ब म ल$_1$ ल$_2$–सामान्ये विजये चापि ते । १९. प्र–न च ते क्षणम् । रा ब म ल$_1$ ल$_2$–न ते क्षमम् । आ–तेन मेक्षमम् । २०. च–सामान्ये विजये चापि......द्धं तेन मे क्षमम् । फ–नास्ति ॥ २१. आ–आर्षेय रा० । ल$_2$–नास्ति ॥

[वं–४= [ षडशीतितमः सर्गः ] =[दा–१५]

बृहस्पतेस् तुल्य-मतेस् ततस्[1] तन्[1]
निशम्य वाक्यं तु[2] वि-भीषणस्य
इदं बभाषे वचनं महाऽऽत्मा
तस्मिंस् तदा नैर्ऋत[3]-राज-पुत्रः ॥१॥ [१

इदं [4]हि ते[4] तात कनिष्ठ [5]वाक्यं
धर्माऽन्व्-इतं चैवं[6] सु-नीतिमच्[7] च ।
अस्मिन् कुले [8]नाम कथं सु[9]-जातं
त्वम्[10] ईदृशं[10] व्या-ह[11]रसि प्र-ग[12]ल्भम् ॥२॥ [२

सत्त्वेन वीर्येण परा-क्रमेण
[13]शौर्येण धैर्येण[14] च तेजसा च ।
एकः कुलेऽस्मिन् पुरुषो हि धीमान्
जा[15]तस् तु नस् तात कनिष्ठ एव ॥३॥ [३

किं नाम तौ[16] पार्थिव-राज-पुत्राव्
अस्माकम् [17]एकेन निशा-चरेण ।

---

१. फ म–तु तस्य । च–त्वतस्तन् । प्र रा ब ल$_1$ ल$_2$–तदस्य । अ–ततस्तु । २. अ–हि । ३. रा ब म ल$_1$–नैनृत० ल$_2$–नैवृत० ॥ ४. आ–नास्ति । ५. च–आतुर् । ६. म–नैव । ७. रा–तु नीतिवश्च । आ–०तिवच्च । ८. म– ना(रा)म । ९. फ अ–नु जातः । प्र च रा ब म ल$_1$ ल$_2$–सुजातः । १०. च–त्वदृशं । ११. फ–व्याहरसे । रा–व्याहराशि । १२. आ च रा–प्रगल्भः ॥ १३. फ–सौर्येण । १४. प्र–धर्मेण । १५. फ–यतस् ॥ १६. आ–चेव । प्र रा ब ल$_2$ ल$_2$–तव । च–नास्ति । १७. आ–एतौ न ।

सु[1]-प्राकृतेनाऽपि रणे[2] प्र-सह्यौ[3]
प्रशंससि त्वं सु-महा[4]-गुणेषु ॥४॥[5] [४
त्रि-लोक-राजो[6] ननु देव-राजः[7]
शत-क्रतुर् भूमि-तले नि-विष्टः[8] ।
भयाऽर्दितं(?ता)श्[9] चाऽपि दिशः प्र-पन्नौ[10]
मत्[11]-तेजसा देव-गणाश् च सर्वे ॥५॥ [५
ऐरा[12]वणो वि-स्वरम्[13] उन्[14]-नदंश् च
नि-पातितो भूमि-तले मया सः ।
वि-कृष्य दन्तं हि[15] मयाऽस्य[16] भूयो[17]
वि-त्रासिता[18] देव-गणाः समस्ताः[19] ॥६॥ [६
सोऽहं सुराणाम् अपि दर्प-हन्ता[20]
दैत्योत्तमानाम्[21] अपि शोक-हर्ता[22] ।

---

१. आ ल१ अ–सप्रा० । २. ल२–नास्ति । ३. आ अ–प्रसह्य । फ–अतिशक्यौ । ल१–विशह्यौ । ल२–प्रसह्यो । ४. अ–तु महा० । ५. रा–प्रसंशितुमसुमहागुणेषु ॥ ६. रा–०राज । ७. फ–किं लोकनाथोऽतिमहाबलश्च । ८. च–मया सः । रा–निरिष्टः । प्र–विशिष्टः । ९. रा ल१–भयादितश् चा० । ब–तयार्दितश् चा० । म–भयार्दितश्चादिशः । १०. रा ल१–प्रसन्नो । आ ब–प्रपन्नो । ल२–प्रपन्नौ । ११. अ–यत् ॥ १२. फ–ऐरावतो । प्र–प्र–एरावणो । १३. रा अ–विश्वरम् । प्र–विभ्वीरम् । १४. फ–उन्मदंश् । १५. ल१–विकृष्टदन्तं । फ–०ष्य दन्तश्च । १६. आ फ ल२ अ–मया स । १७. प्र रा ब म ल१ ल२–भूमौ । अ–कुंभं । १८. अ–०सितो देवगणै । १९. फ–समेताः । अ–समेत । २०. रा ब ल२ ल१–दर्पहर्ता । अ–सर्वहन्ता । २१. प्र–दैत्यौतमानाम् । ल१–दैत्ये तु मानाम् । २२. फ ल१–शोकहन्ता ।

कथं[1] न हन्यां तरसा प्र-सह्य[2]
मनुष्य-[3]योनी किमु तौ रणाऽग्रे ॥७॥ [७

अथेन्द्र-कल्पस्य महा-रथस्य
महौजसस्[4] तद्-वचनं नि-शम्य ।
ततो बभाषे वचनं महाऽर्थं
वि-भीषणो धर्म-भृतां वरिष्ठः ॥८॥ [८

न तात मन्त्रे तव शक्तिर् अस्ति
बालस् त्वम् अद्याऽप्य्[6] अविपक्व[6]-बुद्धिः ।
तस्मात् त्वयेहाऽऽत्म-विनाशनाय
वचोऽर्थ-हीनं बहु[7] विप्र-लु[7](?ल)प्तम् ॥९॥ [९

पुत्र-प्रवादाद्[8] असि रावणस्य
त्वम् अस्य[9] जातः स्वयम् एव शत्रुः ।
यस्येदृशं[10] राघव[11]-तो वि-नाशं
निशम्य[12]-मानं हि[13] अनु-मन्यसे[13]ऽद्य ॥१०॥ [१०

त्वम् एव वध्यश् च सुदुर्[14]-मतिश् च
स चाऽपि वध्यो य इहाऽऽनयेत्[15] त्वाम्[16] ।

---

१. प्र ल$_2$—कर्ता (हर्ता) । २. च रा ब म ल$_1$ प्र ल$_2$—प्रगृह्य । ३. रा—॰ध्ययो न ॥ ४. अ—महारथस् । ल$_2$—महोजसस् ॥ ५. फ—नाम । ६. आ फ—अद्यापि विपक्व॰ । प्र च रा ब म ल$_2$—अद्यापि न पक्व॰ । ७. फ—बहु विप्रलंभम् । अ—बहुधा प्रलुप्तं ॥ ८. फ—पुत्र प्रमादाद् । च—॰प्रवादास्त्वसि॰ । प्र ब ल$_1$ ल$_2$— प्रवादस्त्वसि । रा—पुत्र प्रसवा···वादस्त्वसि । ९. अ—एव । १०. फ—यदिदृशं । ११. प्र—राघव ते । १२. ब—निशम्य सारं । अ—॰मानः । १३. फ—॰न हि पश्यसे वै । अ—स तु म॰ । ल$_2$—॰मन्यतेऽद्य ॥ १४. म—सुदुर्मति । १५. अ—॰नयत् । १६. ब—त्वम् ।

बालं [1]दृढं साहसिकं च भूयः
प्र-वेशयेच्[2] चा[3]ऽविदितं समीपे ॥११॥ [११
स मूढ-कल्पो वि-[4]नयाद् अपेतस्[5]
तीक्ष्ण[6]-स्वभावोऽल्प-मतिर् दुर्-आत्मा[7] ।
[8]भीरुं च माम् [9]अद्य सुदुर्-मतिं च[10]
त्वम् इन्द्र-जिद् [11]बाल-तया ब्रवीषि ॥१२॥ [१२
को [12]ब्रह्म-दण्ड-प्रतिमान् [13]सु-वेगान्
अर्चिष्मद्[14]-उल्काऽनल-सन्निकाशान्[14]
सहेत[15] बाणान् यम-दण्ड-कल्पान्
सम्-ईक्ष्य मुक्तान्[16] युधि राघवेण ॥१३॥ [१३
प्र-गृह्य[17] रत्नानि [18]स-भूषणानि
वासांसि [19]मुख्यासि(?नि) [20]मणींश् च [21]दिव्यान् ।
सीतां तु रामाय नि-वेद्य देवीं
वसेम लंकाऽधि-प वीत-शोकाः[22] ॥[23]१४॥ [१४

इत्य्[24]आर्षे [24]रामायणे सुन्दर-काण्डे विभीषण-वाक्यं नाम षडशीतितमः सर्गः ॥८६॥

---

१. अ–सदा । २. फ–प्रवेशितं । रा प्र ब म–प्रवेशयेद् । ल१ ल२ म अ–प्रवेशयित्वा । ३. रा–वा विहितं । प्र ब म–वा विदितं ॥ म ल१ ल२ अ–विदितं ॥ ४. आ–विभवादपे० । ५. अ–क्रुद्ध० । ६. आ–महात्मा । ७. रा–भीमं । ८. रा प्र ब म ल१ ल२–समासाद्य । च अ–मासाद्य । आ–नामाद्य । ९. प्र म ल१–वै । १०. ल२–बाल तथा ११. आ–ब्रवीहि । ल२–ब्रवीमि ॥ १२. ल१–कोदण्डवेगप्रतिमान् । १३. फ च–स वेगान् । १४. आ–अर्चिष्मतोल्कानल० । ब म ल१ ल२–अर्चिष्मदुल्कानलसन्निभांश्च । च–अर्चिष्मतोल्कानलसन्निभांश्च । १५. अ–वहेत । १६. आ–मुक्ता । प्र अ–युक्तान् ॥ १७. च–गृह्य १८. च–सुभू० । म–भूषणानि । १९. फ अ–दिव्यानि । च–मुष्याणि । प्र रा म ल१ ल२–पुष्पाणि । २०. ल२–सर्वांश् । २१. फ अ–मुख्यान् । २२. अ–०शोकः । २३. अतः परमधिकः पाठः–म–अतोऽन्यथा क्रियमाणैर्विरुद्धं द्रक्ष्यन्ति ते ये न मंस्यन्ति युद्धम् ॥ २४. ल२–इति सु० ॥

संक्रुद्धास् ते ततस् तत्र बहवः प्रिय-वादिनः ।
उच्य-मानास्तु[1] बहु-शश् चुक्रुशुः[2] सह-रावणाः ॥१॥ [N
शेषाश्[3] चाऽन्ये प्र-जहसुर्[4] भृशम् अन्ये नि-शश्वसुः[5] ।
सम्-ईक्ष्याऽन्योऽन्यम्[6] आ-यस्ताश्[7] चखादुर् दशनान्य् अपि [N
तस्मिंस्[8] तथोक्ते वचने महा-पार्श्वः[9] प्रताप-वान् ।
शिरस्य्[10] अञ्जलिम् आ-धाय[11] रावणं वाक्यम् अब्रवीत् ॥३॥[N
धर्मं[12] काम-फलं[12] विद्धि तथा शत्रु-विनाशनम्[13] ।
इन्द्रियाऽर्थोप-भोगो[14] हि कामः[15] सत्य-पराक्रम[16] ॥४॥] N
शब्द-गन्ध-रस-स्पर्शा[17] रूपाणि वि-विधानि च ।
भक्ष्यं[18] भोज्यम् अभि-प्रेतम् उचितं[19] मनसस् तथा ॥५॥ [N
एतन् मूलं त्रि-वर्गस्य[20] भवेद् राक्षस[21]-पुंगव ।

---

१. फ–०मानाश्च । २. प्र रा म ल$_1$–चक्रुधुस् ॥ ३. फ च प्र ब म ल$_1$ ल$_2$ अ–शेषाच् । रा–शेषा । ४–प्रजकृस्व भृशम् । ल$_1$–प्रजसुल्भृशम् । ५. फ च ब ल$_2$ अ–विनिश्वसुः । रा–निशच्चसुः । ६. रा–ऽन्योऽयम् । ७. आ–आयस्ताश्चश्च दुर्द० । फ–०श् चषदुर्दशनानपि । रा ब–०स्ता आखादन्दशनानपि । प्र म ल$_2$–०स्ता अखादन्दशनानपि । ल$_1$–०स्ता अदशन्दशनानपि । अ–मानस्य वभञ्जुर्दशना अपि ॥ ८. आ–तस्मिन्यथोक्ते । ल$_1$–तस्मिन्यथोक्तव० । ९. अ–सहापार्थः । १०. आ ल$_2$ अ–सिरस्य् । ११. फ रा प्र ब–आदाय ॥ १२. च–धर्म्यं का० । रा–धर्मकामं फलं । प्र–धर्मं कामं फलं । १३. अ–त्वरिवि० । प्र–०विनाशिनम् । १४. अ–०पभोगश्च । ल$_1$–०पलोभो हि । १५. आ म–रामः । १६. आ फ च रा प्र ल$_2$ अ–०पराक्रमः ॥ १७. आ–स्पर्शरू० । १८. आ–भक्ष्यभोज्यम् । १९. रा–उदीर्णं ॥ २०. ल$_1$–त्रिवनस्य भवेद् रक्षस० ।

दारा[1]श् चैवोदितो(?ता) मूलं सुखा[2]ऽर्थम् अ-मितौजस[2]ः ॥६॥ [N
यः खल्व्[3] अपि[3] वनं गत्वा दुर्गं[4] व्याल-निषेवितम् ।
मध्व्[5] आ-नीय न चाऽऽघ्राति[5] मन्ये[6] तं मूढ-चेतसम्[7] ॥७॥ [N
अनू[8]-अन्ते तु झष-ग्राहे[8] महा-जल-संमागमे[9] ।
सागरा[10]ऽन्ते सु-नियंता[10] सर्वा सुग्रीव-वाहिनी ॥८॥ [N
आ-गम्य[11] हृष्ट-मुदिताः सर्वे वानर-यूथपाः ।
सं-स्थिता हि परे पारे दिनानि सु-बहून्य्[12] अपि[12] ॥९॥ [N
कुम्भ-कर्णं सहाऽस्मा[13]भिः महेन्द्र-जितम् उत्-तमम् ।
युद्धे[14] वि-षहितुं[15] शक्तम् स्वयं नाप्यो[16]मरेश्वरः[16] ॥१०॥ [N
अन्तःपुर-विहारेषु[17] गुह्येष्व्[18] आम्र-वने(?णे)षु च ।
चारु-बर्हिण-घुष्टेषु[19] रमस्व सह सीतया ॥११॥ [N
वि-ज्ञाय[20] तं महा[21]-बुद्धिः कुपितं राक्षसेश्वरम्[22] ।

---

१. आ फ-पान(दार)मेवादितो । च ब म रा प्र ल$_1$ ल$_2$-दानमेवोदितं । २. च-मुख्यार्थम् । अ-सुषाय स्वमि० । ३. रा-खल्वपवनं । ४. च-दुर्गव्याड०; रा-दुर्गव्याल० । ५. आ-वध्वानीयत चायन्तं । च रा-०य न आघ्रात्तं । ब ल$_2$-चाघ्रात्तन् । प्र-चाघ्रात । म ल$_1$-चाघ्रातुर् । अ-चाघ्यत्तन् । ६-फ-तं मन्ये । ७. च-०चेतनम् ॥ ८. प्र रा म ल$_2$-हनुमत्प्रमुखा ग्राहा । ब ल$_2$-हनुमत्प्रमुखं ग्राहा । च-०न्ते तु मखो?ग्राहा । आ-०षग्राह । ९. अ-०संगमे । १०. ब म ल$_2$-सागरान्तेषु नि० । च-सागरान्तेषु नियतां ॥ ११. प्र-आगम्य । १२. आ-सुबहून्यथा ॥ १३. रा ब प्र म-०स्माभिस्सहेन्द्र० । १४. फ-युक्तो । १५. म-विषयि(हि)तुं । आ फ-विषहिन्तुं । प्र-विषहितं । १६. फ-राक्षसपुंगव ॥ आ फ-नाप्यो महेश्वरः । म-नाप्यमहेश्वरः । अ-वै नाऽमरेश्वरः । १७. ल$_1$-०विहारे । १८. रा-गुरुष्व् । आ-गुहेष्व् । १९. रा-०णजुष्टे च । प्र ब म ल$_2$-णजुष्टेषु । ल$_1$-चारुवर्ह्निण० । अ-णयुष्टेषु ॥ २०. रा-विज्ञापितं । २१. ल$_2$-०बुद्धिं । २२. ल$_1$-परमेश्वरम् ।

परमोद्-अग्रया वाचा वि-भीषणम् उवाच ह ॥१२॥ [N
न वि-भीषण राजानं परुषं वक्तुम् अर्हसि ।
क्रुद्धस् त्व् एवं महाऽऽत्मा वै दहेद् अग्निर् इवेन्धनम्॥१३॥ [N
स्त्री-रत्नम् अ-तुलं लब्धा(?ब्धां) सीतां प्राण-समां कथम्।
द्विषतेऽयं प्र-यच्छेत् ब्रुवन् दोषं न बुध्यसे ॥१४॥ [N
न तु सापत्न्यकं बाल्याच् छक्नोषि परि-गूहितुम् ।
विश्वस् ते मनसो दोषं ब्रुवन्न् एवं न बुध्यसे ॥१५॥ [N
कामस्य कामं पुर-तो वि-कारो
न त्व् एष वै सं-क्रमते शुभानाम् ।
न दृष्ट-संकल्पम् अहो वि-कारं
शुद्धं तमाम राज्ञो नृप-सिद्धि-कामाः॥१६॥? [N

---

१. च रा ब-पुनश्चोदग्रया ॥ २. रा ल$_2$-पुरुषं । ३. फ च रा प्र ब म-स्त्वेष । ४. फ-इवोद्धतः ॥ ५. ब-०समा । अ-द्विषतोऽयं प्र०। फ-द्विषते संप्राप्तुं चेति । ६. प्र च रा ब म ल$_2$-द्विषते संप्रयच्छेति । अ-द्विषतं यं प्रयच्छेति । ७. अ- ध्रुवं । ८. फ-दोषैर्न लिप्यसे ॥ ९. फ-न तु सापत्नकं । रा म प्र-ननु सापत्नकं । अ-न त्वं सापत्नकं। च ल$_2$-ननु सा०। १०. अ-वाक्याद्यक्रोति । ल$_1$-वाक्या......क्रोति । ११. फ-च निगूहितम् । च रा म-न विगूहितम् । प्र-न विगर्हतुम् । ल$_2$-न विगर्हितम् । अ-विनिगूहितुम् । १२. फ-विश्वस्तव मनोदोषो । प्र च-विश्वस्ते म० । रा-०स् ते मनषो '। १३. रा-एनं । १४. ल$_2$-बुध्यते ॥ १५. ब-नास्ति ॥ १६. फ- क्षमां समाक्रम्य पुरा विकारो । च रा ब म ल$_2$-कामं खमाक्राम पुरोधिकारो । प्र-कामं खमाक्राम पुरोपकारो। ल$_1$-कामं धमाक्रम्य पुरोपकारो । अ-कामं खमाक्राम तु वै विकारो । १७. रा ब म ल$_1$ ल$_2$-नन्वेष । १८. अ-शुभाननम् । १९. फ-दुसङ्कल्पम् । प्र च ब ल$_1$-हृष्ट सं० । रा-ह्रष्ट० ? । म ल$_2$-दृष्ट ( हृष्ट ) । २०. फ अ-अथो । २१. च ल$_1$-विकारो । प्र ब म ल$_2$-विकारः । अ-विशुद्धम् । २२. फ-षुद्धं । च रा प्र ब ल$_1$ ल$_2$ अ-नास्ति । २३. फ-क्षमा च ॥

एवं च[1] राजा बल-वान्[2] नृ-शंसम्[3]
अन्[4]-आर्यकर्म क्षमते[5] न विद्वः ।
कस्मान्[6] न ते सन्नि-पतन्ति[7] दण्डाँ[7]
शिताश् शरीरे[8] नि-पतन्ति बाणाः ॥१७॥[9] [N

स एवम्[10] उक्तो[10] न शशाक किञ्चिद्
वि-भीषणो वक्तुम् अतीऽव[11] कोपात् ।
प्रियस्[12] तु[12] तस्याऽनु-चरो महाऽऽत्मा
हरो महा-पार्श्वम्[13] उवाच[13] वीरः ॥१८॥ [N

न ते महा-पार्श्व जिजीविषोऽस्ति[14]
यो[15] रावणाऽनन्तर[16]-जे नि-कामम्[17] ।
वि-भीषणे[18] वा[19] परुषं[19] ब्रवीषि[20]
राक्षस्[21] तथाऽ[21]र्थास् तरसा नि-हंसि[22] ॥१९॥ [N

---

१. आ-हि । २. आ-मघवा । अ-०मथवा । ३. अ-नृशंसा । ४. आ-आर्यं हि कर्म । म-अयं विकर्म । फ-अनार्य धर्म । ५. आ-क्षमतां हि । फ अ-क्षमतां न । म-क्षमते विद्वः । ६. फ म-तस्मान् । ७. फ अ-सन्निपद(त)न्ति दण्डान्(:) । ८. अ-शरीरेण पतन्ति । फ-शरीरे पतन्ति । ९. रा च प्र ब ल$_1$ ल$_2$-नास्ति ॥ १०. फ-एव शक्तो । ११. च-इतीव । १२. अ-प्रियश्च । १३. च-महापार्श्वं सुवाच ॥ १४. आ-०षास्ते । १५. अ-यद् । १६. च-रावणमन्तस्त्वे ? । रा-रावणं । प्र ब ल$_1$ ल$_2$-रावणं वीक्ष्य च । १७. अ-विकारम् । प्र ब ल$_1$ ल$_2$-निर्विकारम् । १८. प्र ब रा ल$_1$ ल$_2$-विभीषणं । अ-विभीषणो । १९. आ च-वाक्यरुषं । अ-वाक्परुषं । म-वै परुषं । २०. आ-प्रवीषि । २१. रा ल$_1$-धियं च राक्षास् । प्र ब म ल$_2$-धियं च राक्षस् । फ-तथार्थं । २२. रा ल$_1$-न हांसि ॥

इदं सु-नीतं कुरुते न चेति[1]
ब्रुवन्ति[2] तस्या[3]ऽर्थ-पुरो(?परा) हितानि ।[3]
प्र-चोदितांश्[4] चाऽपि कृते[5] तु मन्त्रे[6]
त्वया महा-पार्श्व न कुत्सनीयाः[7] ॥२०॥ [N
न चेद् इहाऽनु-प्रियम्[8] एव वाक्यं
न चेद् अयं राज-हितार्थं[9] मन्त्रः ।
स्त्रियश् च राज्ञो जड-पंगुकांश्[10] च
सं-पृच्छ तांम् तादृशश् चैव मूढान् ॥[11] २१॥ [N
श्रुत्वा हरस्येन्द्र[12]-जितस् तथेदं[13]
तथा[14] महा-पार्श्व-वचः सु-रूक्षम्[15] ।
वि-भीषणो राक्षस-राज[16]-पुत्रम्
उवाच वाक्यं हितम् अर्थ-वच्[17] च ॥२२॥ [N

१. फ च रा ल२ अ–वेति । २. ल२–द्रुवान्ति । फ–नास्ति । ३. तस्यार्थसिद्ध्यर्थं पुरोहिताश्च । च म अ–ब्रुवंति तस्यार्थंपुरो पुरोहिताश्च । रा प्र ब ल१ ल२–तस्याथ पुरोहिताश्च । ४. फ–प्रचोदितः सोपि । ५. ल१–कृतोपि । फ प्र व म रा ल२–कृतेपि । ६. ब ल१–मंत्रो । ७. आ–०नीयम् । फ च ल१–०नीयः ॥ ८. अ–इहास्य प्रियम् । ९. च–०हिता ये । १०. ब म–नडपंगु० । आ–०पंगुकाश्च । प्र ल२–तदुपगुकांश्च । ल१–नरुपंगुकांश्च । ११. फ–संपृच्छतां तादृश सैव मूकान् । च ब म–संपृच्छ वै तादृशमेव मूढान् । रा–संपृच्छ्य वै तादृशमेव मूह्यान् । प्र–संपृच्छ चैतादृशमेव मूढान् । अ–सपृछ वैतादृशश्चैव मूढान् । ल२–संपृछवेस्तादृशमेव मूढान् । फ च रा ब म ल१ ल२ अ–समाप्तः सर्गः ॥ १२. आ–हरश्चेन्द्रजितस्तथैदं । १३. च रा फ–०तस् तथैदं । १४. च–तथा वाक्य महा० । १५. अ च–सरूक्षम् । फ–सरूपम् । ल२–सुरूपम् । १६. अ–राक्षसराजम् । फ च रा प्र ब–०राजराजम् । ल१–राक्षसराजमेवम् । १७. फ–अर्थवेच्च ।

न हिंसतो[1] धर्म-परान् मनुष्यान्
कामाऽऽत्मनः[2] क्रोध-वशाऽनु-गस्य[3] ।
जना नरेन्द्रस्य चिरं सकाशे[4]
वसंत्य्[5] अ-तोये सरसीऽव हंसाः ॥२३॥ [N
अ-धर्मशीलं[6] पितरो[7] द्विषन्ति
ह्य् एवं विधस्याऽस्ति कुतोऽर्थ-सिद्धिः ।
त्यजन्ति मित्राणि तथैव[8] बान्धवा
नृपं सदोग्रं[9] ह्य्[10] अ-समीक्ष्य-कारिणम् ॥२४॥ [N
अ-दूषकस्याऽन्-अपराधिनश्[11] च
भार्या[12] हृता तत्र किम् एव साधु[13] ।
सीतां प्र-मादेन[14] निर्-अर्थकेन
लंका सहाऽस्माभिर् इवाऽभ्य्[15]-उपैति ॥[16]२५॥ [N
वृत्तोरु-बाहूऽत्तर[17]-भोग-राशिं
चिन्ता-विषं तीव्र-विपाक-तीक्ष्णम्[18] ।

---

१. आ—हिं सतो । प्र च ब ल१ ल२—हिंसते । अ—हिंसन्तो । २. रा प्र ब ल१—किमात्मनः । ३. रा ल१—०गम्य । ४. आ—सकासे । च—शकासे । ५. फ—वसंत्य् ॥ ६. रा—०सीलं । ७. आ—पितरौ । च—पिगे । ८. फ—तथैव । ९. प्र ब म ल२ अ—मदोग्रं । १०. च रा प्र ब म ल२—त्वसमीक्ष्य० ॥ ११. प्र ब म ल१ ल२—०नपकारिणश्च । १२. ल२—जाया । १३. आ—साधुः । १४. फ म—सीतां प्रदाने । च रा ल२ अ—सीताप्रमादेन । प्र ब ल१—सीताप्रसादेन । १५. फ—इह व्यपैति । च—इहाभ्युपैति । म—अव्यपैति । अ—इहाव्यपैति । १६. प्र ब रा ल२—लङ्का विनाशं सहसाभ्युपैति । म—लङ्का विनाशं सहसाद्युपैति ॥ १७. फ—वृत्तो न वाह्वोंतर० । च—वृत्तो नु बाह्वंतरभोगवासं । प्र रा ब ल१ ल२—वृत्तोरुबाह्वंत्तरभोगवासं । आ—०भोगराशिः । १८. फ अ—दंष्ट्रम् ।

दशांऽगुलाऽनेक-विषाऽति-कायं[1]
सीता-[2]महाऽहिं [3]वदने स्पृशेत्[4] [5]कः ॥२६॥ [२
[6]पुरा हि[7] किञ्चिद्[8] भवने [9]महत् ते[8]
[9]ब्रह्माऽसुराणां भयम्[10] [10]एति किञ्चित् ।
पुरा [11]पुरीं हन्ति च[12] ब्रह्म-[13]वादः
प्र-[14]यच्छ रामाय विदेह-पुत्रीम् ॥२७॥ [N
पुरा पुरीं [15]तां [15]समभि-द्रवन्ति
बली-मुखा वानर-यूथ-पालाः ।
सुपर्ण-[16]संघा इव निष्-[17]पतन्ति
प्र-यच्छ रामाय विदेह-पुत्रीम् ॥२८॥[18] [N
पुरा वनौको-निवहाः [19]पुरीं ते[19]
प्र-विश्य वीरास् तरसा [20]हरन्ति ।
सिंहा वने [21]क्षुद्र-मृगान् इवाऽऽशु
प्र-यच्छ रामाय विदेह-पुत्रीम् ॥२९॥ [22][N

---

१. फ—वशं गतास्तेन सुखातिकालं(यं) । च—दशांगुलस्तेन सुखातिषा कायं । प्र रा ब म ल$_2$ अ—दशांगुलानेकसुखातिकायं । २. फ—०महार्हि । च प्र ब ल$_1$ ल$_2$—भीतो म० । रा—सीते म० । ३. फ प्र—वदनं । रा—ववने । ४. च ब ल$_2$ अ—स्पृशे । ५. आ अ—कः । ६. म—पुराह । ७. च प्र ब म ल$_1$ ल$_2$—कश्चिद् । ८. आ म—महर्षिः । रा प्र ब म ल$_1$ ल$_2$—महात्मा । ९. रा च ब म ल$_1$ अ—महासु० । प्र ल$_2$—सुरासु० । १०. फ—स्वयमेव । प्र—भयमेव । ११. आ रा—पुरी । १२. अ—न । १३. प्र—विप्रवादः । रा—ब्रह्म । १४. रा—पप्रच्छ ॥ १५. फ च अ—भीमामभि० । प्र च म ल$_2$—भीमसुप० । १६. फ—सुवर्णसिंहा । १७. फ—निपतन्तः । प्र च म ल$_2$ अ—निष्पतन्तः । १८. रा ब ल$_1$—नास्ति ॥ १९. फ—पुरं ते । म—पुरीम् । २०. फ—न हरन्ति । २१. फ—क्रुद्ध० । २२. च रा प्र ब ल$_1$ ल$_2$ अ—नास्ति ॥

राम-प्रियां[1]-ग्राहम् इषूऽग्र-कूर्म्मं
चापां[2]ऽम्भसं वानर-वीर-मत्स्यम् ।
सुग्रीव-नक्रं ह्य् उदधिं हरीणां
को जीविता[3]ऽर्थी प्र-विशेद् [4]अ-मूढः ॥३०॥ [N
पुरा कपीऽन्द्रोग्र-वलाहकेन
रामे[5] (?:) प्रहाराऽशनि-वैद्युतेन ।
न शैल-वर्षेण नि-हन्ति यावत्
प्र-दीयतां राज-सुताय[6] सीता[7] ॥३१॥[8] [N
पुरा[9] न यावन्[10] महता बलेन[8]
नौभिः प्लवैश् चाऽर्णवम् अ-प्रमेयम् ।[11]
तरन्ति सुग्रीव-सुखा[12] ह्य्[13] अ[13]-मूढाः
प्र-यच्छ[14] रामाय विदेह-पुत्रीम् ॥[15] ३२॥ [N
एवं[16] न[17] यावत्[17] समभि-द्रवन्ति[15]
बली-मुखाः[18] पर्वत-कूट-मात्राः[19] ।
दंष्ट्रा[20]ऽऽयुधाश् चैव नखाऽऽयुधाश् च[21] [15]
प्र-दीयतां राज-सुताय सीता[22] ॥३३॥ [३

---

१. आ ब—०प्रियां ग्राहम् । २. आ—चापद्रुमं । ३. प्र—जीवनार्थी । ४. फ—प्रविशेद्विमूढः । रा—प्रविशेऽस्मि मूढः ॥ ५. आ—रागप्र० । ६. च रा म ल$_1$ प्र ल$_2$—दाशरथाय । म—तावत् । ७. प्र ल$_2$—मैथिली । ८. ब—नास्ति ॥ ९. अ—पुरी । १०. रा—यावन म० । ११. अ—नौभिः प्लवैः सागरमप्रसह्यं । १२. फ—०सखा । अ—०सुखा । १३. फ—ह्यमूलाः । प्र रा ब म ल$_1$ ल$_2$—हि योधाः । अ—हरीन्द्राः । १४. रा—प्रयक्ष । १५. फ—नास्ति ॥ १६. रा ब ल$_1$ ल$_2$ अ—पुरा । १७. च—त्वयावत् । १८. ल$_1$—०मुखः । १९. प्र ब म—०कूठमात्राः । २०. आ म—दंष्ट्या० । रा च ब—दंष्ट्र्या० (दंष्ट्रा) । २१. म—चा । २२. प्र—सीतां ॥

भित्त्वा न यावत् प्र-विशन्ति[1] देहं
प्राणाऽन्तकास्[2] तेऽशनि-तुल्य-वेगाः ।
शिताः[3] शरा राघव-विप्रयुक्ताः[4][5]
प्र-दीयतां राज-सुतार्थं[6] सीता[7] ॥३४॥ [५

यदा भवान् द्रक्ष्यति वानरेन्द्रैर्
अनीक-मध्यं प्रवि-कीर्यमाणम्[8] ।
दिशो द्रवन्तं हत-योध-नाथं[9]
तदा भवान् वाक्यम् इदं स्मरिष्यति ॥३५॥ [N

सहस्र-शीर्षस्यं[10] महोरगस्यं
भोगेन[11] भीमस्य महा-विषस्य ।
बलं परि-क्षिप्तम्[12] इदं भवन्तो
नृपं च पापात्[13] परि-मोचयन्तु[14] ॥३६॥ [N

न कुम्भकर्णेन्द्र-जितौ हि वीरौ
कुतो महापार्श्व-महोदरौ च[15] ।
आ-धावतां[16] दाशरथेश् शराणां
वेगं सम्-अर्था मनसाऽपि सोढुम् ॥[17]३७॥ [६

---

१. आ-प्रविशति । २. फ च ल१ म-प्राणांतिकास् । ३. प्र च-शिराः । ४. आ-०दिप्रयुक्ताः । प्र च ल२-विप्रमुक्ताः । ५. रा-पादस्याऽस्य स्थाने "दिशो द्रवन्ति हरियोधनाथं" इत्येवं पठति । ६. रा प्र ब म ल१ ल२-दाशरथाय । ७. म-मैथिली । प्र-सीतां ॥ ८. च-अनीकमध्यनुप्रकीर्यं । ल२-०ध्यप्रकीर्यं० । फ रा म-प्रविकीर्णमाणम् । ९. रा-हर(रि)यो०। म-०योधनागं (यं) ॥ १०. च-०सहस्रशीर्षम०। ११. ब-भोगैरभी० । १२. अ-परिक्षि......मिदं । १३. प्र-शापात् । १४. फ-०मोचयन्ति ॥ १५. च-वा । १६. प्र-आवाधवं । च ब-आधावति । रा-अधावतां । १७. फ-वेगं समर्थां समरे विषोढुम् ॥

जीवन्[1] स रामो न वि-मोक्ष्यते[2] त्वां
सर्वैः सु-गुप्तं[3] ह्य् अथवा[3] मरुद्भिः ।
न वासवस्यांऽर्कं-गतं[4] न मृत्योः[5]
न चाऽप्य् अपाम् अन्तर् अनु-प्रविष्टम् ॥[6] ३८॥[७
मोक्षस् तु रामाद् भवतां भवेन्[7] न
प्र-हस्त सर्वैर् अपि राक्षसेन्द्रैः ।[5]
कथं भवेद् अस्य वि-शारदस्य[8]
महाऽर्णवं तर्त्तुम्[9] अ-शक्यम् अस्यं ॥३९॥[१२
धर्म्म-प्रधानः स महान्[10] बृहच्[11]-छ्रीर्
इक्ष्वाकु-वंश-प्रभवो महाऽऽत्मा ।
प्र-हस्त देवो[12]ऽपि तथा[12]-विधस्य
कृत्ये[13] षु(?सु-)जातस्य भवन्त्य् अ-योग्याः॥[14] ४०॥[१३

---

१. च–जीवत्स । ल$_2$–जीवन्हि । २. फ–विमोक्ष्यति । च–विमोक्षते । ३. च–प्रगुप्तं त्वथवा । प्र रा ब म ल$_1$–०प्तं त्वथवा । ४. रा–०गतो । ५. फ–नास्ति । ६. आ–न चाप्यसंवाधमनिप्रवेष्टुम् । च–न चाप्यपामन्तमभिप्रविष्टम् । म–न चाप्यपां भर्तुरनुप्रविष्टम् । अ–न चापि पातालमभिप्रविष्टम् । फ–नास्ति ॥ ७. आ–भवेत्तु । प्र ल$_2$–भवेन्नो । ८. फ प्र रा ब म ल$_1$ ल$_2$ अ–अर्थविशा० । च–अस्य विशारदस्या । ९. अ–महा..........मशक्यमस्य ॥ १०. आ फ ब–सुमहान् । च–स महा नु । अ–सुमहन् । ११. फ रा ब–महच्छ्रीर् । १२. आ–देव हि । प्र रा ब म ल$_2$–देवा हि । फ–देवाः पि त० । अत्र सन्धिरार्षः द्र० । १३. अ–कृत्ये स । १४. प्र च रा ल$_1$ ल$_2$–कृत्येषु जातेषु भवन्ति योग्याः । ब–कृत्येषु जात्येषु भवन्ति योग्याः । म–कृत्येषु भवन्ति (न्त्य) योग्याः । आ–कृत्यं भवस्ययोग्याः ॥

तीक्ष्णा न यावत्[1] तव पङ्क-पत्रा
दुरा[2]-धरा राघव-विप्रयुक्ताः[3] ।
भित्त्वा शरीरं प्र-विशन्ति बाणाः[4]
प्र-हस्त तेनेह वि-कत्थसे[5] त्वम् ॥४१॥ [१४

न रावणो नाऽपि महोदरोऽयं
न कुम्भ-कर्णो[6]ऽपि न चाऽति-कायः ।
न[7] चेन्द्र-जिद् दाशरथिं[8] प्र-सोढुं[9]
शक्ताः[10] स्थितं शक्र-सम[11]-प्रभावम् ॥४२॥ [१५

अयं[12] कथं[13] काम-वशा[14]ऽभिपन्नो
मित्रैर् अमित्र[15]-प्रतिमैर् भवद्भिः ।
अध्या[16]-सितो राक्षस-लालना[17]ऽर्थं
तीक्ष्णः[18] प्रकृत्या[19] ह्य् अ-समीक्ष्यकारी ॥४३॥ [१७

---

१. आ—यावन्न कंकन्त्रा । याव त कंकन्त्रा । ल$_{1}$—यावन्न कंकपुत्रा । २. फ प्र रा ब म ल$_{1}$—दुरासदा । ३. फ—०बाहुमुक्ताः । च रा म ल$_{1}$—०विप्रमुक्ताः । ४. ल$_{2}$—"प्रहस्त देवा हि तथाविधस्य" इत्यारभ्य "भित्त्वा शरीरं प्रविशन्ति बाणाः" इत्यन्तः पाठो द्विर्पठितः ॥ ५. च—विकथसे । ६. अ—कुम्भकर्णोऽस्ति । ७. आ च—नेदेन्द्रजिद् । ८. प्र—दासरथिं । ९. फ—प्रवोढुं ॥ च—प्रसेढुं । १०. फ—शक्तास्तु तम् । छ—शक्तो स्थितं । रा ब प्र म ल$_{1}$ ल$_{2}$—शक्ता रणे । ११. फ—शक्रतुल्य० । रा—सक्रतुल्य० ॥ १२. रा—अथ । १३. प्र—कथा । १४. फ च—रामवशा० । रा प्र ब ल$_{1}$—रामबलाभि० । म—रामवशा(ला)भि० । १५. ल$_{1}$—अमित्राप्रभवैर् । अ—अमित्रैः प्रभवैर् । आ—अमित्रप्रभवैर् । १६. आ—अधास्यते । च—अध्यास्यते । रा—अध्यास(स्य)ते । ब म ल$_{1}$ अ—अध्यास्यतं । प्र—आधास्यते । ल$_{2}$—अध्यासत । १७. च—रक्षस० । फ—०राक्षसलालनार्थं । १८. ल$_{2}$ अ—तीक्ष्णा । १९. च—प्रकृत्या-स्यसमी० । रा ल$_{1}$—प्रकृत्या ह्यहमीक्ष्य० ॥

यावद्[1] हि केश-ग्रहणात्[1] सुहृद्भिर्
अयं भवद्भिः परिपूर्ण-बाहुः ।
नि-[2]गृह्य राजा परि-[3]भाषितव्यो
[4]भूतैर् यथा भीम-बलैर् गृहीतः ॥४४॥ [१९
प्र-[5]वाहिणा राघव-सागरेण
सम्-उह्यमानैः[6] [7]सं-हितैर् भवद्भिः ।
युक्तो ह्य् अयं [8]तारयितुं सम्-एत्य
[9]काकुत्स्थ-पाताल-मुखेऽ[10]वसीदन् ॥४५॥ [२०
इदं पुरस्याऽस्य [11]स-राक्षसस्य
राज्ञश् च [12]पथ्यं स-[13]सुहृद्गणस्य ।
सम्यग् वि-[14]भाव्य [14]स्व-मतं ब्रवीमि
नरेन्द्र-पुत्राय ददस्व पत्नीम् ॥४६॥ [२१
परस्य वीर्यं च [15]बलं च[15] बुद्ध्वा
[16]स्थानं [16]क्षयं चैव तथैव वृद्धिम् ।

---

१. च-०त् सुकेशाग्रहणात्। रा-०त् सुकेशग्रहनात् । ब म ल१ ल२-सुकेशग्र० । फ-०शग्रहणं । प्र-०तू सुकोशग्र० । २. रा-विगृह्य । ३. आ-०भाषिरुधो ? । प्र-०भासतव्यो । ४. रा-भूतेर् । प्र-भीतैर् ॥ ५. च-आवाहिना । रा प्र ब म ल१ ल२-प्रवाहिना । ६. च-समुह्यमानाः। फ-समुह्यमा(?ण्या)नः । ७. रा प्र ब म ल१ ल२-सहितो । ८. फ-तारमिहं ? । ९. आ-काकुस्थ० । १०. ल२-०मुखोवसीदन् । अ-०मुखे च सीदन् । आ-०सीदम् । फ-०सीदन्तु ॥ ११. रा-सु० ? । १२. च रा प्र ब म ल१-पश्यन् । १३. च-०गणश्च । रा-सुहृद्गणस्य । १४. च-विभाव्य मतं । रा प्र ब ल१ ल२-विभव्याथ हितं ॥ म-विभाव्याथ हितं । १५. ब-नास्ति । ल२-बलं बुद्ध्वा । १६. रा-स्थानक्षयं ।

तथा स्व-पक्षेऽप्य् अनु-गृह्यमानं(?णं)[1]
ब्रवीमि वो भर्तृ-हितं यथा-वत् ॥४७॥ [२२
तपो घोरम् उग्रं[2] यशः पौरुषं वा
न[3] तस्याऽप्र-मेयस्य शक्यं प्र-मातुम् ।
तपो[4]-विक्रमाभ्यां सम्-अर्थो हि भोक्तुं
स[5] भूमिं स-शैलां प्रभुः काननां[6]ऽन्ताम् ॥४८॥ [N
रणे राम-बाहुं[7] न शक्नोति[8] सोढुं
सहैरावणोऽपि स्वयं वज्र-हस्तः[9] ।
न रामेण वैरं महाराज कृत्वा
क्वचिज् जीवितुं वा[10] सुखं वाऽपि शक्यम्[10] ॥४९॥ [N
नरेन्द्राय तस्मै प्रियां[11] साधु[12]-शीलां
प्रयच्छा[13]ऽऽत्म-जीवं सुखं राक्षसेश[14] ।
न ते पौरुषं[15] चा[16]ऽऽयुधं वा बलं वा
प्र-पश्यामि रामो रणे येन शक्यः ॥५०॥ [N

---

१. आ–तथाप्यपक्षेऽप्यनुगृह्य मार्गं । प्र–तथा सुपक्षेऽप्यनुगृह्य मार्गं । रा–तथाप्यपक्षेऽप्यनुगृह्यमानं । रा च ब–तथा स्वपक्षेऽप्यनुगृह्य मार्गं ॥ २. फ–अग्र्यं । ३. ब–वा न । आ च–तस्याप्रमेयस्य न त० । फ च रा–न तस्याप्रमेस्य न । ४. च–तयो वि० । रा–ततो वि० । फ–तपोविग्रहाभ्यां । ५. आ च–सभूमिशैलां । रा प्र ब म ल$_1$ ल$_2$ अ– सभूमिं समग्रां । ६. आ–प्रभु काननानाम् । च–प्रभु का० । च रा प्र ब म ल$_1$ $_2$–काननां ताम् । अ–प्रभुः सागरान्तम् ॥ ७. आ–०बाहुं । ८. आ–शक्कोतिसोढुं । फ–शक्कोतिशोढुं । ९. रा–०हस्तं । १०. प्र–वापि वस्तु क्षमन्ते । ल$_2$–वापि वस्तुं क्वचित् । म–सुखं नापि शक्यम् । रा–सक्यम् ॥ ११. प्र–प्रियं । १२. च–सधुशीलां । फ च रा व म ल$_1$ ल$_2$ अ–साधु-सीतां । १३. फ–प्रयच्छ जीवं । म–प्रयच्छ स्वजीवं । १४. फ–राक्षसेन्द्र । प्र च रा ब म ल$_1$ ल$_2$ अ–राक्षसेभ्यः । १५. च–पौरुषं । १६. च प्र रा ब म ल$_2$–वा सुखं । म अ–वायुधं (वा सुखम्) ॥

सतो वाऽसतो वा समुत्-पत्य सीता
प्र[1]-दाप्या प्र-णम्या न शक्यां[1] प्र-हर्त्तुम् ।
पुनः सर्वम् ईशं[3]स् स-नक्षत्र-चन्द्रं
सम्[4]-अर्थः सं[4] सोढुं[5] जगच्[6] चाऽजगच् चं[6] ।
स-पत्नस् तु रामो[7]ऽभि-पन्नो वि-धाता[7]
स्वयं भूत-नाथः[8] प्र-शक्तः स्वयं-भूः ॥५१॥ [N

इत्यार्षे रामायणे सुन्दर-काण्ड मन्त्र[9]-निश्चये विभीषण-वाक्यं[9]
नाम सप्ताऽशीतितमः सर्गः ॥८७॥

---

१. फ—प्रणम्य प्रदेया न युक्ता । अ—प्रदेया प्रणम्य शक्त्या । च—प्रदीने प्रणम्या । २. प्र रा ब $ल_1$ $ल_2$—नास्ति । ३. अ—ईशं । च ब म $ल_1$ $ल_2$—एवं । रा प्र—एव । ४. आ—समर्थो न । ५. रा—सोढुं । ६. अ—जगत्वाजगत्वा । फ—जये वा जगच्च । च रा म $ल_1$ $ल_2$ अ—जगच्च जगच्च । ७. आ—रामो विधाता स्वयम्भूः । ८. रा—भूतनाथस्स शम्भूः । प्र ब म $ल_1$ $ल_2$—०नाथः स शक्तः ॥ ९. च रा प्र ब म $ल_1$—हरवाक्यं ॥ अ फ $ल_2$—महापार्श्ववाक्यं ॥

विभीषण-वचः श्रुत्वा बल-वान् राक्षसेश्वरः ।
१] अभवत् क्रोध-[1]ताम्राऽक्षः सन्ध्या-रक्त इवांऽशु-मान्॥१॥
नेत्रे प्रकृति-[2]ताम्राऽन्ते [3]भूयस् [3]ताम्रत्वम् आ-गते ।
२] [4]ददृशाते [5]सु-भीमोग्रे शनैश्चर-[6]सुताव् इव ॥२॥
क्रोधेन [7]तु भृशं [8]नेत्रे [8]लाक्षा-रस-सम-प्रभे ।
N] मंत्रिणो [9]ह्य् अन्व्-अपश्यन्त [10]ताम्रे तु क्रोधनस्य ते[10] ॥३॥[11]
क्रोधं तस्याऽनु-[12]पश्यन्तस् [13]तीव्रं [13]तु क्रोधनस्य ते ।[14]
३] शील-ज्ञाः [15]सचिवाः सर्वे बभूवुर् जात-साध्वसाः ॥४॥
अथ रोषाद् विनिष्-[16]पिष्य भृशं [17]कर-तले [18]करम् ।
४] अब्रवीद् रावणः क्रोधाद् वि-भीषणम् इदं वचः ॥५॥
[19]परेषां गुण-[20]संस्कारं मम चाऽनर्थ-बुद्धि[21]ताम् ।
५] भवान् वि-[22]चेष्टे यत् [22]सर्वं प्र-माणं [23]मम नैव तत् ॥६॥[24]

---

१. फ—०संरक्त ॥ २. फ—०ताम्रे च । ३. प्र रा ब म ल$_{1}$ ल$_{2}$—पुनस्तत्तत्वम् । च—०स्तत्तत्वम् । ४. फ—संदृशाते । ५. फ प्र ल$_{2}$ अ—सुभीमे च । रा ब म ल$_{1}$—सुभीमे ते । ६. आ फ रा ब ल$_{1}$—शनैश्चरबुधाविव ॥ ७. अ—सुभृशं । ८. अ—लक्षारस० । आ फ रा प्र ब म ल$_{2}$—तस्य । च—०स सम प्रभो । ९. रा म—ह्यनुप० । अ—ह्यवपश्यन्त । प्र—ह्यन्वपश्यन्तु । १०. फ—तीव्रे क्रोधाननस्य ते । प्र—तीव्रस्य क्रोधनस्य तु । च रा—ताम्रे क्रोधने ते । म—तीव्रे तु क्रो० । ल$_{2}$—तीव्रे क्रो० । अ—तीव्रं सुक्रो० । ११. आ—नास्ति ॥ १२. च—पश्यन् । १३. फ—तीक्ष्णम् । म—तीव्रं स । १४. प्र ल$_{1}$ ल$_{2}$ अ—नास्ति । १५. आ—शचिवाः ॥ १६. रा-विनिष्पष्टा । १७. आ रा—करतलेः । प्र—करतलं । १८. प्र—वरं ॥ १९. रा ब—परेषा । २०. रा ब म ल$_{2}$—०सत्कारं । २१. फ—वानर्थबुद्धिताः । २२. फ अ—यन्नवानाह तत्त्वार्थम् । आ—भवान्विष्टि यत् । च—भवान्विवष्टि । म—भवान्विचष्टयेत् । रा—भवान्विचेष्टयत । २३. च—सम । २४. ल$_{2}$—नास्ति ॥

अ-कृत्वाऽनु[1]-नयं तावत् सद्भिर् [2]युक्तः परस्परम् ।
६] प्र-[3]वक्तुम् अभिसं-[4]पन्नः [5]कार्यं[6](?र्य-) काले वि-शेषतः ॥७॥
[6]अथवा सर्व-[7]कालेषु [8]मति-पूर्वं वि-चारयन् ।
७] [9]अर्हत्य् अभ्य्-अधिकां [10]पूजां न तु मूर्खो वि-भीषणः ॥८॥[11]
सं-[12]पृच्छामो वयं [13]तावन् मति-मन्तं वि-भीषणम् ।
८] सर्वाऽर्थेष्व्[14] अ-[14]वरा भूत्वा [15]गुरुं शिष्य-[16]गणा इव ॥९॥
यन् [17]मौर्ख्यं यच् च [17]कार्पण्यं [18]यः स्तंभो या मनस्-विता ।
९] योऽधर्मः स [20]भवेद् [19]धर्म(?:) [20]तम् [21]अवाऽऽप्य मही-पतिम् ॥१०॥

---

१. आ-अपि स्वनुनयस् । अ-अकृत्वानुनयस् । रा प्र च ब म ल$_1$-अपि त्वनुनयस् । २. फ अ-दृष्ट । प्र च रा ब ल$_2$-दृष्टः । म-सृष्टः । ३. आ फ-प्रयोगं । च ब ल$_1$ ल$_2$-प्रयोक्तुं । प्र रा-प्रयोक्तं । म-प्रायोक्तुं । ४. आ-हेतुसम्पन्नं । च ब रा प्र ल$_1$ ल$_2$-हेतुसम्पन्नो । ५. आ-कार्याकार्यवि० । फ-विधिकार्यं वि० । च ब ल$_1$-विधिः कार्यो वि० । प्र रा-विधि कार्यो वि० । म-कार्याकार्यं ( विधि कार्यो वि० ) । ल$_2$-विधिकायो वि० ॥ ६. आ च प्र ब म ल$_1$ ल$_2$-असंगः । रा-असंग । फ म-अशठाः । ७. आ फ च प्र रा ब-०कार्येषु । ८. आ-मतिपूर्वंबलाबलम् । च प्र रा ब म ल$_1$ ल$_2$-मतिमांश्च महाबलः । म-मतिपूर्वं बलाबलः । अ-मतिंश्च......महाबलः । ९. आ-हरत्यभ्यधिकं । फ-अर्हत्यभ्यहितं । च-अर्हत्य० । रा म ल$_2$ अ-अर्हत्यभ्याधिकं । १०. आ-यत्नान्मतिपूर्वं मुमूर्षवः । फ-धर्मं न तु मोहान्मुमुर्षवः । म-धर्मं मोहान्मुमूर्षवः । ११. ब-हरन्त्यभ्यधिकं यत्नान्न तु मोहान्मुमूर्षवः ॥ १२. आ-संप्रेप्यामो । फ-प्रवक्ष्यामो । च म-संप्रक्ष्यामो । रा म प्र ब ल$_1$ ल$_2$-सपश्यामो । १३. रा म-तावत् । १४. आ-सर्वार्थेषु वरो । फ-०ष्वला । प्र-सर्वार्थेषु वयं । ल$_1$-सर्वार्थेषु वरा । १५. आ-गुरुः । १६. आ-शिष्य-गणेष्विव ॥ १७. आ-मौर्ख्याय स्वका० । १८. फ-स्तंभो वा या सहिष्णुता । आ-यः स्तम्लो या म० । च-यः स्तम्न या म० । १९. फ च म प्र ब रा ल$_1$ ल$_2$-०द् दंभस् । आ-भवेदम्लस् । २१. प्र-तव प्राप्य । अ-समवाप्य ॥

यत् पतंगम्[1] तमो-भीतो[2] मोहाद् विशति[3] पावकम् ।
१०] क्षिप्रम्[4] आत्म-विनाशाय तद् व्यक्तं मूढ-लक्षणम् ॥११॥[5]
शास्त्र-वादान् अति-क्रम्य[6] यश् च[7] सर्वा[8] महाऽऽपदः ।
११] हठेनेच्छति[9] निर्[10]-जेतुं तद् व्यक्तं मूढ-लक्षणम् ॥१२॥[11]
य एवम् अ-विशेषज्ञः सु-नयाऽनययोः[12] पुनः ।[13]
१३] अतीऽन्द्रियं[14]-मतिं प्राऽऽप्य गुण-युक्तं[15] वि-भीषणम्[15] ॥१३॥[1]
आकाश-गमनाऽऽदीनाम्[17] अ-पक्षस्य वि-चेष्टने ।[16]
१२] ध्रुवम् अस्ति फलं किञ्चित् चिन्तय[18] सिद्धि-लक्षणम्[19] ॥१४॥[20]
यदि शूराः परे[21] युद्धे वयं परम-भीरवः ।
१४] क्रियते[22] किं नु(?न) कार्पण्यात्[23] प्र-सभं शत्रु-संशयैः[24] ॥[25]॥१५॥
प्रकृतिः शाश्वती[26] ह्य् एषा क्लीवानाम् अल्प-चेतसाम् ।

---

१. अ ल$_2$–पतगः । २. आ–सम्यगुदितं । च प्र रा ब म ल$_1$ ल$_2$–सम्यगुदितो । अ–तमोक्रान्तो । ३. रा–विषति । ४. फ–क्षिप्रं याति वि० । ५. ल$_1$–नास्ति ॥ ६. आ–आतिक्रम्य । फ–आतिक्रम्य । ७. फ–स तु । च रा ब म–पश्यन् । ८. च–सर्वान् । ९. फ–हेतोर्रिच्छति ? । च–हतं नेच्छति । रा–हत नछंति । ब–हतं नेछन्ति । म–हठात् नेच्छसि । १०. म–विजेतुं । ११. प्र ल$_1$ ल$_2$ अ–नास्ति ॥ फ–व्यत्यासेन पठितः । १२. आ–सुनयापनयेषु च । फ–स्वनयापनये जनः । च–स्वनयापनयोर्जुनः । रा–स्वनया(पा)नय(प) यो । ब–स्वनयानययौ । प्र ल$_2$–स्वनया० । म–स्वनयानयो । १३. अ–व्यक्तं नयाविशेषज्ञः स्वनयोपनयो जितः । १४. आ–अनिंद्रियमायि । ब–०यमति । १५. अ च–०युक्तां विभीषणः ॥ १६. ल$_3$–नास्ति ॥ १७. प्र–०गमनाय शक्यस्य । ब रा म–०दीनामशक्यस्य । १८. ब प्र म ल$_1$–चिंतयन् । फ–चिन्तयासि० । १९. च–सिद्धिलक्षलक्षणम् ॥ २०. आ–नास्ति ॥ २१. रा–पुरे । २२. ल$_2$–क्रियता । २३. आ–कार्पण्यं । ल$_1$–कास्र्ण्यात् । २४. आ–संसयः । च प्र म–०संशयः । रा अ–संक्षयः । २५. फ–क्रियत इत्यारभ्य धर्षितः परैरित्यन्तः पाठो नास्ति ॥ २६. आ–शास्वती ।

१५] युद्ध-काले [1]भवत्य् एव यथा वर्तितुम् इच्छति (?सि)॥१६॥
को हि नाम महा-सत्त्वः पूर्वम् आ-धर्षितः परैः ।
१६] दीनं वचनम् [2]आ-दद्याद् वर्जयित्वा वि-भीषणम् ॥१७॥
एवं कृत्वा बहु-विधं सर्वथाऽयं वि-भीषणः ।
१७] योग्यो[3]ऽस्माकं [4]भयाद् दीनो नैव मंत्रे [5]न वि-क्रमे ॥१८॥
अवश्यं हि वि-चे[6]तव्या युद्धे[7]ऽमरण-भीरवः ।
१८] ग्रन्थि-भूता महा-दो[8]षाः(?षः) [9]शूराणां शोक[10]-नाशनाः ॥१९॥
युद्धं घोर-[11]तमं प्राऽऽप्[12]ये यस्य हि [13]व्यथते मनः ।
१९] कथं सम्-अरम् आ-साद्य स भवेत् [14]पूज्य-विक्रमः ॥२०॥[15]
[16]निर्-वीर्या ये निरुत्-सा[16]हाः शत्रु-भेदन-शो[17]भनाः ।
२०] तेषाम् [18]एवं-विधा [19]बुद्धिः शाश्वती [20] तव यादृशी ॥२१॥[21]
यदि दर्पं परि-त्यज्य रामो मां शरणं व्रजेत् ।
२१] किं[22] तद् अस्ति सतां [22]कार्यं [23]येन् न कुर्यात् प्र-[23]सादनम् ॥२२॥
२२पू] वैक्लव्यं परि-[24]हर्तव्यं शत्रु-पक्षे विशेष-तः ।

---

१. च रा प्र ब म ल$_2$—भवत्येव त्वद्विधानां दुरात्मनाम् । ल$_1$—भवत्त्वेव त्वद्विधानां दुरात्मनाम् ॥ २. रा—आदध्याद् । ३. अ—योन्योस्माकं । ४. आ—भवे । प्र ल$_2$—भवान् । अ—भया । ५. रा प्र ब ल$_2$—मंत्रेण ॥ ६. अ—विचेष्टव्या । ७. आ—युद्धे परमभी० । ८. च रा प्र ब ल$_1$ ल$_2$ अ—ग्रंथमूढा । ९. फ अ—ग्रंथमूता । फ—०दोखाः । १०. प्र—शौर्याणां । ११. फ—सौर्य० । च रा प्र ब म ल$_1$ ल$_2$ अ—शौर्य० ॥ १२. फ—घोरतममवाप्यैवं । च—०तमं संप्राप्य । ब म ल$_1$ ल$_2$ अ—घोरतम संप्राप्य । प्र—घोरमनुप्राप्य । १३. अ—व्यथितं । १४. आ—भवेत्पूर्ज्यविक्रमः । १५. रा—नास्ति ॥ १६. फ—निर्व्वीयेयमुत्साद्य । च प्र ब म ल$_1$ अ—निर्वीर्या ये नि । १७. फ—०शोभनतत्त्वरम् । १८. आ—एवाविधा । १९. फ—बुद्धिरीदशी । २०. आ—भव । २१. वं—तेषामेवंविधा बुद्धिर्यादृक्षी तव कातरा ॥ २२. फ—किंचिदस्ति स० । म—किं त्वस्ति सदृशं......कार्यां । अ—किं त्वस्ति सदृशं सतां कार्यं । २३. आ—भवद्भिः शरणागतैः । फ—यत्कुर्यात्प्रसादजम् । म—यत्नं कुर्यात् । अ—कुर्यात् प्रसादजम् । २४. प्र—०हन्तव्यं ॥

N] साध्वसं च यथा कार्यं शत्रुभिः शरणाऽऽगतैः ।
२२३] दया सर्वाऽऽत्मना कार्या महद्भिः शरणाऽऽगते ।।२३।।
एवं कृत्वा न योगोऽस्ति[1] विषस्य रुधिरस्य च ।
२३] सन्नि-पातं समा-गम्य ततः[2] सं-योगम्[3] एष्यति[4] ।।२४।।
सम्-अर्थो ह्य् अहम् एवैकस् तं रामं सह-लक्ष्मणम् ।
२४] सम्-अरे तेजसा दग्धुं[5] कृत्स्नम्[6] अग्निर् इवोत्थितः[7] ।।२५।।
निश्-चयः क्रियतां युद्धे[8] भवद्भिर् बाहु[9]-शालिभिः ।
२५] राक्षसाऽपसदं[10] दीनं वर्जयित्वा वि-भीषणम् ।
N] इत्य्-उक्त्वा[11] रोष-ताम्राऽक्षो रावणो वि-रराम ह ।।२६।।

इत्यार्षे[12] रामायणे[12] सुन्दर-काण्डे रावण[13]-वाक्यं
नामाऽष्टाऽशीतितमः सर्गः ।।८८।।

---

१. आ–मयोगोस्ति । २. आ च–हतः । ३. आ च अ–संयुगम् । ४. फ–इच्छति । च–एस्यति ॥ ५. रा ब–दग्धं । ६. फ–कुक्षिम् । ७. फ–इवोद्धतः । अ–इवोद्धितः ॥ ८. आ रा–युद्धेर् । ९. रा–वा० । १०. रा–राक्षसापशदं । आ–राक्षसापसंदं । ब म ल१ ल२–राक्षसापशंदं । ११. ब–इत्युक्तो । १२. फ–इति रा० । ल२–इति । १३. अ–विभीषणतर्जनं ॥

[वं-८६ ]= [एकोननवतितमः सर्गः] =[दा-N ]

ततः सागर-गम्भीरः सत्त्व-वान् वि-जितेन्द्रियः ।
१] अब्रवीद् रावणं धीमान् पुनर् एव वि-भीषणः ॥१॥
२पू] एतद् एव वि-नाशस्य लक्षणं विदुषां[1] मतम् ।[2]
३पू] अ-धर्मोऽयं महान् मोहाद् भवद्भिः परि-गृह्यते ॥२॥
N] भवतां बुद्धयो[3] ह्य् एता वि-नाशस्य [4]नि-दर्शनम् ।
निमित्तं घन[5]-नादस्य [6]वि-कीर्णा इव विद्युतः ॥३॥
जयश् चैव [7]हि दुष्-प्राऽऽपः[8] पुंसां[9] कलुष-बुद्धिना ।
४] अ[10]-धर्म-सहितं प्राऽऽप्य जयं[11] कश्[12] च सतां[12] जयः॥४॥
इह[13] च प्रेष्य(?क्ष्य)तां प्रेष्यैः[13](?क्ष्य) सद्भिः[14] पूजित-लक्षणैः[14] ।
५] दुस्-तरः प्राकृतैर्[15] धर्मो[15] बाहुभ्याम् इव सागरः ॥५॥
इच्छा[16]-द्वेषाऽऽदयो भावा[17] नित्यम् आत्म-गुणा यथा ।
६] तथा धर्म-गुणाः कृत्स्नाः[18] सुखानि सुखिनाम् इव ॥६॥

---

१. आ-विदुषो विदुः । रा. प्र ब म ल$_1$ ल$_2$-हि विदुर्बुधाः २. इत ऊर्ध्वं "वं"-धर्मिष्ठं वाक्यमुत्सृज्य कापथेन प्रवर्तनं । ३. च रा-युद्धयो । ४. आ-तु दर्शनम् । ५. रा-कृत० । ६. अ-प्रकीर्णा ॥ ७. फ-सुदुःप्राप्यः । आ च-दुःप्रापः । ८. फ-प्राप्तुं । च रा ब-पुंसां । ९. फ-ह्यशुभबुद्धिना । च ब अ-०षबुद्धिनाम् । १०. आ फ-च-अधर्मः स० । ११. च प्र रा ब म ल$_1$ ल$_2$ अ-जयः । म-बलं । १२. आ-कस्य सतौ । म-किमु सतां ॥ १३. फ-ईह विष्टभ्य चाप्रेक्ष्य । च-स विष्टंभतां वीक्ष्य । रा-विष्टंध्वतां वीक्ष्य । ब-स्तंभविष्टब्धतां वीक्ष्य । प्र-विष्टब्धतां वीक्ष्य । म-इह विष्टब्धतां वीक्ष्य । अ-तव विष्टंभतां प्रेक्ष्य । ल$_1$ ल$_2$-विष्टब्धतां वीक्ष्य । प्रेत्य चावेक्ष्येति वं-द्र०॥ । १४. फ च रा प्र ब म ल$_1$ ल$_2$ अ-सद्भिर्लक्षणलक्षितः ।१५. फ-प्राकृतो धर्मो । च-०तैर् धर्म्यैः । रा-धर्मैं । आ-०तैर् भीमो ॥ १६. फ-इष्ट० । १७. प्र-भाति । १८. प्र-कृत्स्नात् ॥

पर्य्-आप्तं चाऽप्य् अ-विज्ञानं धर्मस्य परि-रक्षणे ।
७] यद् अल्प-सुखितो लोकः कृत्स्नो भूयिष्ठ-दुःखितः ॥७॥
९पू] यश् चाऽऽत्म-सुखिता-श्लाघी न मनः परि-तापयेत् ।
८पू] किं ततः परमं किञ्चित् सु-लभं फलम् उत्तमम् ॥८॥
९उ] यथा च सुख-संयाने नौर् निमित्तम् इवाऽम्भसि ।
लोकयोः सुख-संयाने तथा धर्मः स्व-नुऽष्ठितः ॥९॥
१०] प्रकृतीनां वि-धानस्य यथा नेता नयाऽनु-गः ।
तथा धर्माऽर्थ-कामानां धर्मः सम्यग् अनु-ष्ठितः ॥१०॥
११] यथा ह्य् अर्थ-विशेषोऽर्थम् अर्थः पुंभिर् नि-युज्यते ।
तथा निश्-चितम् आयत्यां धर्मः सुख-करः सताम् ॥११॥

---

१. आ-चाप्यमिज्ञानं । रा च प्र ब म ल$_1$-वाप्यभिज्ञानं । २. अ-०रक्षये । ३. आ-यदाल्पसु० । फ-यदल्पसुखभाग् । च रा प्र ब म ल$_1$ ल$_2$ अ-यदल्पः सुखभाक्(ग्) । ४. आ-कृया । रा ब म ल$_1$ अ-कृत्स्नः । प्र ल$_2$-कृत्स्नम् । ५. आ-दूषितः । फ-दुःकृतः ॥ ६. आ-०त्म सुखितः । फ च प्र रा ब ल$_1$-यश्चाल्पसुखितः । म-यच्चाल्पसुखिनः । ल$_2$यश्चापी सुखितः । अ-यश्चाप्यसुखितः । ७. ल$_2$-मनसः । ८. ल$_1$-नाम । ९. वं-बुद्ध्यापेक्षी च भूतानां सुखी तच्चापि धर्मतः । १०. आ-०संजातं । फ-संजाते । रा-०संतापे । प्र म ल$_1$ल$_2$-०संपाते । अ-०संयोगे । ११. आ ल$_1$ म अ-नौनिमित्तम् । रा-नौर्भि नि० ॥ १२. फ-महाम्भमि । १३. च-०संयाते । रा ब म ल$_1$ अ-०संपाने । १४. रा अ-धर्मं । ल$_2$-धर्माः । १५. फ-स्वनंष्ठित? । ल$_1$-स्वनिष्ठितः । १६. प्र ल$_2$-त्रुटितः पाठः ॥ १७. फ च ब म ल$_1$ ल$_2$ अ-प्रधानश्च । प्र-प्रदानश्च । १८. आ फ-तथागतः । रा-०नुगाः ॥ १९. आ-यथार्यं स्वविशेषोर्थम् । च-तथा ह्यर्थविशेषोऽयम् । फ रा-०विशेषोर्थम् ॥ प्र-तथा ह्यर्थं विशेषोर्थम् । २०. आ-विमुच्यते । फ रा च-पुंभि बियुज्यते । प्र-पुंभि नि० । २१. आ-निश्चयमायत्या । फ रा-निश्चित्यमायत्यां । ब-०तमायत्यं ॥

१२] त्वया[1] तु[1] फल-लुब्धेन नाऽतिदूरे[2]-निरीक्षणात्[2] ।
न शक्यश् चरितुं धर्मः[3] शुभो ह्य्[4] अ-शुभ[4]बुद्धिना ॥१२॥
१३] यथा ह्य्[5] अर्थस् तथा कामः[5] सद्यः सुख-शुभाऽऽवहौ ।[6]
तथा क्षमा[7] च[8] धर्मश् च मनसः प्रीति-वर्द्धनौ ॥१३॥
१४] दुश्-चरत्वाच्[9] च धर्मस्य[10] केचिद् धर्म-परा[11] नराः[11] ।
कामे चाऽर्थे च लुब्धानां[12](?ना)म् अं[13] त्रो(?तो) भुवि न विद्यते १४
१५] यत्र नेता च गुण-वान् सहाया[14]श् च गुणाऽन्विताः[14] ।
तत्र[15] धर्माऽर्थ-कामानां भवेत् सम्यक्[16] परीऽऽक्षणम्[16] ॥१५॥
१६] इह नेता च[17] वि-गुणः सहाया[17] गुण-वर्जिताः ।
एवं कृत्वा किम् अप्य् एतद् वर्तते[18] मंत्र-संज[19](?ज्ञ)कम् ॥१६॥
१७] अर्थाऽन्-अर्थौ हि यत्रोभौ सं-शयश् च परीऽऽक्ष्यते[20] ।
स[21] मन्त्र इति वि-ज्ञेयः[21] शेषास्[22] तु खलु वि-क्रमाः[23](?) ॥१७॥

---

१. फ अ–ततस्तु । च–तथात्वफ० । २. च–नाविदूरनिरीक्षणा । ३. च–धर्मो । रा ल$_{2}$ ब अ–धर्म । ४. प्र–हि शुभ० । फ म ल$_{1}$ च रा ल$_{2}$ ब अ–ह्यकृत० ॥ ५. अ–ह्यर्थश्च कामश्च । ६. च प्र ब म ल$_{1}$ ल$_{2}$–यथा ह्यर्थश्च कामश्च मनसः प्रीतिवर्धनौ । ७. अ–मानश्च । फ–कामश्च । म–क्षमश्च । ८. फ रा ब–सद्यः शुभसुखावहौ । प्र च ल$_{1}$ ल$_{2}$ अ–सद्यः शुभसुखावहौ । ९. आ–दुश्चारित्रं । फ–दुःकरत्वाच् । ल$_{2}$–दुश्चलत्वाच् । १०. आ–धर्मश्च । ११. फ च अ–धर्मबहिकृताः । ब रा ल$_{1}$ ल$_{2}$–धर्मबहिष्कृताः । १२. रा ल$_{1}$–लब्धानां । १३. फ च रा प्र ब म ल$_{1}$ ल$_{2}$ अ–धर्मो ॥ १४. आ–सहायश्च गुणान्वितः । अ–सहाया गुणसंयुताः । १५. आ–न च । १६. च–स......रीक्षणम् ॥ १७. च–नास्ति । रा–विगुणास्सहाया । म ल$_{1}$ ल$_{2}$ अ–विगुणः सहाया । १८. फ–वर्त्तत । १९. रा–मंत्रिसंज्ञितम् । फ प्र ब म ल$_{1}$ ल$_{2}$–०संज्ञितम् । च–०संज्ञिकाम् । आ–०संज्ञकः ॥ २०. आ–परीक्षते । रा–परीक्षेते । २१. च–राजनं.........या । २२. प्र ब म ल$_{1}$ ल$_{2}$–शेषस्तु । २३. फ प्र ब म ल$_{1}$ ल$_{2}$–विक्रमः । अत्र- 'विक्रियाः' इति वं द्व० ।

१८] मन्त्रे समुप-नीतेन[1] सुहृदा[2] शुद्ध[3]-बुद्धिना ।
न युक्तं कैतवं कर्त्तुं हितार्द्धि[4] हि प्रति-बुद्धिना[4] ॥१८॥
१९] त्यक्त्वा[5] काम[6]-परं मन्त्रम्[7] अर्थ-धर्म[7]-विवर्जितम् ।
२०पू] रामम् एव गमिष्यामि धर्मा[8]ऽर्थ-परमं नृपम् ॥१९॥[9]
२१उ] क्षिप्रम्[10] एतद्[11]-विधं मुक्त्वा[11] कृत्स्नं स्वो[12]ऽभि-जनं धनम्[12] ।
धर्म-हेतोर् गमिष्यामि रामम्[13] एव शुभ-व्रतम्[13] ॥२०॥[14]
एवं [15]कृते [16]मयि [16]गते यद्य् अस्ति गुण[17]-दर्शिता ।
२२] क्रियतां निश्-चयः सम्यग् वृद्धौ नय-निमित्तजः॥ [18]२१॥

इत्यार्षे[19] रामायणे सुन्दर-काण्डे रावणं प्रति[20]व्याहरणं
नामैकोननवतितमः सर्गः ॥ [21]८९॥

---

१. च रा प्र ब म ल$_1$ ल$_2$ अ–०नीते च । २. प्र–सुहृद्वा । ३. फ–नयबु० । ४. फ–हितविप्रतिपादिना । च ब म ल$_1$ ल$_2$अ–०द्धि प्रतिपादनम् । रा–हितान्हि प्रतिपादनम् । प्र–०द्धि प्रतिपादितम् ॥ ५. अ–त्यक्ता । ६. च–कामप...री । ७. अ–मंत्रं संत्रं धर्म० ८. रा–धर्मापरमं । ९. इत ऊर्ध्वं वं–सुरासुरजयी राजा स हि नित्यं मया श्रुतः । संश्रितानामसंत्यागी शरण्यो द्विषतामपि । प्र–नास्ति ॥ १०. आ–चित्रम् । ११. फ–एतद्विपन् । च–एताद्धि यन् । रा–एतद्धियन् । ब ल$_1$ ल$_2$–एताद्धि यन् । म–एताद्धि यत् । अ–एतद्विधं त्यक्त्वा । १२. आ म अ–स्वजनमातुरम् । च रा ब ल$_1$ ल$_2$–साभिजनं । १३. अ–सोहं मानुषसंश्रयम् । १४. प्र–नास्ति ॥ १५. च प्र रा ब म ल$_1$ ल$_2$ अ–कृत्वा । १६. आ–त्वयि कृतं । १७. म–शुभदर्शिना । आ–गुणसंधिता । रा–गुणदर्शिना । ल$_1$–शुभदर्शिताः । अ–गुणदर्शनम् । १८. रा फ ल$_2$–क्रियतां निश्चिता बुद्धिः सम्यङ्नयनिमित्तजा । च म–क्रियतां निश्चया बुद्धिः सम्यग्नयनिमित्तजा । ब–निश्चिता बुद्धिं सम्यङ्नयनिमित्तजा । प्र–क्रियतां निश्चितां बुद्धिः सम्यङ्नयनिमित्तजा । ल$_1$–क्रियतां निश्चिता बुद्धिः सम्य...यनिमित्तजा । अ–क्रियतां निश्चयं सम्यग्बुद्धौ नयनिमित्ततः ॥ १९. फ–इति । २०. आ–प्रत्याहरणं । रा–प्रतिव्य...रणं । २१. ब–नास्ति ॥

एवम्[1] उक्तस्[1] तु सं-रब्धो रावणः क्रोध-मूर्च्छितः[2] ।
उत्-पपात[3] स[4]-निस्त्रिंशो हन्तु[5]-कामो वि-भीषणम्[5] ॥१॥ [N
१] उत्-पतन्[6] स च चुक्रोश[6] स-निस्त्रिंशो दशाऽऽननः ।[7]
एक-विद्युद्[8]-गुण-युतः स-नाद इव तोय-दः ॥२॥ [N
२] आसनात् तूर्णम् उत्-पत्य पादेनाऽभि-जघान तम् ।
रावणः क्रोध-संवेगाद्[9] आसन[9]-स्थं वि-भीषणम् ॥३॥ [N
३] अभवत् पतितो भूमाव्[10] आसनात्[10] स वि-भीषणः ।
७] वज्र-पात-हतः श्री-मान्[11] वि-शीर्ण इव पर्वतः ॥४॥ [N
४] अभवत्[12] मन्त्रिणां तेषां वि-षादम्[13] अनु-पश्यताम् ।
पूर्ण-चन्द्र[14]-ग्रह-ग्रासात्[14] प्र-जानाम् इव सं-भ्रमः[15]॥५॥ [N

---

१. फ च रा ब म ल$_1$ ल$_2$ अ-एतच्छ्रुत्वा । २. ल$_1$ ल$_2$ अ-०मूढितः । ३. आ-उत्पापात । ४. आ-च नि० । ५. फ-वेगात्स भृकुटीमुखः । च-वेगाच्छभृकुटीमुखः । रा ब म ल$_2$-वेगेन भ्रुकुटीमुखः । प्र-वेगेन भृकुटीमुखः । ल$_1$-वेगेन भ्रकुटीमुखः ॥ ६. आ-उत्पतत्स चु० । फ-उत्पतत्स तदाकाश । च-उत्पतत्स चकासे च । रा प्र ब म-०तत् स चकाशे च । ल$_1$-उत्पतत्स चकाशे च । ल$_2$-उत्पपात चकाशे च । ७. अ-नास्ति । ८. आ-एकविद्युद्गुणकृतः । फ-एकविद्युगुणकृष्णः । ब-एकविद्युद्गुणयुतः । अ-एकाविद्युकृतगुणः ॥ ९. आ-०संरागो गाढासनस्थं । फ-०संरागादाढा० । रा ब ल$_2$-०संयोगादासनस्थं । अ-०संरंभादासनस्थं ॥ १०. म-भूमौ भासनात् । ११. प्र-श्रीमद् ॥ १२. म-अभवन् । १३. फ च रा प्र ब म ल$_1$ ल$_2$-विषादम् । १४. आ-पूर्णचन्द्रो ग्रहग्रस्तः । फ-०द्रः ग्रहत्रासात् । रा प्र ब-पूर्णचन्द्रग्रह० । म ल$_1$-पूर्णचन्द्रग्रहग्रस्तः । अ-पूर्णचन्द्रो ग्रहग्रस्तः । १५. अ म ल$_1$-त्रक्षये । अ-संक्षये ॥

५] प्र-हस्तस् त्व्[1] असि-हस्तं तं कुपितं राक्षसेश्वरम्[2]।
६पू] शनैर् नि-वारयामास कोशे चाऽप्य् अकरोद् असिम्[3]।
N] निशा-करम्[4] इवाऽऽकाशे राहु-मुक्तं रुषाऽन्व्[5]-इतम्॥६॥ [N
६उ] ततः प्रकृतिम् आ-पन्नः शुशुभे राक्षसेश्वरः[6]।
वेला-भाव[7]-विनिर्वृत्तः प्रसन्न इव सागरः ॥७॥ [N
७] परिवार्याऽऽसन-स्थं तु[8] रावणं ते चकाशिरे[9]।
मेघा इव महा[10]-शृंगं विपुलं[11] शैलम् उत्तमम् ॥८॥ [N
८] निश्-शब्दं शुशुभे कृत्स्नम् अथ तन् मन्त्रि-मण्डलम्।
परि-वेष[12] इवाऽलक्ष्यः शशिनश् चारु[13]-दर्शिनः ॥९॥ [N
९] अभवत्[14] क्रोध-संरागो भूमि-स्थश्[15] च[15] वि-भीषणः।
अध्वरा[16]ऽग्निर् इवा[17]ऽऽतीव्रः सौम्य[18]-दीप्ति-गुणाऽन्वितः १०॥[N
१०] अथ कोपाऽऽग्निम् उद्-भूतं[19] शमयन्[20] बुद्धि-सत्तमः[21]।

---

१. ल२–त्वसिहस्थतं। आ–०हस्तं सकुपितं। २. आ म ल१,ल२ अ–०सेस्वरम्। ३. आ–अशिम्। ४. म–निशाकर। ५. म–राहुमुक्त-रुषोज्जितः। ६. आ ल२ अ–०सेस्वरः। ७. आ–वेलानावविनिर्वृत्तः। फ–वेलानां च निर्वृत्त। प्र–वेलाभावनिर्वृत्तस्तु॥ ८. अ–तं। ९. आ–चकासिरे। १०. ल१–महाश्टं। ११. च रा ब ल२–विपुलाः शलम्। म–विपुलः शैलम्। ल१–विपुश्शैलम्॥ १२. ल१ ल२ म–०वेश। १३. आ–चातुर्दर्शिनः। प्र ब रा म ल२–चारुदर्शनः॥ १४. अ–अभवच्चाद्रिसमो। फ–०वत् क्रोधसंरब्धो। च रा प्र ब म ल१ ल२–०वत् क्रोधसंरक्तो। १५. फ च–भूमिस्थं स। रा–भूमिष्ठं स। ब ल१ ल२–भूमिष्ठा स। म–भूमिष्ठा(स्थः) स। प्र–भूयिष्टःस।१६. आ फ–अधराग्निर्। १७. फ–इवालक्ष्यः। च प्र ब म रा ल१ ल२ अ–इवादीप्तः। १८. आ–सौम्यो दीप्ति०। प्र च म ल१ ल२–सौम्यो दीप्तिसमान्वितः। रा ब ल२–सोम्यो दीप्तिस्समन्वितः। अ–०दीप्तिसमन्वितः॥ १९. प्र–उद्भूतं। २०. ब–शमयद्। २१. म–बुद्धिमुत्तमः।

N] शम-तोया[1]ऽवपातेन नि-[2]जगाद् वि-भीषणः ॥ ११॥ [N
१३उ] मम धर्माऽर्थम्[4] [5]उत्थानं न[3] काम-क्रोध[5]-संयुतम् ।
१४पू] अतः पाद-[6]प्रहारोऽपि नाऽयं मम परा-भवः ॥[7]१२॥ [N
११उ] मार्दवेन[8] च सं-पन्नस् तेजसा[9] च वि-भीषणः ।
सद्-अश्वं[10] इव भूयिष्ठं[11] तेजस्वी[12] स व्य्-अदृश्यत[13] ॥[14]१३॥ [N
१२] मुहूर्तम् इव[15] निश्-श्वस्य[16] मुहुः कृत्वा च[17] निश्-चयम् ।
१३पू] अब्रवीद् वाक्यम् उत्थाय गुण-युक्तं वि-भीषणः ॥१४॥[18] [N
१४उ] अस्मिंल्[19] लोके महा-दोषाः[20] सु-शोच्या[21] धर्म-वर्जिताः ।
येषाम्[22] अभि-जनं[22] प्राऽऽप्य मतिः[23] क्रोध-समन्विता[23] ॥१५॥ [N
१५] [24]तर्हि सर्व-विनाशस्य[24] लक्षणं प्रति-भाति मे ।

---

१. आ–समयं याचमानो हि । फ–शमनोयदपातेन । रा–समतोयावतातेन । प्र–श्रयतो याचमानेन । म–समतो पादघातेन । ल$_2$–श्रमतौ वायपौतेन । २. आ–निर्जगाम । च ल$_1$ प्र म ल$_2$–निर्जगाद । ३. अ–नास्ति ॥ ४. फ–धर्मार्थयुक्तस्य । ५. फ–कामक्रोधसहिष्णवः । च रा प्र म ल$_1$–०संहितम् । ६. प्र–पादात्प्रहारेपि । रा च म ल$_1$–०प्रहारेपि । ७. ब–नास्ति । आ–अयं श्लोकोऽग्रे पठ्यमानाच्छ्लोकद्वयादुपरिष्टाद् व्यस्तक्रमेण पठ्यते । "विभीषणः" इत्यावसानिकसाम्यकारितो द्वभ्रमोऽत्र मलं द्र० ॥ ८. ल$_1$–सांदवेन च संपन्ने । ९. च अ–तेजसां । १०. आ–सदस्व । ११. आ–भूयिष्टस् । १२. फ–तेजसा । १३. आ–व्यवृश्यत । १४. च–रा प्र ब म ल$_1$–नास्ति ॥ १५. अ–अथ । १६. आ ल$_2$–निःश्वस्य । १७. आ अ–विनि । १८. प्र च रा ब म ल$_1$–नास्ति । १९. आ म–ये च । फ–तस्मिंल् ॥ २०. प्र ल$_1$–०दोखा । च ल$_2$ अ–दोषः । ल$_2$ अ म–दोषस् । २१. आ–सौक्या । फ च ल$_2$–सुशौच्या । म–ते शोच्या । २२. आ–ये चैवाभिजनं । प्र–येषामभ्यंजनं । २३. आ–हर्षक्रोधसमन्विताः । फ–मतिक्रोध० । च म ल$_1$ रा–प(?य)तिः क्रोधसमन्वित । प्र ब ल$_2$ अ–पतिः क्रोधसमन्वितः ॥ २४. आ–ते हि सर्वे विनाशाय । फ च रा ब म ल$_1$ ल$_2$–महस्सर्वे वि० । प्र–महोत्सववि० ।

१६पू] यद् इमे मुनयः सर्वे भवद्भिः परि-पीडिताः ।[1]
N] रामेण च[2] प्रति-श्रुत्य दत्तं त्व् अ-अभयम् आदि-तः॥[3]१६॥[N
१६उ] शस्त्रम् एकं[4] शरीरस्य[5] रण-भूमौ वि-नाशनम्[6] ।[7]
दुष्टा[8] बहु-तरं हन्याद् बुद्धिः कलुष[9]-चेतसाम् ॥[10]१७॥ [N
१७] न हि तत्[11] कुरुते दोषं शस्त्रं[12] नि-शितम् उत्तमम् ।[13]
स्व-समुत्था[14] यथा दोषाः[14] प्राणिनाम्[15] अल्प[15]-चेतसाम् ॥१८॥ N
१८] अनागत-परिज्ञानम् अर्थस्य कुरुते बुधः ।
प्राऽऽप्तम् अर्थम् अन्-अर्थं च[16] कश्चिद् एवाऽव-बुध्यते[17] ॥१९॥[18]
१९] दूराद्[19] अर्थम् अन्-अर्थं च[20] पश्यन्तो(?तो)ऽपि महा[21]-गुणाः ।[22] [N

---

१. फ—यदा मम नयः सर्व्वों भवाद्भिः पारिगृह्यते । ल१ म ल२—यदायमनयः सर्वैर्भवद्भिरपिपीडिता । रा—यदायं मुनयः सर्वे भवद्भि-रपिपाडिताः । प्र ब—यदा मुनयः सर्वैर् भवद्भिः पारिगृह्यते । अ—यद्देवमनुजाः सर्वे भवद्भिः पारिपीडिता । २. रा—चाभिसंश्रुत्य । च—चातिसश्रुत प्रदत्तं । प्र ब म ल१—चाभिसश्रुत्य । ल२—चाभिसश्रुत्य यदत्तं । ३. फ—नास्ति ॥ ४. ल१—एव । ५. अ—शरीरं हि । फ—शरीरं । ६. फ—विनाशक । ७. रा—नास्ति । ८. फ—दुष्ट बहुपरं । च—दोषां बहुमतेन त्वां । ९. फ—कर्कश०। १०. अ प्र ब म ल१ ल२—नास्ति ॥ ११. अ प्र ब म ल१ ल२—तं । १२. प्र रा ब म ल१ ल२—निशितं शस्त्रमुल्वणम् । १३. अ—नास्ति । १४. फ—समुत्था महादोषाः । प्र—ससमुत्थो यथा दोषः । १५. च—०नामन्यवेधसाम् । ब ल१ म—प्राणिनां मन्युचेतसाम् । प्र—संप्रेक्ष्यश्च महान्गुणः ॥ १६. फ च रा ब म ल१—वा । १७. फ—०बुध्यसे । १८. प्र—नास्ति ॥ १९. अ अ—दूरादर्शमनर्थं च । च रा ब म ल१—दूरादनर्थमर्थं वा । ल२—०र्थमनर्थं वा । २०. फ च रा ब म ल१ ल२ अ—पश्यंतो हि । २१. रा म ल१ ल२ अ—महान् गुणाः । ब—महां गुणाः । २२. अत ऊर्ध्वमधिकः पाठः—च रा ब म ल१—इह च प्रेक्ष्यतां प्रेष्यः संप्रेक्ष्य च महागुणान् ।

यस्याऽर्थं [1]प्राऽऽप्य नोत्-सेको भवत्य् आपदि [2]न व्यथा[2] २०[N
२०] कुरुते [3]दीर्घ-दर्शी हि[4] सम्यग् अर्थ-परिग्रहम्[4] ।
अन्-[5]अर्थाच् च[5] विनिर्-मो[6]क्तम् अथवा दोष-लाघवम् ॥२१॥N
२१] [7]न च दोषान् अभि-गच्छन्ति[7] सम्यग्-दृष्टि-[8]परा नराः[8] ।
प्र-माणानीऽह [9]कृत्स्नानि प्र-[10]माणानि महाऽऽत्मनाम् ॥२२॥[N
२२] अनभि-[11]ज्ञाः प्र-माणानां केवलं दोष[12]म् आ-स्थि[13]ताः ।
शोकाऽम्भसि महा-वेगे क्षिप्रं मग्नः प्र-दृश्यते ॥[14]२३॥ [N
२३] औ[15]पम्यम् अ[15]नु-मानं च प्रत्य्-अक्ष[16]म् [16]अपि चाऽऽगम[17]म् ।
ये [18]हि सम्यक् परीऽऽक्षे[19]य(?न्त)न्ते कुतस् तेषाम् अ-बुद्धि[20]ता २४[N
२४] उपस्थि[21]त-विनाशं त्वाम् आत्[21]म-वंश-विनाशनम् ।
[22]राजन् [23]यास्यामि हित्वा [23]त्वां [24]जलौघ [24]इव सागरम् ॥२५॥ [N

---

१. च–प्राप्यथ । २. ब–नः कथा । प्र–नो व्यथा ॥ ३. फ–दोष० । ४. फ ल$_2$–च स० । प्र म ल$_2$–स स० । अ–त्वसम्यगर्थपरिग्रहः । ब रा–"हि"नास्ति । ५. आ–अनर्थाश्चापि । रा–अनर्था चापि । ब–अनयश्चापि । प्र–अनयश्चा(स्या)पि । म ल$_1$–अनयाश्चापि । ल$_2$–अनयच्चापि । ६. च–०मोक्षयम् ॥ ७. आ–न च दोषं नियच्छन्ते । फ–न च दूरं नियछन्ति । च–न दोषानतिग० । प्र रा ब म ल$_1$ ल$_2$ अ–न दोषानभि०। ८. आ–दृष्टपरावराः । फ–दृष्टपरावराः । ९. अ–सर्वाणि । १० ब ल$_1$–प्रमानानि ॥ ११. फ–०ज्ञाः । १२. च प्र रा ब म ल$_1$ ल$_2$–रोषम् । १३. फ–०ताः । १४. ल$_1$–नास्ति ॥ १५. च रा प्र व ल$_1$ ल$_2$–ऐतिह्यमनु० । आ–अगम्यमनु० । फ–औपम्यमन्त्वानुमानं । १६. ल$_2$–प्रत्यक्षं चापि । १७. आ–वागमम् । १८. अ–च । १९. फ–प्रतीक्ष्यन्ते । च अ–प्रतीक्षन्ते । २०. च–०ताम् । ल$_1$–०ताः ॥ २१. प्र–उपास्थितत्वाद् ।विनाशत्वादात्म०। च–०तविनाशत्वाम् । रा ब म ल$_1$ ल$_2$–०तविनाशत्त्वादात्म०। २२. रा ब प्र म ल$_1$ ल$_2$–रामं । २३. आ–पश्यामि । फ–पश्यामि । च–या (पा) स्यामि । प्र–यास्याम्यह तं तु। अ–०मि हित्वाहं। २४. आ फ च–जलौघमिव॥

२५] तव भिन्नां मतिं[1] ज्ञात्वा क्रूरां[2] धर्म-विदूषणीम् ।
सर्व-था ह्य्[3] असि[3] सं-त्याज्यः पंक-मग्न[4] इव [5]द्वि-पः ॥२६॥ [N
दोष-पंक[6]-निमग्नं त्वाम्[7] अनयोपप्लवाऽऽवृतम्[8] ।
२६] सर्व-था मानुषो रामस् त्वाम् अस्तम् उप-नेष्यति ।[9]
N] मूर्खं[10] मूर्ख-सहायं[10] च दुर्[11]-बुद्धिम् अ-जितेन्द्रियम्[12] ॥[13]२७॥[N
ततो विनिश्-श्वसन्[14] क्रोधात्[14] कम्पमानैः[15] पुनः पुनः ।
N] क्रोध-संरक्त-नयनः सभा-मध्ये स रावणः ॥२८॥[16] [N
N][16]अ-विदुष्टं हितं वाक्यम् उक्त-वन्तं वि-भीषणम् ।
८८,१३] अब्रवीत् परुषं वाक्यं रावणः काल-नोदितः[17] ॥२९॥ [१
वसेत् सह[18] स-पत्नेन[18] क्रुद्धेनाऽऽशी-विषेण[19] वा ।
२] न चाऽऽमित्र[20]-प्रतिज्ञेन सं-वसेच्[21] छत्रु-सेविना[21] ॥३०॥ [२
गताऽसुं त्वां प्र-पश्यामि मूढ[22]-सत्त्व-पराक्रमम् ।

---

१. रा–मति । २. आ फ–क्रूरान् । ३. रा–ह्यतिसं० । ४. ल₂–०लग्न । ५. आ–द्विषः । ६. फ म ल₁–रोषपंके निमग्नं । च–दोषै पङ्के नि० । फ रा ब ल₂ अ–दोषपंके नि० । ७. प्र रा ब ल₂ अ–त्वां मनयो० । ८. फ–रामोवीस्तम् । रा ब ल₂–राम ह्यस्तम् । प्र–राम श्यामस्त्वाम् । म ल₁–रामो ह्यस्तम् । ९. अ–इत्यार्षे रामायणे सुन्दरकाण्डे विभीषण-वाक्यं नाम सर्गः ॥ १०. फ–मूर्ख मूर्खसहायं । ११. रा म ल₁–निर्बुद्धिम् । १२. च–अजितेन्द्रियः । १३. फ–आर्षे रामायणे सुन्दरकांडे विभीषणाभिघातो नाम सर्गः । प्र अ–नास्ति ॥ १४. आ–विनिःश्वसक्रोधात्० । फ–०श्वसत् कोपात् । १५. च–कम्पमान । १६. प्र रा ब म ल₁ ल₂–नास्ति ॥ १७. अ–चोदितः । आ च प्र ब म ल₁ ल₂–०चोदितः । १८. प्र–मतेन नागेन । आ–सहसपत्नेषु । १९. फ अ–क्रुद्धेनासी० । च–क्रुद्धेणाप्सी० । २०. आ–न वा मित्र० । फ–ननु मिथ्या० । च–न चामिथ्या० । रा प्र ब म ल₁ ल₂ अ–न चामित्र० । २१. आ–सेवि वा ॥ २२. फ–मूढं सत्त्व० ।

N] राक्षसानां [1]कुले जातस् त्वं प्र-[1]शंसेसि राघवम् ॥३१॥ [2][N
यौवराज्येऽभि-षिक्तेन रावणाऽवर-जेन च ।[2]
N] [3]सन्तोऽपि [3]न गुणा वाच्या मम शत्रोर् वि-भीषण ॥३२॥[N
किं च मां [4]राघवोऽ[4]शक्तो देवैर् अपि समा-गतः ।
N] उप-[5]गन्तुं रणे [6]युक्तं गृहीत्[7]वा परमा[7]ऽऽयुधम् ॥३३॥ [N
राक्ष[8]सा वानरान् सर्वाल् लङ्का-द्वारम् उप[9]-स्थितान् ।
N] त्रासयि[10]ष्यन्ति सं-हृष्टा गजा वन-मृगान् इव ॥३४॥ [N
[11]जानीते वाक् च चक्षुश् च सर्व-लोक-प्रियाऽप्रियम् ।
N] रामे ते चक्षुषी कान्ते [12]वाग् ब्रवीति [12]गुणान् पुनः ॥३५॥[13][N
अस्मात् ते वाक्-[14]समायोगात् [15]काकुत्स्थं [16]लक्षये प्रियम् ।
N] [17]लक्ष्मणं वानरेन्द्रं [17]च वानरांस् तस्य चाऽनु-गान् ॥३६॥ [N
न चाऽहं त्वयि वि-श्[18]वासं गमिष्ये शत्रु-सेविनि ।

---

१. आ-वलं यानं प्रशशंस स । च-वलं जानस्त्वं प्रशसंसि । अ-बलं जानन्यः प्रशंशासि ॥ २. रा प्र ब म ल$_1$ ल$_2$-नास्ति ॥ ३. प्र-सन्त्येव न । अ-न सन्तोपि । ४. आ-राघवः शक्तो । प्र ल$_2$-राघवः शक्यो । ५. च ल$_2$ रा ब-उपागन्तुं । ल$_1$-तमागतं । ६. फ च रा ब प्र म ल$_1$ ल$_2$-क्रुद्धं । अ-योद्धं । ७. आ-गृहीताव-रणायुधं । फ-गृहीताभरणायुधं । च ल$_2$ रा प्र ब म ल$_1$ अ-गृहीत्वा वरमायुधं ॥ ८. च-राक्षसान् । ९. अ-उपागतान् । १०. प्र-भ्रामयन्ति । अ-प्राशयिष्यन्ति । ल$_2$-त्रासयिष्यन्ति स्म ॥ ११. च-जानीत । १२. च-वा ब्रवीति गुणात् । आ-वाग्ब्रवीमि गु० । १३. रा प्र ब म ल$_1$ ल$_2$-नास्ति ॥ १४. अ-वाक्यसंयोगात् । रा ब-वाक्यमायोगात् । म-०समायोग्यात् । १५. आ-काकुत्स्थे । १६. च-लक्षयेत् । रा-लक्षय । १७. च-लक्ष्मणे वा० । अ-वानरेन्द्रं च सुग्रीवं । फ-०णं वानरेन्द्राणांश्च ॥ १८. अ ल$_1$ अ-विस्वासं ।

N] अभि-[1]प्रेतं [1]हि [2]मनसो वाग् ब्रवीति शुभाऽशुभम् ॥३७॥ [N
पूर्वं तु मनसा ध्यात्वा शुभं वा यदि वाऽशुभम् ।
N] पश्चात् [3]सर्वाणि भूतानि [4]कर्मणाऽनु-चरन्ति [5]च ॥३८॥ [N
पुरस्ताद् यः स्तवं [6]ब्रूयात् [7]पुण्य-कर्म-गुणाऽन्वितम् ।
N] [8]एतं [9]वेद्मि [10]स्तवं सत्यं प(?पु)रा-[11]वृत्तं [12]स्तवे यथा ॥३९॥ [N
पुरस्ताद् यः प्रियस् तस्य परा-वृत्त(:)-[13]स्तवे-प्रियः ।[14]
N] इष्ट-[15]भावात् परा[15]-वृत्तः [16]स्तौषि [17]शत्रुं [18]तथा न माम् ॥४०॥ [N
जानामि [19]शीलं ज्ञातीनां सर्व-लोकेषु [20]राक्षसाः ।
३] [21]हृष्यन्ति व्यसनेष्व् एते ज्ञातीनां ज्ञातयः सदा ॥४१॥ [३
प्रधानं [22]स-धनं [22]वैद्यं धर्म-ज्ञं स्व-[23]जनं-प्रियम् ।

---

१. आ-अभिप्रेतेन । अ-अभिप्रेतं तु । २. आ-मनसा । ३. प्र-सर्वानि । ४. रा-कामेणाऽनु० । ५. फ-हि । ६. म-भूयात् । ७. फ-सौर्यकर्म० । ८. आ च रा प्र ल$_1$-न तं । फ-न ते । ९. फ-विद्म । १०. च-स्तवैः ११. रा-०त्तृत्यं । १२. आ अ फ ब प्र म ल$_2$-स्तवं । १३. आ-तु योः । १४. फ-पुरस्तादप्रिया स्तव्याः परावृत्ता तु ये प्रियाः । च-पुरस्तादप्रिया स्तव्याः परावृत्तस्तु यो प्रियाः । प्र-पुरस्ताद-प्रियाः स्तव्याः परावृत्त्य तथा प्रियाः । ल$_2$-पुरस्तादप्रिया स्तव्याः परावृत्त........प्रियाः । अ-पुरस्तादप्रियस्तस्य परावृत्ता तु ये प्रियः म रा ल$_1$-पुरस्तादप्रियस्तव्यः परावृत्तस्तव प्रियः । ब-पुरस्तादप्रियाः स्तव्याः परावृत्तस्तु यः प्रियः । १५. फ-पुरावृत्ता । रा-०भावादया-वृत्तः । प्र ब म ल$_1$ ल$_2$-०भावादपावृत्तः । १६. रा-स्तौसि । प्र-सोपि । १७. प्र-शत्रु । १८. फ च रा ब म ल$_3$-तथा मम । प्र ल$_2$-यथा मम । अ-कथं मम ॥ १९ ल$_2$-शी··· । २०. आ-०शाः । ल$_1$-०सः । २१. अ-हृष्यन्ते ॥ २२. अ-स्वजनार्थं च । फ-०नं वैद्यं (विद्या) । रा-साधनं वैद्यं । प्र-सद्नं वैद्यं । ल$_2$-सद्नं वेद्यं । २३. आ फ-स्वजनं प्रियम् ।

४] ज्ञातयोऽप्य्[1] अव[1]-मन्यन्ते शूरं[2] परि-वदन्ति[3] च ॥४२॥ [४
नित्यम् अन्योऽन्य-संहृष्टा व्यसनेष्व् आततायिनः ।
५] प्रच्छन्न[4]-हृदया[4] घोरा ज्ञातयो नो भयाऽऽवहाः ॥४३॥ [५
श्रूयते[5] हस्तिभिर्[6] गीताः[6] श्लोकाः पद्म-वने क्वचित् ।
६] पाश-हस्तान् नरान्[7] दृष्ट्वा[8] तांश्[9] छृणु त्वं[9] वि-भीषण ॥४४॥ [६
७पू] न चाऽग्निर् न च शस्त्राणि न पाशा[10] न परश्वधाः[11] । [७पू
N] जनयन्ति भयं[12] घोरं यथा जाति-कृतं[13] भयम्[13] ॥४५॥ [N
७उ] घोराः स्वार्थ-प्रधाना[14] हि ज्ञातयो[15] नो भयाऽऽवहाः ।[16] [७उ
उपायम्[17] एव वक्ष्यन्ति[17] ग्रहणे[18] नो[19] न[19] संशयः ।
८] सर्वैर्[20] भयैर्[20] ज्ञाति-भयं[21] सदा[22] कष्ट[22]-तरं मतम्[23] ॥४६॥ [८
सं-भाव्यं गोषु सांपत्न्यं[24] सं-भाव्यं ब्राह्मणे तपः ।
९] सं-भाव्यं चापलं[25] स्त्रीषु[25] सं-भाव्यं ज्ञाति-तो भयम् ॥४७॥ [९

---

१. आ—ज्ञातयो ह्यव० । च—०योप्यवा० । २. च—शूरं । ३. रा—परिभवति । च—पारं भवति । प्र म ल$_1$ अ—परिभवन्ति ॥ ४. फ—प्रछन्नवदना । आ—प्रयच्छ हृ० । रा—प्रछन्नहृदया ॥ ५. फ च रा प्र ब म ल$_1$—श्रूयन्ते । ६. आ ल$_2$—हस्तिभिर्गीता ॥ ७. रा च प्र ब म ल$_1$ ल$_2$—सुरान् । ८. रा—दृष्टा । ९. रा—शृणुष्व । ब म ल$_1$—तां शृणुष्व । प्र ल$_2$—ताञ्छृणुष्व । अ—तच्छृणुष्व । १०. आ—पाशो । ११. आ म अ—०स्वधाः । १२. च—परं । १३. म—जातिभयं कृतम् ॥ १४. च—०प्राणाना । ब—प्राणांता । प्र म ल$_1$ ल$_2$—०प्रणीता । १५. रा—ज्ञातयोर् । १६. अ—प्रच्छन्नहृदया घोरा ज्ञातयो नो भयावहाः । १७. फ च ब म ल$_2$—उपायमेते वत्स्यन्ति । रा—उपायमेतै वत्स्यन्ति । प्र—उपयाम्येन वेत्स्यन्ति । ल$_1$—उपायमेते वेत्स्यन्ति । १८. आ—ग्रहणं । प्र—ग्रहेण । १९. अ—नात्र । २०. आ—भयं । २१. प्र—ज्ञातिभिश्च । २२. रा प्र ब म ल$_1$ ल$_2$—सदोत्कृष्टतरं । आ—सदा कष्टभरं । च अ—सदा कृष्टतरं । २३. आ च अ—मम ॥ २४. आ—सम्पन्नं । फ—सम्पत्तिः । २५. फ प्र ब ल$_1$ ल$_2$ अ—स्त्रीषु चापल्यं । रा—स्त्रीषु चापत्यं ॥

न ते प्रियं[1] हि तत् तात यद् अहं लोक-सत्कृतः[2] ।
१०]ऐश्वर्यम् उप-यातश्[3] च रिपूणां मूर्द्धनि स्थितः[4] ॥४८॥ [१०
अन्यस्[5] तु यदि माम् एवं ब्रूयाद् वाक्यं[6] निशा-चरः ।
१३] अस्मिन् मुहूर्त्ते[7] न भवेत् त्वां तु धिक् कुल-पांसनम्[8] ॥४९॥[१६
नाऽहं[9] त्वां[10] हन्तुम् इच्छामि रक्षन्[11] धर्मम् इहाऽऽत्मनः ।
N] हतस् ते स्वयम् एवाऽऽत्मा ब्रुवतो[12] राघव-स्तवम् ॥५०॥ [N
दुर्-जनेनोच्यमानानि वचांसि मधुराण्य् अपि ।
N] अकाल-कुसुमानीऽव[13] त्रासं[14] सं-जनयन्ति मे ॥५१॥ [N
हृद्यस् ते यदि काकुत्स्थो[16] वि-भीषण हिते रतः ।
N] निर्-गच्छ विषयाद् अस्मान् न त्वां[17] द्रष्टुम् इहोत्सहे ॥५२॥[18] [N
दुर्-जनः परि-हर्त्तव्यो विद्ययाऽलंकृतोऽपि[19] सन् ।

१. फ–प्रियमिदं तावद्यदहं । च अ–प्रियमिदं प्रापयदहं । रा प्र ब म ल$_1$–प्रियमिदं प्रायो यदहं । ल$_2$–प्रियमिदं प्रायो यदयं । २. फ–०सत्कितम् । च प्र ब म ल$_1$ ल$_2$–०सकृतम् । ३. आ–अभिज्ञानं । च–उपजतश् । रा प्र ब म ल$_1$ ल$_2$ अ––उपजातश् । ४. फ–मूर्द्धन्यवस्थितः ॥ ५. च रा ब ल$_1$ अ–अन्यश्च । प्र म–अन्यच्च । ६. रा–किंचिन् । प्र ब म ल$_1$–कश्चिन् । ७. च–सुमुहूर्त्ते । ८. आ–क नु वै कुलपांशनः । अ–त्वां विना कुलपांशनः ॥ ९. च–नाहन्त्वा । अ–न त्वं । १०. अ–हन्तुं मया शक्यो । ११. फ–रक्षनधर्मम् । १२. फ–०त्मा हि ब्रुवता । च प्र ब म ल$_1$ ल$_2$–०त्मा ब्रुवतो ॥ १३. ब ल$_2$–०कुसुमान्येव । १४. च–त्रास । १५. आ–५१–५२–तमश्लोकौ न स्तः । १६. ब म ल$_1$–काकुस्थो । १७. प्र–त्वं । १८. अतः परं–अ रा प्र ब म ल$_1$ ल$_2$–इत्यार्षे रामायणे सुन्दरकाण्डे विभीषणपरित्यागो नाम सर्गः । ततः परमधिकश्च पाठः- फ अ रा च ब म प्र ल$_1$ ल$_2$–ततस्तं कोपसंपूर्णं मोहात्यक्तमिव श्रिया रावणो[1] मधुरं वाक्यं बभाषे स विभीषणम्[2] ॥ १९. आ रा ब–०कृतो यदि ।

१. फ अ– रावणं । २. फ अ– विभीषणः ।

N] मणिना भूषितः सर्पः[१] किम् असौ न भयं-करः ॥५३॥ [N

इति तस्य वचः श्रुत्वा महात्माऽसौ वि-भीषणः ।

११उ] मन्त्रि-मध्ये स्थितः[४] श्रीमान् इदं वचनम् अब्रीत् ॥५४॥ [N

सुहृदा हित-कामेन[५] वाक्यम्[६] उक्तं दशाऽऽननं[७] ।

१२] न गृह्णन्ति[८] दुर्-आत्मानः कालस्य वशम्[९] आ-गताः[१०] ॥५५॥ [२१

न प्रियत्वाद् गुणान्[११] संधो[११] राघवस्य ब्रवीमि ते ।

N] हितार्[१२]ऽर्थं राक्षसेन्द्रस्य[१३] मया वाक्यम् उदा-हृतम् ॥५६॥ [N

यदि ना[१४]ऽर्थ-हितं तव् ते मनसो[१५] वाऽपि न प्रियम्[१५] ।

N] मन्त्रं[१६] ज्ञात्वा[१६] मया प्रोक्तं वाक्यं राक्षस[१७]-संसदि ॥५७॥ [N

मया तव[१८] हितं वाक्यं राक्षसेन्द्रे[१९] महा-बले[१९] ।

N] इहं[२०] प्रोक्तं सुहृद्-वाक्यं[२१] तस्मिन् काले स्मरिष्यसि ॥ [२२]५८॥ [N

---

१. प्र च रा–सर्वः । २. फ नास्ति । अ–५०–शत्तमश्लोकात्परं पठितः । ३. फ–उक्तवाक्ये दशग्रीवे जातकोपो विभीषणः । अ–उक्तवाक्यं दशग्रीवं जातकोपो विभीषणः । ४. अ–ततः । ५. फ–ह्यतकामेन । रा–०कामेण । ६. च–वाक्यं चोक्तं । रा–वाक्यमुक्त । ७. रा–दशाननः । ८. आ–गृह्णाति दुरात्मा च । ६. रा–वसम् । १०. आ–आगतः ॥ ११. फ च रा प्र ब म ल१ ल२ अ–गुणं तस्य । १२. फ–हितार्थे । रा–हितार्थं । १३. फ–धर्ममेवैतन् । च–राक्षसेन्द्र तन् । रा–राक्षशेन्द्र तत् । ब म ल१ अ–राक्षसेन्द्रैतन् । प्र–राक्षसस्यैतन् ॥ १४. आ–०हितं तत्र । रा ब–नैव हितं ते तु । म ल१ ल२–नैव हितं । अ–नार्थे हितं त० । १५. अ–मन्यसे त्वप्रियं वचः । १६. फ–मंत्रिजिता । प्र च रा ब–मंत्रज्ञत्वात् । १७. आ–राक्षसदि ॥ १८. आ–नावहितं । १६. प्र अ–राक्षसैश्च महाबलैः । २०. आ म–इति । २१. म–सुभावात् । २२. प्र रा–नास्ति ॥

सं-वादे[1]नाऽपि रामेण वानरैश् च महा-बलैः ।[2]
N] प्राऽऽप्तैर् मन्त्रोप-विष्टै[3]श् च यथा[4] यैर् [4]मन्त्र्यते हितम् ॥५९॥ [N
यदि राजा दश-ग्रीव[5]ः श्री-मान् नि[6]त्योत्थितो भवे[7]त् ।
N] वि-चरेयु[8]स् तदा हृष्टा राक्षसाः पृथिवी-तले ॥६०॥ [N
उक्त-वा[9]क्ये दश-ग्री[10]वो जात-कोपो वि-भी[11]षणे ।[12]
अथ तं[13] ज्ञापयामास प्र-हस्तं राक्षसेश्वरः ।
N] [14]राज्यान् म[14]म परि-भ्रष्टो दिशो यातु वि-भीषणः ॥६१॥ [N
एवम् [15]उक्तस् ततो राज्ञा प्र-हस्तो वाहिनी-पतिः ।
N] उत्थापयामास तदा रावणस्य यवीयस[16]म् ॥६२॥ [N
न शक्यं भवता स्थातुं गच्छ या ते[17] गति[18]र् मता ।
N] क्रुद्धस् ते रावणो राजा राक्षसा[19]श् च महा-बला[20]ः ॥६३॥ [N
प्र-हस्तस्य वचः श्रुत्वा रावणं रावणाऽनु-जः ।
N] अब्रवीत् परुषं वाक्यं भीम-कर्मा वि-भीषणः ॥ [21]६४॥ [N

---

१ का-संवादमवापि । म च ल$_1$ ल$_2$-विरोधं जाह । अ-संवादं नाऽपि । २. अतः परमधिकः पाठः-च ब-मया तव हितं वाक्यं राक्षसेन्द्र महाबलैः । प्र रा-नास्ति । ३. प्र-०दिष्टैश् । ४. ल$_2$-यथैं......मन्त्रते । फ-यथा यो मन्यते । च रा-यथा यैर्मन्त्रते । ब-तैर्मान्त्रिते । प्र-तैर्मन्त्र्यते । ल$_1$ म अ-तैर्मन्यते । म अ-यो मन्यते ॥ ५. आ फ प्र-०ग्रीवः । ६. आ-नित्याभयोत्थितः । फ-नित्योन्नतो भवेत् । ब ब रा-नित्यो स्थितो भवेत् । प्र-इत्यर्थतो भवेत् । ७. आ-विचारेषुस् । ८. प्र-बलवत्तराः । ल$_2$-कामरूपिणः ॥ ९. च-०वाक्यो । १०. आ-०ग्रीव । प्र च रा म ल$_1$ ल$_2$-०ग्रीवे । ११. आ ल$_2$-विभीषणेः । १२. फ-नाऽस्ति । १३. फ अ-त्वाज्ञाप० । रा प्र-सन्तापयामास । ब म ल$_1$-संज्ञाप० । १४. रा प्र ब ल$_1$ ल$_2$-अयं मत्तः ॥ १५. प्र च र ब म ल$_1$-उक्ते । १६. म-०यशम् ॥ १७. फ-रे । १८. च-मति । १९. म-राक्षसश् । २०. आ-०बलः ॥ २१. ल$_1$-नाऽस्ति ॥

निर्-गमिष्याम्य् अहं राजन् [1]यदीऽदं तत्र [2]सु-प्रियम् ।
N] अ-[3]प्रमादश् च लंकायां [4]कर्तव्यो राक्षसेषु [5]च ॥६५॥ [N
अथवा किं करिष्यन्ति राक्षसा नगरी च ते ।
N] [6]रक्षस्वाऽऽत्मानम् [7]एवाऽथ वानरा हि महा-बलाः॥६६॥ [N
[8]क्षिप्त्वा [9]शृङ्गाणि शत-शः पाद-पांश् च शिलाऽऽयुधाः ।
N] लंकां सं-चूर्णयि[10]ष्यन्ति स-[11]प्राकारां स-तोरणाम् ॥६७॥ [N
इत्य्-उक्त्वा परुषं वाक्यं जात-कोपो वि-भीषणः ।
१४] उत्-पपात गदा-पाणिश् चतुर्भिः [12]सचिवैः सह ॥[13]६८॥[१७
अब्रवीच् च [14]पुनर् वाक्यं जा[15]त-कोपो वि-भीषणः ।[16]
१८] [17]अन्तरिक्षे स्थितः श्री-मान् भ्रातरं धन-[18]दाऽनुजम् ॥६९॥[१८
[19]सत्यं भ्रा[20]ताऽसि मे राजन् ब्रूहि मां [21]यद् यद् इच्छसि । [१९
१९] इदं तु परुषं वाक्यं न [22]क्षमाम्य् अ-हितं तव ॥७०॥ [२०उ
सु-नीतं हित-[23]कामेन वाक्यम् उक्तं दशाऽऽन[24]न ।

---

१. आ-यदिदं । २. रा-सप्रियम् । ३. आ-अप्रमादाश्च लङ्कायाः । फ-०दश्च लङ्कायाः । प्र-अप्रमादाच्च लं० । अ-अप्रमादस्तु लं० । ४. प्र-वर्त्तव्यो । ५. आ च रा ब ल१-राक्षसेश्वर । प्र ल२ म-राक्षसेषु च (श्वर) ॥ ६. अ-रक्ष आत्मानम् । ७. फ अ-एव त्वं । प्र-एवाद्य ॥ ८. आ-क्षिप्ताः । ९. रा फ ब-श्रङ्गानि । १०. फ-संपूरयिष्यन्ति । ११. आ-सप्राकारां ॥ १२. आ-शचिवैः । १३. ल१ अ-नास्ति ॥ १४. रा प्र च ब म ल२-ततो । १५. रा-जातकाम । १६. ल१ अ-नास्ति । १७. प्र-ऋन्तारिक्षास्थितः । प्र-अन्तारिक्षे ततः । १८. आ-धनदातुजम् । रा-धनुदातुजम् ॥ १९. आ रा-नित्यं । २०. रा ल१ ल२-त्रातासि । २१. फ-यद्यदीच्छासि । रा-यद्यपि (दि)च्छति । २२. रा च प्र म ल१ ल२-क्षमामि हितं । ब-क्षमामि हिते ॥ २३ आ-सुनीतहितिकामेन । फ-सुनीताहित० । २४. रा-ददानन ।

२०] न गृह्णन्ति[1] दुर्-आत्मानः कालस्य वशम् आ-गताः ७१॥[२१
सु-लभाः पुरुषा राजन् सततं[2] प्रिय-वादिनः ।
१६] अ-प्रियस्य तु[3] पथ्यस्य वक्ता श्रोता च दुर्-लभः[4] ॥७२॥ [२२
बद्धस् त्वं काल-पाशेन सर्व-भूताऽपहारिणा ।[5]
२१] वि-नश्यमानस् त्याज्यस्[6] त्वं प्र-दीप्तं शरणं[7] यथा ॥७३॥ [२३
[8]दीप्तैः पावक-सङ्काशैः शरैः कांचनं-भूषणैः[9] ।
२३] न त्वाम्[10] इच्छाम्य् अहं द्रष्टुं रामेण नि-हतं रणे ॥७४॥ [२४
शूराश् च बल-वन्तश् च कृताऽस्त्राश्[11] च नरा[12] रणे ।
१९] काल-पाशेन[13] सीदन्ति वालुका[14]-सेतवो यथा ॥७५॥ [२५
वि-गुणोऽपि हि चेद्[15] राजा सहायाः[16] स्युर् गुणोत्तमाः ।
N] तत्राऽपि युक्त्या नि-वसेद् गुणाऽपेक्षो न संशयः॥[17] ७६॥[N
N] तस्मात् त्वां मन्त्रिभिः सार्द्धं हित्वा दोष-समन्वितम्[18] ।
रामम् एव गमिष्यामि शरणं राक्षसाऽधि-प[19] । [N

---

१. फ प्र-गृह्णति । रा-गृह्णति ॥ २. आ-स तं तं । ३. फ च रा प्र ब म ल$_1$ ल$_2$-च । ४. रा-दुर्लभाः ॥ ५. अतः परमाधिकः पाठः-च रा प्र ब म ल$_1$ ल$_2$ अ-स्वयं स्कन्धावसक्तेन बुद्ध्यस्व हितमात्मनः । ६. रा-साजस् । ७. फ-सदनं ॥ ८. अ-दीप्तपाव क० । ९. अ-कनकभूषणैः । रा प्र ब म ल$_1$ ल$_2$-काञ्चनभूषितैः । १०. आ-तत्त्वम् ॥ ११. अ-क्षतास्त्राः । १२. आ-वनरा रणे । फ-च रणे रणे । रा-च नरान् रणे । १३. फ म-कालाभियत्ताः । अ-कालाभिपन्नाः । १४. प्र-वालुकाः सेतवो ॥ १५. प्र-भवेद् । १६. रा-सहायास्त्वगु० । फ अ-०याः स्युर् गुणोत्तराः । १७. आ-तत्रापि युक्ता निवसेद् गुणोपेता महोदयम् । फ-तच्चापि युक्ता निवसेद् गुणोपेता महोदयम् । च ल$_2$ अ-तत्रापि युक्ता निवसेद् गुणापेक्षा (अ-क्षी) न संशयः । रा ब-तत्रापि युक्ता नि वसेद् गुणापेक्षो न संशयः ॥ १८. फ-दोषसमुद्भवम् । अ-दोषसमुद्धतम् । १९. आ-०धिपाः ।

२२] चतुर्भिर् एव सचिवैः[1] सहितः क्षणदा-चरैः[2] ॥७७॥ [१७उ
आत्मानं सर्व-था[3] रक्ष पुरीं चेमां स-राक्षसाम्[4] ।[5] [२६उ
२४] स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना[6] ॥७८॥ [२७
नूनं न ते रावण कश्चिद् अस्ति[7]
रक्षो-निवासेषु सुहृत् सखा वा ।
हितोपदेशस्य सम्र्मः[8] प्र-वक्ता
N] यो[9] वारयेत्[10] त्वां स्वयम् एव पापात्[11] ॥७९॥ [२८
गताऽऽयुषं त्वां[12] विपरीत-बुद्धिम्
निः-संशयं[13] राक्षस लक्षयामि ।
यो मां हितं पथ्यम् इदं ब्रुवन्तं
N] न मन्यसे राक्षस[14] वीर-मध्ये ॥८०॥ [N
निगृह्य-मान(?ण)[15]स्य मया[16] हितैषिणा
न[17] रोचते[17] वाक्यम् इदं निशा-चर ।
परीत-काला[18] हि गताऽऽयुषो[19] नरा
२५] वचो न[20] गृह्णन्ति सुहृद्भिर् ईरितम्[21] ॥८१॥ [२९
इत्यार्षे[22] रामायणे[23] सुन्दर-कांडे विभीषण-परित्यागो[24] नाम नवतितमः सर्गः॥९०॥

---

१. आ प्र–शचिवैः । २. प्र–०करैः ॥ ३. ल$_2$ अ–सर्वदा । ४. अ–चेनां सराक्षसीं । ५. इतोऽग्रे 'वं' पठति–खरमारीचवद्गन्ता नूनं त्वं यमसादनम् । ६. आ–निरामय । प्र रा ब म ल$_1$ ल$_2$–निरामयः ॥ ७. प्र च रा ल$_1$ ल$_2$ अ–एव । ८. आ ल$_1$–स मन्त्रवक्ता । रा च प्र ब म ल$_2$–सुसंप्रवक्ता । अ–सुखं प्रवक्ता । ९. रा–ये । १०. च–वारये त्वांस्वयम् । रा–वारयं त्वां । प्र–वारये त्वां । ११. च–पापान् ॥ १२. ब म ल$_1$ ल$_2$ अ–त्वा । १३. फ–निशंसयं । १४. अ–मां खलु ॥ १५. आ रा–०माणो हि । फ–०मानस्य । १६. फ–मया हि हितै० । रा–या हितै० । १७. ब–त्वं रोचये । प्र रा ल$_1$ ल$_2$–न रोचये । १८. फ–परीत्यकाला । प्र–परेत० । १९. रा च ब म ल$_1$ ल$_2$–नरा गतायुषो । २०. प्र रा–निगृह्णन्ति । २१. च–ईडितम् । ब रा–ईरिताः ॥ २२. आ–आर्षे । २३. ल$_2$ अ–नास्ति । २४. फ अ–०णवाक्यं । रा प्र ब म ल$_1$–०षणत्यागो ॥

इत्य्-उक्त्वा [1]प्रहर्षं वाक्यं [2]रावणं रावणाऽनु-जः । [१पू
१] क्रोध-संरक्त-नयनं स-संध्यम्[3] इव तोय-दम् ॥१॥ [N
तरङ्ग-[4]कुटिलां [4]लोलां [5]भ्रूकुटीं भृश-दारुणाम् ।
२] कृत्वाऽऽसीनं निर्-[6]ईक्षन्तं प्रासादाऽग्रम्[7] अ-मर्षणम् ॥२॥ [N
अभि-[8]वाद्य ततो भूमौ क्रोध-पर्याकुलेक्षणः ।
३] चतुर्भिः [9]सचिवैः [9]सार्धं निश्-चक्राम वि-भीषणः॥३॥ [N
४पू] स मातरं [10]पुनर् [10]द्रष्टुं तत्र [10]सर्वं विनि-वेदि[11]तुम् ।
४N] आ-जगाम मुहूर्त्तेन जननीम् अव-लोककः ॥[12]४॥ [N
सं-[13]विश्य महो-[14]प्राज्ञः सप्त-[14]कक्षं महा-[15]गृहम् ।
हस्त्य्-अश्व-रथ-सुम्पूर्णं नाना-[16]योध-समाकुलम् ।
N] परश्वध-समाकीर्णं [17]चाप-पाणि-विभूषितम् ॥५॥ [N
दि[18]व्य-रत्न-समाकीर्णं प्रासाद-शत-शोभितम् ।
N] नित्यं बर्हिण-संघुष्टं प्रमदा-जन-संकुलम् ॥६॥ [N

---

१. आ—परमं । २. च—नास्ति । ३. च—संध्यम् ॥ ४. जा—॰कुटिला कुर्वन् । ५. आ फ च रा $ल_2$—॰भ्रुकुटी । रा ब म—भ्रुकुटीं । ६. च—निरीक्षन्ति । ७. च—॰दाग्रसमर्षणम् । आ—अमर्षणः ॥ ८. फ—॰वंद्य । ९. आ—शचिवैः सार्धं । $ल_2$—शचिवैः साकं । १०. अ—ततो दृष्ट्वा । अ आ च प्र म $ल_1$ $ल_2$—दृष्ट्वा । रा—दृष्टा । ११. आ—विनिवेद्य, च विनिवेदितुम ॥ १२. फ अ—अत आरभ्य त्र्यंशीतितमश्लोकं यावत्पाठो नास्ति ॥ अत्र आजगाम जगामेति साम्यकारितः पाठभ्रंशः प्रतीयते । १३. आ $ल_1$—संप्रविश्य । १४. रा—॰प्राज्ञस्सप्रकक्षं । म प्र $ल_1$ $ल_2$—सप्तकक्ष्यं । १५. ब—ग्रहम् । १६. रा—॰योग॰ । १७. रा—चा...णि ॥ १८. प्र—दिवि रत्न॰ ॥

पुण्याऽहं[1]-रव-घोषेण सर्वतः प्रति-नादितम् ।
N] दीप्य-मानं[2] श्रिया[3] जुष्टं[4] यथा वै वैष्णवं पदम् ॥७॥[7] [N
दीयतां याच्यतां[5] चेति श्रूयमाणं[6]-महा-स्वनम् ।
N] पुरंदर-गृह-प्रख्यं कुबेर-सदनोपमम् ॥८॥ [N
आ-वृतं कल्प-वृक्षैर्[8] च समन्ताद् उप-शोभितम् ।
N] पुन्नाग-वकुलाऽऽकीर्णं[9] कदली-खण्ड-मण्डितम्[10] ॥९॥ [N
दीर्घं[11] कलापि-बहुलं नाना-पक्षिभिर् आ-वृतम् ।[12]
N] सर्व-दोष-विनिर्मुक्तं[13] गृहैः काञ्चन-वेदिभिः ॥१०॥ [N
स प्र-विश्य महा-प्राज्ञो राक्षसेन्द्रो वि-भीषणः ।
N] [14]अनेकैर् वर्ष-वर्षकैः[14] स्थविरैः[15] सर्व-तो[16] वृतम् ।
जटा-वल्कल-संवीतैर् वेत्र-झ(?र्[17])झर-पाणिभिः ॥११॥ [N
N] पादाऽऽहति-सुसंविग्नो[18] निश्वसन्न्[19] उरगो यथा ।
वाष्प-व्याकुल-ताम्राऽक्षः स्खलमानः क्वचित् क्वचित्[20] ।
N] अ-विष्टम्भेन[21] तु[21] स्वेन मन्युना च परि-प्लुतः ॥१२॥ [N
शोक-सागर-मध्य-स्थो नाना-दोष-विमानितः[22] ।

---

१. आ–पुण्यांहस्व० । ब–पुण्याहरथ० । २. च–०माणं । ३. प्र–श्रियं । ४. च–युष्टं ॥ ५. प्र–याचितां । ६. आ–सूयमान० । प्र–श्रयमानं म० । ७. आ म म$_1$–पदम् ॥ ८. आ–वृक्षैस्तु । ९. प्र–पुन्ना गबकु० । रा–०वकुलाकीर्णे । १०. प्र म ल$_1$–०षण्डमाण्डितम् ॥ ११. ब रा म ल$_1$ ल$_2$–तथा । १२. प्र–नास्ति । १३. रा–०विनिमुक्तं ॥ १४. आ–वर्षशतसैः । १५. ल$_2$–स्थविरैर् । रा–स्थविरैस् । १६. ल$_2$–उपशोभितम् । १७. आ–०जरजरपा० । रा म ल$_1$–०झझरपा० । १८. आ च–पादेन हतसंविग्नो । प्र म–०हतसंविग्नो । १९. आ ब रा–निश्वसन्तुरगो । च–निश्वसत्तुरगो । २०. च ल$_2$–क्वचित्...। २१. च–अवष्टंभेन तु । रा प्र ब म ल$_1$ ल$_2$–अवष्टंभेन हि । २२. प्र रा ब म ल$_1$ ल$_2$–दोषावमानितः ।

N] भ्रात्रा[1] ज्येष्ठेन क्रूरेण पापेन[2] हत-बुद्धिना ॥१३॥ [N
ददर्श मातरं[3] तत्र निर्-मलां जाह्नवीम्[4] इव ।
N] संवीत-शुक्ल[5]-वसनां हर्ष-गद्गद-भाषिणीम् ॥१४॥ [N
वराऽऽसन-गतां देवीं भूषणैर् उप-शोभिताम् ।
N] सर्व-लक्षण-संपन्नां[6] जननीम् अव-लोक्य[7] ताम् ॥१५॥ [N
पादयोर्[8] न्य्-अपतद् दूराच् छिन्न-मूल इव द्रुमः[9] ।
N] उद्-धृत्य बाहू विपुलौ धर्मात्मा स वि-भीषणः ॥१६॥ [N
तम् आर्त्त-रूपं [10]दृष्ट्वैव कैकसी जात[11]-विस्मया ।
N] स्वाऽङ्कम् आ-रोपयामास वि-लपन्तम्[12] अ-चेतनम् ॥१७॥ [13][N
मूर्ध्नि चैनम् उपाऽऽघ्राय[14] इदम्[14] आह शुचि-स्मिता ।
N] किम्[15]-अर्थं [15]त्वं नर-श्रेष्ठ पूर्ण-चन्द्र-निभाऽऽनन ॥१८॥ [N
पद्म-पत्र-विशालाऽक्ष गज-विक्रम[16]-गामिक ।
N] [17]दुन्दुभि-स्वन-निर्घोष म[18]र्त्त-वारण-वारण ॥१९॥ [19][N
धर्म-बुद्धे[20] महा-प्राज्ञ केनाऽसि त्वं वि-मानितः ।
N] ब्रूहि कल्प-[21]समाचार पितुर्[22] वृत्त-व्रते स्थितं[23] ॥२०॥ [N

---

१. आ रा ब–भ्राता । २. प्र ब म $ल_1$ $ल_2$–पापेन क्रूरेण । रा–नास्ति ॥ ३. आ–ततो मातृर् । ४. आ–जान्हवीम् । ५. आ–शुक्लसंवीत० । ६. आ च–०सम्पूर्णां । ७. च–अवलोक ॥ ८. रा–पादयो । ९. रा–द्रुमम् ॥ १०. आ च–दृष्ट्वै कैकशी । ब–दृष्ट्वा वै केकसी । म $ल_2$–केकसी । ११. रा–तात विस्मया । च–०विस्मयः । १२. ब–०न्तं विचेतनम् । १३. $ल_1$–नास्ति ॥ १४. आ–०घ्रायेदम् । १५. आ–किमर्थंस्त्वं । ब–किमर्थं त्वं ॥ १६. रा ब म $ल_1$–०विक्रान्तगा० । प्र–०विक्रान्तगामि च । $ल_2$–०विक्रां...गमिक । आ–०गामिकं । १७. रा ब म–द्वंद्वभि० १८. आ–मल्ल० । १९. फ च–नास्ति ॥ २०. प्र–०युद्धे । २१. रा $ल_1$–सधर्मसमाचार । प्र ब–धर्मस० । म–धर्मसमाचारं । $ल_2$–धर्मसमाचारः । २२. आ–पितु । २३. रा प्र ब म $ल_1$ $ल_2$–स्थितः ।

पद्म-योनि-कुले जातः[1] स त्वं केनाऽसि दुर्-मनाः[2] ।
N] ब्रूहि कार्यं[3] विशालाऽक्ष भयं कस्माद् उपाऽऽगतम् ॥२१॥ [N
महेश्वराद् वा विष्णोर्[4] वा देवेन्द्राद्[5] वा पिता-महात् ।
N] प्रेत-राजाऽधिपाद् वाऽपि कुबेराद् वाऽपि बुद्धि-मन्[6] ।
सर्व-देव-समूहाद् वा सर्वम् आ-ख्यातुम् अर्हसि ॥२२॥ [N
अथवा कौ(?को) सलेंद्राद्[7] वा रामान् नय-विशारदात्[8] ।
N] यस्या[9]ऽऽनीता च सा[10] देवी सीता सुर-सुतोपमा[11] ॥२३॥ [N
एवम् उक्तस्[12] तु मात्रा स[12] राक्षसेंद्रो वि-भीषणः ।
N] आ-ख्यातुम् उप-चक्राम यथा-वृत्तं च[13] राक्षसीन्[14](?म्) २४॥ [N
भयाद्[15] गद्गदया[15] वाचा ह्रिया किञ्चिद् अवाङ्-मुखः[16] ।
N] सं-स्तभ्य[17] च तथाऽऽत्मानं धैर्यं[18] बुद्धौ[18] निवेश्य[19] च ॥२५॥ [N
यश् चेंद्रिय-गृ(?ग्र)हे युक्तं(?क्तः) सं-स्तभ्य मनसा गिरम्[20] ।[21]
N] स[22] वक्तुम् उप-चक्राम जनन्यै(?न्याऽ)वि[23]-तथं वचः ॥२६॥ [N

---

१. आ–नेता स्यास्त्वं । २. रा–दुर्मनः । ३. रा–कर्म ॥ ४. च–विष्णोर्वा । ५. आ ब म च रा–इंद्राद् । ६. आ–०मान् । ७. अ प्र–कौशलेंद्राद् । ८. आ–०विशारदान् । ९. आ च–यस्मान्नीता । रा ल$_1$–यस्य नीता । १०. प्र–या । ११. आ–०सतोपमा ॥ १२. रा प्र ब म ल$_2$–उक्तः स मात्रा तु । ल$_1$–उक्त्वा स मात्रा तु । १३. रा–यद्वा वृत्तं तु । च ब म ल$_1$–यथावृत्तं तु । १४. च म ल$_1$–राक्षसान् । ब रा–राक्षसात् । प्र ल$_2$–राक्षसीत् । १५. आ–भयगद्गदया । च रा ब म ल$_1$ ल$_2$–भयगद्गदया । १६. रा प्र ब म ल$_1$ ल$_2$–अधोमुखः । १७. च–संस्ताभ्य । आ ब–संस्तंभ्य । १८. रा–धैर्यबुद्ध्या । ब म प्र ल$_1$ ल$_2$–धैर्यद्ध्या । १९. ब–निवेद्य । २०. च–गिरः । २१. प्र रा व म ल$_1$ ल$_2$–नास्ति । २२. आ–सर्वं । २३. रा ब–सुनृतं । प्र म ल$_1$ ल$_2$–सूनृतं । 'जनन्यै अवितथम्' इत्यत्र सन्धिरार्षो द्र० ॥

श्रुणु मातर् ममाऽवद्यं[1] येन्[2] मया दुरनि(?नु)-ष्ठु(?ष्ठि) तम्[3] ।
N] रावणस्य महा-भागैर्[4] मंत्र-काल-विनिर्णये ॥२७॥ [N
उक्तः स तु मया देवि यथा सीता प्र-दीयताम् ।
N] पादौ तस्याऽथ सं-गृह्य यथा-वद् अभि-वाद्य[5] च ॥२८॥ [N
रामेण तु महा-बाहो न वैरं कर्तुम् अर्हसि ।
N] अन्यच्[6] च श्रृणु मे राजन् यथा वक्ष्यामि सु-व्रत ॥२९॥ [N
मारीचो येन नि-हतः[7] कबन्धश्[8] च महा-बलः ।
N] विराधश् च महा-तेजा खरश् च स-गणो हतः[9] ॥३०॥ [N
वाली येन हतो वीरः सप्त तालाश् च भेदिताः[10] ।[11]
N] विरूपा च कृता येन भगिनी रावणस्य सा[12] [13] ॥३१॥ [N
एवं-विधानि कर्माणि[14] श्रूयन्ते यस्य रावण ।
N] तस्य मुंच महा-बाहो पत्नीं[15] रामस्य धीमतः ॥३२॥ [N
एवम् उक्तो मया देवि क्रोधेन कलुषी-कृतः ।
N] धिग् इत्य्-एव च मु(?उ[16])क्त्वा [17]मां निर्-भर्त्स्य[18] च पुनः पुनः ३३
ताडितोऽस्मि सभा-मध्ये पादेनाऽशनि-वर्चसा ।
N] पुनश् चोक्तोऽस्म्य्[19] अहं तेन तत्र गच्छेति मा चिरम् ।

---

१. च रा ब म ल१-मया वाच्यं । प्र ल२-यथा वाच्यं । २. ब म ल१-यद्वाक्यं । ३. च रा प्र ब म ल१ ल२-हितानिष्ठुरम् । ४. आ-०भागे । ५. रा-यथावद्भिभिवाद्य । ६. आ-अन्यश्च ॥ ७. आ-निहितः । ८. म-कबन्ध म० । ९. रा म ल१-गतः ॥ १०. रा-वेदिताः । प्र-भेदताः । ११. आ च-वाली ह्येकेन बाणेन प्रेषितो यमसादनम् । १२. प्र ल२-०नी......नस्य च । १३. आ-तस्य धर्मात्मनः पत्नीमश्च मुच्येति तां विभो ॥ १४. प्र ब म ल१ ल२-कार्याणि । १५. रा-पत्नी ॥ १६. च-धिक् धिगित्येवमुक्त्वा । प्र रा ब म ल१ ल२-धिग्धिगेवमुक्त्वा । सन्धिरत्राविवक्षितः द्र० । १७. रा-मा । १८. च रा-निर्भर्त्स्य । प्र-निभर्त्स्यं । १९. प्र ब म च ल१ ल२-चोक्तोस्मि तेनात्र गच्छ ग० । रा-चोक्तोऽस्मि तन्मत्र ।

भ्रष्ट[1] निर्-लज्जं नीचेति[2] न[3] त्वां निन्ये[4] यम-क्षयम् ॥३४॥ [N
शत्रुणा प्र-हितो नूनं शत्रु-पक्ष-प्रशंसकः[5] ।
N] रामं चाऽनु[6]-गतं रक्तं[7] न त्वां द्रष्टुम् इहोत्सहे ॥३५॥ [N
एवम् उक्तोऽस्मि परुषं रावणेन शुभाऽऽनने ।
N] रामम् एवाऽनु-गच्छामि त्वां तु[8] द्रष्टुम् इहाऽऽगतः ॥३६॥ [N
यदि मे दुर्-अनु[9] क्रान्तं यदि वा[10] दुर्-अनुष्ठितम् ।
N] यदि दुश्-चरितं मेऽद्य[11] ततो गृह्य प्र-शाधि[12] माम् ॥३७॥ N]
एवम् उक्ता तदा तेन माता तस्य महाऽऽत्मनः ।
N] नाऽशकद् भाषितुं[13] सु-भ्रूर्[14] मृण्[15]मयाऽ(?यी)व-स्थिता तदा[16] ॥३८
ततः संज्ञाम् उपाऽऽगम्य मुहूर्ताद् इव[17] भामिनी ।
N] उवाच रुदती[18] वाक्यं वि-भीषणम् इदं तदा ॥३९॥ [N
एवम् एतन् महा-बाहो यथा वदसि पुत्रक ।
N] विद्धि नूनं वि-नाशं[19] च सर्वेषां समुप-स्थितम्[20] ॥४०॥ [N
स्मारितो[21]ऽस्मीऽह वचनं पुत्र तद्[22] विपुलं त्वया[23] ।

---

१. रा प्र—भ्रष्टः निर्लज्जं । आ—निर्लज्ज । २. आ—नीचेमं । ३. च रा प्र ब म $ल_1$ $ल_2$—ध्रुवं । ४. रा—नित्यंषेम० ॥ ५. ब—०विहिंसकः । ६. च रा—च नुगतं । आ—सानु० । ७. $ल_1$—भक्तं । ८. रा—द्रष्टुमिहमागतः । ९. $ल_2$—दुरति० । १०. प्र $ल_2$—मे । ११. आ—मद्यं । $ल_1$—मन्ये । १२. च रा—प्रसाधि । आ—साधि ॥ १३. आ च रा प्र ब $ल_2$—भाषितं । १४. आ रा $ल_2$—सुभ्रू । १५. आ—मृन्मयाः । च ब—मृन्मयी व्यवस्थिता । रा—मृणमयी व्यवस्थिता । प्र—मृण्मयीव व्यवस्थिता । $ल_1$ म—मृन्मयीव व्यवस्थिता । $ल_2$—मृन्मयी चाव्यवस्थिता । १६. च ब म $ल_1$ $ल_2$—नास्ति ॥ १७. $ल_2$—०र्त्तादि...भा० । १८. प्र—रुदिती ॥ १९. आ—विशालाक्ष । २०. आ—०स्थितः । २१. आ—स्मारितास्मि । प्र $ल_2$—०स्मीति । २२. आ $ल_1$—पितु तद् । २३. आ च रा ब म प्र $ल_2$—यशः ।

N] ब्रह्मणश्[1] च महा-बाहो तच् छृणुष्व समा-हितः[2] ॥४१॥ [N
दश-ग्रीव-प्रभृतिषु जातेषु कुल-नन्दन ।
N] निर्-जितेषु च देवेषु स-शक्रेषु महाऽऽत्मसु ॥४२॥ [N
चिन्तयन्ती कुलस्याऽहं पुत्रं वश-करं शुभम् ।
N] तपस्-विने[3] च पित्रे ते[4] गत्वाऽऽश्रम-पदं[5] ह्य् अहम् ॥४३॥ [N
स्थिताऽस्मि पुरतो वत्स तव पित्रे महाऽऽत्मने ।
N] वक्तु-कामा विशालाऽत्तं[6] पितरं ते तपस्-विनम्[7] ॥४४॥ [N
ततो मां(?माऽ)धिष्ठितां दृष्ट्वा पुरस्ताद् ऋषि-सत्तमः ।
N] उवाच मधुरं वाक्यं हर्ष-गद्गदया गिरा ॥४५॥ [N
किम् आगमन-कृत्यं[9] ते ब्रूहि तत्त्वेन शोभने ।
N] एवम् उक्ताऽस्मि ऋषिणा[10] पुत्र बुद्धि-मता[11] तदा[12] ॥४६॥ [N
ततोऽहं वक्तुम् आ-रब्धा प्राऽञ्जलिः प्रणि-पत्य[13] तम् ।
N] आ-गताऽस्मि महा-भाग संशय-च्छेदनाय वै ॥४७॥ [N
तव वाक्येन ये जाताः पुत्रा मम महा-व्रत ।
N] स्व-राज्यं[14] विपुलं प्राप्ता[15] लब्धा पैतामहं पदम्[16] ॥४८॥ [N
किंचिच्[17] चिंताऽस्ति संभूता दृष्ट्वा[18] पुत्रं महा-बलम् ।
अ-वध्यं[19] वर-दानेन सर्वैर्[20] अपि[20] दिवौकसैः ।
N] यक्ष-गन्धर्व-नागैश् च पिशाचैर्[21] ऋषिभिस् तथा ॥४९॥ [N

---

१. प्र—ब्राह्मणश् । २. रा—०हतः । प्र—०सतः । ३. प्र—तापस्विने । ४. ल₂—स्वे । ५. आ—गताश्र० । ल₂—गताश्रमपदमहं ॥ ६. रा—विसा० । ७. रा—०श्विनम् । च—०स्विनाम् ॥ । ८. प्र— वक्तुं ॥ ९. च—कृते । १०. प्र रा ब म ल₁ ल₂—मुनिना । अविवक्षितोऽत्र सन्धिः द्र० । ११. च प्र रा ब म ल₁ ल₂—०मतां । १२. प्र रा ब म ल₁ ल₂—त्वर । १३. ल₂—०पत्यन्तम् । १४. आ—स्वराज्यवि० । १५. प्र—प्राप्तुं । १६. आ—०महपदम् ॥ १७. आ—किंचिच्छिन्नास्ति । १८. रा—दृष्टा । १९. आ रा—अवध्यवर० । २०. आ—सर्वैरपि । २१. प्र च म—पिशाचै ऋ० ॥

एवं-विधेषु पुत्रेषु जातेषु तव सु-व्रत ।
N] को[१] नु वंश-धरो ब्रह्मंस्[२] तव पुत्रो भविष्यति ॥५०॥ [N
ऊचे मां[३] स[३] महा-बुद्धिः काले धर्म-भृतां वरः[४] ।
N] दुराचार-व्रत-युतो राज्ये स्थास्यति रावणः ॥५१॥ [N
कनिष्ठश् चाऽपि धर्माऽऽत्मा पुत्रो वंश-धरस्[५] तव ।
N] राज्ये स्थास्यति धर्मेण यावद् भूमिर् धरिष्यति ॥५२॥ [N
पुनर्[६] उक्तः स तु मुनिर् मया पुत्र प्रणम्य वै ।
N] उवाच वचनं धीमान् सर्व-ज्ञो बुद्धि-मान्[७] ऋषिः ॥५३॥ [N
शृणु कैकसि[८] यद् वृत्तं ब्रह्मणः सदने शुभे ।
देवानां सन्निधौ भद्रे ऋषीणां च समा-गमे ।
N] यक्ष-किंपुरुषाणां च[९] पितॄणां वाम-लोचने[१०] ॥[११]५४॥ [N
गन्धर्वाणां स-नागानां पिशाचानां तथैव च ।
श्रेष्ठानां देव-योनीनां सन्निधौ यद् मया श्रुतम् ।
N] तत् तेऽहं संप्र-वक्ष्यामि परमेष्ठि-वचस् तदा[१२] ॥५५॥ [N
रावणेन जितो[१३] भद्रे शक्रः सुर[१४]-गणैः सह ।[१५]
१....................................
तन् मे हृतं महा[१६]-राज्यं हस्ताद् बिल्वम् इवाऽऽहितम् ।
N] रावणेन मुनिर्-जित्य[१७] बद्ध्वा[१८] नीतोऽस्मि स्वां पुरीम् ॥५६॥ [N

---

१. रा ब म ल$_1$—०करो २. ल$_1$—ब्रह्मन्तव ॥ ३. प्र—स च । ४. प्र—वर । ५. आ—०करस् ॥ ६. आ—एवम् । ७. रा प्र ब म ल$_1$ ल$_2$—भगवान् । ८. आ—कैकशि । रा—कैकषि । ९. च—वै । १०. च—०लोचन । ११. आ—पितॄणां च विशालाक्षि यक्ष-किंपुरुषामपि । १२. आ—तव ॥ १३. आ रा—जिते । १४. रा—शुर० । १५. अतः परं पाठस्त्रुटित इवाभाति । १६. ल$_2$—मया राज्यं । १७. रा ब प्र म ल$_1$ ल$_2$—च निर्जित्य । १८. आ रा ब ल$_2$—बद्धा ॥

वि-मुक्तस् तव वाक्येन निर्-लज्जः[1] पुनर् आ-गतः ।
N] त्रिदशेषु महा-बाहो राज्य-कामो ह्य् अहं तदा[2] ॥५७॥ [N
एतत् ते कथितं सर्वं मम[3] दुःखं तव प्रभो ।
N] त्वं प्रमाणं महा-बुद्धे यन्[4] नः श्रेयस् तद् उच्यताम् ॥५८॥ [N
एवम् उक्तस् तदा ब्रह्मा कौशिकेन[5] महाऽऽत्मना[6] ।
उवाच वचनं सूक्ष्मं सर्व-लोक-हितं तदा ।
N] काले सुर-गुरुर् ब्रह्मा कौशिकाऽऽख्याय शृण्वते[7] ॥५९॥ [N
शृणु कौशिक भद्रं ते यत्[8] त्वां वक्ष्यामि सु-व्रत ।
N] सर्वं[9] श्रुतं[10] मया शक्र तव संग्राम-कारणम् ।
निर्-जितश् चा[11]ऽसि सं-ग्रामे तच्[12] च[12] मे विदितं[13] ततः[13] ॥६०॥ [N
प्राप्तो[14]ऽरिर् दुष्ट-दुर्मेधा रावणो लोक-रावणः ।
N] कृतांत[15]-पाशाऽसि-धरश्[15] चण्डस्[16] तीक्ष्ण-तरो ध्रुवम्[17] ॥६१॥ [N
वर-दान-बलोत्[18]-सिक्तो दुर्[19]-धर्षो रावणो मम[19] ।
N] तं[20] गच्छाम महा-बाहो[20] विष्णुम् अ-प्रतिमौजसम्[21] ॥६२॥
शंख-चक्र-गदा-पाणिं वरं[22]-चन्दन-भूषितम् ।

---

१. आ–निर्लज्ज । २. च रा प्र ब म ल१ ल२–तव ॥ ३. रा–समदुःखं । ४. प्र रा ब म ल१ ल२–यत्तच्छ्रेयस् ॥ ५. प्र रा ब म ल१ ल२–काश्यपेन । ६. रा प्र ब म ल१ ल२–महात्मा। ७. च रा–शृणुते । ८. च–यस् । ९. रा–सर्वैः । १०. प्र–शत्रुं । ११. आ च–चापि । १२. आ–तव । १३. च–विदितम तव । १४. प्र–प्राप्तारिं । १५. च–कृतां पाशासिधरश् । १६. च–चंड । १७. आ–ससितश्चैव मृत्योर्दंडान्तरं गतः । १८. आ–॰सिक्तः । १९. आ–दत्तस्तस्मै मयानघ । २०. ब प्र च ल१–ते गच्छत मया सार्द्धं । रा–तं गच्छाम । ल२–तं गछत मया सार्धं । २१. रा ल२–अप्रतिमोजसम् । २२. प्र–वरं च॰ ।

N] वर-चाप-धरं देवं वीरं[2] श्रीवत्सलक्षणम्[3] ॥६३॥ [N
कौस्तुभोद्-भाषित-तनुं श्रियाऽऽलयम्[4] अन्-उत्तमम् ।
N] अतसी-पुष्प[5]-संकाशं पीत-वाससम् अ-च्युतम् ॥६४॥ [N
गरुड[6]-पृष्ठम् आसीनं पुण्डरीक-निभेक्षणम् ।
N] देव-देवं[7] महा-भागं विष्णुं निर्-जरम्[8] अ-व्ययम् ॥६५॥ [N
योग-सांख्योपनिषदैस्[9] त्रिदशैः सम्-अभिष्टुतम् ।
पुरुषं परमं विष्णुम्[10] अनन्तं सर्वतो-मुखम् ।
N] धर्म-सेतु-प्रवक्तारं सुराणां च हिते रतम् ॥६६॥ [N
तं[11] गच्छामि[11] [12]हरिं देवं सर्व-देव-नमस्कृतम्[13] ।
N] यद् वि-धास्यति नो नाथस् तत् कार्यम् अ-विशङ्कया ॥६७॥ [N
एवम् उक्ताः सुराः सर्वे उत्तस्थुर्[14] अ-मितौजसः ।
N] विमानैः सूर्य-सङ्काशैर् हंस-बर्हिण-वाहिभिः ॥६८॥ [N
ब्रह्माणम्[15] अग्रतः कृत्वा गतास् ते क्षीर-सागरम् ।
N] आ-स्थिता[16] एक-देशे[16] तु समे भूमि-तले तदा ॥६९॥ [N
तपस्य् उग्रे महाऽऽत्मानं(?नः) योजयंस् तदा[17] सुराः[17] ।

---

१. आ रा च ब प्र ल$_2$–वीरं । २. च–नास्ति । रा ब–वरं । प्र ल$_2$–देवं । आ–वीर । ३. च रा ब म ल$_1$ ल$_2$–०लांछनम् । ४. अत्रेयङ् आर्षः द्र० । ५. रा–अतसिपुष्पसंकासं । ६. प्र रा ब म ल$_1$ ल$_2$–गरुत्मत्पृष्ठम् । ७. आ–०देवम । ८. च–ह्यजयम् । रा म ल$_1$–ह्यभयम् । प्र ल$_2$–हृदयम् । ९. आ–योगसाध्योप० । रा ब प्र म ल$_2$–योगिसाध्योप० । १०. आ–विश्वम् । ११. आ–तद् गच्छाम । प्र ल$_2$–तं गच्छथ । १२. रा ब म ल$_1$–वयं । १३. आ–सर्वदेवं न० । १४. म च ल$_1$–उत्तस्थौ । १५. आ–ब्रह्मणम् । १६. प्र ल$_2$–आगता । १७. आ–तदासुनाः ।

N] आत्मानं ते महाऽऽत्मानं देव-देवं[1] दिदृत्तवः ॥७०॥ [N
ततोऽनेके[2]-शते काले[3] वाग्[4] उवाचाऽशरीरिणी ।
N] दुन्दुभि-स्वन-निर्घोषा[5] हर्षयन्ती दिवौकसः[6] ॥७१॥ [N
उत्तिष्ठ भगवन्[7] विष्णो कुरु कार्यं[8] महा-बल[9] ।
N] देवानां भय-भीतानां अ-भयं दातुम् अर्हसि ॥७२॥ [N
रावणं स-गणं देव त्वं नि-षूदय[10] दुर्-मतिम् ।
N] मानुषं[11] रूपम् आ-स्थाय जहि शत्रुं दुरा-सदम् ॥७३॥ [N
एवम् अस्त्व् इति धर्माऽऽत्मा जातो[12] रघुषु वीर्यवान् ।
N] चतुर्धा[13] वि-भज्याऽऽत्मानं[13] देवश् चक्र[14]-गदा-धरः ॥७४॥ [N
सर्वे ते त्रिदशा जाता वानरीषु महा-बलाः ।
N] ऋक्षीषु[15] च महाऽऽत्मानो देव-पुत्रा मदोत्कटाः ॥७५॥ [N
स एष नृप-शार्दूलो जातो रावण-निग्रहे ।
N] कुलस्य च वि-नाशाय[16] अस्माकं[17] वत्स[18] सांप्रतम् ॥७६॥[19] [N
तव पित्रा च वि-ज्ञप्तो वंश-स्थित्यै पितामहः ।
N] अस्माकं सं-ततिः[20] कस्माद्[21] अवि-च्छिन्ना भविष्यति॥७७॥[N

---

१. च-०देव । २. आ-ततो देशशते । च रा ब म ल$_1$ ल$_2$-गतेऽ० । प्र-गतेऽनेके शते । ३. रा-कालं । ४. आ-वागुशरीरिणी । ५. ल$_1$-०निर्दोषा । ६. रा ब-०कसाः । ७. रा ल$_2$-भगवान् । ८. ल$_2$-कल्पं । ९. आ-०बलः । च-०बला । १०. रा-निसूदय । ११. प्र-मानुष्यं । १२. ल$_2$-जातोऽयं रघुवी० । १३. रा ब म ल$_1$ ल$_2$-विभक्ताऽऽत्मा चतुर्धा च । प्र-त्रिभक्ता चतुर्धा वपुर् । च-०र्धा विभजात्मानं । १४. रा-चक्रं गदा० । १५. प्र-ऋक्षेषु । १६. विवक्षाऽभावादसन्धिः द्र० । १७. प्र अ-सस्माकं । १८. आ-च स । १९. आ-अतः परं तवेत्यारभ्य ०जीवी भविष्यतीत्यन्तः पाठो नास्ति । २०. रा-सन्ततेः । २१. ल$_2$-साक्षाद ॥

तत्र वंश-धरः[1] सम्यग् भविष्यति वि-भीषणः[2] ।
N] नारायणात् प्राऽऽप्त-राज्यो यावच् चंद्राऽर्क-भूमयः ॥७८॥ [N
श्रीराम-वचनाच् चैव चिरं[3]-जीवी भविष्यति[4] ।
N] त्वं चा[5]ऽपि ब्रह्मणः[6] प्रोक्तो राजा लंकेश्वरः प्रभुः ॥७९॥ [N
त्वं गच्छ रामं धर्म-ज्ञं[7] लोक-रामं महा-बलम् ।
N] स ते प्राणांस् तथा राज्यं दास्यते रघु-नन्दनः ॥८०॥ [N
यावच् चंद्रश् च सूर्यश् च यावत् तिष्ठति मेदिनी[8] ।
तावल् लंकेश्वरस् त्वं हि एतद् एव मया श्रुतम् ।
N] तव पित्रा मुखोद्-गीर्णं[9] न[10] स्नेहाद् गदितं[11] मया ॥८१॥ [N
तद् गच्छ पुत्र भद्रं ते विजयायाऽरि-सूदन ।[12]
N] अहं च[13] स्वस्ति-निरतो[14] तव नित्यं महा-बल ॥८२॥ [N
एवम् उक्तस् तु धर्माऽऽत्मा मात्रा[15]ऽऽपृच्छ्य च तां तदा ।
N] अभिवाद्य च[16] धर्मेण उत्[17]-पपात स राक्षसैः[18] । [N
४३] जगामाऽऽकाशम् आ-स्थाय यत्र रामो महा-बलः ॥८३॥ [१उ

---

१. रा—वंशधर शम्यग् । २. ल$_1$—न संशयः । ३. च—जीवि । ४. च—भविष्यति । ५. च रा प्र ब म ल$_1$ ल$_2$—तचैव । ६. आ च—ब्रह्मणाप्युक्तो । ७. रा प्र ब—०ज्ञ । ८. ब—मेधिनी । ९. रा—०गीर्णां । १०. रा प्र ब म ल$_1$ ल$_2$—त्वत् स्ने० । ११. आ—वदितं ॥ १२. अतः परमधिकः पाठः—च रा प्र ब म ल$_1$ ल$_2$—स्वस्ति करोतु ते ब्रह्मा त्रिनेत्रश्च महेश्वरः । शङ्खचक्रगदापाणिः पुराणपुरुषोत्तमः । १३. च—तु । १४. च रा—स्वस्तिरता ॥ १५. आ—पृच्छ्य वीर्यवान् । च—मातामापृच्छ्य वीर्यवान् । प्र—मात्रापृछ । म ल$_1$—मात्रापृच्छ । १६. आ रा—स । १७. अविवक्षातोऽसन्धिः द्र० । १८. रा प्र ब म ल$_1$ ल$_2$—राक्षसः ॥

तं मेरु-शिखराऽऽकारं[1] ज्वलन्तम्[2] इव पावकम् ।
४४] गगन-स्थं मही-स्थास्[3] ते[3] ददृशुर्[4] वानराऽधिपाः ॥८४॥ [२
आत्मना पंचमं दृष्ट्वा सु-ग्रीवो वानराऽधि-पः ।[5]
४७] वानरैः सह दुर्-धर्षश्[6] चिन्तयामास बुद्धि-मान् ॥८५॥ [५
चिन्तयित्वा मुहूर्तं च[7] वानरांस्[8] तान् उवाच ह ।
४८] हनुमत्-प्रमुखान् वीरान्[9] इदं[9] वचनम्[10] अब्रवीत् ॥८६॥ [६
एष सर्वाऽऽयुधोपेतश्[10] चतुर्भिः[10] सचिवैः[11] सह ।
४९] राक्षसोऽभ्य्[12] एति[12] पश्यध्वम् अस्मान्[13] हन्तुं न संशयः[14] ॥८७॥[७
सु-ग्रीवस्य वचः श्रुत्वा सर्वे ते वानरर्षभाः ।
५०] शैलान्[15] उत्पाट्य[15] शैलांश्[16] च सु-ग्रीवम् इदम् अब्रुवन्[17] ॥८८॥ [८
व्या-दिशाऽस्मान्[18] वधायैषां[19] राक्षसां[20] वानरेश्वर[21] ।
५१] नि-पतन्तु[22] हता[23] यावद्[23] धरण्याम्[24] अल्प-चेतसः ॥८९॥ [९

---

१. फ–मेरुशिषराकारं । २. रा–ज्वलनामिव ॥ ३. प्र–मही-स्थस्तु । ४. प्र–ददृशे वानराऽधिपः । च–वानराधिप । ५. प्र–नास्ति । ६. म–दुर्धर्षं ॥ ७. आ–स । ८. प्र. वानरस् । ९. फ अ–सर्वान् । रा–सर्वान्निदं । १०. च रा ब म ल$_1$ ल$_2$ अ–उत्तमम् ॥ ११. आ–शाचिवैः । १२. फ–राक्षसो याति । रा–राक्षस्योऽभ्येति । १३. आ फ रा–अस्मां । १४. फ–हन्तुमसंशयम् । १५. च–शाखामुत्पाद्य । आ–उत्पाद्य । फ–उद्यम्य । रा–शाखादुत्पाद्य । प्र ब–शाखा उत्पात्य । अ–शैलानुत्पाद्य । १६. अ–वृक्षांश्च । १७. प्र ब–अब्रवीत् । १८. फ–व्यादिशेषां । ब रा–व्यादिश्यास्मान् । १९. च ब रा प्र म ल$_1$ ल$_2$–बंधे चैषां । आ–बधायेषां । अ–अस्मानिमान्हन्तुं । २०. आ च–राक्षसां । अ–राक्षसा । २१. रा ब–०रः । २२. अ–०ति । २३. आ–सहास्माभिर् । २४. च–धरायाम् । म–धरिण्याम् ॥

तेषां सं-भाषमाणानाम् अन्योऽन्यं स वि-भीषणः ।
९२] सागरस्योत्तरे पारे खे एव समुप-स्थितः ॥९०॥ [१०
N] युद्धोद्यतेषु शत-शो वानरेषु स्थितेषु च ।
उवाच स महा-प्राज्ञः स्वरेण महता महान् ।
९३] सु-ग्रीवं वानरैः सार्थ(? र्धंस)मवेक्ष्य वि-भीषणः ॥९१॥ [११
भो भोः शाखा-मृगाः सर्वे वचनं मे नि-बोधत ।
N] रामायाऽऽख्यातुम् इच्छामि कोसलेन्द्राय धीमते ॥९२॥ [N
४९उ] रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ।
५९उ] तस्याऽहम् अनु-जो भ्राता वि-भीषण इति श्रुतः॥९३॥ [१२
N] चतुर्भिः सचिवैः सार्द्धम् आ-गतोऽहं न संशयः ।
९४पू] प्राप्तोऽहं राघवं द्रष्टुम् इति मां वेत्थ वानराः ॥९४॥ ]N
९९पू] येन सीता जन-स्थानाद् हृता हत्वा जटायुषम् ।
N] रुद्धा च विवशा दीना राक्षसीभिः सु-रक्षिता ॥९५॥ [१३

---

१. रा–सम्भाष्य० । ब–सम्भाष्यमानानाम् । २. रा–०स्योत्तर-पार्श्वे । ३. च–स एव । रा प्र ब म ल$_1$ ल$_2$–सद्य एव । अ–सचिवैः । ४. रा प्र ब म ल$_1$ ल$_2$–ह्युपस्थितः । अ–सहावस्थितः । ५. आ–युद्धोद्धातषु । च–युद्धोद्धतेषु । ल$_2$ अ–युद्धोद्धतेषु । ६. फ–भल्लूकवानरेषु च । प्र ०षु शतेषु च । ७. च रा ब प्र म ल$_1$ ल$_2$–सहसा प्राज्ञः । अ–समहा० । ८. आ रा ब प्र ल$_1$ ल$_2$–वानरांस्तांश्च खस्थ एव । म–वानरे सार्द्धमवक्ष्य एव । अ–वानरांस्तांस्तु खस्थ एव । ९. रा–मृगास् । १०. रा–नास्ति । ११. प्र–रामाय ख्यातुम् । १२. प्र–कौशलाय च । ल$_2$–कोसलेशाय । १३. अ–रावणस्तु महाराजो । १४. ल$_2$–रावणो । १५ आ–आगतो ह । १६. रा–शंसयः । १७. प्र–वानर । १८. आ–मां विद्धि । १९. फ–भो वेत्थ । प्र–मां...त्थ । अ–वेत्थ मामिति । २०. च–क्षीना ॥

तम् अहं विविधैर्[1] वाक्यैर्[1] हेतुभिश्[2] च नि-दर्शयन्[2] ।
९६] उक्तवान् बहु[3]-शो वाक्यं सीता निर्-यात्यताम् इति [4] ९६॥[१४
स च न प्रति-जग्राह रावणः काल-चोदितः[5] ।
९७] उच्यमानो हितं वाक्यं मुमूर्षुर् इव भेषजम् ॥९७॥ [१५
N] ततो[6]ऽहं भृशम्[7] आ[7]-क्रुष्टो रावणेन दुर्-आत्मना ।[8] [N
तथा[9] परुषितस्[10] तेन[10] दासवच् चाऽव-मानितः ।
९८] त्यक्त्वा मित्राणि दारांश् च राघवं शरणं गतः ॥९८॥ [१६
रावणस्यो[11]ऽव-लिप्तत्वाद् धर्मम् एव सम[12]-आ-श्रितः ।
९९] सहैभिः सचिवैर्[13] भक्तै रामं[13] शरणम् आ-गतः ॥९९॥ [N
न हि मे जीवितेनाऽर्थो नार्थैर्[15] अर्थस् तथा[14] सुखैः ।
१००] तद्[15] अहं सर्व-संत्यागात् त्राणं[16] रामाद्[17] अवाऽऽप्नुयाम्[18] १०० [N
चोद्य[19]-मानो हि बहु-शो मया धर्माऽर्थ-संयुतम्[20] ।

---

१. रा ब-विविधै वाक्यै । २. च-निदर्शनम् । रा ब म ल$_1$-निदर्शनैः । ल$_2$-हेतुभि विनिश्चितैः । ३. च-बहुषो । ४. प्र-द्वितीय-तृतीयपादौ न स्तः । ५. फ च ल$_2$ अ-०नोदितः । ६. फ च रा ब म ल$_1$ ल$_2$-तेनाहं । ७. प्र ल$_2$-भृशविक्रुष्टो । आ-आक्रुद्धो । ८. फ-भिन्नाः-श्लोकार्धमेतत्पूर्वश्लोकोत्तरार्धात्पूर्वं पठन्ति । तथात्वेऽस्य भिन्न०क्रमता द्र० । ९. आ रा-सोहं । १०. फ-परुषितो मोहाद् । रा-परुषीतस् । ११. आ-रावणस्यावलेयत्वाद् । १२. फ-समास्थितः । शचिवैर् । १३. आ च-रामशरणम् । १४. आ-तदा । १५. रा प्र ब म ल$_1$ ल$_2$-यद् । १६. अ-०गात्त्राणार्थं । १७. आ च रा प्र ब म ल$_1$ ल$_2$ अ-रामम् । १८. आ-आप्नुयान् । रा प्र-अवाप्नुयात् । १९. ब-०माने । अ-नोद्यमानो । २०. रा ब-महाधर्मार्थसंचयम् । च प्र म ल$_1$ ल$_2$-धर्मार्थसंचयम् । अ-धर्मार्थ-संश्रितम् ।

६१] न[1] वाचो गृह्णाति[1] भृशं भक्ष्यं[2] विष[3]-कृतं यथा[4] ॥१०१॥ [N
जानन्न्[5] अपि हि तस्याऽहं[5] वीर्य-पौरुष[6]-विक्रमान् ।
६२] रावणस्य नृ-शंसस्य विबुधैर्[7] अपि दुःसहान्[8] ॥१०२॥ [N
धर्मम् एवं[9] समा[9]-श्रित्य न ज्ञाति-वध-कांक्षया ।
६३] हित्वाऽहं स्व-जनं सर्वं राघवं शरणं गतः ।[10]
६४पू] सर्वथा शुद्ध[11]-भावोऽहं न मां शंकितुम् अर्हथ ॥१०३॥ [N
नि-वेदयन्तं[12] मां क्षिप्रं राघवाय महाऽऽत्मने ।
६५] सर्व-लोक-शरण्याय वि-भीषणम् उप-स्थितम् ॥१०४॥ [१७
एतत्[13] तु[13] वचनं श्रुत्वा सु-ग्रीवो वानरेश्वरः ।
६६] लक्ष्मणस्याऽ[14]ग्रतो रामम् इदं वचनम् अब्रवीत् ॥१०५॥[१८
रावणस्याऽनुजो वीरो[15] वि-भीषण इति श्रुतः ।
६७] चतुर्भिः सचिवैः सार्द्धं शरणाऽर्थं किलाऽऽगतः[16] ॥१०६ [१९
रावणेन [17]प्रणि-हितं त्वम्[18] अवेहि वि-भीषणम् ।
६८] तस्य सं-ग्रहणं मन्येऽक्षमं[19] क्षम(?मा)[20]वतां वरं[21] ॥१०७॥ [२६
राक्षसो जिह्मया[21] बुद्ध्या [22]सं दुष्टोऽयम्[22] उपस्थितः ।

---

१. रा ब म ल$_1$ अ–वाचो न गृह्णाति । प्र–व वाचो गृह्णाति । च ल$_2$–वाचो गृह्णाति न । २. च–भक्षं । ३. अ–कृतं विषं । म–नास्ति । ४. च–तथा । ५. रा–जानपि तस्याथ । फ–जानन्नपि च त० । ब–हि तस्याथ । ६. म–वीर्यं विक्रमपौरुषम् । फ ल$_1$–०विक्रमाम् । रा–०विक्रमात् । ७. आ–विबुधेर् । ८. फ अ–दुःसहम् । ९. म–एवाहमाश्रित्य । १०. आ–नास्ति । ११. फ–हित-भावोऽहं । रा–शुद्धस्वभावोऽहं । १२. रा–निवेदयदुः । १३. प्र–एवं तद् । १४. आ–०स्याग्रजं १५. फ–वीर । १६. प्र–किलमागतः । १७. अ–प्रति० । १८. आ फ ब म अ च–त्वमवेहि । १९. फ–रक्षसं रक्षसानां । म–न क्षमं । रा प्र ब–क्षमं क्षयवतां । २०. ब–वरः ॥ आ फ–जिह्मया । २२. आ च अ–संदुष्टोऽयं । प्र–संदुष्टे यद् ।

६९] प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नम्[1] अथवाऽनघ ।।१०८।। [२७
वध्यताम् एष दण्डेन तीक्ष्णेन सचिवैः[2] सह ।
७०] रावणस्य नृ-शंसस्य भ्राता पापो वि-भीषणः ।।१०९।। [२९
एवम् उक्त्वा तु तं रामं सु-ग्रीवो वाहिनी-पतिः ।
७१] वाक्य[2]-ज्ञो वाक्य-कुशलस्[3] ततो मौनम् उप[4]-स्थितः।।११०।।[३०
७२पू] तस्मिन् मौनम् अनु-प्राप्ते सु-ग्रीवे राघवस् तदा । [N
सु-ग्रीवस्य तु[6] तद् वाक्यं रामः[7] श्रुत्वा वि-मृश्य च[6] ।[8]
N] ततः सुग्रीव-सचिवान्[9] इदं वचनम् अब्रवीत् ।।१११।। [३१
परवान् अस्मि सर्वेषु भवत्सु[10] हित-बुद्धिषु[10] ।
N] अनु-ष्ठेयं मया[11] किंचिद् इह प्राप्ते[12] वि-भीषणे ।।११२।। [N
तद् वक्तुम् अर्हन्ति[13] हि[14] मे[14] भवन्तः
श्रेयोऽर्थिनः[15] श्रेयसि सं-नियुक्ताः[16] ।

---

१. फ–प्रछन्नः स तवानघ । ब–प्रछन्ने सर्वथानघ । म–प्रछन्नं मयि वानघ । अ–प्रछन्नो मयि वानघ । २. रा प्र ब ल$_1$–०ज्ञं । ३. फ–०कालज्ञस् । ४. च–उपास्थितः । रा प्र ल$_1$ ल$_2$–उपाश्रितः । अ–उपागतमत् । ५. अतः परमधिकः पाठः–फ च प्र म ल$_2$–धर्ममेवाग्रतः कृत्वा विमर्षमगमत्तदा । ६. रा च ब प्र ल$_1$ ल$_2$ अ–च । ७. फ–श्रुत्वा रामो महामतिः । म–रामो महीपतिः । रा च ब ल$_1$ ल$_2$ अ–विमृष्य च । ८. अतः परमाधिकः पाठः–फ च प्र ल$_2$–सम्यग्विममृषे श्रीमान्सुमुहूर्तमिवान्तरम् । फ च प्र म–स तत् कपीश्वरवचो रामः श्रुत्वा विमृष्य च । ९. म–०सचिवम् । १०. प्र ल$_2$–भवत्प्रहित० । ११. ल$_1$–च यत् । १२. आ–प्राप्तो विभीषणः । १३. च रा–अर्हति । १४. च–हे । रा–ते हि । प्र–हि वै । ल$_2$–०न्ति......हि भ० । १५. च–श्रेयोर्थिनां । ब–श्रेयार्थिनः । ल$_1$–श्रेयोस्थित । १६. च–सन्ति युक्ताः

---

१. रा ब म ल$_1$–दैवमे० । च–वर्गमे० । प्र ल$_2$–तमेव चा० ।
२. च रा ब प्र–०रक्षणात् । ल$_1$ ल$_2$–०रक्षणं ।
३. च ल$_2$–विधिमुखे धी० । प्र–विधमुखे धी० ।

यत् प्राप्त-कालं च[1] हितं च मत्वा

N]　　　कालोप-पन्नं च विचार्य सर्वम्[2] ॥११३॥ [N

इत्यार्षे[3] रामायणे सुन्दर-काण्डे विभीषण[4]-गमनं
नामैकनवतितमः सर्गः ॥९१॥

---

१. आ–विहितं । फ–विदितं । २. आ फ ल२–सर्वे । ३. आ फ–आर्षे । ल२–इति सुन्दर० । अ–सुन्दरकाण्डे । ब–इत्यार्षे रामायणे । ४. आ फ–लंकापर्वणि विभीषण० ॥

१पू] प्राप्तं वि-भीषणं श्रुत्वा[1] रामः[2] सु-ग्रीवम् अब्रवीत् ।
N] स्मयन्न्[3] इव[3] स्पृशन् हस्तं[4] हस्तेनाऽमित्र-तापनः[5] ॥१॥ [N
N] हरि-श्रेष्ठ महा-बाहो वचनं[6] श्रूयतां[6] मम ।
१उ] आ-नृशंस्ये[7] तदात्वे[8] च आयत्यां[9] चैव सं-श्रितम्[10] ॥२॥ [N
आस्यताम्[11] इह[11] सु-ग्रीव[12] सचिवांश् च समा-ह्वय[13] ।
२] हनुमत्-प्रमुखान्[14] सर्वान् अन्यांश्[15] च हरि-यूथपान् ॥३॥ [N
तैः समर्थैश्[15] च वक्तव्यं[16] करिष्यामि परीऽऽक्षणम् ।
३] सम्यग् वदसि सु-ग्रीव राजानो[17] हि बहु-च्छलाः[18] ॥४॥ [N
तस्माद् एकैक-शस्[19] तावद्[20] ब्रुवन्तु[20] सचिवास्[21] तव[21] ।
८] हेतु-तो[22] मति-संपन्नाः[22] सं-मतांश्[23] च पुनः पुनः ॥५॥ [३७

---

१. फ-मत्वा । २. रा-राम । ३. फ-स्मरन्निव । ४. च-हस्त । फ रा प्र ब म ल१ ल२-हस्ते । ५. च प्र ल२ अ-रामो वै शत्रुतापनः । ब रा म ल१-राघवः शत्रुतापनः ॥ ६. फ-समीपं वचनात् । ७. रा-०से । ८. फ-तदर्थे । च-तदात्ते । ९. फ च रा प्र ब म ल१ अ-आयत्या । १०. फ-संस्थितम् । अ-संमृशम् ॥ ११. आ च रा प्र ब ल१ ल२-श्रूयतामिति । अ-आस्यातमिति । १२. आ प्र ल१ ल२-सुग्रीवं स० । १३. च-समाह्वयन् । रा प्र ब ल१ ल२-समाह्वयत् । १४. आ च-हनुमान्प्रमुखान् । १५. च-अनन्यांश्च ॥ १६. आ-समर्थैति कर्तव्यं । फ-संमंत्र्येति कर्तव्यं । अ-समर्थैति संमन्त्र्ये । १७. अ-राक्षसा । १८. प्र-बहुलांछनाः । म-बहुश्रुताः ॥ १९. च-एकैकसस् । २०. आ-तावब्रु० । च-ब्रुवेन्तु । २१. च रा प्र ब म ल१-साचिवांस्तव । २२ प्र-हेतुतः सम्पन्नाः । २३. च-समस्तास् । रा ब म-समंताच् । प्र-समंतास् ।

ततः सुग्रीव-वचनात् सम्[1]-ईयुर् वानरर्षभाः ।
४] सर्वे शास्त्र-विदः शूरा देव-पुत्राः प्र-हारिणः[2] ॥६॥ [N
९पू] वि-भीषणस्य ते[3] वाक्यं[3] श्रुत्वा तु[4] हरि-यूथपाः ।
N] प्रणम्य शिरसा[5] रामं स्थिताः[6] प्राऽञ्जलयस्[7] तदा[7] ॥७॥ [N
९उ] सोपचारं ततो रामम् ऊचुः प्रिय-चिकीर्षवः । [३४उ
अ-ज्ञातं नाऽस्ति ते[8] किञ्चिन् त्रिषु लोकेषु राघव ॥८॥
६] महा-भाग्याद् आत्मनस् तु पृच्छस्य[9] अस्मान् सुहृत्[9]-तया । [३५
त्वं हि सत्य-व्रतः[10] शूरो धार्मिको दृढ[11]-विक्रमः ।
७] परीऽऽक्ष्य[12]-कारी मतिमान् निसृष्टाऽऽत्मा[13] महा-द्युतिः ॥९॥ [३६
तस्मात्[14] स्वं स्वम् अभि-प्रायं[14] त्वां[15] ब्रुवन्तु[15] प्लवं-गमाः ।[16]
N] पृथक् पृथक् परीऽऽत्ताऽर्थं[16] यं[17](?त) क्षेमं[17] यच्[18] च नो हितम् १० [N
इत्य्[19]-उक्ते राघवः[20](?वे) सर्वैर्[21] हरिभिर् हरि-यूथपैः ।
९] मति-मान् अङ्गदो वाक्यम् इदं रामम् उवाच ह ॥११॥ [३८
शत्रोः सकाशात् सं-प्राप्तः[22] सर्व-था[23] तर्कयताम्[24] अयम्[24] ।

---

१. रा-मुदीयुर् । २. अ-प्रहर्षिणः । ३. ब प्र ल$_2$-वाक्यं च । ४. फ-प्राग् । ब-स । प्र ल$_2$-च । ५. आ ल$_2$-सिरसा । ६. रा प्र ल$_1$ अ-स्थिताः । ल$_2$-स्थितः । ७. ल$_2$-प्रांजलयः सदा ॥ ८. फ-ते नास्ति । प्र-नास्त्यतो । ९. ब-आपृच्छयास्मा सुहृत्तया । च-पृछस्मात्सुलहत्तया । आ-पृछस्यस्मात्सुहृत्तया ॥ १०. अ-०वचः । ११. प्र-दृढ० । १२. रा-परीत्यकारी । १३. फ-निविष्टात्मा । च-वृश्चलात्मा । रा-निष्टात्मा । प्र ब म ल$_1$ ल$_2$-निश्चलात्मा ॥ १४. अ-तस्मादेकैकज्ञस्तावद् । १५. रा प्र ब म ल$_1$ ल$_2$-प्रब्रुवन्तु । आ-ब्रुवन्तं । १६. अतः परमधिकः पाठः-च रा प्र ब ल$_1$ ल$_2$-ते हेतु. मतिसंपन्ना समस्ताश्च पुनः पुनः । १७. च-यन्नयं । रा प्र ब म ल$_1$ ल$_2$-यद्धितं । १८. आ प्र ल$_2$-यश्च । १९. आ च-इत्युक्तो । २०. म-राघवं । २१. च म-सर्वे । २२. प्र-सम्प्राप्तात् । २३. ब-०तस् । २४. आ-तर्किता वयम् । रा-तर्कतामयम् । ब-तत्कृतामयम् । अ-तर्कितो मया । मया ।

१०] विश्वासो हरि-सैन्येन[1] न[2] कर्तव्यः[2] कथंचन[3] ॥१२॥ [३९
छादयित्वा[4]ऽऽत्मनो भावं चरन्ति[5] शठ-बुद्धयः ।
११] प्र-हरन्ति च रन्ध्रेषु[6] सोऽनर्थस्[7] च[8] कृतो भवेत् ॥१३॥ [४०
अर्थाऽनर्थौ[9] विनिश्-चित्य व्यव-सायो[10] भवेद् इति ।
१२] गुण-तः सं-ग्रहं कुर्याद् दोष-तस्[11] च वि-वर्जयेत्[11] ॥१४॥ [४१
यदि दोषो महान् अस्मिंस्[12] त्यज्यताम् एव शङ्कया[12] ।
१३] गुणान्[13] वाऽपि[13] बहून्[14] ज्ञात्वा[14] सं-ग्रहः[15] क्रियताम् इह[16] ॥१५॥[४२
शरभस्[17] त्व् अथ सं-चिन्त्य[18] हरिर् वचनम् अब्रवीत् ।
१४] क्षिप्रम्[19] अस्मै[19] नर-व्याघ्र चारः प्रतिवि-धीयताम् ॥१६॥ [४३
प्रणि-धाय[20] हि[20] चारेण ततो भावः परीऽऽक्ष्यते[21] ।
१५] परीऽऽक्ष्य च तथा[22] कार्यं[22] यथा न्याय्यं[23](?य्यः)परि-ग्रहः १७[४४

---

१. फ-ह्यपरिक्षेषु । अ-हरिसैन्येषु । २. । च-न कर्तव्यं । ३. फ अ-कदाचन । ४. फ-छादयित्वात्मभावं हि । ५. अ-वदन्ति । ६. आ-रंधेषु । ७. फ-सोनर्थः स्वकृतो । च रा प्र ब म ल१ ल२ अ-सोऽनर्थस्तत्कृतो । ८. ब-०तोऽभवत् ॥ ९. आ-अर्थानर्थौ । १०. म ल२ अ-व्यवसायं भजेद् । ११. फ-दोषतस्तु विसर्जयेत् । आ-विवार्जयेत् ॥ १२. रा-अस्मिस्तजगतामविशङ्कया । प्र-अस्य त्याज्यता॰ मविशङ्कया । ल२-अत्यज्यतामविशङ्कया । फ-त्यज्यतामधिशंकितम् । च-त्यज्यतामेष शङ्कया । प्र ब म ल१-त्यज्यतामधिशङ्कया । अ-त्यज्यतामेष सर्वथा । १३. फ-गुणाश्चापि । अ-गुणा नापि । प्र-गुणान् । १४. आ-बहून्वा त्वं । प्र-बहून्ज्ञात्वा च । १५. प्र-संग्राह्यः । १६. रा ब म ल१ अ-इति ॥ १७. आ-सरभस् । १८. फ-निश्चिन्त्य । प्र- संचित्वा । १९. च-क्षिप्रं तस्मै ॥ २०. च अ-प्रणिधायाभिचा० । प्र रा ब ल१ ल२-प्रणिधायाथ । २१. फ अ-०तां । २२. आ-यथा कार्यौ । च अ-तथा कार्यौ । २३. प्र रा ब म ल१-यथान्यायः । ल२-तथान्यायः ॥

[1]जांबवांस् त्व् अथ सं-प्रेक्ष्य शास्त्र-बुद्ध्या वि-चक्षणः।
१६] वाक्यं वि-ज्ञापयामास गुणवद् दोष-वर्जितम् ॥ [2]१८॥ [४६
बद्ध-वैरश् च [3]पापश् च राक्षसेन्द्रो वि-भीषणः । [4]
१८] अ-[5]देशकाले संप्राऽऽप्तः सर्व-था [6]शङ्क्यताम् [6]अयम् । [7]
N] यस्य न स्व-जने प्रीतिः कुतस् तस्य परे जने ॥ [8]१९॥ [N
अथ मैन्दो महा-बुद्धिर् नयाऽपनय[9]-कोविदः ।
१९] वाक्यं परम-संपन्नं बभाषे सं-हताऽञ्जलिः ॥२०॥ [४७
[10]वचनं नाम त[10]स्यैव [11]राक्षसस्य वि-भीषणः । [12]
२०] पृच्छ्यतां परमो[13]पायं शनैर् न[13]र-पते स्वयम् ॥ २१॥ [४८
[14]भावम् अस्या[14]ऽथ विज्ञाय त[15]त्त्व-तस् तव् करि[15]ष्यसि ।
२१] इति दुष्टो [16]न दुष्टो वा वाक्य[17]-साऽऽकारम् ऊर्जित[17]म्॥२२ [४९

---

१. आ–जाम्बवांस्तथ । २. ल$_1$–नास्ति । ३. प्र–पापैश् । ४. फ म–बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः । ल$_1$–नास्ति । ५. च–प्रदेशकाले । प्र–०कालं । ६. आ–शंक्यता वयम् । रा–संक्यतामयं । प्र–परिशंक्यतावयं । अ–तर्किता मया । ७. ल$_2$–अत आरभ्य अष्टाविंशश्लोकं यावत् नास्ति । ८. फ अ–नास्ति ॥ ९. फ.–नये परमकोविदः । १०. फ–वचनान्नाम तस्यैष । म–वचनाद्राम तस्यैव । अ–वचनान्नम तस्यैष । ११. फ–राक्षसः स । १२. अत्र वं–वचनात्तावदस्यैव राघवस्य विभीषणः । १३. फ म–मधुरोपायं शनैर् । च–परमोपायं । अ–मधुरोपा...... नैरपते । आ–दानैर्नरपते । रा–शनैर्तरप्रते । ब–यानैर्नरपते । च ल$_1$ ल$_2$ प्र–०नैर्नरपतेः । १४. फ–आस्यथ । च रा प्र ब ल$_1$–नावमास्थाय । आ म–आस्थाय । १५. आ–तत्वं तत्प्रकरिष्यसि । फ प्र ल$_1$–करिष्यति । १६. अ–दुष्टोप्यदुष्टो । १७. आ–वाक्यमाकारशूचितः । च–शक्यमाकारमुर्जितुम् । फ–०रस्नूचितः । म–वाक्यमाकारसूचितः । अ प्र रा ब ल$_1$–शक्यमाकारम् ॥

युक्तस् त्व् अष्टाऽङ्गयां[1] बुद्धया हनुमान् सचिवोत्तमः ।
२२] उवाच मधुरं[2] श्लक्ष्णम्[3] अर्थ-वच् च ततो[4] वचः ॥२३॥ [५०
तं ब्रुवन्तं हरि-श्रेष्ठं सर्वे ते[5] हरि-पुंगवाः[6] ।
२३] समुद्-ऐक्षन्त[7] शत-शो बृहस्-पतिम् इवाऽमराः[8] ॥२४॥ [५१
न वादान् न च सं-रम्भाद्[9] आधिक्याद् आत्म-दीपनात्(त)[10] ।
२४] वक्ष्यामि वचनं राजन् यथाऽर्थं[11] कार्य-गौरवात् ॥२५॥ [५२
अर्थाऽनर्थ-[12]निमित्तं हि यद् उक्तं सचिवैस् तव ।
२५] तत्र दोषं[13] प्र-वक्ष्यामि[14] क्रियां[15] नह्य् उप[15]-पद्यते ॥२६॥ [५३
ऋते[16] नि-योगात्[17] सामर्थ्यम् अव[17]-बोद्धुं न शक्यते ।
२६] सहसा वाऽपि योगो[18] हि दोष-वान्[19] प्रति-भाति मे ॥२७॥ [५४
चार-प्रणिधि[20]-संयुक्तं यद् उक्तं हरि-पुङ्गवैः ।
२७] अर्थस्याऽसंभवस्[21] तत्र कारणं नोप-पद्यते ॥२८॥ [५५

---

१. रा ब-तुष्टांगया । २. फ-वचनं । ३. अ-सूक्ष्मम् । ४ फ म-हितं ॥ ५. फ च-नो । ६. रा ब-०वः । ७. आ च-समुद्रैक्ष्यन्त । फ-समुदीक्षन्त । ८. म-इवापराः । च-इवामरान् ॥ ९. फ च प्र रा ब म ल, अ-संरंभान्नाधिक्यान्न च कामतः । १०. अत्र वं-न दानान्न च संहर्षान्नाधिक्यान्न च कामतः । ११. रा-यथार्थका० ॥ १२. आ-अथामर्थ० । १३. ब-दोषे । १४. फ-प्रपश्यामि । च-नापश्यामि । प्र रा ब म ल, अ-न पश्यामि । १५. फ-किं वा नाभ्युपपद्यते ॥ १६. फ-स ते । १७. फ-नियोगसामर्थ्यादवरोद्धुं । च ब ल,-नियोगा ......मर्थ्यात् क्रिया वोढुं । रा म-नियोगात्सामर्थ्यात् क्रियावोढु । प्र-नियोगात्सामर्थात्क्रिया वोढुं । अ-नियोगं वार्थानां क्रियां वोढुं । १८. च ब रा म ल,-सहसापि नियोगो । प्र-सहसा विनियोगो । १९. च-न युक्तं । रा-नियुक्तः । प्र म ल,-न युक्तः । २०. च-चारवच्चारसंयुक्तं । रा-वचश्चकार सं० । प्र म ल,-वचश्चचार संयुक्तं । म-न चारप्रणिधिसंयुक्तं । २१. फ अ-अर्थस्यासम्भवात् ॥

सहसा न[1] हि[1] चारेण शक्यो[2] बोद्धुं[2] वि-भीषणः[3] ।
२८] काल[4]-प्रकर्षे दोषश्[4] च तस्माच् चारो न[5] विद्यते[5] ॥२९॥ [N
अ-देशेऽकाले[6] सं-प्राप्त इत्य्-अयं[7] यद् वि-भीषणः[5] ।
२९] विवक्षा तत्र मे ह्री[8]ऽयं तां नि-बोध[8] यथा-मति[9] ॥३०॥ [N
स[10] एवं[10] देशः कालश् च भवतीऽह यथा तथा । [५६
३०] पुरुषं[11] पुरुषं[11] प्राप्य गुण-दोष-समन्वितम् ॥३१॥
दौरात्म्यं रावणे दृष्ट्वा वि-क्रमं तव[12] चाऽनघ[12] ।
N] युक्तम् आ[13]-गमनं तस्य वि-मृष्यैतच्[14] च बुद्धि-तः ॥३२॥ [५७
अज्ञात-रूपैर् हरिभिर् एष सं-पृच्छ्यताम्[15] इति ।
N] यद्[16] उक्तं[16] तत्र मे बुद्धिः काचिद्[17] अस्ति सम्-ईक्ष्यताम्[18] ॥३३॥[19] [५८

---

१. च रा प्र ब म ल$_1$–नास्ति । २. प्र–शक्यं वोढुं । च रा ब म ल$_1$–वोढुं । ३. प्र–विचक्षणः । ४. रा ब ल$_1$–कालप्रकर्षैर्दोषैश् । प्र–काले प्रकर्षैर्दोषैश् । म–कालप्रकर्षौ । अ–कालप्रकर्षदोषश् । ५. आ–नास्ति ॥ ६. च अ–आदेशकाले । फ प्र म ल$_1$–अदेशकाले । ७. फ–इत्येवं । ८. आ ल$_1$–नास्ति तन्निबोधय । रा प्र अ–नास्ति तन्निबोध। ब-नास्ति तन्निबोधद् । ल$_2$–वास्ति तन्निबोध । ९. आ फ रा प्र ब–०मतिः । ल$_1$–०विधि ॥ १०. प्र ल$_2$–स एष । अ–एवं च । ११. फ–पुरुषपुरुषं । च–पुरुषं पुरुष । रा प्र ब ल$_1$ ल$_2$–पुरुषं पुरुषः । १२. च रा प्र ब म ल$_1$ ल$_2$ अ–च वानघ । १३. च–आगमने । १४. आ-विमृशैतश् । च–विमृष्यैतश्च । प्र म–विमृशैतच्च । ल$_1$–विमृषैतच्च। अ–विमृष्यैव स । ल$_2$–विमृश्यैतच्च ॥ १५. फ–संपृच्छताम् ॥ १६. आ–तद्युक्तं । रा प्र ब ल$_1$–यद्युक्तं । १७. प्र ब ल$_1$ म–कश्चिद् । अ च रा–कच्चिद् । १८. फ ल$_2$–समीक्षिताम् । म–समीक्षितम् ॥ १९. आ–नास्ति ॥

पृच्छ्यमानो[1]ऽपि शङ्केत[2] सहसा बुद्धि-मांश्[3] च यः[3] ।
N] तथा मित्रं प्र-दुष्येत मृषा[4] पृष्टं[5] सुखाऽऽवहम्[6] ॥३४॥ [५९
न शक्यं[7] सहसा राजन्[8] भावं वेत्तुं[8] नृणां भुवि ।
N] अन्तरेणेङ्गिते[9] नीतैर्(?तं) निपुणं[9] यस्य[10] यादृशम्[10] ॥३५॥?[६०
न वा[11]ऽस्य ब्रुवतो वाक्यं सं-दिग्धं जातु[12] लक्ष्यते ।
N] प्रसन्नो मुख-वर्णश् च तस्मान् नेहाऽस्ति सं-शयः॥३६॥[६१
अ-शङ्कितमतिः स्व-स्थो न शठः प्रति-सर्पति ।
N] न चाऽस्य दुष्ट-व्यापत्तिस्[13] तस्मान् नेहाऽस्ति संशयः३७[14] [६२
आकारश् छाद्यमानो[15]ऽपि न शक्यो विनि-गूहितुम्[16] ।
N] बलाद्[17] हि वि-वृणोत्य् एव[17] भावम् अन्तर्-गतं नृणाम्॥३८॥[६३
देश-कालोप-पन्नानां कार्यं[18] कार्य-विदां नृणाम् ।

१. आ–पृच्छामानोपि । फ–पृच्छ्यमानो हि । च–पृच्छमाणो हि । २. प्र म–शंक्येत । ३. आ–बुद्धिमान् शवः । फ–बुद्धिमानथ । रा–बुद्धिमश्च यः । प्र–बुद्धिमांश्च । म–बुद्धिमांश्च यः । प्रान्ते–बुद्धिमान् शठैः । ४, फ आ–मिथ्या । ५. प्र–स्पृष्टं । ६. च–मुखावहं । अ–सुखावहं ॥ ७. फ–शक्यः । ८. फ–राजन्भावो । प्र म ल१ ल२–नास्तिं । अ–वेत्तुं मनोभावं । ९. फ–०गितैर्नीतैर् । च–०गितैश्च निपुणं । ब रा प्र ल१–०गितैर्नीचं नि० । म–०गितैर्नीचं निपुणः । ल२–०गितैर्नीचानिपुणं । १०. फ म–पश्यता भृशम् । ब रा ल१–यद्यथादृशम् । प्र–यच्च यादृशम् । ल२–यद्ययादृशम् ॥ ११. फ रा प्र ब म ल१ ल२–चास्य । अ–स्वस्य । १२. ब–जात ॥ १३. च म ल१ ल२–दुष्टतापत्तिं । रा प्र ब–दुष्टतापत्तिस् । १४. आ–नास्ति । १५. च–आकाराच्छा० । प्र–आकारः छद्यमानो वै । अ–आकारं छा० । १६. च–गृहि० । १७. प्र ब ल१, ल२ विवृणोत्येव । म–विवृणोत्येव । प्रान्ते–०त्येव ॥ १८. आ–कार्याकार्य० ।

स-फलं भवति क्षिप्रं प्र-योगेनाऽति-संवृतम्[1] ॥३९॥ [६४
३१] उद्योग[2]-वन्तं त्वां प्रेक्ष्य[3] मिथ्या-वृत्तं च रावणम् ।
वालिनं च[4] हतं श्रुत्वा सु-ग्रीवं चाऽभि-षेचितम्[5] ॥४०॥
३२] राज्यं प्रार्थय[6]-मानस्य बुद्धि-पूर्वं प्र-पश्यतः[7] । [६५
३३पू] एतान् अर्थान् पुरस्कृत्य विद्यते ह्य् अस्य सं-श्रयः[8] ॥४१॥ [9][६६पू
शत्रोर् वि-रागाद् यद्य् एष संप्राऽऽप्तो नः परं हितम् ।[10]
N] न वयं तत् करिष्यामः परस्य स्व[11]-जनो यथा ॥४२॥ [N
सत्त्वे बले च देशे च दुर्ग[12]-योगे समुद्[13]-यमे ।
N] अभि-ज्ञः[14] सर्व-कार्येषु स्व-जनानां[15] वि-भीषणः ॥ ४३॥ [N
अथवोपधिना[16] प्राऽऽप्तो रावणस्य[17] मतेन सः ।[18]

---

१. फ–०नापि संवृतम् । च–०नाभिसंवृतां । रा प्र ब म $ल_1$ $ल_2$ अ–०नाभिसंवृतं ॥ २. रा–उद्यागवन्तं । म–तद्योग० । $ल_1$–तं उद्योग० । ३. आ–संप्रेष्य । प्र च रा ब म $ल_1$ $ल_2$–संप्रेक्ष्य । ४. फ–निहतं । ५. आ–चानिषेवितं । च–चानिषोवितं । ६. च म–०माणस्य । ७. च–प्रपस्यतः । अ–प्रदश्यतः । ८. $ल_1$ $ल_2$–संशयः । ९. आ–इत ४२–५४ ऊर्ध्वं त्रयोदशश्लोकी नास्ति ॥ १०. फ–शत्रो रागाद्यद्येष स प्राप्तो नः परो हितम् । च–शत्रुर्विरागात्संप्राप्तो निश्चयं नः परं हितम् । रा ब $ल_1$–तस्मात्क्षिप्रं सहास्मि तुल्यो भवतु राघव । प्र–तस्मात्क्षिप्रं सहास्माभिस्तुल्यो भवति राघव । $ल_1$ $ल_2$–शत्रोर् ($ल_1$–(त्रुर्) विरागात्संप्राप्तो न चायं निश्चयः परः । अ–शत्रोर्विरागात्संप्राप्ते निश्चयं नः परं हितम् । ११. फ च म $ल_1$–स्वजने ॥ १२. म $ल_1$ अ–दुर्गे योगे । ब रा–दुर्गे योग्ये । प्र $ल_2$–दुर्गं योग्ये । १३. आ–समुद्यते । १४. फ च रा प्र ब म $ल_2$–०ज्ञ । १५. च–स्वजात्यणा । रा–स्वजात्यानो । ब म $ल_1$–स्वजात्यानां । $ल_2$ अ–स्वजातीनां ॥ १६. फ–अर्थेनोधिना । च $ल_2$–अर्थेवोपधिना । रा–अथबा पाधिना । प्र–अथवा वादिना । म $ल_1$ अ–अथवोपाधिना । १७. रा–रावण सविभीषणः । च प्र $ल_2$–०स्य हिते रतः । ब म $ल_1$–०स्य विभीषणः । अ–०स्य मते चरः । १८. ब–४५तम-श्लोकपूर्वार्धात्परं पठितः ॥

N] यततामू अ-निशं[1] वीर किं दुष्टोऽपि करिष्यति ॥४४॥ [N

अनेन रावणः क्रुद्धोऽधर्म[2]-युक्तो मम ग्रहे ।[3]

N] तस्मात् साधुम् अहं[4] मन्ये राजन्न्[5] एतं वि-भीषणम् ॥४५॥ [N

३३उ] यथा-शक्ति[6] मयोक्तं ते[7] राक्षसस्याऽऽर्जवं प्रति ।

त्वं प्र-माणं तु[8] सर्वस्य श्रुत्वा बुद्धि-मतां वरं[9] ॥४६॥ [६६उ

३४] अथ रामः प्रसन्नाऽऽत्मा[10] श्रुत्वा वायु[11]-सुतं ततः ।

प्रत्य्-अभाषत दुर्-धर्षः श्रुतवान्[12] आत्मनि स्थितः[12] ४७ [१८, १

३५] ममाऽपि किञ्चिद् वि-ज्ञानं प्रति भाति वि-भीषणम् ।[13]

श्रुतं चेच्छाम्य् अहं सर्वैर् भवद्भिः श्रेयसि स्थितैः ॥[14] ४८॥ [२

मित्र-भावेन संप्राऽऽप्तं[15] न[16] त्यजेयं वि-भीषणम् ।

---

१. फ अ—यन्ना नामनिशं । च—यत्तत्तामनिमानिशं । २. फ—०युक्तः परिग्रहे । रा—क्रुद्धो धर्म्यमुक्तो मम । प्र ब—क्रुद्धो धर्ममुक्तो । म—क्रुद्धोऽधर्म्यमुक्तो मम बुद्ध्या । ल१—०धर्ममुक्तो ममाग्रहे । अ—धर्ममुक्तो मम । ३. च—नास्ति । ४. प्र ल१—अमुं । ५. रा—राजन्नेनं । म—राजन्नेन । ल१—राजन्येवं । ६. ब—०शक्तो । ७. फ—मयोक्तेषु । च—मयोक्तेन । अ—मयोक्तोस्ति । ८. अ—प्रमाणानां सर्वबुद्धि० । ९. प्र अ—०तां वरः ॥ १०. ब—प्रसन्नात्माश्च । ११. रा—वयुसुतात् । च प्र ब म ल१ ल२ अ—वायुसुतात् । १२. फ—स्रुतवानात्मविस्मितः । च—०वानात्ममतिस्थितः ॥ १३. च—ममाऽप्यत्र विवक्षास्ति किञ्चिदिति विभीषणम् । रा ब म ल१ ल२—ममाप्यत्र विवक्षास्ति काचित्प्रति विभीषणम् । प्र—ममाप्यत्र विवक्षास्ति कश्चित्प्रति विभीषणम् । अ—ममापि तु विवक्षास्ति काचित्प्रति विभीषणम् । १४. च प्र ब म ल१ ल२—श्रोतुमर्हथ तत्सर्वं मम यद् हृदि वर्तते । अ—श्रोतुमर्हसि तत्सर्वं मम यद् हृदि वर्तते ॥ १५. च—संप्राप्त । रा—सम्प्रातः । ब प्र म ल१ ल२ अ—०सः । १६. च—न संत्याज्यो नाकथंचन । रा ब प्र म ल१ ल२—संत्याज्यो न कथंचन । अ—न त्यजेयं कथंचन ।

३६] दोषो यद्य् अपि तस्मिन् स्यात् तत् सतां प्रति-गर्हितम् ॥[1]४९ [३
एवं ज्ञात्वा महा[2]ऽऽत्मानम् आर्य-[3]भावे व्यव-स्थितम् ।
३७] आ[4]नन्तर्येण संप्राऽऽप्तं वि-[5]शुद्धं ज्ञायताम् इति॥[6]५०॥[N
राघवं परम-प्रीतं[7] स्तुवन् वायु-सुतस् तदा ।
३८] प्रत्य्-अभाषत धर्माऽऽत्मा तत् काल-सदृशं वचः ॥५१॥[N
रामस्य [8]चं वचः श्रुत्वा सु-ग्रीवः प्लवगेश्वरः ।
N] प्रत्य्-अभाषत काकुत्स्थं सौहार्दे[9]ना[10]ऽभि-चोदितः ॥५२॥ [३८
किम् अत्र चित्रं धर्म-ज्ञ लोक-नाथ सुखाऽऽवहम् ।
३९] यस्त्वम् [11][12]आर्यं प्र-भाषेथाः स[13]त्त्व-वान् स[13]त्-पथे स्थितः५३[३६
मम चाऽप्य् अन्तरात्माऽयं शुद्धं वेत्ति वि-भीषणम् ।[14]

---

१. च—दोषा यद्यपि विद्यन्ते ग्रा······ह्येतद्विगर्हितम् । रा ब—दोषा यद्यपि दृश्यन्ते न मे ह्येतद्विगर्हितम् । प्र ल$_2$—दोषा यद्यपि विद्यन्ते ग्रामे ह्येतद्विगर्हितम् । ल$_1$—दोषो यद्यपि वर्तते न मे ह्येत विगर्हितम् । अ—दोषो·········संप्राप्तः त्यजतां परिगर्हितः ॥ २. च रा प्र ब म ल$_1$ ल$_2$—यथात्मानम् । ३. फ—आर्यभावव्य० । च रा प्र ब ल$_2$—आर्यमार्गे व्य० । ४. रा—आनन्तर्ये च । प्र—अनन्तर्येण । ५. फ ल$_2$—विशुद्धिः क्रियतामिह । रा प्र ब—विशुद्धः क्रियतामिह । अ—विशुद्धिः ज्ञा० । ६. म—आनर्येण तु संप्राप्तं विशुद्धिः क्रियतामिह । ल$_1$—अनार्येण च संप्राप्तं विशुद्धिः क्रियतामिह ॥ ७. म—०प्रीतः । ८. अ—रामस्य हि वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः । ९. अ—काकुत्स्थं प्रहर्षेण प्रचोदितः ॥ १०. च ब म ल$_1$ ल$_2$—तु ॥ अ—हि । ११. अ—प्रहर्षेण प्रचोदितः ॥ १२. रा ब अ—आर्यं । १३. रा ब—सत्त्वेवात्मपथे । प्र—सत्त्वे वार्यपथे । अ—सत्यवान् स० । ल$_2$—सत्त्वे वार्यपथि ॥ १४. च—चाप्यंत्यरात्मायं शुद्धि वेत्ति विभीषण । रा म ल$_1$—०यं शुद्धः प्रति विभीषणम् । ब—०यं शुद्धं प्रति विभीषणम् । प्र ल$_2$—०यं शुद्धं वाक्ति वि० । अ—चाप्यन्तरात्मा वै शुद्धं वेत्ति वि० ।

४०] अनु-मानेन भावेन सत्त्वेन[1] च परीऽऽक्षितम्[2] ॥५४॥ [३७
तस्मात् क्षिप्रं सहाऽस्माभिस् तुल्यो भवतु[3] राघव ।[4]
४१] वि-भीषणो महा-प्राज्ञः सखि-त्वं चाऽभ्य् उपैतु ते[5] ॥५५॥[6] [३८

चकार तस्याऽथ वचः सु-भाषितं
रामो महाऽऽत्मा प्लवगाऽधि-पस्य ।
वि-भीषणस्य प्र-णतस्य सं-ग्रहं
N] मतिं विनिश्-चित्य महाऽऽत्मभिः स्थिराम् ५६[7] [३९

इत्यार्षे[8] रामायणे सुन्दर-काण्डे वानर[9]-मन्त्रो नाम
द्वानवतितमः सर्गः ॥९२॥

---

१. फ-सत्येन । २. च रा प्र ब म ल$_1$ ल$_2$ अ-परीक्षितः ॥ ३. ल$_2$-भवति । ४. आ-तस्या क्षिप्रं सहास्माभिस्तुतो भवतु राघवः । च-तस्मा क्षिप्रं सहास्माभिस्तुल्यैर् भवतु राघवः । अ-तस्मादेष सहास्माभिस्तुल्यो भवति राघव । च रा प्र ब म ल$_1$ ल$_2$-एभिर्ग्रन्थैरयम्पाठः द्विः पठितः । ५. आ प्र-शासितुं चाभ्युपैति नः । च-सखित्वं वाभ्युपैतु ते । म ल$_1$-शंसितुं चाभ्युपैति नः । अ-सखित्वे नाभ्युपैतु ते । ६. अतः परमधिकः पाठः-फ च प्र म ल$_1$ ल$_2$ अ-ततः[1] स सुग्रीववचो निशम्य हरीश्वरेणाभिहितं[2] नरेश्वरः । फ च प्र ब म ल$_1$ ल$_2$ अ-विभीषणेनाशु चकार स गतिं पतत्रिराजेन यथा पुरन्दरः । प्र-शत्रुविरागात्स प्राप्तो न चायं निश्चयः परः ॥[3] ७. फ च रा प्र ब म ल$_1$ ल$_2$ अ-नास्ति ॥ ८. फ-इति रा० । अ-नास्ति । ल$_2$-इति सु० । ९. अ-विभीषण…री…णो नाम ॥

---

१. फ-नास्ति । २. च-तत्तद्धरिणामपि राघवश्च । प्र ल$_1$-तद्धद्धरिणामपि राघवोथ । म-तद्धरीश्वरेणाभिहितं नरेश्वर (तद्धद्धरीणामपि राघवोथ) । ३. पाठोऽयं द्विः पठितः ॥

## [वं- ९१]= [ त्रिनवतितमः सर्गः ] =[दा-१८,१९]

उक्त-वाक्ये[1]ऽथ सु-ग्रीवे तस्मिन् हरि-गणेश्वरे ।[2]
१] उवाच राघवः[3] श्रीमान्[3] धर्माऽर्थ-सहितं वचः ॥१॥ [N
स[4] दुष्टो वाऽप्य् अ-दुष्टो वा[4] किम् एष रजनी-चरः ।
२] सूक्ष्मम् अप्य् अ-हितं कर्त्तुं[5] मम[5] शक्तः[5] प्लवं-गमाः[6] ॥२॥ [२२
रावणं[7]-भ्रातरं [8]वीरं गृह्णीमो[9] धर्मम् आ-स्थितम्[10] ।
६] आ-गतं सचिवैः[11] सार्धं[12] सह(?है)भी[12] राक्षसैर् वृतम्[12]॥३॥[13] [N
पृथिव्यां[14] राक्षसान्[14] सर्वान्[15] पिशाचांश्[16] च[17] स-दानवान्[17]।
३] अंगुल्यग्रेण[18] शक्तोऽहं[19] हन्तुं हरि-गणेश्वर ॥४॥ [२३
श्रूयते हि कपोतेन शत्रुः शरणम् आ-गतः ।

---

१. च रा प्र ब म ल$_1$ ल$_2$—०वाक्ये तु । २. अतः पूर्वं—फ च रा ब म ल$_1$ ल$_2$ अ—रामस्त्वेषां वचः श्रुत्वा शरणागतवत्सलः । पूरयन्निव घोषेण श्लक्ष्णां वचनमब्रवीत् ॥ ३. च—रामं श्रीमांस्तु । रा ब म ल$_1$ ल$_2$—रामः श्रीमांस्तु । ४. आ—संतुष्टो वाथ दुष्टो वा । फ—दुष्टो वाप्यदुष्टो वा । ब ल$_2$—सुष्टो वाप्यदुष्टो वा । म ल$_1$—सुदुष्टो वाप्यदुष्टो वा । ५. आ—मामशक्तः । ६. ब—०गमा । ७. रा—रावणं भ्रा० ॥ ८. आ—वीरो । ९. ब रा प्र ल$_1$ ल$_2$—सर्वदा । प्र म—सर्वथा ( सर्वदा ) । १०. आ—आश्रिताः । ११. आ—सचिरैः । फ—शचिवै(:) । १२. आ—महद्भी राक्षसैर्युतं । च—सहैव राक्षसैर्युतम् । रा—मारुतं (चतुर्भी) रा० । ब—सहितं (चतुर्भी) राक्षसै द्रुतम् । प्र म ल$_1$ ल$_2$—सहितं (चतुर्भी) राक्षसै युतं । म—अनुगृह्णन्तु वानराः । अ—सहसा राक्षसै वृतम् । १३. च ब ल$_1$ ल$_2$ प्र रा म—श्लोकोऽयं षष्ठश्लोकात् परं पठितः ॥ १४. च—पृथिव्या न रा० । ब—०व्यां राक्षसां । अ—पृथिव्यां राक्षसांश् । १५. आ—सद्यो । अ—चैव । १६. च रा प्र ब म ल$_1$ ल$_2$—पिशाचान् । १७. च रा ब म ल$_1$—दानवांस्तथा । प्र ल$_2$—मानवांस्तथा । १८. रा—अंगुल्याग्रेण । १९. च—सक्तोहं ॥

४] पूजितश्[1] च यथा-न्यायं स्व[2]-मांसैश् च[2] नि-मंत्रितः ॥५॥ [२४
स ता[3]वत् प्रत्य्-अगृह्णात(?हीतं[3]) ख[4]गो भार्या-निसूदकम्[4] ।
५] कपोतो वानर-श्रेष्ठ किम् [5]उताऽहं वि-भीषणम् ॥६॥ [२५
ऋषेः कण्वस्य[6] पुत्रेण[6] कंडुना[7] परमर्षिणा ।
७] शृणु गाथाः[8] पुरा गीता धर्मिष्ठाः[9] सत्य-वादिना ॥७॥[10] [२६
बद्धाऽञ्जलि-पुटं दीनं याचन्तम् अपराधिनम् ।
८] न[11] हन्या[12]च् छरणं[12] प्राप्तं सतां धर्मम् अनु-स्मरन्[13] ॥८॥ [२७
आर्तो वा यदि वा त्रस्तः [14]परेषां शरणाऽऽगतः[15] ।
९] अपि प्राऽऽणान् परि-त्यज्य रक्षि-तव्यः[16] कृताऽऽत्मना ९ [२८
स[17] (?यश्) चेद्[17] भयाद् वा मोहाद् वा द्वेषाद्[18] वा[18]ऽपि न रक्षति[19] ।
१०] स्वयं शक्त्या[20] यथा-न्यायं तम्[21] आहुः पुरुषाऽधर्मम्[21] ॥१०॥[२९

---

१. च- प्र रा ब म ल$_1$ ल$_2$-अर्चितश् । २. फ च-स्वैश्च मांसैर् । प्र-मुमांसैश्च । ल$_2$-स्वमांसैश्चानि० ॥ ३. फ-च तं प्रत्यगृह्णद्वै । च प्र म ल$_1$ ल$_2$-तावत्सत्क्रियां प्राप्तं । अ-हि तं परिजग्राह । रा ब-तावत्सत्क्रियां प्राप्तः । ४. अ-हंतारं भार्यया खगः । आ-०र्यानिसूदनं । च-०र्यानिसूदकः । म-०र्यानिषूदकः । ल$_1$-०र्यानिवेदकः । ल$_2$-खगो भार्यः...निन्दकः । रा-भार्यानिषूदकः । ब-भार्यानि......दकः । प्र-भार्या......निदर्शकः । ५. अ-उतायं ॥ ६. च रा ब म ल$_1$-ऋषिकश्यपुत्रेण । प्र ल$_2$-ऋषिकश्यपमित्रेण । ७. फ-कंडुना । ब-कंडुजाः । ८. फ च ब ल$_1$ ल$_2$ प्र रा म-गाथा । ९. फ अ च ब ल$_1$ ल$_2$ प्र रा म-धार्मिष्ठा । १०. अतः परमधिकः पाठः-च रा प्र ब म ल$_1$ ल$_2$-हन्यमानं रिपुं दृष्ट्वा रिपुणा शरणागतम् । शत्रुं सुविदितं दीनं याचन्तमपराधिनम् ॥ ११. च-नास्ति । १२. प्र- हन्यां शरणं । १३. ल$_2$- ०स्मरेत् ॥ १४. रा प्र ब म ल$_1$ ल$_2$-परेभ्य । १५. आ-शरणं गतः । १६. ब-०तव्याः ॥ १७. फ-यः स । १८. फ-कामाद्वापि । च-द्वेषाद् वा तन् । प्र रा ब म ल$_1$ ल$_2$-द्वेषाद्वा तं । १९. फ-रज्य(क्ष्य) ते । २०. फ-शक्तो । २१. फ अ-तत्पापं लोकगर्हितं ॥

वि-नष्टः पश्यतो[1] यस्य[1] रक्षितुः शरणाऽऽगतः ।
११] आ-दाय सु-कृतं तस्मात्[2] सर्वं[2] गच्छत्य् अ-रक्षितः ॥११॥ [३०
एष दोषो महान्[3] अत्र[3] प्र-पन्नानाम् अ-रक्षणे । [३१
१२] अ-स्वर्ग्यश्[4] चाऽप-यशस्यश्[5] च बल-वीर्य-विनाशनः[6] ॥१२॥ ३२पू
सु-पर्याप्तं[7] वि-स्रष्टस्यं[7] नाऽश्व[8]-मेधस्य तत् फलम् ।
N] यत् फलं जात[9]-संत्रासे रक्षिते शरणाऽऽगते ॥१३॥ [N
करिष्यामि यथाऽर्थं[10] तत्[11] कण्डोर्[11] वचनम् उत्तमम् ।
१३] धर्मिष्ठं च यशस्यं च स्वर्गं[12] चाऽपि[12] महोदयम् ॥१४॥ [३२उ
अ-भयं सर्व-भूतेभ्यो दद्राम्य्[13] एतद्[13] व्रतं मम ।
१४] सं-ग्रामे[14] च[15] प्र-पन्नानां[15] तवाऽस्मीऽति[16] च[16] वादिनाम्[17] ॥१५॥ [३३
नाऽयुर्युत्सुर्[18] नि-हन्तव्यो न भीतो न कृताऽञ्जलिः ।
N] आ-रूढोऽपि न योऽश्वं[19] तु यश्[20] च भूमौ नि-पातितः ॥१६॥ [N
आ[21]-नयैनं हरि-श्रेष्ठ[22] दत्तम् अस्याऽभयं मया ।

---

१. फ म—पश्यतः तस्य। २. च रा प्र ब म ल$_1$ ल$_2$ अ—तस्य ॥ ३. च रा प्र ब म ल$_1$ ल$_2$—महाबाहो । ४. आ—अस्वर्गश् । च—अश्वर्गश् । ५. च—चोपयशस्यश्च । रा ब—चायशस्थाश्च । ६. ल$_1$—०विदांवरः ॥ ७. फ प्र रा ब म ल$_1$ ल$_2$—सुपर्याप्तवि० । ८. फ—नास्व० । ९. फ—तत्र संत्रासे ॥ १०. च—यथार्थं । ११. फ—तत्कंदोर् । च—तं कंडोर् । १२. च—स्वर्गे लोके । रा प्र ब म ल$_1$ ल$_2$—स्वर्गलोके । अ—स्वर्गं लोके ॥ १३. आ—दयामेतद् । रा—ददास्येतद् । अ—दद्यामेतद् । १४. ल$_1$—संक्रामे । १५. च—सुप्रप० । अ—वा प्रप० । १६. च—न चास्मीति । रा—न वास्मीति । ब म ल$_1$—न यमस्मीति । प्र—तव चास्मीति । ल$_2$—अयमस्मीति । १७. आ—यो वदेत् । फ अ—च यो वदेत् । १८. च—ता युयुत्सुन् । रा—नायुयुत्सोः । १९. प्र—योधं । २०. च—यस्तु । प्र म—यच्च । २१. फ—आनय त्वं । २२. प्र—०श्रेष्ठं ।

१५] वि-भीषणो वा सु-ग्रीव यदि वा रावणः स्वयम्[1]॥१७॥[३४
रामेणाऽथाऽभये[2] दत्ते स[3] ततो वानरर्षभः ।
१६] उत्-पपात[4] दिवं[5] हृष्टः सर्वैर् अनु-चरैः सह॥१८॥ [१९,१
स[6] सम्-एत्य कपि-श्रेष्ठः[7] सं-श्लिष्य[8] च वि-भीषणम् ।
१७] सांत्वयित्वा च मेधा-वी दर्शयामास[9] राघवम्[10] ॥१९॥[11] [N
१९पू] पादयोः स तु रामस्य नि-पपात वि-भीषणः ।[12]
राक्षसः शरणाऽन्वेषी[13] चतुर्भिः सचिवैः[14] सह ॥२०॥ [२
२०] तं रामः समुत्-थाप्य[15] परि-ष्वज्य वि-भीषणम् ।
उवाच मधुरं वाक्यं सखा मम भवान् इति ॥२१॥ [N
२१] अब्रवीच् च तदा[16] रामं युक्त-वाक्यं[17] वि-भीषणः ।
धर्म-युक्तं[18] च पथ्यं च सांप्रतं संप्र-हर्षणम्[19] ॥२२॥ [३

---

१. रा-रावण स्वयं ॥ २. च अ-रामेणात्वभये । रा प्र ल$_1$ ल$_2$-रामेण त्वभये । ब-रामेण तु भये । ३. च-सर्वदा रावणानुजः । प्र रा ब म ल$_1$ ल$_2$ अ-सर्वथा रावणानुजः । ४. च-सोत्पपात । ५. च रा प्र ब म ल$_1$ ल$_2$-तदा हृष्टो भक्तैर् ॥ ६. रा-समरेत्य । अ-समुत्फुल्लय । ७. अ-हरि० । ८. रा-सांश्लिष्टः । ९. आ च-दर्शयित्वा च । १०. च-राघं । ११. अतः परमधिक पाठः—अ-पादयोः पातयामास सुग्रीवः प्लवगेश्वरः । १२. रा च प्र ब म ल$_1$ ल$_2$-ततो वीरस्य धर्मात्मा मूर्ध्नि पादौ विभीषणः । १३. च-जगाम राजपुत्रस्य । रा प्र ब म ल$_1$ ल$_2$-जग्राह राजपुत्रस्य । १४. फ-शचिवैः । १५. फ-समुत्क्षिप्य । रा प्र ब अ-समुत्थाय ॥ १६. प्र ल$_2$ अ-ततो । १७. अ-वाकयं रामं रक्षो । आ प्र ल$_2$-रामसुक्तवाक्यं । १८. च रा प्र ब म ल$_1$ ल$_2$-धर्मार्थयुक्तं । फ-नास्ति । १९. च रा प्र ब म ल$_1$ ल$_1$-आत्मनश्च गुणोदयम् । फ-सांप्रतं सर्वहर्षणम् ॥

२२] अनु-जो रावणस्याऽहं तेन[1] चाऽस्म्य् अव[1]-मानितः ।
भवन्तं सर्व-भूतानां शरण्यं[2] शरणं[3] गतः[3] ॥[4]२३॥ [४

२३] परि-त्यक्ता मया लंका मित्राणि च धनानि च ।
भवद्-गतं च मे[5] राज्यं[5] जीवितं[6] च[6] सुखानि च ॥२४॥ [५
रा[7]क्षसानां वधे साहं[8] लंकायाश् च प्र-ध[9]र्षणे ।

२४] करिष्याम्य्[10] अहम् एतत् ते[10] नेष्यामि[11] तव वाहिनीम्[11] ॥२५॥ [२४
स[12] एवम् उक्त्वा[12] नर-देव-पुत्रम्[13]
वि-भीषणो धर्म-भृतां वरिष्ठः ।
बभूव तूष्णीं[14] स तदा महाऽऽत्मा

२५] प्रसादम्[15] इच्छन् नर-देव-पुत्रात्[16] ॥२६॥ [N

इत्यार्षे[17] रामायणे[17] सुन्दर-काण्डे विभीषण-परिग्रहो[18]
नाम त्रिनवतितमः सर्गः ॥९३॥

---

१. आ–तेन चास्मि अवमानितः । च–तेन चास्मि वमानितः । रा ब म ल$_1$ ल$_2$–तेन चास्मि विमानितः । प्र–लंकायाश्च प्रधर्षणे । २. च–शसपि । ३. ल$_2$–शरणागतः । ४. प्र–अत आरभ्य "लंकायाश्च प्रधर्षणे" इति यावत्पाठो नास्ति ॥ ५. च रा ब म ल$_1$ ल$_2$–राज्यं मे । ६. रा ब म ल$_1$–जीवितानि ॥ ७. फ च रा ब ल$_1$ ल$_2$ अ–रक्षसां च । म–राक्षसां च । ८. म–सायं । ९. आ–प्रधर्षणं । १०. फ–करिष्यामि यथाप्राणं । ११. अ–नयिष्याम्यपि वा० । फ–नेष्यामि हरिवा० ॥ १२. फ च–तमेवमुक्तो । रा–तमेवमुक्ता । आ–स एवमुक्तो । प्र ब म ल$_1$ ल$_2$–अ–तमेमुक्त्वा । १३. आ–०पुत्रः । १४. ब–तूस्णीं । १५. फ–प्रवादम् । प्र–प्रासादम् । १६. ब–०पुत्राम् ॥ १७. फ–आर्षे रा० । ल$_2$–इति सु० । १८. फ–विभीषणनिग्रहो । अ–विभीषण-गिरिगुहो ॥

[वं-९२]= [ चतुर्नवतितमः सर्गः ] =[दा-१९]

इति ब्रुवाणं तं रामः परि-ष्वज्य वि-भीषणम् ।
१ ] उवाच लक्ष्मणं वीरं[1] समुद्राज् जलम् आ[2]नय ॥१॥ [२५
२७] अभि-षिं[3]चस्व लंकायाम् इमं सौम्य[4] वि-भीषणम् ।
राजानं राक्षसेंद्रत्वे प्र-सन्ने मयि लक्ष्मण ॥ २ ॥ [२६
३ ] एवम् उक्तस् तु सौमित्रिर् अभ्य[5]-अषिंचद् वि-भीषणम् ।
मध्ये वानर-मुख्यानां राजानं राम-शास[6]नात् ॥ ३ ॥ [२७
४ ] तं प्रसादं तु रामस्य दृष्ट्वा सं[7]घः प्लवं-गमाः ।
प्र-चु[8]क्रुशुर् महा-ना[9]दान् साधु साध्व् इति चाऽब्रुवन्४ [२८
५ ] अब्रवीत्[10] तं हनूमांश् च स[11] च[11] राजा[12] वनौकसाम् । [२९
कथं सागरम्[13] अ-क्षोभ्यं[13] तरेम[14] वरुणा[15]ऽऽलयम् ॥५॥ [३०पू
६ ] उपा[16]यं नाऽधि-ग[16]च्छामो यथा नद-नदी-पतिम् ।
उत्-तरामः कुश[17]लिनः स-सैन्या वरुणाऽऽलयम्[18] ॥६॥
७ ] एवम् उक्तस् तु धर्म[19]-ज्ञः प्रत्य्-उवाच वि-भीषणः । [३१

---

१. आ फ अ—वीरः । २. च—अनय ॥ ३. फ—॰षिच्यस्व । ४. प्र ल$_1$—सौम्यं ॥ ५. आ—अल्पाषिंचद् । फ ब ल$_2$—अभिषिंचद् । ६. च—॰सासनात् । रा—शाशनात् । ल$_2$—राम शासशासनात् ॥ ७. फ—सर्व्वे । रा—सद्य । ८. आ—प्रचक्रुर् । च—प्रचुक्रुशु । प्र ल$_1$—प्रचुकुशुर् । ल$_2$—प्रचक्रुशुर् । फ—प्राचुकुर् । ९. आ अ च ब ल$_1$ ल$_2$ प्र रा म—॰नादं ॥ १०. अ—अब्रवीच्च । ११. रा—नास्ति । १२. रा—राजव नौ॰ । ब ल$_1$—राजा सर्वं वनौ॰ । १३. च रा म ल$_1$—सागरक्षोभ्यं । १४. आ—तरे । प्र—तरेयं । १५. फ—रुणालयं ॥ १६. रा प्र ल$_1$ ल$_2$—उपायेनाधिगच्छामो । १७. वं—उत्तरेम शिवेनेमं स॰ । १८. आ फ च रा प्र ब ल$_1$ ल$_2$ अ—नास्ति । १९. फ अ—सर्वज्ञः ।

सं[1]मुद्रं शर[2]णं रा[3]जन् गन्तुम् अर्हति राघवः[4] ॥ ७ ॥ [३२
८ ] खानितः सगरेणा[5]ऽयम् अ-प्रमेयो महोदधिः ।
९पू] कर्तुम् अर्हति रामस्य ज्ञाति-का[6]र्यं महाऽऽत्मनः ॥८॥ [३३
सगरस्[7] तु हि रामस्य श्रूयते प्र-पितामहः ।
१०] तस्य पुत्रः समुद्रो[8]ऽयं ज्ञाति-कार्यं करिष्यति ॥ ९ ॥ [ N
एतद् वि-भीषणेनोक्तं[9] राक्षसेन विपश्चिता । [३४पू
११] प्रकृत्या धर्म-शीलस्य राघवस्याऽप्य् अरोच[10]त ॥१०॥ [३६
स लक्ष्मणं महा-तेजाः[11] सु-ग्रीवं[12] च हरि-प्रभुम्[13] ।
१२] सत्[14]-क्रियाऽर्थं क्रिया-दक्षः स्मित-पूर्वम् उवाच ह[15] ॥ ११ [३७
वि-भीषण[16]स्य मन्त्रोऽयं मम[17] लक्ष्मण रोचते ।
१३] ब्रूहि त्वम् अपि[18] सु-ग्रीव तवाऽपि यदि रोचते ॥[19] १२॥[३८
सु-ग्रीवः[20] पण्डितो[21] नित्यं[21] भवान् मन्त्र-विचक्षणः ।
१४] उभयोः संप्र-धार्याऽर्थं रोचते यत्[22] तद्[22] उच्यताम्॥१३ [३९

---

१. च–समुद्रशरणं । म–समुद्रं सरणं । २. प्र म ल$_1$ ल$_2$–राजा । ३. आ–तर्तुमर्हसि रा० । फ–गन्तुमिच्छसि राघव । अ च–गन्तुमर्हसि रा० ॥ ४. रा ब–नास्ति ॥ ५. च–सागरेणोयम् । ६. आ रा प्र ब ल$_1$ अ–ज्ञातिधर्मं ॥ ७. फ–सागरः स तु । रा प्र ब म ल$_1$ अ–सगरश्चापि । ल$_2$–सागरश्चापि । प्र–सागरस्तु हि । ८. प्र–समुद्रस्य ॥ ९. प्र–०णे नोक्तो । १०. फ–०स्याप्यरोचत् । म ल$_1$–राघवस्याव्यरोचत । ल$_2$ अ–राघवस्य व्यरोचत ॥ ११. फ–०बाहुः । १२. म–नास्ति । १३. ल$_2$–हरिं प्रभुं । १४. आ–स क्रियार्थं । १५. फ–अभाषत ॥ १६. च–विभीषणोऽस्य । १७. प्र–स सलक्ष्मण । च–मम लक्ष्म......रोचते । १८. आ–तावच्च ॥ १९. अ प्र ल$_2$–नास्ति । २०. आ–सुग्रीव । २१. आ च रा ब म ल$_1$ ल$_2$ अ–पंडितोऽत्यर्थं । प्र–पण्डितोऽभ्यर्थं । २२. प्र–स्म यद् ॥

एवम् उक्तौ[1] तु रामेण तदा सु-ग्रीव-लक्ष्मणौ ।
१५] समुदाचार-संयुक्तम् इदं वचनम् ऊचतुः ॥१४॥ [४०
किम् अर्थं नौ नर-व्याघ्र नैतद् रोचिष्यते[2] वचः ।
१८] वि-भीषणोक्तं हृद्यं[3] च युक्तं चैव विशेष-तः ॥ १५ ॥ [४१
अ-बद्ध्वा[4] सागरे सेतुं घोरेऽस्मिन् वरुणाऽऽलये ।
१६] लंका[5] नाऽऽसादितु शक्या सेन्द्रैर् अपि सुराऽसुरैः१६ [४२
वि-भीषणस्य[6] शूरस्य यथा-वत्[7] क्रियतां वचः ।
१७] अलं कालाऽत्ययं[8] कृत्वा सागरोऽयं नि-युज्यताम् १७ [४३
एतच् छ्रुत्वा[9] शुभं वाक्यं विभीषण[10]-समीरितम् ।
N ] सं-विवेश[11] ततो वीरो[12] रम्ये[13] सागर-रोधसि ॥ १८ ॥ [ N
सागरं[14] द्रष्टुम् इच्छामि[14] रूपिणं त्वां[15] सरित्-पतिम्[15] ।
N ] कर्त्तुम् अर्हसि मे साह्यं[16] भव त्वं[16] शरणं मम ॥ १९ ॥ [ N
एवम् उक्त्वा कुशाऽऽस्तीर्णे[17] तीरे नद-नदी-पतेः ।
१९] सं-विवेश तदा[18] रामो वेद्याम् इव हुताऽशनः[19] ॥ २० ॥ [४४

परेण हर्षेण तदा नरेश्वरः

परेण वीर्येण च शत्रु-तापनः ।

---

१. फ-उक्तौ थ ॥ २. फ-रोचयते । च-रोचिस्यते । ३. आ-हृष्यं ॥ ४. ल$_२$-अबद्धा । ५. रा-लंकामासादितुं । प्र-लंका नासाधितुं । ल$_२$-लंका नासादिता ॥ ६. आ-विभीषस्य । ७. आ-यथा च । ब-यथा वः । ८. आ-काला...यं । च-कारात्यये । रा-कार्यात्यये । प्र ब ल$_२$-कार्यात्ययं ॥ ९. फ-ततो । १०. च-विभीषणस्य स० । ११. च-संवितेश । १२. रा ब-वीर । ल$_२$-वीरै । १३. फ-रामः । च-रम्यसा० । ल$_२$-रम्यै ॥ १४. च-सागरः द्रष्टुमि......रू० । १५. आ-सरितां पतिं । १६. फ-साख्यं भवांश्च ॥ १७. प्र-कुशस्तीर्णे । १८. फ-ततो । १९. प्र-हुतासनः ।

२०] कृत्वा मतिं सागर-दर्शने तदा
बभूव[1] तूष्णीं नि-यतः स पार्थिवः ॥२१॥ [ N

इत्यार्षे[2] रामायणे[3] सुन्दरे[4]-कांडे विभीषणा[5]ऽभिषेको नाम
चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

१. फ–बभू । २. फ–आर्षं । ३. अ–नास्ति । ४. ल$_2$–नास्ति ।
५. ल$_2$ अ–विभीषणभाषणं ।

तस्य रामस्य सुप्तस्य कुशाऽऽस्तीर्णे मही-तले ।
१ ] नि-यतस्याऽप्र-मत्तस्य निशास् तिस्रोऽति-चक्रमुः १॥ [१०
न हि दर्शयते रूपं तदा रामं महाऽर्ण-वः ।
२ ] प्र-यतेनाऽपि रामेण यथाऽर्थं प्रति-पूजितः । [१२
N ] न सर्व-था वि-कारं स भजते निरप-त्रपः ॥२॥ [ N
ततः क्रुद्धो महा-बाहू रामो रक्ताऽन्त-लोचनः ।
३ ] समीपे लक्ष्मणं वीरं स-रोषो वाक्यम् अब्रवीत् ॥३॥ [१३
पश्य तावद् अन्-आर्यत्वं पूज्य-मानस्य लक्ष्मण ।
४ ] अव-लेपं समुद्रस्य न दर्शयति यत् स्वयम् ॥ ४ ॥ [१४
प्र-शमश् च क्षमा चैवं मार्दवं प्रिय-वादिता ।
५ ] अ-सामर्थ्यफला ह्य् एते निर्-गुणेषु सदा गुणाः ॥५॥ [१५
आत्म-प्रशंसा-निरतं धृष्टं वाऽप्रियं-वादिनम् ।

---

१. रा-सु (प्रा) प्तस्य । २. अ-कुशातीर्णे । ३. फ-तिस्रोपच० । च-तिस्रोस्ति च० । रा-तिस्रो प्रच० । प्र-तिस्रोतिचक्रतुः ॥ ४. रा-दर्शयती । ५. आ-रामे । ६. आ-यथार्थः । अ च रा प्र ब म ल$_1$ ल$_2$-यथार्हं । ७-आ-०थाधिकारं । म-०था प्रसादं (विकारं) । ८. आ-निरपत्रगः ॥ ९. च-०बाहु । १०. च प्र म ल$_1$ ल$_2$ अ-सरोषं ॥ ११. च-०लोपं । १२. आ-य स्व० ॥ १३. फ-प्रणामश्च । म-प्रशम (सत्व) श्च । १४. ब-प्रभावश्च । १५. च-सार्द्वं । प्र-मादितं । १६. आ-असामर्थ्य फला । फ-असामर्थ्यफलं । च ब म ल$_1$ ल$_2$ अ-असामर्थ्ये फलन्त्येते । रा-असामर्थ्ये फलत्वेत । प्र-असमर्थ्ये फलन्त्येते । १७. फ च रा प्र ब म ल$_1$ ल$_2$ अ-कुतो । १८. च-०प्रसंसानिरतं । ब-०प्रशंसानिरता । १९. ल$_2$-पृष्टं । २०. फ-चाप्रिय० । च-त्रा परिवादिनं । रा-च परिनंदिनं । प्र ब म ल$_1$ ल$_2$ अ-च परिवा० ।

६] सर्वत्रोत्सृष्ट[1]-दण्डं च लोकः[2] सत्[2]-कुरुते नरम् ॥ ६ ॥ [१६
न साम्ना शक्यते कीर्तिर् न साम्ना शक्यते[3] यशः ।
७] प्राऽऽप्तुं[4] लक्ष्मण लोकेऽस्मिञ् जयो वा[5] रण[5]-मूर्द्धनि ७॥[१७
क्षमया च[6] समा-युक्तं माम्[7] अयं[7] वरुणाऽऽलयः ।
८] अ-समर्थं[8] वि-जानीते[9] धिक् क्षमाम् ईदृशे[10] जने ॥[11] ८॥[२१
९पू] चापम् आ-नय सौमित्रे शरांश्[12] चाऽऽशी[12]-विषोपमान् । [२४पू
N] क्रूरस्योद्धृत[13]-दण्डस्य लोकोऽयम् अनु-वर्तते[14] । [N
९उ] अद्याऽक्षोभ्यम्[15] अपि क्रुद्धः क्षोभयिष्यामि[15] सागरम् ९ [२४उ
वेला-संस्पर्श[16]-मर्यादं सहस्रोर्मि-समाऽऽकुलम्[17] ।
१०] निर्-मर्यादं करिष्यामि सायकैः पश्य लक्ष्मण ॥१०॥ [२५
अद्य मद् बाण[18]-निर्भिन्नैर् मकरैर् मकराऽऽलयम्[19] ।[20]

---

१. आ—सर्वतोत्सृष्ट० । २. आ—लोक स कुरुते । च—लोकः स कुरुते ॥ ३. प्र—क्रियते । ४. प्र ब—प्राप्तं । ५. फ—वा रनमूर्द्धनि ॥ ६. फ—तु । ७. रा प्र ब—ममायं । ८. आ फ म ल१ ल२ अ—असामर्थं । ब—असंशयं । ९. ल२ अ—विजानीहि । १०. आ च—विक्रमानीदृशे । म—धिक् क्षमा चेदृशे । ११. अतः परमधिकः पाठः—म—ततः प्रकुपितः प्राह चतुर्थे दिवसेऽर्जुनं । भुजंगमसमः कोपाद् दुर्निरीक्षतमो नृणां ॥ सामसाध्यो जडीवासः सौमित्रे निम्नगापतिः । नायं विषप्रदः शम्भोर्मत्तो दानवकेतनम् ॥ १२. आ फ—शरांश्चासी० । रा—शरांश्च वि० । म—शरांश्चाषी० । १३. प्र—क्रूरस्योद्धृत० । १४. आ—नास्ति । १५. फ—यावदक्षोभ्यमाक्रम्य भक्षयिष्यामि । च—अद्याक्षोभ्यमतिक्रुद्धः क्षो० । रा ब म ल१ ल२ अ—अथ क्षोभ्यमतिक्रुद्धः क्षो० । प्र—अथ क्षोभमतिक्रुद्धः क्षो० ॥ १६. आ—वेला यस्य समर्यादा । रा—वेला संस्पष्टम० । ब—वेलां संस्पृष्टमर्यादां । प्र म ल१ ल२ अ—वेला संस्पृष्टम० । १७. फ—महोर्म्मिसुस० ॥ १८. फ—मद्वान० । १९. प्र—०लये । २०. च—नास्ति ।

११] निरुद्ध-तोयं[1] सौमित्रे प्लव-मानैर्[2] वि-लोकय[3] ॥ ११ ॥[4] [१८
भोगिनां पश्य नागानां[5] मया छिन्नानि लक्ष्मण ।[4]
१२] महा-कायानि[6] गात्राणि[7] प्लव-मानानि[8] सागरे ॥ १२ ॥ [१९
सशंख-शुक्तिका-जालं[9] समीन-मकरं शरैः[10] ।
१३] अहं क्रोधेन महता समुद्रं परि-वर्त्तये ॥ १३ ॥ [२०
स[11] स-क्रोधोऽथ तद्[11] दिव्यं लक्ष्मणाद्[12] धनुर्[12] उत्-तमम् ।
१४] जग्राह सायकान्[13] घोरान्[13] ब्रह्म-दण्डान्[14] इवोद्यतान्[14] १४ [ N
१६पू] स[15] वि-नाम्य[15] धनुर् घोरं कंपयंस्[16] तरसा तलम्[16] । [२८पू
ततो बाण-धनुष्पाणिः क्रोध-विस्फारितेक्षणः[17] ।
१५] बभूव रामस्[18] तेजस्वी युगाऽन्ताऽग्निर् इव ज्वलन् १५ [२७
N ] स-रोषः[19] शब्दम् आ-रेभे दग्धुं व्यव-सितः किल । [ N
१६उ] मुमोच नि-शितान्[20] बाणान्[20] वज्राणीऽव[21] शत-क्रतुः १६ [२८उ
ते ज्वलन्तो[22] महा-बाणास् तेजसा पावकोपमाः ।

---

१. प्र—०तोयैः । २. आ फ ब म ल$_1$—०मानो । च—०माणैर् । ३. आ—विलोक्य । च—विलोक्या । ४. ल$_2$ अ—नास्ति ॥ ५. रा—नागाना । ६. फ—०भोगाणि । ब—०कायाणि । च—महायानि । ७. फ—नास्ति । ८. ब—प्लवमाना निशाचरे ॥ ९. आ—सश्वतशुक्तिका० । फ ब—सशंखशुक्तिका० । १०. रा ब—शनैः ॥ ११. च प्र ब म ल$_1$ ल$_2$ अ—स संक्रुद्धोऽथ तद् । आ—स संक्रुद्धोऽनयद् । १२. आ—लक्ष्मणो धनुम् । १३. आ—सायकां चोग्रां । फ—शायकान् घोरान् । च म ल$_2$—सायकान् घोरा । ब—सायकां घोरां । १४. । फ—०दंडानि चोद्यतान् । रा ल$_1$ ब—०दण्डान् इवोद्धतान् ॥ १५. आ—स विनाद्य रा ब—विनाम्यध० । म ल$_1$ ·सविनाम्य स ध । १६. फ—कम्पयंस्तच्छरैर्जलम् । च—कंपयंतु रसातलम् । रा ब प्र म ल$_1$ ल$_2$ अ—कंपयंश्च रसातलम् । १७. च—०विस्फुरितेक्षणः । १८. रा—राम ॥ १९. फ—सरोषं महदारेभे । च—सु...कर्तुं समारेभे । रा प्र ब म ल$_1$ ल$_2$ अ—शुष्कं कर्तुं समारेभे । २०. ब—निशितां वाणां । २१. फ—वज्रीव च । रा ब—वज्रानीव ॥ २२. ल$_2$ अ—ज्वलन्ति ।

१७] विविशुस् तत् समुद्रस्य सलिलं त्रस्तं[1]-पन्नगम् ॥१७॥ [२९
ततो वेगः[2] समुद्रस्य स-नक्र[3]-मकरो महान् ।
१८] सं[4] बभूव महा-घोरः[5] स-मारुत[6]रवस् तदा ॥ १८ ॥ [३०
महोर्मि-जालाऽवततो[7] नाना-सत्त्व-समाकुलः[8] ।
२०] सधूम-परिवृत्तोर्मिः[9] सं-चचाल[10] महोदधिः ॥ १९ ॥ [३१
व्यथिताः[11] पन्नगाश् चाऽऽसन्[12] दीप्ताऽऽस्या दीप्त-लोचनाः ।
२१] दानवाश् च महा-घोराः पाताल-तल-वासिनः ॥२०॥ [३२
N ] स्थिताः प्रांऽजलयः सर्वे वेपमाना भयाऽर्दिताः[13] । [N
ऊर्मयः सिन्धु-राजस्य तिमि-नक्र-झषाऽऽकुलाः[14] ।
१९] विन्ध्य-मन्दर-संकाशाः[15] समुत्-पेतुः सहस्र-शः ॥२१॥ [३३
N ] स मारुतोद्धूत[16]-तरंग-माली
संभ्रान्त-दैत्योरग-मीन-संघः[17] ।
सधूम-फेनश्[18] च स-विस्फुलिंगः[18]
N] सं-तापिताऽबुर् व्य्-अनदत्[19] समुद्रः ॥२२॥ [N

इत्यार्षे[20] रामायणे[21] सुन्दर-काण्डे[22] समुद्र[23]-क्षोभणो नाम पंचनवतितमः सर्गः॥९५॥

---

१. रा—पन्नस्त ॥ २. रा—वेग । ३. आ—नक्रमकरो । ४. राप्र अ ब म ल$_1$ ल$_2$—संबभूव । ५. रा—०घोर । ६. आ—समारुतरवं ॥ ७. आ—०ज्वालावततो । च—०जालावनतो । प्र—०ज्वालावितततो । ल$_1$—जालावन्तो…… । ८. च म—०कुलाः ॥ ९. प्र—०वृत्तः स्म । १०. च रा ब म ल$_1$ ल$_2$ अ—स चचाल ॥ ११. रा—व्यर्थिताः । ल$_2$ अ—पृथिव्याः । १२. च रा—च सन् । ब—चासं ॥ १३. आ—भयार्दिता । १४. आ—०नक्रमषाकुलाः । फ—नक्रसमाकुलाः । १५. च—०संकाशः ॥ १६. फ—मारुतोद्धृत० । १७. फ—संघातदैत्योरगमीनसंघाः । ल$_2$ अ—संभ्रांतमनोरग-दैत्यसंगः । प्र—संभ्रान्तदैत्य……संघः । १८. आ ल$_1$ ब—फेनः शरवि० । प्र ल$_2$ अ—०लेखः शराविस्फुलिंगः । १९. फ—व्यनदन् ॥ २०. फ—आर्षे । २१. ल$_2$ अ—नास्ति । २२. रा—सुन्दरका……। २३. च रा ब म ल$_1$—०क्षोभनं । प्र ल$_2$ अ—०क्षोभवर्णनं ॥

तस्मिन् वि-कृष्टे[1] स-शरे राघवेण[2] शराऽऽसने ।[3]
N] रोदसी[4] विव्यथाते च पर्वताश् च चकम्पिरे ॥१॥ [६
तमश् च लोकम्[5] आ-वव्रे दिशश् च न चकाशिरे[6] ।
N] प्रति-चुक्षुभिरे चाऽऽशु[7] सरितश् च सरांसि च ॥२॥ [७
तिर्यक् च[8] सह नक्षत्रैश्[9] चेरतुश् चन्द्र[10]-भास्करौ । [८पू
N] तमसा च[11] परि-च्छन्नाव्[12] उभौ न रेजतुस्[12] तदा ॥३॥ [N
भास्कराऽंशुभिर्[13] आ-दीप्तं तमसा चाऽभिसं-वृतम्[14] । [८उ
N] न चकाशे च[15] तद् अह[15] उल्का-शत-विदीपितम् ॥४॥
अन्तरिक्षाच्[16] च[16] निर्-घाताः[17] सं-जग्मुर्[18] अतुल-स्वनाः । [९
N] भाऽस्फुरंश्[19] चाऽपि परुषा[20] दिवि मारुत-वह्नयः ॥[21]५॥ [१०

---

१. ब–विनष्टे । २. ब–राघवेन । ३. फ–इतः पूर्वं एष पाठः पठयते–अधश्च कृतवाणौघैर्विद्युता रुद्धमम्बुधिम् । मत्वा दाशरथी रामः संदधेऽस्त्रं विभावसोः ॥ ४. च–रोदशी । ५. ब रा म प्र ल$_1$ ल$_2$–लोकानावव्रे । ६. फ अ ब रा म प्र ल$_1$ ल$_2$– चकाशिरे । ७. आ–वाशु । प्र–वांशु । म–वायुः । ८. ल$_2$ प्र–नास्ति । ९. अ ल$_2$–ग्रहन० । १०. ब रा म ल$_1$–शशि० । ११. आ–तु । च–तु । १२. फ–०छन्नौ न नभसि चकासतुः । रा–०छिन्नौ निभौ तौ रे० । म ब ल$_1$–०छन्नौ नोभौ तौ रे० । प्र–०छिन्नौ नोभौ तौ । च–०छन्ना उभौ तौ रे० । अ–०छिन्नौ न तौ रे० । ल$_2$–०छिन्नौ न तौ तौ रे० । १३. रा–०रांऽशुभिर् । १४. आ–चाभिमवृतम् । १५. आ–तु त० । च–तदा सर्वम् । रा प्र म अ ल$_1$ ल$_2$–वियत्सर्वम् । १६. आ ब–०रिक्षाश्च । १७. च–निर्व्वाताः । १८. च ब म प्र अ ल$_1$ ल$_2$–खं जग्मुर् । १९. फ म–प्रस्फु० । च–प्रस्फुरंश्चापि । ब प्र म ल$_1$ ल$_2$ अ–रंश्चापि हि । २०. ब ल$_1$–रुषा । प्र अ ल$_2$–दिवः । २१. रा–नास्ति ॥

बभंज च तरून्[1] वायुः स-मूलान्[2] उद्-बबर्ह च[2] ।
N] आ-भुग्नानि[3] च शैलानां[4] शिखराणि[5] नभस्-वता[6] ॥६॥ [११
दिवि ये च महा-भूताः सं-हता भीषण[7]-स्वनाः । [१२पू
N] संभ-विव्यथिरे[8] ते च न च[9] चस्कंदिरे भयात्[10] ॥७॥ [१४उ
दृश्यानि चैव भूतानि न चुकूजुः[11] शनैर् अपि ।[12]
N] अ-दृश्यानि[13] च[14] भूतानि प्र-जग्मुः[15] सं-भ्रमं महत् ॥८॥ [१३
सह-भूतैः[16] स-तोयश्[17] च स-नागश्[18] च स-दानवः[19] ।
N] सहसा[20] दुद्रुवे वेगाद् भीम-वेगो महोदधिः ॥९॥ [१५
तान् उत्पातान्[21] अ-चिन्त्यैव[22] कुपितो[23] राघवोऽब्रवीत् । [N
N] अद्य त्वां शोषयिष्यामि स-पातालं महाऽर्णव[24] ॥१०॥ [१उ
N] पन्नगाऽसुर-वासांश्[25] च वि-धमिष्यामि ते शरैः । [N
शर-निर्दग्ध-कायस्य परि-शुष्कस्य सागर[26] ।
N] तव देशेषु[27] सर्वेषु[27] पांशुर्[28] उत्-थास्यते[29] महान् ॥११॥ [२

---

१. आ-व तनून् । २. च-०लानुदवर्हत्तः । व रा-०लानुपाटयन् । प्र-०लानुत्पाटयन् । म-०लानुदपाटयत् । अ ल$_{2}$-०लानुदपाटयत् । ३. आ अ-आयुग्लानि । फ-आतुलानि । ल$_{2}$-असुग्नानि । ४. च-शैलातो । ५. आ-सिखा० । ६. फ-व्यचरस्तदा । ल$_{2}$ अ-नभस्वतः । म-नभस्वना । ७. आ-भीषणः स्वना । ८. फ-प्राविश्य व्यथिरे । ९. आ-च प्रस्कंदिरे । म रा ल$_{1}$-प्रचस्कंदिरे । १०. आ-भयान् । ११. च ल$_{2}$ अ-चकूजुः । १२. आ रा व-नास्ति । १३. फ व-दृश्यानि । १४. व-चैव । १५. अ रा ल$_{2}$ व प्र म ल$_{1}$-जग्मुर्वै ॥ १६. आ-०भूताः । फ-भूतैः । रा-०भूतं । म-०भूतश्च । १७. आ-स तेजाश्च । म-तोयश्च । १८. आ-सनागाश्च । फ-सनाग । १९. आ व ल$_{1}$-सदानवाः । २०. आ-सहसा दुदुवे । २१. आ-तानुद्धता० । फ-तानुग्या० । २२. फ-संचिन्त्यैव । आ च-०नुचिन्त्यैव । रा व-नास्ति । २३. रा-कुपित । २४. च-महार्णवे । रा-महार्णवम् ॥ २५. रा च व प्र म अ ल$_{1}$ ल$_{2}$-०रनागांश् । २६. च-सागरा । २७. फ-देशेष्व-देशेषु । २८. व रा म प्र अ ल$_{1}$ ल$_{2}$-रेणुर् । २९. प्र ल$_{2}$ अ-दुत्थाप्यते ॥

मम[1] कार्मुक-निर्मुक्तैः[1] शरैर्[2] नूनं महोदधे[3] ।
N] अद्य त्वां सं-तरिष्यन्ति[4] पद्भिर् एव प्लवं-गमाः ॥१२॥ [३
मम[5] त्वं न[5] वि-जानीषे[6] पौरुषं[7] वि-क्रमं[7] बलम् ।
N] दानवाऽऽलय-संत्रासं तस्मान् मे नाऽव-गच्छसि[8]॥ १३॥ [४
ततः समीपे[9] रामस्य वि-धूयोर्मीः[10] सहस्र-शः ।
स्वयं[11] मध्यात् समुत्-पत्य सागरः परमं वपुः । [१७
२] पन्न-गैः[12] सह दीप्ताऽऽस्यैर्[13] धारयन्[13] सम्-अदृश्यत[14]॥१४॥ [१८पू
ताम्र-पीताऽसितैः[15] श्वेतैः[16] सप्ताऽऽस्यैः[17] सप्त-मूर्द्धभिः ।
N] अग्नि-जिह्वैर् महा-नागैर्[18] अनु-बद्धः समन्त-तः ॥१५॥ [N
दिव्य-पुष्प-मयीं[19] चित्रां शिरसा धारयन्[20] स्रजम् । [१९उ
N] जात-रूप-मयीं चैव तपनीय-विभूषिताम्[21] ॥१६॥
आत्म-जैर्[22] अपि[22] रत्नौघैर्[23] भूषितो[24] भूषणोत्तमैः[25] । [२०

---

१. फ–मत्कार्मुकविनिर्मुक्तैः । ब–स स कार्मु० । २. फ रा च प्र ब म अ ल$_{१}$ ल$_{२}$–शुष्कं । ३. ब अ ल$_{२}$–महोदधेः । ४. रा–सन्तरिस्यन्ति । ५. च–न मे त्वं च । रा ब म प्र ल$_{१}$ ल$_{२}$ अ–न च मे त्वं । ६. फ–जानीषे । रा–विजानेषे । ७. फ–पयोधे पौरुषं । ८. रा–नाद्य गच्छति । ब–नाधिगच्छति । प्र–नाधिगच्छसि॥ ९. आ च ब ल$_{१}$ल$_{२}$ रा म–समीपं । १०. आ–विधूयोमान् स० । च–विधूयोर्मिस० । रा–विधूयोमीः स० । म ब ल$_{१}$ ल$_{२}$–विधूयोर्मीन् स० । ११. रा ब म प्र अ ल$_{१}$ ल$_{२}$–जलमध्यात् । १२. प्र–पुन्नागैः । १३. आ–दीप्तास्यैः परिवार्य । रा ब ल$_{१}$–स्यैर् वारयन् । १४. आ–समंततः । १५. प्र–ताम्रमेतामितैः । १६. च–नास्ति । रा–चैतैः । १७. रा–सप्तास्यै । १८. आ–माहा० । १९. च–०मयां । २०. आ–धारयत् । २१. फ च–०विभूषितः । ब रा म प्र अ ल$_{१}$ ल$_{२}$–०विभूषणः । २२. फ–०जैश्चापि । २३. रा–रत्नोघैः । २४. ल$_{१}$–रूपतो । २५. रा– भूषणोत्तमै ।

N] धातुभिर् मण्डितैः[1] शैलो वि-विधैर् हिम-वान् इव ॥१७॥[२१पू
स्निग्ध-वैडूर्य[2]-संकाशो महाऽभ्र[3]-शिखरोपमः । [१८उ
२] रक्त-माल्याऽम्बर-धरः पद्म-पत्र-निभेक्षणः ॥१८॥ [१९पू
महा-नदीभिर् बह्वीभिर् नाना-रूपाभिर् ईश्वरः ।
N] गङ्गा-सिन्धु-प्रधानाभिः[4] पुरः[5] पश्चात् समावृतः[6] ॥१९॥ [२३
४पू] स रामम् उपसं-गम्य पूर्वम्[7] आ-मन्त्र्य[7] वीर्य-वान् ।
N] मध्ये वानर-कोटीनां कृताऽञ्जलिर् उप-स्थितः ॥२०॥ [N
३उ] अब्रवीत् प्र-श्रितं[8] वाक्यं[9] दिशः सं-पूरयन्न् इव । [२४उ
N] भो भो राम महा-बाहो रघुवंश-विवर्धन ॥२१॥
शृणु मे वचनं सौम्य मा क्रुधस्[10] त्वं रघूऽत्तम ।
N] इत्य्-आह[11] रामं मधुरं सर्वं[12] सं-स्मारयन्न् इव ॥[13]२२॥ [N
पृथिवी वायुर्[14] आकाशम् आपो ज्योतिश्[15] च पञ्चमम्[15] ।
५] स्व-भावे सौम्य तिष्ठन्ति शाश्वतं मार्गम् आ-स्थिताः । [२५
६पू]तत् सर्व[16]-भावो ममाऽप्य् एष, यद् अ-गाधोऽहम्[17] अ-व्ययः[17]२३[२६पू

---

१. रा ब-०भिर्मण्डितैः । २. ब फ-०वैदूर्य० । ३. फ-महाद्रिशिषरोपमः । ४. फ-प्रवाहाभिः । ५. रा-पुरा । ६. फ-समन्वितः । ७. आ-पूर्वमाम...वी० । ८. आ-प्रसृतं । फ च-प्रसृतो । ९. फ च म प्र रा ब $ल_1$ $ल_2$ अ-भूत्वा । १०. फ-संक्रुद्धोऽ । रा-मा क्रुद्धस्त्वं । आ-मा क्रुध त्वं । ११. रा-इहाह । १२. रा-सर्वे । प्र-सर्वं० । १३. फ-नास्ति ॥ १४. फ-ज्योतिर् । १५. फ-वायुरितिप्रभो । १६. च-ना स्वभावो । रा ब $ल_2$-न स्वभावो । रा-सा स्वभावो । १७. फ ब च-अगाधो यदव्ययः । प्र $ल_2$ अ-०हमीश्वरः ।

त्वया सं-[1]स्थापितो दे[2]वै विष्णुस् त्वं हि सनातनः ।
आत्मानं स्मर दे[3]वेशाऽऽत्म-वृत्तं तत् [4]पुरातनम् ।
N] कारणे[5]नाऽसि देवानां प्र[6]-विष्टो मानुषीं तनुम् ॥[7]२४॥ [N
N] [8]अवश्यं तु मया सार्द्धं [9]कर्त्तव्यं दे[10]वानां वरं ।[11] [N
६७] वि-कारस् तु [12]भवेद् गा[12]ध एवं ते[13] प्र-वदाम्य् अहम् २५[२६७
१२पू] न लोभान् न च वै[14] कामान् न भयात् पार्थिवाऽऽत्मज ।
गाधोऽहं त्रिषु लोकेषु [15]भवेयं कस्य-चित् क्वचित् । [२७
N] [16]एतन् मयोक्तं त[17]त्त्वं पुनर् वक्ष्यामि तच् छृणु ॥[18]२६॥ [N
७पू] सगरो नाम पूर्वस् ते मम कर्ता महा-द्युते ।[18]
N] अवश्यं तु[19] म[20]या सा[20]र्द्धं कर्त्तव्यं तेन तेऽनघ ॥२७॥ [N
स्तंभयेयं जलं राम प[21]द्भ्यां चैव[21] त[22]था गतिम् ।
८] [23]गच्छेरंस् तेन हरयो न तु [24]स्तंभो भविष्यति ॥२८॥ [N

---

१. प्र च रा अ म ल$_1$ ल$_2$—संस्थापिता । ब—संस्थाप्यते । २—प्र च ब रा ल$_1$ ल$_2$ अ—देवा । ३. च रा ब प्र म अ ल$_1$ ल$_2$—देवेश यद्वृत्तं । ४. च रा ब ल$_1$—पुरातने । प्र अ ल$_2$—पुरातनः । ५. ल$_2$—कारणेनान्य-दे० । ६. प्र—प्रविष्टुं । ७. फ—नास्ति ॥ ८. प्र—अवाच्यं । ९. आ—कर्तुव्यं । १०. ब च म अ$_1$ ल$_2$—देवताकृते । ११. फ रा—नास्ति ॥ १२. आ—भवेदध । च अ—भवेद्गाधे । १३. आ फ—एतत्ते । १४. आ—वा । १५. आ—भवेहं । १६. च प्र ब म अ ल$_1$ ल$_2$—एवं । १७. च ब प्र म ल$_1$ल$_2$ अ—तत्वं तु पु० । १८. रा—नास्ति । १९. ब—हि । २०. फ—सार्द्धं मे क० । च प्र अ ल$_2$—मया कार्यं । २१. आ—ददाम्येवम् । म ब रा च प्र ल$_1$ ल$_2$ अ—पद्यां चैव । म—पद्यां तेऽहं । २२. च ब रा प्र अ ल$_1$ ल$_2$—यथा । आ—अथाग० । २३. फ—गच्छेरन् ये । रा—गच्छेरंस्तन । प्र-गच्छेयं तेन । म ल$_1$—गच्छेयंस्तेन । २४. फ—स्वस्थं ॥

आश्चर्यं[1] हि महल्ले[2] लोके समुद्रे स्थलै[3]-दर्शनम् ।
९] तत्वँ[4] तु मे परि-हर्त्तव्यं शृणु राम यथाऽर्थ-तः ॥२९॥ [N
अन्ये[5]ऽपि बल-वन्तो मां दण्डम्[6] उर्द्द[7]-यम्य राघवँ ।
१०] गत्य्-अर्थम् ईहँ[8] मार्गं[9] चं[10] दापयिष्यन्ति तेजसा ॥३०॥ [N
वि-धास्ये राम मार्गं ते वि-षहिष्ये[11] च मारुतम् ।
N] ग्राहा[12] न वि-चरिष्यन्ति यावत् सेना तरिष्यति ॥३१॥ [२८पू
तृण-काष्ठ-लता-गुल्मैः प्लवान्[13] आ[14]-स्तीर्य सर्व[15]-तः ।
N] तरन्तु हरयो राम[16] न तेषां मृत्यु-तो भयम् ॥३२॥ [N
उत्तरेणाँ[17]ऽवका-शोऽस्ति कश्चित् पुण्य-[18]तमो मम ।
N] तिमि-कूलं[19] इति ख्यातो लोके ख्यातो यथा[20] भवान् ॥३३॥ [३१
उग्र-दर्शन[21]-कर्माणो वसन्ते तत्र दस्यवः[22] ।
N] आभीर[23]-प्रमुखाः पापाः पिबन्तः सलिलं मम ॥३४॥ [३२
तैश् च सं-स्पर्शनं[24] राम[25] न सहे पाप[26]-कर्मभिः ।
N] अ-मोघः क्रियतां राम तत्राऽयं ते शरोत्तमः ॥३५॥ [३३

---

१. म–अनयं । २. च म ल$_1$–महांल् । ३. प्र–शूलद० । ४. आ–तश्च ते । ब रा च प्र म अ ल$_1$ ल$_2$–तच्च मे । ५. रा–अन्ये च । ब–अन्योन्यं । ६. फ–दण्डमुद्य । ल$_1$–दारुमुद्यम्य । ७. ल$_1$–शक्तितः । ८. प्र–इमं । ल$_2$–इव । ९. आ–मार्गे । १०. प्र–नास्ति । ११. आ–विसहिष्ये । ब रा–विहनिष्ये । १२. फ अ–ग्रहा । १३. आ–प्लवम् । ब रा ल$_1$ अ–प्लवन् । १४. च–आस्तीर्ण । १५. ब म रा ल$_1$–सर्वशः । १६. च ल$_2$– नाम । १७. आ–उत्तरेण विका० । फ–०त्तरेण वका० । १८. ब रा प्र म ल$_1$ ल$_2$ अ–०तरो । १९. आ–क्रिमिकूट । फ–सुषिकूल । प्र–तिमिंगल । २०. आ–यथा भवत् । २१. च–उग्रे दर्शन० । २२. च–दस्यवः । २३. फ–अभीरुप्र० । २४. अ–संदर्शनं । ल$_2$–संदर्शन । २५. अ–नम । ल$_2$–नाम । २६. च–सहेप्युपक० ।

तस्य[1] तद् वचनं श्रुत्वा समुद्रस्य रघूऽत्तमः ।
N] मुमोच तं शरं घोरं[2] भास्करोपमम्[3] ऊर्जितम् ॥३६॥ [३४
तं च देशं[4] चकाराऽथ[5] मरुं[6] सागर-शासनात्[7] । [N
N] ततोऽसौ[8] मरु-कान्तारः पृथिव्यां वि-श्रुतोऽभवत् ॥३७॥
पपात[9] स शरो यत्र प्रदीप्ताऽशनि-सन्निभः[10] । [३५
N] वि-ननाद[11] धरा तत्र सु-गाढं[12] शल्य-पीडिता ॥३८॥ [३६पू
शोषयित्वा तु[13] तं[14] कुक्षिं राघवोऽमित-विक्रमः[15] ।
N] यत्राऽऽसन्[16] दस्यवः[17] पूर्वं[18] तत्र रामो वरं ददौ[19] ॥३९॥ [३९
पशव्यश्[20] चैव निर्-व्याधो बहु-मूल-फलोदकः ।
N] बहु-क्षीरो[21] बहु-स्नेहः सु-गन्धिर्[22] वि-विधौषधिः ॥४०॥ [४०
एवम् उक्तैर्[23] गुणैर् युक्तो बहुभिः[24] स मरुस्[24] तदा ।
N] रामस्य वर-दानेन शिवः क्षेमो[25] बभूव ह[26] ॥४१॥ [४१

---

१. फ—ततस्तस्य वचः । २. फ—तत्र । ३. फ—भास्करोतमम् । ४. च प्र ल$_2$ अ—देशं च । ५. आ प्र च ल$_2$ अ—चकारात्रं । ६. च—मरु । ७. च—०सासनात् । रा—·········साशनात् । ८. आ—ततो सौम तु का० । च प्र—ततो सो मरुका० । रा—ततोऽसौ···रुका० । ९. च रा प्र ब म ल$_1$ ल$_2$ अ—स पपात । १०. आ—०शासनिसान्निभः । ११. आ रा ब—विनिनाद । १२. आ—सुगाठं । च—सगाढं । रा ब—सुगाढ्यं । १३. ब—च । १४. च प्र ब ल$_1$ ल$_2$ अ—तां । १५. च ल$_2$—राघवोमिति० । १६. आ—यत्रासं । १७. फ—दश्यवः । १८. प्र—पूर्वं । १९. प्र—दधौ । २०. आ—पशवश्चैव निर् । फ—पशवश्चैव निध्यातो । च—पशवश्चैव निर्व्यासा । रा ब ल$_1$—पश्यव्यश्चैव निर्व्यासो । म—पशव्यश्चैव निर्व्यालो । अ—पश्यचैव निर्व्यासो । ल$_2$—पशव्यश्चैव निर्व्यासो । २१. ल$_2$ अ—०वीरः । २२. प्र रा ब—सुगन्धि ॥ २३. म—एतैर् । ल$_2$—उक्तो । २४. फ—बहुभिर्मरुतस् । २५. च—क्षेम्यो । २६. फ म—सः । च—हा । रा—वः ॥

ततो महोदधिर् वाक्यम् उवाच रघु-नन्दनम् ।
N] मध्ये वानर-सिंहानां मनः प्रह्लादनं शुभम् ॥४२॥ [N
१३उ] उपाऽऽयं[1] शृणु तं सौम्य येन मां सं-तरिष्यसि ।
तव पित्रा मम महत्[2] सं-गतं देव-सद्मनि[3] [4]॥४३॥ [N
२१] तदा देवाऽसुरे युद्धे सं-ग्रामे तारकाऽऽमये ।
तत्र[5] ते व्या-पृतं पित्रा सुराणां हित-काम्यया [6]॥४४॥ [N
२२] मया सह महा-बाहो तत्र[7] सख्यं[8] च वै कृतम्[9] ।
N] तद् युद्धम् अभवद् घोरं[10] सुराऽसुर-समाकुलम् ॥४५॥ [N
देवतानां[11] ततः[11] सैन्यं पत्त्य्-अश्व[12]-रथ-संकुलम् ।
N] मत्त-द्विप-सहस्रैश् च सं-वृतं सुर[13]-संमतम् ॥४६॥ [N
अ-सुरैः सर्व-तो भग्नं पलायितं[14] दिशो दश ।
N] तत् प्र-भग्नं बलं सर्वं दृष्ट्वाऽहं[15] त्वरयाऽन्वितः[16] ॥४७॥ [N
शिला-पादप-वृक्षैश्[17] च पर्वतैश् च प्र-वृष्टवान्[18] ।
N] अ-सुराणाम्[19] अभूत् सैन्यं सर्व-तो द्रावितं[20] मया[21] ॥४८॥ [N

---

१. च ल$_2$ अ–उपायाञ्छृणु मे । रा प्र म–उपायान्श्रृणु मे । ब–उपायां श्रृणु मे । ल$_1$–उपायं श्रृणु मे । २. आ च–मम हत् । ३. आ–संसदि । ४. रा–नास्ति ॥ ५. फ–मंत्रिव्यापृतं । आ–ते व्याहृतं । च–तत्र देव्याहृतं । म–तत्र ते द्रावतः । ६. रा–तत्र पित्रा सुराणां हितकाम्यया ॥ ७. आ–तव । ८. ल$_1$–सांख्यं । ९. च रा प्र ब म ल$_2$ अ–महत्कृतम् । ल$_1$–महद्गतम् । १०. आ फ–घोर ॥ ११. ब–देवता वा तत्र । १२. ल$_1$–प......श्व० । १३. फ–सुरसंनिभम् । प्र रा ब ल$_1$ ल$_2$–ह्रूरसंमतम् । म–ह्रूरसंगतम् ॥ १४. अत्र हस्तलेखेषु 'पलायत' इति पाठः ? । १५. आ–दृष्ट्वा तत्राहं त्व० । १६. ब–'पलायत दिशो' इति पूर्वार्द्धे द्वितीयपादोक्तः पाठोऽत्र चतुर्थपादेऽपि द्र० ॥ १७. आ रा च प्र ब म ल$_1$ ल$_2$ अ–वर्षैश्च । १८. आ–स वृष्टवान् । १९. आ च रा प्र ब म ल$_1$ ल$_2$ अ–असुराणां महत् । २०. आ फ–सर्वतोभिद्रुतं । २१. प्र–च तत् ॥

मयैव च सह स्थित्वा[१] तदाऽयुध्यत ते पिता[२] ।
N] शक्तिभिर्[३] भिंडि(?दि)-पालैश् च पाशैस् तीक्ष्णैः परश्वधैः[४]:४९[N
एतस्मिन्न् अन्तरे राम राजा दश-रथस् त्वरन् ।
एकैकेन[५] स[६] बाणेन दश पंच च सप्त वा[७] ।
N] निर्-बिभेदाऽसुरान् क्रुद्धः शत-शोऽथ सहस्र-शः ॥५०॥ [N
ततस् तं (?तत्) कोष्ठकी[९]-कृत्य दैतेयानां[१०] बलं महत् ।
N] अ-हृद्यं सायकैश्[११] चक्रे ततः क्रुद्धो नराऽधिपः[१२] ॥५१॥[१३] [N
सं-दधे चैव नाराचम् आग्नेयाऽस्त्र[१४]-समायुतम् ।
तेषां तं[१५] च मुमोचाऽऽशु ततोऽदह्यन्त दानवाः[१६] ।
N] अ-सुराश् च[१७] स-दैतेया[१७] हताः[१८] शत-सहस्रशः ॥५२॥ [N
एतस्मिन्न् अन्तरे राम निर्[१९]-वृताः सर्व-देवताः[२०] ।
N] वरेण छन्दयामास[२१] राजानं पितरं तव ॥५३॥ [N
ब्रूहि राजन् महा-बाहो वर-दा देवताः[२२] स्थिताः[२३] ।
N] किं ते वरं ददत्व्[२४] एताः[२४] सु-युद्धेना[२५]ऽद्य तोषिताः ॥५४॥ [N
दैवतैर् एवम् उक्तस्[२६] तु राजा दश[२७]-रथोऽब्रवीत् ।

---

१. च–छित्वा । २. आ–राघव । फ–राघवः । ३. रा–शक्तिभि । ४. आ रा–०स्वधैः । ५. फ–एकेन । च–एकैकेण । ६. च रा प्र ब म ल$_1$ ल$_2$ अ–च । ७. फ च रा प्र ब म ल$_1$,ल$_2$ अ–च । ८. च–०दासुरा । ९. फ ल$_1$ म–कोष्टकी० । १०. प्र रा ब म ल$_1$,ल$_2$ अ–दैत्येंद्राणां बलं महत् । फ–दैतेयानां बलानि च । ११. आ–शायकैश्चक्रुस् । १२. ब–०धिप । १३. आ–नास्ति । १४. च–आग्ने आस्त्रस० । आ–०समाकुलम् । ब–आग्नेय्यास्त्र० । १५. आ रा–तच् । म ल$_1$ ल$_2$ –तश् । १६. रा–दानवा । १७. रा अ–च सदैत्येया । प्र–चैवं दैत्येया । ल$_2$–चैव दैत्येया । १८. ल$_2$–शता । १९. आ रा–निवृताः । २०. रा–०देवता । २१. आ–०मास । २२. च–देवतां । रा–स्वया । २३. रा–स्थिता । २४. आ म–ददंत्वेताः । रा ब–ददात्वेताः । प्र–दधत्वेताः । २५. फ–सुयुद्धेनात्र । ब–स युद्धेना...तो० । प्र–सुयुद्धेनादि । म ल$_1$–स युद्धेनाद्य । २६. आ–उक्तैस् । ब–उक्तास् । २७. रा–दशथो० ।

देवता यदि मे तुष्टाः पुत्रो मह्यं प्र-दीयताम् ।
N] सर्वैः क्षत्र-गुणैर् युक्तो महा-बल-पराक्रमः ॥५५॥ [N
एवम् उक्ते[1] तदा राज्ञा देवा वाक्यम् अथाऽब्रुवन्[2] ।
N] चत्वारस् ते सुता राजन् भविष्यन्ति महा-बलाः॥५६॥ [N
जे[3] (?ज्ये) ष्ठो[4] राम इति ख्यातो भरतो लक्ष्मणस् तथा[5] ।
N] शत्रु-घ्नश् च महा[6]-वीर्यः सुमित्राऽऽनन्द-वर्धनः ॥५७॥ [N
अयोध्यां गच्छ भद्रं ते वि-ज्वरो[7] भव पार्थिव ।
N]पूजितं(?तो)[8]विधि-वद् देवा(?वैर्)दत्त्वा रत्नानि चाऽप्य्[9] उत५८[N
वस्त्राणि[10] चैव दिव्यानि रथं[11] युक्तं च सु[12]-प्रभम् ।[13]
N] चूडा[14]-मणिं तथा[15] शुभ्रं[16] दिव्यं चाऽमृत-संभवम् ॥५९॥ [N
वि-सर्जितस् ततो देवैर् मया[17] सह नराऽधिपः ।
N] आऽगच्छत तदा राजा[18] अयोध्यां[19] त्वरयाऽन्वितः॥६०॥ [N
मया सह महा-बाहुः[20] स्वां पुरीं प्र-विवेश ह[21] ।
N] सत्-कारेण महाऽर्हेण पूजयामास मां नृपः ॥६१॥ [N

---

१. च प्र ब ल₁–उक्तास् । रा ल₂ अ–उक्त । २. च–०वान् । ३. आ–येष्टो । फ–एको । ४. रा ब–ततः । ५. आ–कोशे क्रमव्यत्यासो द्र० । 'महाबलाः' इत्यनन्तरं 'चूडामणिं यथा' इत्येष पाठो द्र० । ६. ल₁ म–०वीरः । ७. आ–विज्वरोवपार्थिवः । ८. फ–संपूज्यमानं विधिवत्तु । च–तं पूज्य विधिवद् । रा ब म ल₁–संपूज्य विधिवद्देवा । प्र ल₂ अ–संपूज्य विधिवद्धीमान् । ९. रा ब म ल₁–चाप्यथ । च–चाप्य । १०. फ–शस्त्राणि । च रा प्र ब–अस्त्राणि । ११. फ–रत्नयुक्तं । १२. च रा ब–सं० (सु०) प्रभं । १३. आ–कोशे 'महाबला' इत्यारभ्य 'सुप्रभम्' इत्यन्तः पाठः क्रमव्यत्यासेन पठितः । १४. फ–चूरामणिं । प्र–चूडामणिस् । १५. म ल₁ ल₂ अ–तया । १६. आ च ब रा प्र ब म ल₁ ल₂–राम । १७. फ–महात्मा च । १८. रा–राज्ञा । १९. ब म ल₁ ल₂ अ–ह्ययोध्यां । सन्ध्यभाव आर्षः द्र० । २०. आ–०माहुः । २१. अ–च ।

सु-सुखी[1] मासम् उषितो[2] राज्ञस् तस्य नि-वेशने ।
N] ततो राजानम् आ-मन्त्र्य स्वं[3] वेश्म पुनर् आगतः ॥६२॥ [N
तस्य राज्ञो भवान् पुत्रः सर्व-ज्ञैः[4] सु-गुणैर्[4] युतः ।
N] यथा दश-रथस्य त्वं तथा मम[5] न[5] सं-शयः ॥६३॥ [N
चिन्तयन्[6] स-ततं राम किं कुर्यां[7] नृ-पतेः प्रियम् ।
N] चिन्तयानस्य[8] कालो मे[9] गतोऽयं[10] व्रीडितस्य च ॥६४॥ [N
विद्यते त्वयि मे स्नेहः परा[11] सं-भावना च मे ।
कृत-घ्नत्वाद् अहं भीतो[12] न कृतं[13] तस्य यत्[14] प्रियम् ।
N] करिष्ये ते[15] प्रियं तस्माद्[16] यथा दश-रथस्य हि[17] ॥६५॥ [N
यथा राजा दश-रथस्[18] त्वं[19] तथा मे[19] न सं-शयः ।
N] तस्मात् तव मया साह्यं कर्तव्यं सं[20]-विशेष-तः[21] ॥६६॥ [N
१४पू] अयं सौम्य[22] नलो[22] नाम तनयो विश्व-कर्मणः । [४३पू
N] बुद्धि-मान् बलवांश्[23] शूरो[23] वि-क्रान्तो वानरोत्तमः॥६७॥[N

---

१. आ फ–स सुखी । प्र ल$_2$ अ–सुसुखी । २. आ रा ब ल$_1$–०सुखितो । ३. आ–स्व० । ४. फ–सर्वैः पुत्रगुणैर् । च–सर्वज्ञः स्वगुणैर् । ५. आ–मह्यम० । ६. आ फ रा–०यत् । ७. आ ब–कुर्म । रा प्र ल$_1$–कुर्यान् । ८. आ–चिन्तया तस्य । ९. फ रा ल$_1$–कालोयं । १०. च–मतोयं । फ रा ल$_1$–गतो मे । ११. म–तथा (परा) । १२. आ–प्रीतो । रा ब–भीमं । १३. रा–कृत्यं । १४. आ–तत् । फ–वत् । १५. च रा प्र ब ल$_1$ ल$_2$ अ–तत् । १६. रा प्र ब म ल$_1$ ल$_2$ अ–तस्य । १७. आ म–त्रुटितः । १८. आ ल$_1$–दशरथस्य । १९. फ ल$_2$–तथा मे त्वं । च रा प्र ब म अ–तथा त्वं मे । ल$_1$–तथा मम । २०. प्र रा ब म ल$_1$ ल$_2$ अ–च वि० । २१. आ फ–नास्ति । २२. ब–सोम्यं नले । २३. रा–बलवान् शूरो । प्र ब–बलवां शूरो ।

१४उ] पित्रा दत्त[1]-वरः श्री-मान्[2] धृति-मान् सु-महामनाः । [४३उ
वानरेन्द्रो नर[3]-श्रेष्ठ युज्यतां सेतु-कर्मणि ॥६८॥ [N
१५] एष सेतुं[4] महोत्साहः कुरुते यदि[5] वानरः ।
तम् अहं धार[6]यिष्यामि ममाप्य्[7] एष[8] महा-सुहृत्॥[9] ६९॥ [४४
१६] ग्राहा न वि-चरिष्य[10]न्ति न प्र-वास्यति[11] मारुतः[12] ।
सलिलं स्तम्भयिष्यामि नलस्य वचनाद् अहम् ॥७०॥ [N
१७] एवम् उक्तः[13] समुद्रेण[14] समुत्-थाय[15] नलस् तदा ।
N) अ-ब्रवीद् वानर-श्रेष्ठो वाक्यं रामम् इदं शुभम् ॥७१॥ [४५
अहं सेतुं करिष्यामि वि-स्तीर्णे[16] मकराऽऽलये ।
१८] पितुः सामर्थ्यम्[17] आ-श्रित्य सत्यम् आह महोदधिः ॥७२॥ [४६
तितीर्षोः सागर-जलं सेतु-कर्माऽत्र[18] साधनम् ।
N] स्मारितोऽस्म्य्[19] अहम् एतेन समुद्रेण महाऽऽत्मना ॥७३॥ [५०पू
मम मात्रे[20] वरो दत्तो मन्दरे[21] विश्व-कर्मणा ।
१९] औरसो[22] मम पुत्रोऽयं[23] सदृशो मम कर्मभिः[24] । [४९

---

१. च–दत्तो वरः । २. च–श्रीमान्भृतिमान् । रा–श्रीमां धृतिमान्स महामनाः । ब–श्रीमां स······महामना । प्र ल$_2$ अ–श्रीमान्कृतिमान् । ३. प्र रा ब म ल$_1$ ल$_2$–नृप० । ४. च–सेतुम० । रा–शेतुं । ५. म–यच्च । ६. फ अ–तार० । ७. आ फ अ ल$_1$–तवाप्येष । ८. ब रा म ल$_2$–महान् सु० । प्र–महत् सु० । ९. ल$_1$–नास्ति । १०. आ–०ष्यति । रा–विचरेष्यति । ११. रा–प्रहस्यति । ब–प्रवास्यन्ति । १२. रा–मारुति । १३. रा प्र ब ल$_1$ ल$_2$ अ–उक्ते । १४. प्र ल$_2$ अ–समुद्रे तु । १५. फ च रा प्र ब म ल$_1$ ल$_2$ अ–प्रत्युत्थाय । १६. फ च रा ब–विस्तीर्णं । म ल$_1$ अ–विस्तीर्णे । १७. सामर्थम् । १८. ब–०कर्मां नु । १९. फ–स्मारितोऽप्यहम् । अ–स्मारितो स्माहम् । २०. आ–पित्रे वरो । ब–पित्रे वसे । च–मात्रे विरो । प्र–गात्रे वरो । २१. प्र–मन्दरो । २२. फ–अरसो । प्र–एषौरसो । २३. प्र–पुत्रः । ल$_2$ अ–पुत्रो हि । २४. फ–कर्मणि ।

N] सर्व-कर्म-करश् चैव भविष्यति तेवां[1]ऽगने ॥७४॥ [N
न[2] वक्तुं सम्-अर्थोऽहं स्वयम् एवाऽऽत्मनो गुणान्[3] । [८०उ
२०] कामम् अद्यैव बध्नन्तु सेतुं[4] वानर-पुंगवाः । [८१उ
२३उ] अवश्यं तव साहाय्यं मया कार्यं विशेष-तः॥[5]७५॥ [N
नल[6]स्य वचनं श्रुत्वा रामः परम-हर्षितः ।
N] सम्-उद्रम् अभिसं-पूज्य वचनं चेदम् अब्रवीत्॥७६॥ [N
भवान् पितृ-समो मह्यं पितुश् च दयितः[7] सु-हृत् ।
N] प्रीत्या परमया[8] युक्तस्[9] तं नलं प्र-शशंस[10] च ॥७७॥ [N
क्रियतां मम कार्यो[11]ऽर्थः सखे सौम्य महा-मते ।
N] सम्[12]-उद्रे बध्यतां सेतुः सह सर्वैः प्लवं-गमैः ॥७८[13]॥ [N
N] ततः सुग्रीव-सचिवान्[14] हनुमत्[15]-प्रमुखान् हरीन् ।[16]
९८.२उ] तदा दाशरथी[17] रामो हर्ष-पूर्वो[18]ऽब्रवीद् वचः ॥७९॥ [N
श्रुतं भवद्भिर्[19] वचनं सम्-उद्रस्य महाऽऽत्मनः ।
४] अत्र यत् संवि-धातव्यं तत् सर्वं[20] संवि-धीयताम् ॥८०॥ [N
एवम् उक्त्वा ततस् तं[21] तु[21] सु-ग्रीवं[22] वाक्यम् अब्रवीत् ।

---

१. फ–वरांगणे । २. फ रा प्र ब अ–न तु वक्तुं । ३. च–गुणात् । फ रा प्र ब अ–गुणा । ४. प्र–सेतुर् । ५. फ–नास्ति । ६. रा–न तस्य । ७. आ–दयितो हरिः । रा ब–दयित सुहृत् । ८. फ म–च परया । ९. रा ब–युक्त तं । म–युक्तं तं । १०. रा ब–प्रशशास । ११. रा–क्रियार्थस् । १२. ब–समुद्रं । १३. अत परं सर्गसमाप्तिः–च रा प्र ब–इत्यार्षे रामायणे सुन्दरकाण्डे समुद्रदर्शनं नाम सर्गः । ल$_2$ अ–इत्यार्षे सुन्दरकाण्डे समुद्रदर्शनं नाम सर्गः । १४. ब–सचिवां । १५. फ–हनूमत्० । १६. च रा प्र ब ल$_2$–अतो नवः सर्ग आरभ्यते । १७. अ–दशरथौ । रा–दाशरथि । प्र–दासरथो । ल$_2$–दाशरथो । १८. च रा प्र ब म ल$_1$ ल$_2$ अ–०पूर्णो-ब्रवीद् । १९. रा–भवद्भि । २०. फ म–शीघ्रं । २१. फ ल$_2$–तां तु । च ब अ–तांस्तु । २२. आ फ–समुद्रं ।

N] आ-दिश[1] त्वं महा-बाहो सेतु-कर्मणि यूथ-पान् ॥८१॥ [N
N] रामस्य तु[2] वचः श्रुत्वा निर्-दिष्टास् ते प्लवं-गमाः ।
७उ] अभि-पेतुर् महाऽरण्यं[3] हृष्टाः शत-सहस्र-शः ॥८२॥ [५२उ
वचनात् तस्य[4] सु-ग्रीवस् तम् एवाऽभिप्र-हर्षयन्[5] ।
N] स्वयं राजा[6]ऽथ सु-ग्रीवो नलो नीलश् च वानरैः[7]॥८३॥ [N
हनु[8]-मान् पनसश् चैव ततः दधि-मुखः[9] कपिः ।
N] जांब-वांश् च सु-षेणंश्[10] च वेग-दर्शी[11] च वानरः॥८४॥ [N
गजो गवाऽक्षो गवयः[12] शरभो[13] गंध-मादनः ।
N] युव-राजोंऽगदश् चैव तारश् च वन-गोचरः ॥८५॥ [N
अन्ये च वानर-श्रेष्ठाः[14] शत[15]-शोऽथ सहस्र-शः ।
N] आ-स्फोटयन्तः सं-हृष्टाश् चक्रुः किलि[16]किलाम् अपि॥८६॥ [N
ते नगान्[17] नग-संकाशान् गृह्य शाखा-मृगर्षभाः ।
N] बभंजुर्[18] वानरास् तत्र चकर्षुश्[19] च रसा[20]-तले ॥८७॥ [५३
बद्धुं[21] समाऽरभन्[22] सेतुं मध्ये नद-नदी-पतेः[23] ।

---

१. आ–आदिशस् । च–प्रादिशस् । २. ल₂–च । ३. रा–महा-पुण्यं । ४. ल₁–तु…सु० । ५. ल₁–प्रहर्षणम् । ६. फ अ–राजा तु । ७. ल₁–वानराः । ८. ब–हनुमां । ९. म–०मुखक० । १०. फ–सुखेनश् । ११. आ फ–०दर्शीव । १२. रा–गवय । १३. फ–श्ररभो । आ–सरभो । १४. ब–वानरश्रेष्ठाश्च । १५. रा ब–२य ३यपादौ म स्तः । १६. फ च अ–किलिकिलास् । म–किलिकिलान् । १७. ल₂ अ–नगा नागसंकाशां । ब–०संकाशां । प्र म ल₁–०संकाशा । १८. आ–भवन्तु । च ल₂–बभंज । प्र ब म ल₁ अ–बभंजु । १९. फ रा–चकषुश् । आ–चकर्षश् । २०. फ रा–०तलान् । २१. च प्र ल₁ल₂ आ–बद्धुं । २२. आ–समारभव । च–सेनारभत । २३. आ रा ब–०पते ।

N] वेग-सारा[1]: प्रगे[2] काले[2] महाऽभ्रम् इव वायुना ॥८८॥ [N
शालांश्[3] च वानरास् तूर्णं[3] चूतान् नीपांस्[4]तथैव च ।
८] कुटजान् अर्जुनांस्[5] तालांस्[5] तमालांस् तिन्दुकान्[6] वटान्[6] ८९[८
स-मूलान् अपि चोन्-मूलान् कृत्वा वृक्षान् महौजसः ।
N] इन्द्र-केतून्[7] इवोद्[7]-यम्य प्र-जग्मुर्[8] बाहु[9]-शालिनः॥९०॥ [८६
लता-पादप-पुष्पाणि[10] नालिकेरांश्[11] च पुष्पितान्[11] ।
N] खर्जूरान् पनसान् आम्रान् अशोकांस् तिलकान् अपि[12]॥९१॥ [N
९पू] वृक्षाणां तानि कूटानि गिरीणां शिखराणि[13] च ।
N] प्र-चिक्षिपुस् तृणैः सार्धं महतश् च मही-रुहान्॥९२॥[12] [N
अन्यांश् च वृक्षान् आ-दाय तूर्णं[14] काष्ठं च सर्व-त[15]ः ।[16]
९उ] सागरे सलिले सेतुं चक्रुः शत-सहस्र-शः ।[16]
N] तैः शालैर्[17] अव-कीर्णैश् च[17] चक्रुः[18] सेतुं महोदधौ[18]॥९३॥[19] [N

---

१. आ-०सारोः । २. च रा ब म ल$_1$-प्लवे । प्र-प्लवा । ल$_2$ अ-प्लवकाले ॥ ३. फ च-शालां बलानश्वकर्णां । रा प्र ब म ल$_1$ ल$_2$ अ-सालांश्च वा० । ४. आ फ च-नीपांश् च वानराः । ५. ल$_2$ अ-अर्जुलांस् । च-अर्जुनां स्तालो । ६. प्र-तिर्मुकाचरान् । रा-तिंदुकान् वरान् । म-तिर्मुकान् वटान् । ल$_1$-तिंस्वकान् भुजान् । ७. फ-इन्द्रवारुणि चोद्यस्य । प्र-इन्द्र-केतूनिवोद्स्य । ८. फ-प्रजहुर् । ९. रा ब-बलशा० ॥ १०. फ-०पुष्पानि । ११. रा प्र ब म ल$_1$-नालिकेलांश् । ल$_2$ अ-नारिकेलांश् । १२. च रा प्र ब म ल$_1$ ल$_2$ अ-नास्ति । १३. फ-शिषराणि । १४. आ फ रा ल$_1$-तृणकाष्ठं । १५. आ फ-०श । १६. च-नास्ति । १७. ब म ल$_1$ ल$_2$ अ-सालैर० । प्र-सालैरिव कीर्णैं । फ-शालैश्चाश्वकर्णैश्च । १८. फ प्र-धवैर्वंशैश्च वानराः । १९. अतः परं भिन्नक्रमोऽधिकश्च पाठः-फ च रा प्र ब म ल$_1$ ल$_2$-कुटजैरर्जुनैस्तालैस्तमालैस्तिन्दुकैर्वटैः । महद्भिः पर्वताग्रैश्च-क्रुः सेतुं महोदधौ ॥

दश-योजन-विस्तारम् आ-यतं शत-योजनम् । [७६पू
१२] नलश् चक्रे महा-सेतुं मध्ये नद-नदी-पतेः ॥९४॥[1] [६१पू
ततः शाखा-मृगाः सर्वे पुष्पितान् विहगा[3]ऽयुतान् ।
१४] स-मूलांस्[4] तूर्णम् उत्-पाट्य चिक्षिपुर्[5] लवणाऽम्भसि॥९५॥[6] [N
वृक्ष-पत्राणि[7] काष्ठानि वृक्षांश् चाऽश्म-तृणानि च ।
१५]सम्-उद्रे क्षिप्यमाणानि[9] न श(?स)सं(?[10] स्त्र)सुः कथं-चन॥९६॥[N
शैलानां[11] दीर्य-माणानां[12] वृक्षाणां[13] चैव पात्यताम् ।
२१] बभूवु[14] (-?व) तुमुलः शब्दस्[15] तदा तस्मिन्[16] महोदधौ ॥९७॥[६६
दश-कोटि-परीमाणा[17] ष(?वि)[18] ष्टिः सम्-अधिका[19]ऽपि वा ।
N] तृण-काष्ठ-वरंडीभिः[20] सागरं सम्-अपूरयत[21] ॥९८॥ [N
अ-मानुषं तु[22] कुर्वाणा[23] वानराः कर्म तेऽद्भुतम्[24] ।

---

१. फ—नास्ति ॥ २. फ—ते हि साखा० । ३. फ—भ्रमरायुतान् । ४. फ—पादपांस् । ५. आ—विक्षिपुर् । ६. प्र ब रा म ल$_1$ ल$_2$ अ—अतः परं 'दशकोटिपरीमाणा' इत्यादिपाठो व्यत्यासेन पठितः । ७. आ—वृक्षपर्णामुपादाय । च रा प्र म ल$_1$—वृक्षपर्णान्युपादाय । ल$_2$ अ—वृक्षपर्णाण्युपादाय । ८. आ—चान्ये तृ० । फ—चास्ये तृ० । ९. च रा प्र ब ल$_2$—०मानानि । १०. फ—न च शसंसुः । च ब—न च स्रेसुः । रा—न चस्तेषु । प्र—न च खेदः । म—तान् शसंसुः । अ—न च शस्रेसुः । ल$_2$—न वस्रेसु ॥ ११. आ—शैलाना । च—शलानां । १२. फ—भिद्यामानानां । प्र—धार्यमाणानां । म ल$_1$ ल$_2$ अ—दार्यमाणानां । १३. फ—वृक्षाणां चैव पातने । च—द्रुमाणां च सहस्रशः । रा ब—द्रुमाणां चैव विशेषतः । प्र म ल$_1$ ल$_2$ अ—द्रुमाणां च विशेषतः । १४. रा ब—बभूवुर् । १५. फ—संघः तदा । रा ब—शब्दस्तत्र । १६. च रा प्र ब म ल$_1$ ल$_2$ अ—तत्र महार्णवे ॥ १७. ब अ—परीमाणाः । प्र—परषाणां । १८. म—संवेस्य । फ—विष्टः । १९. म—स…धिकापि । २०. आ—तृणकाष्ठ चरंचीभिः । च रा प्र ब म—तृणकाष्ठा वरंडीभिः । २१. प्र ल$_2$ अ—समपूजयत् ॥ फ—समपूरयन् । २२. आ फ च—स्म । २३. च—कुर्वाणा सगवानराः । २४. आ च—तद्भुतं । फ—रा प्र ब ल$_1$ अ— ते द्रुतम् ।

N] तत्र तत्र व्यू-अ[1]वर्तन्त ब[2]ल-वन्तो बली-मुखाः ॥९९॥ [N
नाग-प्राणा म[3]हा-वेगाः कपय[4]ः का[5]म-रूपिणः ।
२३] पर्वतान् उप-क[6]र्षन्ति न[7]खैःपरि-लँ(?लि)ष(?ख)न्ति च १०० [५८
ते[9] वै गोष्ठ्याऽव-हास्यैश् च[8] कुत्सयन्तः परम्-परम् ।
N] आ-जह्रुः संक्र[10]मं-द्रव्यं यथा-श[11]क्त्य् अति-शक्ति[11] च ॥१०१॥[12] [N
N] प्र-त्विष्यते च तत् सर्वं तेन सस्व[13]निरे दिशः ।
२२पू] उन्म[14]त्त-भूतः क्षुभितो व्या-घूर्णन्न् इव सागरः ॥१०२॥[15] [N
विचित्र-पुष्प[16]ा गिरयो धातु-चि[17]त्र-शिखास् तथा ।

---

१. फ—विवर्त्तन्तो । प्र—विवर्धन्तो । २. फ—विलपन्तो ॥ ३. च रा—सहावेगाः । ४. ल$_{1}$—कारयत् । ५. ल$_{2}$ अ—प्राणरूपिणः ६. फ—अववर्षन्ति । च म ल$_{1}$ ल$_{2}$—अपकर्षन्ति । रा—अपि कर्षति । ब प्र अ अपि कर्षन्ति । ७. फ—यन्त्रैः परिनयन्ति । आ—न षैः परिल० । रा—नखैः परिनयन्ति । ब ल$_{1}$—नखैरपनयन्ति । च प्र अ ल$_{2}$—नखैः परिणयन्ति । म—यन्त्रैः परिणयन्ति । ८. अतः परमधिकः पाठः—च रा प्र ब म ल$_{1}$ ल$_{2}$ अ—ते नगान्नगसंकाशास्तदा शाखामृगर्षभाः । बभंजुर्बहवस्तत्र समुद्रं चावतस्थिरे ॥ ९. फ—ते गोष्ठीव्यवहारैश्च । च—ते वै गोष्ठ्यावहस्यैश्च । रा अ—ते चैव… …स्यैश्च । ब—ते चैव निनद्……स्यैश्च । प्र—ते चैव……वहु…रम्यैश्च । म—तानावृत्यातिहासैश्च । ल$_{1}$—चे चैत्र वानरा यस्य । ल$_{2}$—चेव……… स्यैश्च । १०. आ च—संक्रमं द्रव्यं । रा—संभ्रमं द्रव्यं । ब—परमं द्रव्यं । प्र—सर्वतो द्रव्यं । म—संक्रमन् द्रव्यं । ल$_{1}$—सरसं द्रव्यं । ल$_{2}$—सद्रुमं द्रव्यं । ११. फ—यथाशक्त्या अभिसर्प्य च । रा ब—यथाशक्त्यातिशक्तिश्च । प्र—यथाशक्त्या यथांति……… । म—यथा शक्त्यानिशक्ति च । १२. आ फ—अतः परं "शरीरेष्वपिशेरते" इति ११३ श्लोकं यावत् पाठो नास्ति ॥ १३. आ प्र—सस्वनता । ल$_{2}$ अ—सस्वनिरो । १४. च—उन्मतः भूतः । १५. रा प्र ब म ल$_{1}$ ल$_{2}$ अ—अतः परमधिकः पाठः—कुर्वाणास्सागरे सेतुं वानरास्ते सहस्रशः ॥ १६. च—०पुष्पा । १७. रा—धातुश्चित्रासिखास् । ब—धातुश्चित्र० । ल$_{2}$—धातुचित्रा शिखास् ।

N] क्षोभ्यन्ते[1] हरि-शार्दूलैर् उद्-यतैः सेतु-बन्धने[2]॥१०३॥ [N
तस्मिन् कोटि[3]-सहस्राणि वानराणां महाऽऽत्मनाम्[4] ।
N] चिक्षिपुर्[5] वि-विधं द्रव्यं सम्-उद्रे सेतु-बन्धने ॥१०४॥[6] [N
शालैस्[7] तालैस् स-मन्दारैस् तथा वेत्र-लता[8]-चयैः ।
१७] सेतुं बबन्धुः[9] कीलैश् च वृक्षैश् च सु-महाबलैः[10] ॥१०५॥[N
नव-मेघ-निकाशैश् च नगैः[11] परम-पुष्पितैः ।
१८] तैः स-मूलैः[12] स-पत्रैश् च नलः सेतुं नि-बद्धवान्[13] ॥१०६॥ [N
बलिभिर् वानरैर् वीरैर्[14] बाहुभिस् तीर-जा द्रुमाः ।
२०] ताडिताः पातिताश्[15] चैव सम्-उद्रे सरितां पतौ ॥१०७॥ [N
सु-ग्रीवश् चाऽपि शृङ्गाणि[16] गिरीणां[17] शिखराणि च ।
२४] आ-रुह्याऽऽरुह्य शतश्[18] चिक्षेप लवणाऽम्भसि॥१०८॥[N
दर्दुरस्याऽङ्गदः[19] श्री-मान् शृङ्गम् आ-रुह्य[20] पाणिना ।
२५] लवणाऽम्भसि चिक्षेप स-विद्युतम् इवाऽम्बुदम् ॥१०९॥[21] [N
सशृङ्ग-कन्दर-वनं सर्व-तः पुष्पितं महत् ।
२६] आ-रुह्य जहतुः श्री-मान् मैन्दश्[22] च द्वि-विदश्[23] च ह[23]॥११०॥[N

---

१. च—क्षाभ्येते हरिशार्दुलै । २. च—०बन्धनम् । प्र ब—त्रुटितः ॥ ३. च—कौटि ० । ४. च—महात्मानाम् । ५. च $ल_2$—विक्षिपुर् । ६. प्र $ल_1$—नास्ति ॥ ७. रा प्र ब $ल_1$ $ल_2$ अ—सालैस् । ८. रा ब—०लताच्चयैः । प्र—०लताश्चयैः । म—०लताशयैः । ९. च ब—बबन्ध । म अ—बन्धु ॥ १०. ब $ल_2$—०बलैः॥ ११. रा ब—नागैः । १२. च म $ल_1$,$ल_2$ अ—समुलैः । १३. प्र—सबन्धवान् । १४. रा—वीराः । च प्र म $ल_1$ $ल_2$—नास्ति । १५. रा—पादिताश् । ब—पाटिताश् । १६. रा ब म $ल_1$—श्रङ्गानि । १७. च प्र अ—गिरीशि० । १८. च प्र म $ल_1$ $ल_2$ अ—शतश् ॥ १९. ब अ—दुंदुरस्यांगदः । रा—दुर्दरस्या० । $ल_2$—ददुः रस्यांगदः । प्र—दुर्दुरस्यां० । म—दुर्दरश्चांगदः । (दुर्धरस्यां०)। २०. $ल_1$—आगृह्य । २१. $ल_1$—नास्ति ॥ २२. $ल_1$—मैंदाश् । २३. रा ब $ल_2$ अ—द्विविधश्च ह । $ल_1$—द्विविधश्च यः ॥

हनु-मता च वीरेण[1] यत्न[2] कृतं सेतु-कर्मणि।
सप्त-योजन[3]-विस्तीर्णं[3] पर्वतं प्राऽऽप्य पाणिना।[4]
N] लवणाऽम्भसि[5] चिक्षेप मध्ये कपि-वृषम्[6] तदा[7]॥[4]१११॥[N
गिरीणां भिद्य-मानानां सागरे सेतु-कर्मणि।
२७] भुवि दिव्य् अन्तरिक्षे च श्रूयते नि-नदो महान्॥११२॥ [N
तेन वि-त्रासिताः सर्वे मृग-पक्षि-गणा वने।
२८] नाऽशक्नुवन्न् उत्-पतितुं शरीरेष्व् अपि शेरते[8]॥११३॥[N
क्रियमाणे[9] तदा सेतौ[10] वानरैस् तैः[11] सहस्र-शः।
N] उन्मत्त-भूतः क्षुभितो व्याघूर्णन्[12] इव सागरः॥११४॥ [N
प्र-क्षिप्यमाणैर्[13] उपलैः[14] सहसा क्षोभितं जलम्।
N] समुत्-पत्य तदाऽऽकाशं [15]प्रति-पेदे पुनः पुनः॥११५॥ [N

इत्यार्षे[16] रामायणे[16] सुन्दर-काण्डे समुद्र-धर्षणं[17]
नाम षण्णवतितमः सर्गः॥९६॥

---

१. ल$_2$ अ-वेगेन। २. प्र-तत्। ३. च-०योजनमास्तीर्णं। ४. प्र ल$_2$ अ-नास्ति। ५. च-लवणंभसि। ६. रा-वपिवृषस्। ७. च रा-तथा। ८. आ-अधिशेरते॥ ९. आ-कुर्वाणे स्म। फ-कुर्वाणैः स्म। १०. फ-सेतुं। च रा ल$_2$-सेतो। ११. प्र-ते। १२. आ-व्याघूर्णे॥ १३. फ-प्रक्षेप्यमाणैर्। रा ब प्र ल$_1$-प्राक्षिप्यमानैर्। १४. रा-उपलैः। १५. च-प्रतिपदे॥ १६. ल$_2$ अ-नास्ति। १७. आ-०द्रदर्शनो रा ब-०द्रवर्णनं। फ प्र म ल$_1$ अ-०द्रदर्शनं।

[वं-९५]= [ सप्तनवतितमः सर्गः ] =[दा-२२]

ततो देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।

२९] आ-वृत्य गगनं तस्थुर् द्रष्टु-कामास् तद् अद्भुतम् ॥१॥ [७८

ऋषयः पितरो यक्षा राजर्षि-पतगोरगाः ।

३०] आ-जग्मुः प्रेक्षितुं सेतुं बध्यमानं महाऽर्णवे ॥२॥ [N

अ-विघ्नम् एव रामस्य सर्वे वियद्-अधिष्ठिताः ।

N] ऊचुः परम-संहृष्टाः परस्पर-समागमे ॥३॥ [N

अ-विदूराच् च रामस्य सर्वे वि-यति सं-स्थिताः ।

३१] पूजां च राघवे चक्रुर् ऊचुश् च मधुरा गिरः ॥४॥ [N

ऊचुः परम-संहृष्टाः परस्परम् इदं वचः ।

दण्ड एव परो लोके दुर्-जने प्रति-भाति नः ।

N] न क्षमाऽऽह्य् अकृत-ज्ञेषु शां(?सां) त्वं-दानम् अथाऽपि वा ॥५[४७

तितीर्षोः सागर-जलं सेतु-कर्म-चिकीर्षया ।

N] ददौ दण्ड-भयाद् गाधं राघवस्य महोदधिः ॥६॥ [४८

---

१. आ ल२-सगन्धर्माः । फ रा ब-सगन्धर्वा । २. आ-गगने । फ-गगणं । ३. च ब-० कामा ॥ ४. आ-० गरुडा नगाः । फ-०गरुडो नगाः । ५. च-प्रेषितुः । आ-प्रेक्षितं ॥ ६. फ-अविज्ञाय व । ७. आ-सर्वेषां चित्तधिष्ठिता । च प्र ल२ अ-सर्वे ध्यायन्त्यधिष्ठिताः । रा-सर्वे ध्यायति (न्ति) धिष्ठिताः । म-सर्वे ध्यायन्तु धिष्ठिताः । ल१-सर्वे ध्यायत्यातिष्ठताः । ८. म-परस्परं संहृष्टाः ॥ ९. आ-संस्थितः ॥ १०. च प्र ब ल१ अ-पुनः । ११. फ-धिक् क्षमामकृतज्ञेषु । च-धिक्षमानमकृतः प्रज्ञे । रा प्र म ब-न क्षमा ह्यकृतप्रज्ञे । ल१ अ-न क्षमा ह्यकृतप्राज्ञे ॥ १२. च-सत्वं दानम् । रा ब प्र म ल१ ल२ अ-सामदानम् ॥ १३. रा-तितीर्षो । १४. आ-सागरजलसेतु० । १५. रा-गाध ॥

३२पू] न चकार पुरा कश्चिन् न च[1] कर्त्ता भविष्यति ।

N] सो[2]ऽमरेष्व् अ[2]पि लोकेषु सागरे सेतु-बन्धनम् ।

३२उ] उपाऽऽदाय सुरान्[3] सेन्द्रान्[3] भविता[4]ऽन्यत्र राघवात्[5] ॥७॥ [N

ये रामम् एवं[6] द्रक्ष्यन्ति सम्-अन्ताद् अ-कुतोभयम् ।

३३ ] कारयन्तम्[7] इमं[7] सेतुं सम्-उद्रे सरितां पतौ ॥८॥ [N

तेषां पुत्रा भविष्यन्ति वीर्य-वन्तो यशस्-विनः ।

३४ ] आ-हर्त्तारः[8] पराऽर्ध्यस्य[9] यशसो वि-क्रमस्य च ॥९॥ [N

यावत् सम्-उद्रम्[10] तावच्[11] च सेतु-बन्धोर्[11] (?न्धो) भविष्यति ।

३५ ] यावच् च सागरे कीर्तिस् तावद् रामे[12] भविष्यति ॥१०॥ [N

कः सम्-उद्रस्य[13] बध्नाति सेतुम्[14] इत्य्-एव चारणाः[14] ।

३६ ] विद्या-धराश्[15] च[16] शत-शः[16] सु-प्रीतास् तूर्णम्[17] आ[17]-ययुः ॥११॥ [N

रामः सेतुं समुद्रस्य बध्नातीऽति दिशो दश ।

३७ ] जगाम तुमुलः[18] शब्दः पृथिव्याम् अपि शुश्रुवे[19] ॥१२॥ [N

तद्[20] अ-चिन्त्यम्[20] अनाऽधृष्यम् अद्भुतं लोम[21]-हर्षणम् ।

---

१. रा—कर्ता नाकरिष्यति । ब—कर्ता भविष्यति । प्र म ल१ ल२ अ—कर्ता न करिष्यति । २. च—सामरेष्वपिलो० । रा ब म ल१—सामरे त्रिषु । प्र ल२ अ—सामरेषु च । ३. फ—सुराजेन्द्राद् । ४. च रा ब—भविता यत्र । ५. राघवः ॥ ६. आ—एव । ल१—इति । ७. च—कारयन्तमि……॥ ८. आ रा प्र ब म ल१ ल२ अ—आहर्त्ता च । ९. रा ब म ल१—परार्थस्य । प्र—पुराणस्य । ल२ अ—परा यस्य ॥ १०. प्र ल२ अ—समुद्रास् । ११. फ—तावत्तु सेतु एष । च म—तिष्ठेत तावत्सेतुर्भ० । रा ब—तिष्ठेत्तु सेतुर्भ० । प्र ल१ ल२ अ—तिष्ठन्तु तावत्सेतु । १२. आ—रामो ॥ १३. रा—समुद्रेषु । १४. रा प्र ब म ल१ ल२ अ—सेतुं नदनदीपतेः । फ—० व चारणः । १५. रा ब—विद्याधरश् । १६. फ—चाप्सरसः । रा—च शतसः । १७. च—तूर्ण…………भ्ययुः । आ फ ब—तूर्णमभ्ययुः ॥ १८. रा—तुमलः । १९. च—सुश्रुवे ॥ २०. प्र—तदा चिन्त्यमना० । आ फ—तदचिन्त्यमाना० । २१. रा च ब ल१ ल२—रोम० ॥

N] ददृशुः सर्व-भूतानि सागरे सेतु-बन्धनम् ॥१३॥ [७८
कृतानि प्रथमेनाऽह्ना[1] योजनानि चतुर्दश ।
N] वानरैर् नगं[2]-संकाशैः सेतु-कर्मणि नि-ष्ठितैः[3] ॥१४॥ [६८
ततो विद्या-धराः सर्वे[4] देवा देवर्षयस् तथा ।
N] यक्ष-भूत-पिशाचांश्[5] च सर्वे चाऽप्सरसां गणाः ।
वि-स्मितास् तस्थुर् आकाशे बध्यमाने[6] महोदधौ ॥१५॥ [७९
श्रान्तान्[7] न तपते[8] सूर्यः[8] कदाचिद् अपि वानरान् ।
३८ ] अभ्राणि[9] जज्ञिरे[10] दिग्भ्यः पीत्वा[11] सूर्य-प्रभाम् इव ॥१६॥[N
प्र-ववर्ष च पर्जन्यो[12] मारुतश् च शिवो[13] ववौ[13] ।
३९ ] वृक्षेभ्यश् च तदा[14] जज्ञे कपि-भक्ष्यं[15] फलं[16] परम्[16] ॥१७॥ [N
ततोऽस्तं[17] गत आदित्ये नि-षेदुर् वानरर्षभाः ।
आ-रक्तांस्[18] तु समा-स्थाप्य[19] सर्वे ते सर्वतो[20]-दिशम् ।
N] सुषुपुः[21] सुमहा-वीर्याः ससुग्रीव-विभीषणाः[22] ॥१८॥[23] [N
कथं दृश्येत[24] सा लंका कथं बध्येत सागरः ।
N] एवं[25] समुत्-सुका भूत्वा सेतवे[26] वानरर्षभाः ॥१९॥[23] [N

---

१. फ–प्रथमेह । च–प्रथमेणाह्ना । २. फ ल$_{2}$ अ–नाग० । ३. आ ल$_{2}$ अ–निश्चितैः ॥ ४. रा–सर्वैः । ५. रा–०पिशाचश् । ६. च–वध्यमाणेन ॥ ७. फ–सान्तान्न तपते । रा अ–आर्तानापतते । प्र ब म ल$_{1}$ ल$_{2}$–आर्तान्न तपते । अ–आर्तान्न पतते । ८. फ–सूर्यस्तदा वानरपुंगवान् । ९. प्र–अंधानि । १०. च–०जज्ञिर । ११. आ रा–पीता ॥ १२. आ–पर्यन्यो । फ–पर्यण्यो । रा–पर्यन्यै । १३. आ–शि……वौ । १४. फ म–तथा । १५. फ ल$_{1}$–०भक्षं । १६. रा प्र ब ल$_{2}$ अ–परं फलं । फ म–फलं बहु ॥ १७. ब ल$_{2}$–ततोस्तगत । १८. आ ल$_{1}$–अरक्षंस् । प्र–आरक्ष्यंस् । १९. आ च रा प्र ल$_{1}$ ल$_{2}$ अ–समास्थाय । म–सममास्थाय । २०. च–पर्वता दिशम् । २१. आ–सुषुवुः । फ–तुष्टुवुः । २२. रा म ल$_{1}$–०विभीषणः । २३. ब–नास्ति ॥ २४. रा–दृश्यंत । २५. आ रा म–कथं । २६. आ फ प्र म ल$_{1}$ ल$_{2}$ अ–क्षोरते । रा म–सर्वे ते ॥

उत्साह-युक्ता हरयः कौतूहल-समन्विताः ।
N] रात्रि-शेषं तद्[1] अत्य्-उग्रं निन्युः कृच्छ्राद् इवोदिताः[2] ॥२०[N
ततः प्रभात-समये कृत्वा पौर्वा[3]ऽह्नि(?ह्नि)कीं क्रि[4]याम् ।
परस्परं समुत्-सा[5]ह्य प्र-स्थिताः सर्वतो-दिशम् ।
N] ततः शृंगा[6]णि जगृहुः पर्वतानां प्लवं-गमाः ॥२१॥ [N
विचित्र-पु[7]ष्पा गिरयो धातु[8]-चित्र-शिखास् तथा ।
N] शोभन्ते हरि-शार्दूलैर्[9] उद्-यतैः सेतु-बन्धने ॥२२॥ [N
तानि [10]कोटि-सहस्राणि वानराणां महाऽऽत्मनाम् ।[11] [७९पू
N] चिक्षिपुर् वि-विधं द्रव्यं सम्-उद्रे सेतु-बन्धने ॥२३॥ [N
शा[12]लैस् ता[12]लैः स-संतानैः तथा वेत्र-लता-[13]शतैः ।
N] सेतुं बबन्धु[14]ः कीलैश् च वृत्तैश् च सु-महा-बलैः ॥२४॥ [N
ना[15]ग-मेघ-निकाशैश् च [16]नगैः परम-पुष्पितैः ।
N] तैः स-मूलैः स-पत्रैश् च नलः सेतुं बबन्ध[17] ह[17] ॥२५॥ [N
[18]बलिभिर् वानरैर् वेगाद् बाहुभिस् तीर-जा द्रुमाः ।
N] ताडिताः पातिताश् चैव सम्-उद्रे सरितां पतौ ॥२६॥ [N
प्रिय-काम[19]स् तु[19] रामस्य सु-ग्रीवः सं[20]प्र-हर्षयन् ।

---

१. ब तदात्युग्रं । २. फ च रा प्र ब म ल$_1$ ल$_2$ अ–इवोद्यताः । ३. रा–पौर्वाणिकिं । ४. रा–क्रिया । ५. आ फ म–समुत्साद्य । प्र–समुत्साय । आ–समासाद्य । ६. रा ब–श्रङ्गानि ॥ ७. च–विचित्रा पुष्पा । ८. रा–धातुश्चित्र० । प्र–धातुश्चित्राशिखस् । ९. आ फ–हरिशार्दूलै उद्यताः । च–०शार्दूलैरुद्यता । प्र–०शार्दूलैरुदितैः ॥ १०. आ–कोटी० । ११. इत ऊर्ध्वं कियांश्चित्पाठः केषांचित्कोशानां साक्षतो पूर्वस्मिन्सर्गे टिप्पणङ्कितः पठितचरः द्र० । अत एवाऽत आरभ्य 'सरितां पतौ' इत्यन्तः पाठो–च रा प्र ब म ल$_1$ ल$_2$ अ–नास्ति ॥ १२. फ–शाकतालैः । १३. फ–०चयैः । १४. आ–ववंध ॥ १५. आ–नगमेनि० । १६. फ–नागैः । १७. फ–व्यवंध यत् ॥ १८. फ–वलिभि ॥ १९. रा–०कामास्व । २०. फ–समहर्षयत् ।

N] वि-बन्धुं[1] सं[2] समा-रेभे स्वयं नद-नदी-पतौ ॥२७॥ [N
वेग[3]-सारो(?रे) प्लु (?प्रं) गे काले महाऽभ्रम् इव वायुना ।
N] स्वयं वानर-राजेन गिरि-शृंगम् उपाऽऽहृतम्[4] ॥२८॥ [N
सु-ग्रीवः शैल-शृंगाणि[5] गिरीणां शिखराणि[6] च ।
N] आ-रुह्य[7] शत-शी वृत्तैश्[8] चिक्षेप लवणाऽम्भसि ॥२९॥[8] [N
दर्दुरस्याऽङ्गदः श्री-मान् शृंगम् आ-रुह्य पाणिना ।
२९] लवणाऽम्भसि चिक्षेप स-विद्युतम् इवाऽम्बुदम्[9] ॥३०॥[8] [N
अर्द्ध-योजन-विस्तीर्णं[10] विन्ध्यस्य शिखरं[11] महत् ।
N] सु-षेणः[12] पाणिना[13] गृह्य पातयामास[13] सागरे ॥३१॥ [N
प्रक्षिप्त-मात्रे[14] शिखरे[15] जल-राशिः[16] समुत्-थितः[17] ।
N] आकाशाऽभि-मुखो भूत्वा[18] वि-संसर्प[19] समन्त-तः ॥३२॥ [N
नीलेन मलयस्याऽथ शृंगं[20] द्रुम-शताऽऽकुलम् ।
दोर्भ्याम् उत्-पाट्य[21] तरसा क्षिप्तं[22] लवण-सागरे ।

---

१. आ-त्रिवद्धुं । फ च-वद्धुं । प्र रा अ ब ल$_1$ ल$_2$ म-बद्धुं । २. फ च प्र रा म अ-समारभत्सेतुं स्वयं । ब ल$_1$-समारभेत्सेतुं स्वयं । ल$_2$-समारेभे सेतुं स्वयं ॥ ३. फ-वेगेनोपप्लवे । रा-वेगसारोष्णवो । आ प्र ब ल$_2$-वेगसारोष्णगे । अ म ल$_1$-वेगसारो प्लवे । ४. फ ब-उदाहृतम् ॥ ५. फ-०श्रृंगानि । ६. फ-शिषराणि । ७. फ-आरुह्यारुह्य शतशश् । ८. प्र ब म ल$_1$ ल$_2$ अ-नास्ति ॥ ९. आ-इवां सुदम् ॥ १०. आ-०विस्तीर्णं । ११. अ-शिषरं । १२. फ च-सुखणः । प्र-सुखेणः । फ-सुखेनः । १३. रा प्र ब म ल$_1$ ल$_2$ अ-पातयामास पाणिना गृह्य ॥ १४. च म ल$_1$ अ-प्राक्षिप्यमाणे । रा प्र ब ल$_2$-प्राक्षिप्यमाने । १५. फ रा-शिषरे । १६. च-०रासि । रा-०राशिं । १७. प्र-समुत्थिता । १८. च रा प्र ब म ल$_1$ ल$_2$ अ-गत्वा । १९. रा-विससर्ज ॥ २०. रा-श्रृंगद्रुमश० । फ-श्रृंगं द्रुमसमाकुलं । प्र ब म-श्रृंगं द्रुमलताकुलम् । च-श्रृंगं द्रुश० । २१. आ फ-उत्पाद्य । ब-उत्पात्य । २२. रा-क्षिप्तं ।

N] शब्दश् च सु-महान् य(?[1]जं) ज्ञे वि-द्युताम् अम्बरे यथा ।।३३[N
स-शृंगं[2] चन्दन-वनं[2] सर्व-तः पुष्पितं महत् ।
२६] आ-रुह्या[3]ऽऽजह्रतुः [4]शीघ्रं मैंदश्[5] च द्वि-विदश्[5] च ह ।।३४।।[N
हनू-मता च वीरेण यत् कृतं सेतु-कर्मणि ।
सप्त-योजन-विस्तीर्णं पर्वतं प्राऽऽप्य पाणिना ।
N] लवणाऽ[6]म्भसि चिक्षेप मध्ये कपि-वृषभस् तदा ।।३५।।[7] [N
गजो गवाऽक्षो गवयः शरभो[8] गन्ध-मादनः ।
शृंगाण्य्[9] आ-दाय [9]पंचैते महेन्द्राद्[10] आ-गता[10] द्रुतम्[11] ।
N] चिक्षिपुः सहसा सर्वे पर्वतान्[12] पर्वतोपमाः ।।३६।। [N
पर्वतांश्[13] च सुसं-क्रुद्धाः[13] पतन्तः[14] सागरा[14]ऽम्भसि ।
N] क्षोभं चक्रुः[15] सम्-उद्रस्य[16] क्षीरोदस्[17]येव मन्थने[18] ।।३७।। [N
गिरीणां भिद्यमानानां सागरे सेतु-कर्मणि ।
N] [19]भुवि दिव्य्[19] अन्तरिक्षे च [20]शुश्रुवे नि-नदो महान् ।।३८।।[21] [N

---

१. फ च रा प्र ब म ल$_{1}$ ल$_{2}$ अ—जातो ।। २. प्र—सशंखं च० । च—सशृंगं चन्दनवने । ल$_{2}$ अ—सशृंगचन्दनवने । ३. फ प्र ब म ल$_{2}$—आरुह्य जहतुः । फ—आरुह्य जह्नतुः । ४. फ च प्र ब म ल$_{1}$ ल$_{2}$ अ—श्रीमान् । रा—क्षिप्रं । ५. च—द्विविधश्च । ल$_{1}$ अ—द्विद्विधश्च । ६. फ—लवनाम्भसि । ७. प्र ब म ल$_{1}$ ल$_{2}$ अ—नास्ति ॥ ८. आ—सरभो । ९. च प्र ब ल$_{1}$—पंचैते शिखरान् गृह्य । रा—पंचैते शिखनान्गृह्य । १०. रा—महेन्द्रागता । ११. फ—द्रुमम् । १२. फ—पर्वतात् ॥ १३. फ च रा म ल$_{1}$ ल$_{2}$ अ—पर्वतास्तु सुसंमुक्ताः । प्र—पर्वतास्तासु संमुक्ताः । प्र—पर्वतास्तु समुत्यक्ताः । १४. प्र ब अ—पतंतो लवणाम्भसि । १५. च—चक्रं । १६. प्र ब ल$_{2}$ अ—समुद्यम्य । १७. आ—क्षारोदस्यैव । च रा प्र ब ल$_{1}$ ल$_{2}$ अ—सागरस्येव । १८. आ—बन्धने । रा—मन्थनम् । ब—मंथरे ।। १९. च प्र ल$_{1}$ ल$_{2}$ अ—दिवि भुव्यन्त० । रा ब म—दिवि भूम्यन्त । २०. रा ब म ल$_{2}$ अ—श्रूयते । प्र ल$_{1}$—श्रूयेत । २१. आ—नास्ति ॥

तेन वि-त्रासिताः सर्वे मृग-पक्षि-गणा वने ।
२८] अशक्नुवन् प्रति-स्थातुं शरीरेष्व् एव शेरते ॥३९॥[1] [N
आश्चर्यम् इत्य्-अभाषन्त[2] मुनयो दिवि[3] सं-स्थिताः ।
N] पुष्प-वर्षाणि मुमुचुः[4] स-गन्धर्व-महोरगाः ॥४०॥ [N
साधु साध्व् इति भाषन्तो[5] वानरान्[6] प्र-शशंसिरे ।
N] देव-दुन्दुभयो[7] नेदुर् ननृतुश् चाऽप्सरो-गणाः[8] ॥४१॥ [N
तुंबरु[9]-प्रमुखाश् चैव गन्धर्वा गीत-कोविदाः[10] ।
N] दिव्य[11]-तानेषु गायन्ति तन्त्री-लय-समन्वितम्[12] ॥४२॥ [N
दिवि तेषां नि-नादस् तु वानराणां च नि-स्वनः ।
पर्वतानां च सं-घर्षाच्[13] छब्दः[13] सम्-अभवत्[14] तदा[14] ।[15]
N] शुचि[16] शुक्र (?क्रे)-व्यतिक्रान्ते[17] मेघानां गर्जताम्[18] इव ॥४३[N
सत्त्वानां च महा-नादैः स्वनिता[19] गिरि-कन्दराः[20] ।

---

१. आ प्र ब म ल१ ल२ अ–नास्ति ॥ २. फ–अभाषस्तं । ३. रा दिति । ४. फ–मुमुचुस्तथा गंधर्वपन्नगाः ॥ ५. फ रा प्र ब म ल१–चाभाष्य । च–चोभाष्य । ल२ अ–वाभाष्य । ६. आ–वानराः प्रशशंशिरे । फ–०रान् प्रशसंशिरे । च–वानरांश्च प्रसंसिरे । रा ब–वानरेन्द्रा शशंसिरे । ७. रा–देवदुंदभयो । ८. प्र–चाप्सरसो गणाः ॥ ९. च प्र अ–तुंवुरु० । १०. च रा–० कोविदा । ११. फ–दिव्यगाणेषु । प्र च–दिव्यगानेषु । ब म ल१ ल२ अ–दिव्यागानेषु । १२. रा–दिव्या गायन्ति गीतानि तंत्रीलयसन्वितम् ॥ १३. च–सवर्माछ्छब्दः । आ रा–संहर्षाच्छब्दः । १४. रा प्र ब म ल१ ल२ अ–०वन्महान् । १५. प्र–पर्वतानां च सर्वेषां घर्षाच्छब्दो अभवन्महान् । १६. फ–शचि । १७. ब म ल१–शुक्रव्यपगमे । फ–नक्रव्यतिक्रामे । च प्र रा ल२ अ–शुक्रव्यपगमे । १८. फ–गर्जितानि च ॥ १९. आ–स्वनित्वा । च रा प्र ब ल१ ल२–स्तनिता । म–स्तनिता (स्तामिता) । २०. रा–गिरिकन्दरा । ल१–गिरिकंधराः ।

N] तेन शब्देन महता नाऽन्योऽश्रूयत[1] कश्[2]-चन ॥४४॥ [N
द्वितीयेऽहनि तस्मिंस् तु मध्यं[3] प्राऽऽप्ते दिवा-करे ।
N] श्रान्तास् तु वानराः सर्वे वृक्ष-मूलानि भेजिरे ॥[4] ४५॥ [N
फलानि भक्षयित्वाऽथ[5] पीत्वा च[6] वि-विधं जलम् ।
N] वि-श्रान्ताश् च वि-तृष्णाश्[7] च पुनः सर्वे प्र-पेदिरे[8] ॥४६ [N
वृक्षान् केचित् समा-जह्रुः शिलाः केचित् समा हरन् ।
N] पर्वतानां तथा सानूंस् तृण-काष्ठांस् तथाऽपरे ॥४७॥ [N
क्षिपन्ति सहसा हृष्टा वानरा लवणाऽम्भसि ।[9]
N] क्षिप्तं[10] क्षिप्तं[10] नलः सर्वं[11] समी-भूतं[12] करोति च[13] ॥४८॥ [N
आ-गतैर् गच्छमानैश्[14] च नर्द-मानैश्[15] च वानरैः ।
N] पर्वतैः क्षिप्यमाणैश्[16] च सं-कुलं सर्व-तोऽभवत्[17] ॥४९॥ [N
दिवसेन द्वितीयेन षड्विंशद् योजनानि तु[18] ।
N] बद्धानि वानरैस्[19] तैश् च[19] सम्-उद्रे सेतु-कर्मणि ॥५०॥ [N
पश्चिमायां तु सन्ध्यायां यथा-स्थानानि भेजिरे ।

---

१. फ च रा– नान्यच्छूयत । ब अ–नान्यः श्रूयेत । प्र म $ल_1$ $ल_2$–नान्यच्छूयेत । २. फ च रा प्र ब म $ल_1$ $ल_2$ अ–किंचन ॥ ३. प्र $ल_1$ अ–मध्ये । ४. फ–श्रान्तास्तु वृक्षमूलानि भेजिरे वानरर्षभाः । ५. फ–भक्षयित्वा तु । च प्र ब म $ल_1$ $ल_2$ अ–भक्षयित्वा च । रा–भक्ष्ययित्वा च । ६. फ–तु । ७. आ $ल_2$ अ–वितृषाश् । ८. फ च रा प्र ब म $ल_1$ $ल_2$ अ–प्रतस्थिरे ॥ ९. च रा प्र ब म $ल_1$ $ल_2$ अ–नास्ति ॥ १०. फ–क्षिप्रं क्षिप्तं । रा–क्षिप्रं क्षिप्रं । ११. रा–सर्वे । १२. रा–शमीभूते । ब म–शमीभूतं । १३. फ च रा प्र ब म $ल_1$ $ल_2$ अ–सः ॥ १४. आ–०माणैश् । प्र–इच्छमानैश् । १५. रा प्र ब $ल_2$ अ–नंदमानैश् । १६. आ फ च ब म $ल_1$ अ–०मानैश्च । १७. च–पर्व्वतोऽभवत् । प्र–सर्वतो भवेत् ॥ १८. रा ब–च । १९. फ च रा ब म $ल_1$ $ल_2$ अ–वानरैस्तैस्तु । प्र–वानरेन्द्रैस्तैः ॥

N] कर्माणि कथयन्तस् ते स्वानि स्वानि प्लवं-गमाः ॥५१॥ [N
रामाय[1] कथयन्ति स्म पश्य सेतुं महोदधौ ।
N] राम-[2]पादाव् उप-स्पृश्य सु-ग्रीवस्य च[3] वानराः ॥५२॥ [N
शि[4]श्यिरे तत्र तत्रैव केचिज् जा[5]ग्रति हर्षिताः ।
N] समुत्-सुकानां तेषां तु गता सा श[6]र्वरी सु[7]खम् ॥५३॥ [N

इत्यार्षे [8]रामायणे सुन्दरे[9]-काण्डे सेतु-कर्माऽऽरम्भो नाम[10]
सप्तनवतितमः सर्गः ॥९७॥

---

१. च—रामां य । २. फ च—रामपादानुपस्पृश्य । रा—रामपादाम्बुज-स्पृस्य । ३. च—तु ॥ ४. फ—शंशिरे । आ ब—शिखिरे । रा—शिशित । प्र ल₁ ल₂ अ—शिशिरे । ५. फ—केचिज्जयेति । रा—केचिजागर्ति । प्र—केचिज्ञाः प्रतिहर्षिताः । ६. आ फ—सर्वरी । च—···र्व्वरी । ७. च—मुखम् ॥ ८. अ—नास्ति । ९. फ—सेतुकर्म । १०. च—नास्ति ॥

प्र-भातायां तु[1] शर्वर्याम्[2] उद्-गच्छति[3] दिवा-करे ।
N] वानराणां सहस्राणि प्र-युतान्य् अर्बुदानि[4] च ॥१॥ [N
तथैवर्क्ष[5]-सहस्राणि गो-लांगूल[6]-शतानि च ।
N] बबन्धुः[7] सागरे सेतुं राघव-प्रिय[8]-काम्यया ॥२॥ [N
अहं[9] पूर्वम् अहं पूर्वम् इति शैलान् प्र-चिक्षिपुः ।
N] क्षिप्ता पर्वत-वृष्टिः[10] सा चालयामास सागरम् ॥३॥ [N
क्षुभिते सागरे तस्मिन् क्षुब्धाः सागर-वासिनः[11] ।
N] नागाश्[12] च दानवाश् चैव किम् एतद् इति मेनिरे ।
प्र-लयः[13] किं नु[14] सम्प्राऽऽप्त[15] उताहो[16]ऽमृत-मन्थनम् ॥४॥ [N
N] सेतु-कर्म समा-रब्धं[17] रामेण विदिताऽऽत्मना ।
ज्ञात्वैवं[18] तत्त्व-तस्[19] ते तु निरुद्-विघ्नाम्[20] ततः स्थिताः ॥५॥ [N

---

१. प्र म ल१ ल२ अ–च । २. आ फ–सर्वर्याम् । च–सर्वयाम् । ३. च रा प्र ब म ल, ल२ अ–उदिते च । ४. ब ल१–अर्बुधानि ॥ ५. फ–तथा ऋक्षस० । ६. च रा प्र–गोलांगूलायुतानि । ब म ल१ अ–गोलांगूलयुतानि । ७. आ फ च रा ल१–वबंधु । ८. च रा प्र ब म ल१ ल२ अ–राघवप्रीतिकाम्यया ॥ ९. च–अहं पूर्वं इति शो···न्प्रचिक्षिपुः । प्र–शैलान् प्रचिक्षपुः । १०. च–पर्वतावृष्टिः सा । रा–पर्वतवृष्टिश्च ॥ ११. च प्र रा ब म ल१ अ–०भूमयः । १२. च–नागांश्च दानवांश्चैव । १३. रा–प्रलय । १४. म–तु । १५. च–संप्रातः । रा–संप्राप्ता । १६. आ–ताहोऽमृत० ॥ १७. आ फ–समारब्धः । १८. फ च ब–ज्ञात्वैव । १९. च रा प्र ब म ल२ अ–विदिताः सर्वे । ल१–विधिताः सर्वे । २०. रा ब ल१ ल२ अ–निरुद्योगास् । प्र–निरुद्वेगास् ॥

N] वानरा[1] रभसेनैव बबन्धुः सागरं[2] तदा ।
अन्ये च[3] सूत्रं गृह्णन्ति[3] दृष्टिं[4] सं-चारयन्त्य्[5] अपि ।[६०पू
N] समश्[6] च क्रियताम्[7] एष[7] नलम् एवं[8] बभाषिरे ॥६॥ [N
अन्ये[9] क्षिपन्ति ह्य् उपलान्[9] पाद-पान् अपरे पुनः[10] ।
N] वि-श्रामन्त्य्[11] अपरे[11] क्रान्ताः[12] केचिन् निद्रां सिषेविरे[13] ॥७॥[N
आऽस्फोटयन्[14] ववल्गुश्[14] च चक्रुः किलकिलाम्[15] अपि[16] ।
N] वृक्षाद् वृक्षं पतन्त्य्[17] अन्ये पर्वतात्[18] पर्वतं तथा ॥८॥ [N
दिवसेन[19] तृतीयेन[19] चत्वारिंशद्[20] योजनानि तु[21] ।
N] बद्धानि[22] कपिभिर्[23] वीरैः शेषं तु दश-योजनम् ॥९॥ [N
स्वस्त्य्[24] अयं[24] बध्यते सेतुर् इति कृत्वा प्लवं-गमाः ।

---

१. प्र-वानराः । २. फ-सागरे । ३. च ल$_1$-सूत्रं गृह्णन्ति । रा ब म अ-सूत्रं प्रगृह्णन्ति । प्र-सूत्रं प्रगृह्णन्ति । आ म ल$_2$ फ अ-च सूत्रं गृह्णन्ति । ४. आ-दृष्टिं । फ-वृष्टिं । प्र-हृष्टं । म ल$_2$ अ-सृष्टिं । ५. फ-वा वारयन्त्यपि । च रा प्र ब म ल$_1$ ल$_2$ अ-संधारयन्त्यपि । ६. फ-समैश्च । ७. च-क्रियातामेष । आ-क्रियतामेव । ८. रा ब-एव ॥ ९. च-आक्षिपति ह्यचलान् । प्र म ल$_1$ ल$_2$ अ रा ब-आक्षिप-न्नचलान् केचित् । १०. रा प्र ब म ल$_1$ ल$_2$ अ-मुहुः । ११. रा ल$_1$-विश्राम्यं ह्यपरे । म-विश्रम्यंत्यपरे । १२. च प्र ब म ल$_2$ अ-श्रांताः । रा ल$_1$-श्रांता । १३. च-निषेविरे ॥ १४. म ल$_2$-आस्फोटन् ववल्गुश्च । आ-०यन्प्रावलगंश्च । च-०यन्प्रवलगुश्च । १५. फ-किलकिलान् । १६. प्र ल$_1$-इति । १७. च-पतत्यन्ये । १८. प्र-पर्वतान् ॥ १९. रा-दिवसे तृतीये चैव । २०. फ च रा प्र ब म ल$_1$ ल$_2$ अ-पंचाशद् । २१. रा प्र ब म ल$_1$ ल$_2$ अ-च । २२. च-वद्धोनि । २३. रा प्र ब-कपिभि ॥ २४. आ-स स्वयं । फ-स्वल्पोयं । रा-स्वस्त्वयं । २५. रा प्र ब म ल$_1$ ल$_2$ अ-मत्वा ।

N] धृति-[1]मन्तः प्र-सुप्तास् ते कृत-[2]कर्माण एव च ॥१०॥ [N
प्र-भातायां [3]निशायां [3]तु रामम् ऊचुर् वनौकसः ।
N] [4]अद्य राम महा-बाहो [5]सेतुर् नि-ष्ठां गमिष्यति ॥११॥ [N
अद्य द्रक्ष्यसि तां लंकां [6]पुरीं रावण-पालिताम् ।
N] एवम् [7]उक्त्वा ततो रामं वानरास् ते महा-बलाः॥१२॥ [N
[8]एकोत्-पातेन ते [9]सर्वे समुत्-[10]पेतुः प्लवं-[11]गमाः ।
N] जगृहुश् [12]चैवं वृक्षांस् ते [13]शिलाः के-चित् प्लवं-[14]गमाः॥१३॥ [N
शैल-[15]शृङ्गाणि चाऽप्य् अन्ये [16]तृणं काष्ठम् अथाऽपरे ।
N] अन्ये च [17]वारयन्ति स्म बहुना किं प्र-योजनम् ॥१४॥ [N
अन्योऽन्यस्य [18]तु तेजांसि वर्द्धयन्तः [19]परस्-परम् ।
N] आकाशं छाद[20]मानास् ते वर्षा-[20]काले [21]घना इव ॥१५॥ [N
नर्द[22]माना महा-[22]नादं प्रावृट्-[23]कालं इवाऽ[24]म्बु-दाः ।

---

१. च–ध्त्रतिमन्तः । २. रा–कृतकर्मण ॥ ३. रा प्र ब ल$_1$ ल$_2$ अ–तु शर्वर्यां । म ल$_1$–तु सर्वर्यां । ४. फ–पश्य । ५. आ फ–सेतुः ॥ ६. रा–पुरिं । ७. आ फ–उक्ता ॥ ८. च–एकात्पातेन । ९. फ–खे । च–रव्धं । प्र रा ब म ल$_1$ ल$_2$ अ–खं । १०. फ म ल$_1$ ल$_2$ अ–०पेतुर् । ११. फ च रा ब–वल्लीमुखा । म ल$_1$ ल$_2$ प्र अ–वलीमुखाः । १२. रा–चै···। १३. च रा प्र ब म ल$_1$ ल$_2$ अ–शैलान् । १४. रा–प्लवंगमा ॥ १५. रा ब–०श्रृंगानि । १६. म ल$_1$–तृणकाष्ठानि चापरे । च प्र–तृणं काष्ठान्यथापरे । रा ब ल$_2$ अ–तृणं काष्ठानि चापरे । १७. प्र–वादयन्ति ॥ १८. फ च रा प्र ब म ल$_1$ ल$_2$ अ–च । १९. फ च रा प्र ब म ल$_1$ ल$_2$ अ–प्लवंगमाः । २०. फ–अभ्रसंङ्काशं छादयन्तो । च रा प्र ब ल$_1$ ल$_2$ अ–शस्त्रसङ्काशं छादयन्तो । म–छायामासु वर्षाकाले ( शस्त्रसंकाशं छादयन्तो )। २१. च प्र ल$_1$–गणा ॥ २२. रा ब म ल$_1$ ल$_2$ अ–नन्दयन्तो महानादान् । प्र–नादमाना महानादान् । च–नर्दमाना महानादान् । २३. आ–प्रावृ······ल । च रा प्र ब म ल$_1$–प्रावृट्काले । २४. च–०म्बुदा ।

N] आकाशे सम्-अदृश्यन्त पत्-वन्त इवाऽचलाः ॥१६॥ [N
पर्वतानां ततो वृष्टिश् छादयन्ती नभस्-तलम् ।
N] सागरोपरि मुक्ता सा शेषं संछाद्य(?द्याऽ)धिष्ठिता ॥१७॥ [N
दश-योजन-मात्रं तु सर्वं बद्धम् अ-शेषतः ।
बद्धो बद्धेति वदतां सिद्धानाम् अम्बरे स्वनः ।
N] वानराणां च हृष्टानां सहसा सं-बभूव ह ॥१८॥ [N
दश-योजन-विस्तारं शत-योजनम् आ-यतम् । [७६पू
१२] नलश् चक्रे महा-सेतुं मध्ये नद-नदी-पतेः ॥१९॥ [६१पू
समुद्र-वरदानाच् च संवि-धानाच् च कर्मणः ।
४०] सेतुः स्व्-अल्पेन कालेन नि-ष्ठां प्राऽऽप्तोऽभवत् तदा ॥२०॥ [N
४१पू] वेला-मूलात् प्र-वृत्तः सन् लंका-मूले प्रति-ष्ठितः ।
४२उ] अशोभत तदा सेतुः सीमन्त इव सागरे ॥ २१॥ [N
नलेन सु-कृतश् चाऽसौ सेतुर् मन्दर-संनिभः ।

---

१. ल१-आकाशं । २. आ-०शेऽस्तमदृश्यन्त । च-समादृश्यन्त । ल१ -शश्वशक्काशं । ३. फ-वृष्टा छादयन्ति । च-वृष्टि छादयन्ती । प्र-वृष्टिः छादयन्ती । ल१-वृष्टिः छादयन्तो । ४. च-सागरा परिमुक्ता । ल२ अ-सागरे परिमुक्ता । ५. रा-सो शङ्कं संशोध्य । ६. फ-तिष्ठतः । आ-धिष्ठिताः ॥ ७. रा ब-०मात्रे । ८. आ-नास्ति । ९. फ-प्रोचैः । १०. रा-स्वगणम् । ब ल२ अ-स्वराणाम् । ११. च-प्रहृष्टानां । १२. फ च रा प्र ब म ल१ ल२ अ-सः ॥ १३. फ रा प्र ब म ल१ ल२ अ-दशयोजनविस्तारमायतं शतयोजनम् । च-दशयोजनविस्तारमायते शतयोजनम् ॥ १४. रा ब प्र-वरदानाश् । १५. फ-विधानाद्विश्वकर्मणः । रा-संविधानाश्च कर्मण । प्र-संविनादाश्च । १६. प्र-स्वेन । १७. प्र-वेलान्मूलात् । १८. फ च रा ब म ल१ ल२ अ-स । १९. आ-श्रीमन्त । २०. फ रा ब ल१ ल२ अ-नास्ति ॥ २१. प्र-विकृतश् । म-च कृतश् । २२. च प्र म-मेरुर् ।

N] मलयात् तु समा-रब्धो लंका-मूले प्रति-ष्ठितः ॥२२॥[1] [N

४२पू] सु-[2]विशालैः कृतः श्री-मान् सम-[3]भूमिः समा-हितः । [N

N] अदृश्यत तदा [4]चित्रैः [4]खातैः पन्था इवाऽ[5]म्बरे ॥२३॥ [४उ

तस्य [6]नाम तदा [6]चक्रुर् वानरास् ते सुवि-स्मिता[7]ः ।

N] नलेनाऽयं कृतो यस्मान्[8] नल-सेतुर्[9] भविष्यति[10] ॥२४॥[11] [N

तं[12] नलेन कृतं सेतुं[12] सागरे सलिला[13]ऽऽशये । [७४पू

N] ददृशुः सर्व-भूतानि वि-स्मयं परमं ययुः ॥२५॥ [N

बद्ध्वा तु[14] तं[14] महा-सेतुं [15]सु-ग्रीवो वाक्यम् अब्रवीत् ।

N] एष सेतुर् म[16]हान् ब[16]द्धः सागरे वरुणाऽऽलये ॥२६॥ [N

कृत-[17]कृत्याः [18]स्मो राजेन्द्र हता लंका न सं-शयः ।[19]

N] रावणश् च हतः शत्रुः साऽ[20]मात्यः स-परिच्छदः ॥२७॥ [N

[21]बद्धं [22]दृष्ट्वा ततः सेतुं[23] रामो दशरथाऽऽत्म-जः ।

---

१. फ रा ब अ ल$_1$ ल$_2$—नास्ति । २. प्र—सुविशालकृतः । आ फ रा-०लः कृत । ३. रा प्र—समभूमि स० । ४. आ—चित्राः स्थानैः । च—तत्र स्वः । रा म—तत्र स्वस्थाः । प्र ब ल$_1$ ल$_2$ अ—तत्र स्वस्थः । ५. प्र—इवाचले । ६. प्र—रामस्तदा । ७. प्र—समाहिताः । ८. फ—कृतस्तस्मात् । ९. प्र—०सेतु । १०. फ—भवत्विति । च रा ब म ल$_2$ अ—भवत्वयम् । ११. अतः परमधिकः पाठः—फ च रा प्र ब म ल$_1$ ल$_2$ अ—सेतुपृष्ठं यतः सर्वं नलेन सुसमं कृतम् । नलसेतुरिति ख्यातस्तस्य कीर्तिर्व्यवर्धत । ल$_1$—नास्ति ॥ १२. च प्र ब अ—नलेन च कृतः सेतुः । रा म ल$_1$ ल$_2$—नलेन च कृतः सेतु । १३. आ—सलिलार्णवे । च रा प्र ब म ल$_{1, 2}$ अ—वरुणालये ॥ १४. फ—तं तु । १५. फ—सुग्रीवं । १६. आ—महाबद्धः । रा—महाबन्धः । ब—महावधः ॥ १७. च—कृतकृत्या । प्र—कृतकृत्यः । १८. प्र—स । १९. ल$_1$—अतः परं 'तं नलेनेति' श्लोकाऽर्धं पुनः पठ्यते पाठक्रमभंगश्चोपलभ्यते । २०. रा—सामात्य सः स० ॥ २१. ल$_2$—बद्धः । २२. च रा प्र ब म ल$_1$ ल$_2$ अ—श्रुत्वा । २३. रा—सेतु ॥

N] अधि-रुह्य हनू-मन्तं पृष्ठं[1] नीलस्य[2] लक्ष्मणः ॥२८॥ [N
अग्र-तः[3] सर्व-सैन्यानां[4] श्री-मान् बल-समन्वितः ।

N] जगाम धन्वी[5] धर्माऽऽत्मा सु-ग्रीवेण[6] समन्व्-इतः[7] [8] ॥२९॥[८४
आ-प्लवन्तः प्लवन्तश् च गर्जन्तश् च प्लवं-गमाः । [७७

N] बद्धे तत्र तदा सेतौ[9] मध्ये नद-नदी-पतेः[10] ॥३०॥ [N
केचिज् जलेन[11] धावन्ति सेतुना[12] केचिद्[13] एवं तु[14] ।
N] केचिद् आकाशम् आ-विश्य सेतुं नैव स्पृशन्ति च॥३१॥
अन्ये[15] मध्येन[16] गच्छन्ति पार्श्वे चाऽन्ये प्लवं-गमाः[17] ।
N] सलिले[18] प्र-पतन्त्य्[19] अन्ये पन्थानं ये[20] न लेभिरे ॥३२॥[८९
४३३] तानि कोटि-सहस्राणि[21] वानराणां महौजसाम्[22] ।
N] बद्ध्वा[23] तत्र महा-सेतुं जग्मुः पारं महोदधेः ॥३३॥ [७९
घोषेण[24] महता[25] घोषं सागरस्य समुत्-थितम् ।
N] भीमम् अन्तर्-दधे[26] भीमा तरन्ती हरि-वाहिनी[27] ॥३४॥ [८७

---

१. आ च प्र रा म $ल_1$ $ल_2$ अ–पृष्टे । ब–पृष्ठो । २. च म $ल_1$–नलिम् । प्र रा ब $ल_2$ अ–नीलं च । ३. प्र–अन्यतः । ४. च रा प्र ब म $ल_1$ $ल_2$ अ–०सैन्यस्य । ५. रा–धन्व । ६. च $ल_2$–सुग्रीवेन । ७. $ल_1$–समंततः । ८. प्र–नास्ति ॥ ९. फ च रा ब म $ल_1$ $ल_2$–महासेतौ । प्र–समासेतौ । १०. अ–०पतौ ॥ ११. फ च रा ब म $ल_1$ $ल_2$ अ–जवेन । प्र–जीवेन । १२. प्र–वानराः । १३. च ब म $ल_1$ $ल_2$ अ–केचिदेव । १४. फ–ते । १५. फ–अथ । रा–अन्येन्ये । १६. आ–अन्येन । रा ब $ल_2$ अ–मध्ये तु । च प्र म $ल_1$–मध्ये च । १७. च रा–च वानराः । प्र ब म $ल_1$ $ल_2$ अ–तु वानराः । १८. ब–सलिलं । १९. च–प्रपंतत्यन्ये । रा प्र म $ल_1$ $ल_2$ अ–च प्रयांत्यन्ये । २०. रा–ते । २१. फ–कोटीस० । २२. आ–महोजसाम् । २३. आ–बद्धा । २४. फ–घोरेण । च–घोषेणं । २५. प्र– च महाघोषं । २६. रा–अन्तर्दधत् । २७. फ $ल_1$–हरिवाहिणी ॥

ततः पारे सम्-उद्रस्य गदा-पाणिर् वि-भीषणः ।
४५] परेषाम् अभि-घाताऽर्थम् अतिष्ठद्[1] हरिभिः सह । [८१
यूथ-पानां[2] सहस्रौघैः[3] प्र-स्थितो लघु-विक्रमः ॥३५॥
४४उ] निष्-पाद्य[4] हरयः सेतुं[5] प्रतीऽताः[6] सस्नुर् अर्णवम् । [N
यथा स्व-स्व-निवासेषु[7] विषयेषु यथा-सुखम् ॥३६॥ [N
N] सा मुहूर्त्तेन[8] सं-तीर्णा[9] वाहिनी नल-सेतुना ।
तीरे विवेश रम्ये च[10] बहु-मूल-[11]फले शुभे[11] ॥३७॥ [८८
१२पू] दश-योजन-विस्तारम्[12] आ-यतं शत-योजनम् ।[13]
N] सेतुं ददृशिरे हृष्टा देवा ऋषि-गणास्[14] तदा ॥३८॥ [७६
तद् अद्भुतं राघव-कर्म-दुष्करं[15]
सम्-ईक्ष्य देवाः सह-सिद्ध-चारणाः[16] ।
नि-शम्य रामं सहसा[17] महर्षिभिस्[18]
N] तम् अभ्य्-अनन्दंश् च वचोभिर् अ-व्ययम्[19] ॥३९॥ [८९

---

१. च रा प्र ब म ल१ ल२ अ—०घातार्थं चतुर्भिः सचिवैः । आ—०घातार्थमतिष्ठद्धरिभिः । २. ल२—यूथपानं । ३. च—सहस्रौघैः । ४. च रा प्र ब ल१ ल२ अ—निष्ठाय । म—निष्ठाय (निष्पाद्य) । ५. रा—सेतु । ६. आ—प्रतीताः शंसुसतुर् । फ—तीर्णास्तेनैवार्णवम् । च—सुग्रीवाः ससुस्तुर् । रा प्र ब म ल१ ल२ अ—सुप्रीताः सस्नुर् । ७. आ म—अथाश्वसुर्हरिश्रेष्ठा । फ—अथाश्वस्तु वस्त्रेषु । अ ब ल१ ल२ प्र रा—०निवासेत्यारभ्य ०विस्तारमित्यन्तः पाठस्त्रुटितः । ८. फ—०त्तेण । च—सुमुहूर्तेन । ९. च—सन्तीर्णो । रा प्र ब—नास्ति ॥ १०. फ च म—तु । ११. आ—०फलेप्सुभिः । च—०फलशये । १२. च—०वितीर्णं । १३. म—०निवास इति पादं आयतं शत० इतिपादं चैकीकृत्याधिकः श्लोकार्धः पठितः । मध्यगतः पाठस्त्रुटित इव प्रतीयते । १४. फ च रा प्र म ल१ ल२—सर्षिगणास् । १५. च—दुस्करं । १६. ल१ ल२—०चारिणाः । १७. १९. च प्र—मुदिताः । रा ब ल१ ल२ अ—मुदितं । १८. अ ब ल१ च प्र रा—सहर्षिभिस् । १९. आ—तमभ्यषिञ्चन्त शुभैर्जलैः पृथक् । फ—तमभ्यषिञ्चन् शुशुभैर्जलैः पृथक् ।

जयस्व[1] शत्रून् नर-देव मेदिनीं
　　स-सागरां[2] पालय[3] शाश्वतीः समाः ।
इत्य्-एव[4] रामं नर-लोक[5]-सत्कृतं
N]　　शुभैर् वचोभिर्[6] वि-बुधाः[6] पुपूजिरे[7] ॥४०॥ [९०

इत्यार्षे[8] रामायणे[9] सुन्दर-कांडे समुद्र-सेतु-बंधनो[10]
नामाऽष्टानवतितमः सर्गः ॥[11] ९८ ॥

---

१. ब–जयस्व शत्रुर् । २. ब–ससागरा । ३. च–पालश । ४. आ फ–इतीव । ५. आ–नरदेबसक्तं । फ–नरलोकसक्तं । ६. फ रा म ल$_1$–वचो विबुधाः । आ–त्रचोभिर्विधाः । ७. फ–सुपूजिरे । रा ब म ल$_1$ ल$_2$ प्र अ–अपूजयन् । ८. फ–आर्षे । ९. अ–नास्ति । १०. फ रा प्र ब–सेतुबन्धो । ल$_2$ अ–समुद्रसेतुबन्धो ॥ ११. वं–इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्त्र्यां संहितायां सुन्दरकाण्डे सेतुवन्धनं नाम पंचनवतितमः सर्गः ॥ सुन्दरकाण्डं समाप्तम् ॥

[वं-N]= [नवनवतितमः सर्गः] =[दा-N]

ततो महाऽऽत्मा कृत-सेतुम् ईश्वरं
प्रतीत-रूपं विजयाऽभि-नन्दिनम्[1] ।
पुनः सम्-उद्रो[2]ऽभि-जगाम राघवं
प्र-भावम् अस्मै[3] वरदोऽभि-वर्धयन्[4] ॥१॥
तम् आ-गतं लक्ष्मण-वानराऽधिपौ
वि-भीषणश्[5] चर्क्ष-पतिश् च जाम्ब-वान्[6] ।[7]
मुदा प्रतीऽता हरयो[8] वरं-प्रदं[9]
प्रणम्य[10] रामाऽभि-मुखाऽव-तस्थिरे ॥२॥
स दिव्य-रूपाऽऽभरणो महा-द्युतिर्[11]
नि-शम्य रामं[12] मुनि-वेष-धारिणम् ।
शिरस्य् उपाऽऽघ्राय जयाय पुत्र-वत्
सम्-ईक्षमाणो[13]ऽनुशशास सागरः[14] ॥३॥

---

१. रा म—०नन्दनम् । म ल$_2$—०नन्दितम् । २. म—समुद्रोभि(पि) ज०। ३. षष्ठ्यर्थे चतुर्थीयमार्षी द्र० । ४. म—न देवाभिवर्द्धयन् । ब—०भिवर्धयत् ॥ ५. प्र—त्रिभीषणो ऋक्ष० । ल$_1$—०षणश्चक्र० । ६. फ रा प्र ब म ल$_1$ ल$_2$ अ—वीर्यवान् । ७. द्विः पठितः पाठः—प्र—तमागतं लक्ष्मणवानराधिपौ विभीषणश्च नृपतिश्च वीर्यवान् । ८. फ—सुखाः । ९. ब—स्वरपदं । १०. च—प्रणमु रामं सगरस्यात्मजम् । रा—प्रणेम्य रामं सगरस्य चात्मजाम् । प्र ब म ल$_1$ ल$_2$ अ—प्रणेमिरे तं सगरस्य चात्मजम् । विसर्गलोपे तत्पूर्वोत्तर-सवर्णसन्धिरार्षः द्र० । अथवा नात्र संधिः । उत्तरादिलोपस्याऽऽर्षस्येदमुदाहरणं स्यात् ॥ ११. च—०द्युति । प्र रा ब ल$_2$—०द्युतिं । १२. आ—राम । १३. आ—समीक्ष्यमाणो० । रा—समीक्ष्यमानोनुसशास । ब ल$_2$—समीक्ष्यमानो० १४. रा—सागर ॥

न वत्स[1] युद्धे मुनि-वेष[2] इष्यते
वि-भज्य[3] कर्माणि चरन्ति पार्थिवाः ।
स राम राजाऽऽभरणैर् अलं-कृतो
जयाय गच्छेति जगाद[4] स-त्वरः ॥४॥
तथेति चोक्त्वा[5] वचनान्[6] महोदधेर्[7]
वि-सृज्य चीराणि जटां[8] नि-यम्य च ।
शुभानि राजाऽऽभरणानि चाऽऽदधे[9]
समुद्र-दायं[10] कवचाऽऽयुधानि[11] च ॥५॥
तथैव तेपे पुनर् अ-व्यतिक्रमं[12]
मनो-वचः-काय[13]-समाधिजं तपः[14] ।
पिता यथैनं[15] नि-युयोज[16] कृच्छ्रे[17]
स चाऽपि रामो ददृशे[18] महीं गतः[19] ॥६॥
स लक्ष्मणस्याऽपि तथा[20] यथाऽऽत्मनः[21]
चकार वर्माऽऽयुध[22]-भूषण-क्रियाम् ।
तयोर् द्युतिः सं-ददृशे[23] नराऽग्र्ययोः[24]

---

१. च–वत्सा । २. प्र ब–०वेश । ३. फ–विसृज्य । ४. आ फ म–चकार । ल₁–जगाम॥ ५. फ–चोक्ते । ६. आ रा म अ–वचनं । ७. म–०दधि । रा अ–०दधे । ८. च–यदा निरस्य । प्र रा ब ल₁ ल₂ अ–जटा विरस्य । म–जयं निशम्य । ९. आ फ च प्र म–चाददे । १०. म–समुद्रदत्तानि । ११. प्र–कवचानि चाददे ॥ १२. आ–अप्यतिक्रमत् । प्र फ–अप्यतिक्रमन् । च रा म ल₁–अव्यतिक्रमन् । ब–ओ व्यतिक्रमन् । ल₂ अ–अव्यातिक्रम । १३. फ–०कामः स० । रा–कायस........धिजं । १४. फ–तप । १५. आ–यदेवं । ब–यथैवं । १६. फ–नियुजोज । ल₂–नियुयोज्य । १७. फ–कृछतः । च रा प्र ब म ल₁ ल₂ अ–कृत्ये । १८. रा–०ददृसे । १९. च ब–महीगतः ॥ २०. च–यथा । २१. आ–यतात्मना । च–तथात्मनः । २२. च–वर्म्मयुधभूषणः क्रियाम् । फ–०भूषणोक्रयाः । २३. रा–स ददृशो । २४. रा ब–नराग्रयोः ।

सम्-एत्य[1] चन्द्रोशनसोर् निशास्व्[2] इव[2] ॥७॥
ततस् तु रामं तपसा प्र[3]-दीपितं
वरैश्[4] च[4] राजाऽऽभरणैर् अलं-कृतम् ।
अनुग्रहायोऽ[5]ति-निनाय सागरः[6]
सुदुष्प्र[7]-वेशं वरुणस्य चाऽऽलयम् ॥८॥
स देव-राजं वरुणं वर-प्रदं
ज्वलन्तम्[8] ऋद्ध्या समुदीर्ण-रूपया[9] ।
प्रतीऽतम्[10] आसीनम् उपेत्य राघवस्
तदा ववंदे शरणं जगाम च[11] ॥९॥
अथाऽभ्य्-उवाचाऽऽशिषम् आयुषि[12] ध्रुवं[12]
नराऽधिपायाऽम्बु-पतिः प्रसन्न-वाक् ।
बले च वीर्ये च वि-वृद्धिम् आ[14]-दधे
त्वरेति चोवाच[15] जयेति चेश्वरः[16] ॥१०॥
ततः सम्-उद्रः प्रविनीत[17]-राघवं
पितेव[18] पुत्रं प्र-शशास[19] बुद्धि-मान् ।
भवाय कृत्वा भगवन्तं[20]-प्रदक्षिणं

---

१. रा–समेतच० । २. आ–निशास्वि वा । फ–निशामिव । रा–निशास्विव ॥ ३. च रा प्र–प्रदीप्तम् । ४. फ–तथैव । ब–वैरश्च । ५. आ–०ग्रहायेति नि० । प्र च रा ब म ल$_2$ अ–०ग्रहायाभिनि० । ६. फ अ च ब ल$_2$ प्र रा म–सागरम् । ७. आ प्र अ–स दुःप्रवेशं । फ–सुदुःप्रवेशं । च–सुदुप्रवेशं । रा–स दुष्प्रवेश । ८. फ–वलस्य बुध्या । ९. रा अ–समुदीणरूपयया । १०. अ–प्रीतम् । ११. फ च प्र–त्रुटितः ॥ १२. आ–आशिवं ध्रुवन् । फ–आयुषे ध्रुवम् । १४. आ फ–आददे । १५. रा ल$_2$–चोत्काथ । प्र ब म ल$_2$ अ–चोत्क्राथ । १६. प्र–चेश्वर ॥ १७. आ–प्रतिनीय रा० । च–प्रतिनीय राघव । रा–प्रतनीय रा० । १८. अ–पितैव । १९. फ–प्रशशंस । २०. च प्र रा ब म–भगवान् प्र० ।

ततोऽत्यं[1]-अयात् सोऽपि यथाऽऽगतोऽभवत्[2] ॥११॥

ततः प्रभुः सुखम्[3] उषितो विभावरीं
पुरोदयं[4] सवितुर् उपेत्य[5] राघवः ।
महा-बलैस्[6] समभि-वृतो[7] बलाऽग्रणीर्[8]
महा-द्रुमं[9] समुप-जगाम पर्वतम् ॥१२॥

इत्यार्षे[10] रामायणे सुन्दर-काण्डे समुद्र-दायं[11] नाम
नवनवतितमः सर्गः ॥ ९९ ॥

---

१. आ च रा प्र ब म $ल_1$ $ल_2$ अ–ततोभ्ययात् । २. आ फ–यथागतं प्रभुः । च रा ब म $ल_1$ $ल_2$ अ–॰गतो भुवम् ॥ ३. च–सुखसुषितो ४. ब-पुरोदयः । ५. आ–सेतुमुपेत्य । म–सवितुरुपेतु । ६. फ-महाबलस् । ७. आ–त्वनिवृतो । च–त्वाभिवृतो । फ–त्वभिनिभृतो । ८. च रा–बलायणी । $ल_2$ अ ब–बलाय । प्र–बलायतैर् । $ल_1$–बलीमुखैर् । ९. फ–स ( म ) हद्भुतं । च रा प्र म $ल_2$ अ–महाद्भुतं । $ल_1$–सहाद्भुतं । ब–महाद्भुत ॥ १०. अ–नास्ति । ११. फ रा ब–समुद्रदायो । च– समुद्रदायवरुणदर्शनं । प्र म $ल_1$ $ल_2$–समुद्रदायो वरुणदर्शनं ॥

# [ शततमः सर्गः ]



ततः शंखं[1]-विमिश्रेण भेरी-शब्दाऽनुनादिना[2] ।
राघवस्या[3]ऽऽगमत् सैन्यं नाना-प्रहरणाऽन्वितम् ॥१॥
सम्-आसीनं ततस् तत्[4] तु राघवस्य[5] महद् बलम्[5] ।
अशोभत तदा[6] पूर्णं[6](?र्णः)सागरस् स्तिमितो[6] यथा ॥२॥
सभा-गतस्[7] ततस् तत्[8] तु दृष्ट्वा राजा दशाऽऽननः ।
मुहूर्त्तं[9] ध्यानम् आ-स्थाय सचिवान्[10] अभ्युद्-ऐक्षत ॥३॥
अथ[11] तान्[11] सचिवांस् तत्र बभाषे रावणस् तदा ।
वाक्यं वाक्य-विदां श्रेष्ठः[12] शृणुध्वं मम राक्षसाः[13] ॥४॥
न[14] चोद्योगे मनो वोऽद्य अयं[14] प्राऽऽप्तश्[15] च[15] राघवः ।
सहितः सर्व-सैन्येन वानराणां स-लक्ष्मणः ।
साम्प्रतं चैव यत् कार्यं तत् कुरुध्वम् अ-कालिकम् ॥५॥

---

१. आ–शंवि० । २. रा–०नुपादिना । प्र०–नुयायिना । ३. आ फ च–रावणस्या० ॥ ४. फ रा प्र ब म ल$_1$ अ–तं । ५. प्र च ब म ल$_1$ल$_2$ अ–राघवस्य महाबलं । आ फ–रावणस्य म० । ६. प्र च रा म ल$_1$ ल$_2$ अ–ततः पूर्णं स्तिमितः सागरो । फ–तदा तूर्णं स्तिमितः सागरो । च ब–ततः पूर्णास्तिमितः सागरो ॥ ७. आ–समागमं । फ प्र ब–समागतं । रा म ल$_1$ ल$_2$ अ–सभागतं । ८. च रा म ल$_1$ ल$_2$ अ–तं । ९. ल$_2$ अ–मुहूर्तं । १०. च–सचिवानः भ्युदैक्षत ॥ ११. फ–आगतान् । १२. प्र म ल$_1$–श्रेष्ठाः । १३. रा प्र–राक्षसा ॥ १४. फ–न चान्यो वानरो चाद्य शौर्यं । रा–न चोद्योगमनोजवोद्यमयं । ब–न चोद्योगम........मयं । प्र–न चेद्योगोऽस्ति भवतामयं । म–न चोद्योगो मनश्चाद्य सोयं । ल$_1$–रचोद्योगमसंभाष्य मयं । 'मनो वोद्य अयं' इति सन्ध्यभाव आर्षः द्र० । १५. च रा प्र ब म ल$_1$ अ–प्राप्तः स ॥

अव-ज्ञा न[1] च[1] कर्त्तव्या[2] वानरेषु रणाऽजिरे ।
यैस् तृणी-कृत्य नः[3] सर्वान् सेतुर् बद्धो महोदधौ[4] ॥६॥

भवन्तश् चैव रागाऽन्धाः सुख-प्राऽऽप्ताः[5] प्र-संगिनः[6] ।
बध्यमानं तदा[7] सेतुं यन् न[8] वे(?त्ति)स्थ[9] निशा-चराः ॥७॥

चारो[10]ऽत्र न प्र-युक्तश्[11] च[11] सर्वैर्[12] मन्त्रि[13]-पदे स्थितैः ।
हितं मन्त्रयते राज्ञस् तेन मन्त्री[14] नि-गद्यते[14] ॥८॥[15]

कार्याऽकार्याणि[16] सततं राजा राज्ये[17] करोति वै ।[18]
तानि सर्वाणि कार्याणि मन्त्रिभिः संततोत्-थितैः[19] ।
अन्विष्याऽन्विष्य[20] चिन्त्यानि[20] तेन राजा[21] सहाय[21]-वान्[22] ॥९॥

मन्त्रिभिः सर्व[23]-कार्याऽर्थाः कार्या नित्यम् अ-संशयम् ।
एवं[24] भवद्भिर्[25] वि-श्रम्भाद् वञ्चितो[25]ऽहं निशा-चराः ।

---

१. रा ब-च न । २. च-०व्य । ३. आ-न । ४. रा प्र ब म ल$_{1}$ ल$_{2}$ अ-महार्णवे ॥ ५. म-सुखासक्ताः । च प्र ल$_{1}$ ल$_{2}$ अ-सुखसुप्ता । ब-सुसंप्राप्ताः । ६. च रा ब म ल$_{1}$-सुसंगिनः । प्र ल$_{2}$ अ-सुगांधिनः । ७. च ब म ल$_{1}$ ल$_{2}$ अ-तथा । ८. ब अ-नः । ९.रा-चेष्टां ॥ १०. फ-दारा अ ? । ११. आ फ-प्रयुक्तो वः । १२. रा ब अ-सर्वं । १३. आ फ-मंत्रपदे । प्र-मंत्रिपदै । १४. रा प्र ब म ल$_{1}$ ल$_{2}$ अ-मंत्रीति कथ्यते । १५. आ-इतोऽध्यर्धः श्लोको नास्ति ॥ १६. च ब म ल$_{1}$ ल$_{2}$ अ-यानि कार्याणि । १७. फ रा- राज्यं । १८. आ प्र-नास्ति । १९. रा ब म ल$_{1}$ ल$_{2}$ अ-सततोद्यतैः । प्र-सततोदितैः । २०. च-अन्विष्य चिन्त्यानि तानि । २१. च प्र रा ब म ल$_{1}$ ल$_{2}$ अ-राज्ञो महोदयः । २२. च-'निगद्यते' इति पूर्वश्लोकपाठस्य पुनरुल्लेखभ्रमेण 'तानि कार्याणि सततं' इति अस्याऽर्द्धस्य मध्य एव द्विर्लिखितः ॥ २३. आ फ-सह का० । २४. च-एकं । अ-लं...... । २५. ल$_{2}$ अ-भवद्भि......वि० । आ-भवद्भिर् विश्रंभा चितोहं । फ-भवद्भिर् विश्रम्भावद्धचित्तो ॥

मामकं यदि वः कार्यं[1] नास्ति कार्यं मतं[2] हृदि ॥१०॥
अहम् एकः करिष्यामि शात्रवाणां[3] प्र-शासनम्[4] ।
चारं[5] वा[6]ऽत्र नि-योक्ष्यामि[7] सान्त्वं[8] भेदम् अथाऽपि वा ॥११॥
रावणेनैवम् उक्तास् ते[9] राक्षसा व्रीडिता भवन्[10] ।
व्रीडितानां ततस् तेषां मेघ-नादोऽभ्य्[11]-अभाषत ॥१२॥
किम्-अर्थं तप्यसे तात राघवाल् लक्ष्मणात्[12] तथा ।
वानरेन्द्रांच्[13] च[13] सु-ग्रीवाद् वानराणां बलाद्[14] अपि[14] ॥१३॥
मानुषो[15] नृपती[16] रामो[17] राज्य-भ्रष्टस् तथैव च ।
कथं बिभेषि[18] तस्मात्[19] त्वं देवान् कृत्वा[20] वशेऽनघ[20] ॥१४॥
इहाऽऽनीतो मया शक्रो नाग-पाशै[21]-(?शैर्) जितो रणे ।
वि-बुधा निर्-जिताः सर्वे स्वर्गं[22] गत्वा त्वया पुरा ॥१५॥
प्रेताऽधि-पो जितः संख्ये वित्तेशोऽत्र[23] परा-जितः ।

---

१. च–कार्ये । २. आ–कार्यं नम । फ–कार्यं तम । च प्र ब म ल$_1$ ल$_2$ अ–कार्यंतमं । रा–कार्यमतं । ३. फ च रा प्र म ल$_1$–शात्रवानां । ब–शत्रुवानां । ४. फ–प्रबाधनं । च प्र रा ब म ल$_1$–प्रसाधनम् । ल$_2$ अ–प्रणाशनम् । ५. प्र–चाराश् । ६. फ रा प्र ब म ल$_1$ ल$_2$ अ–चात्र । ७. फ–नियोक्ष्यामि । च म ल$_2$–नियोयोमि । ८. आ च–शांत्वम् । फ–शान्तं ॥ ९. फ ब–तु । १०. आ–०ताभवं । अडभावो वा सन्धिर्वाऽऽर्षः । ११. च–०दो ह्यभाषत । आ–०दो न्यभाषत ॥ १२. च–लक्ष्मणस् । १३. रा–वानरेंद्रात् । १४. च रा प्र ब म ल$_1$ ल$_2$ अ–तथा बलात् ॥ १५. प्र–मानुष्यो । १६. आ फ ब–नृपते । १७. ब–राम । १८. म ल$_1$–विभेष । १९. प्र–तस्माच्च । रा–कस्मात्त्वं । २०. च म ल$_1$ ल$_2$ अ–स्थाप्य व० । ब–स्थास्य व० । रा–कृत्वास्य व० । प्र–कृत्वाऽप्यव० ॥ २१. फ–०पाशैश्रितो । च–०पाशाऽसितौ । रा ब म ल$_1$ अ–०पाशावृतो । प्र–०पाशाश्रितो । ल$_2$ अ–रागपाशावृतो । २२. च–स्वर्गे । २३. फ रा प्र ब म ल$_1$ ल$_2$ अ–वित्तेशश्च । च–वित्तेन्द्रश्च ।

वरुणः[1] काद्रवेयाश् च कालकेयाश् च दानवाः ॥१६॥
वसवो[2] मरुतश्[2] चैव तथा चन्द्र-दिवाकरौ ।
पृथिव्यां[3] सर्व-राजानो[4] निर्-जितास् ते स्व-तेजसा[5] ॥१७॥
किं करिष्यन्ति ते राजन् वानरा वन-चारिणः ।
तौ वां[6] मानुष[7]-मात्रौ तु[8] भ्रातरौ राम-लक्ष्मणौ ॥१८॥
व्येतु[9]-एतु ते सं-भ्रमो राजन्[10] अहं[10] हन्मि प्लवं-गमान् ।
मम बाण-पथं प्राऽऽप्य न कश्चिद् अपि जीवति ॥१९॥
रामं च[11] लक्ष्मणं चैव हतौ पश्य मया[12] रणे[12] ।
हनु-मन्तं स-सुग्रीवम्[13] अङ्ग-दं[13] गन्ध-मादनम् ।
सु-षेणं[14] जाम्ब-वन्तं च तथाऽन्यान् वन-गोचरान् ॥२०॥
मेघनाद-वचः श्रुत्वा प्र-हस्तो वाक्यम् अब्रवीत् ।
एवम् एतन्[15] न[15] सं-देहो यथा वदसि मान-द ॥२१॥
मुसला[16]ऽऽयोधिने मह्यं[17] कः[17] स्थास्यति[18] रणाऽजिरे ।
वानरेषु न मे चिन्ता चल-चित्तेषु रावण[19] ॥२२॥

---

१. प्र–वरुणाः ॥ २. फ–नक्षत्राणि ग्राहश् । प्र–वसवो मारुतश् । ल२ अ–वसवौ म० । ३. आ च ब रा–प्रथिव्यां । ४. च–च रा० । रा प्र ब म ल१ ल२ अ–ये च राजानो । ५. च–चिर्जिताश्चैव तेजसा । ब रा प्र म ल१ ल२ अ–विजितास्ते तेजसा । ६. फ–त्रुटितः पाठः । ७. ब–मनुष० । ८. प्र ब म ल१ ल२ अ–च । ९. आ–यत्तु । रा अ–वेतु । १०. आ फ च–राजन्नाहं । ११. च–वा । १२. ल२–रणे मया । म–इत्यत आरभ्य सर्गसमाप्तिं यावत् त्रुटितः पाठः । १३. आ–सुग्रीवमङ्गदं । रा ल२–सुग्रीवं सांगदं । १४. फ–सुखेन । १५. आ–एन्न । १६. रा–मुसलायोधिको । ब–मुसुलायोधिनो । प्र–मुसलायुधने । आ फ–०लायोधिनो । म च–मुशला० । ल२–मुसुलायोधिने । १७. फ–मेद्य कः । च–मह्यंकः । रा–मह्य क । १८. च–स्थस्यति । १९. प्र–मानद ॥

मानुषेषु[1] च क्लीबेषु[2] भक्ष्य-भूतेषु[3] नित्य-दा ॥२३॥
अहम् एको वधिष्यामि[4] तव शत्रून् दशाऽऽनन[5] ।
सुखी भव महा-राज[6] यथेष्टं[7] वि-चरस्व[8] च ।
मुसलं[9] भ्राम-यानस्[10] तु रावणं[11] समुद्र-ऐक्षत ॥२४॥
एवम् उक्ते[12] प्र-हस्तेन धूम्राऽक्षो[13] वाक्यम् अब्रवीत् ।
आ-गतौ[14] यदि तौ राजन् मानुषौ राम-लक्ष्मणौ ॥२५॥
बद्ध्वा सेतुं सम्-उद्रे तु वानराश्[15] च तरस्-विनः[16] ।
लंका-मूले स्थितास्[17] तस्मात् सं-नह्यध्वं[18] निशा-चराः[19] ॥२६॥
गच्छामस्[20] त्वरितं तत्र यत्र तद् वानरं बलम् ।
सुख-सुप्तान् हनिष्याम[21] एतद् हि मम रोचते ॥२७॥
महोदरोऽथ[22] निर्-भर्त्स्य[22] धूम्राऽक्षं[23] वाक्यम् अब्रवीत् ।
सु-रक्षितं च रामेण सु-ग्रीवेण च तद्[24] बलम् ॥२८॥
वानरैश्[25] च महा-वीर्यैः समन्तात् परि-वारितम्[26] ।

---

१. ल$_2$ अ—मानुष्येषु । २. रा ब ल$_1$ ल$_2$ अ—दीनेषु । ३. फ—०रूपेषु । ४. फ—मे सदा । रा ल$_2$—नित्यशः । फ—हनिष्यामि । ५. रा—ददानन ॥ ६. फ—महाश्रय । ७. आ— विरमस्व । ८. च रा प्र ब ल$_1$ ल$_2$ अ—यं । ९. आ—मुशलं । च—सुसलं । प्र ब—मुसुलं । १०. च—भ्राममाणस् । रा अ—भ्राममानस् । ब—भ्रममाणस्तु । ल$_2$—भ्रामयाणस्तु । ११. फ—रावणाननमैक्षत ॥ १२. ल$_1$—उक्तो । १३. च—धुम्राक्षो । १४. च—आगंतौ । १५. फ—......... स्ताश्च । १६. च—तपास्विनः । १७. प्र ब—स्थितस् । १८. आ—संनभंध्वं । १९. च—निशाचरः । २०. च रा ब ल$_1$,ल$_2$ अ—त्वरितास् । २१. रा—हन्याम । अ—हनिष्यामि । २२. फ—महोदरोपि निर्भर्त्स्यं । रा—महोदये तु निभत्स्य । च म—महोदरोप्यानिर्भर्त्स्यं । २३. रा—धूम्राक्ष । २४. च—त्रुटित । २५. रा ब ल$_1$ ल$_2$ अ—महावीरैः । २६. च—परिचारित म् ।

न तत्र [1]गमनं युक्तं [2]पुर-गुप्तिर् वि-धीयताम् ॥२९॥
[3]पूर्वम् एतद् अभूत् कृत्यं [4]परे पारे महोदधेः ।
[5]सेतौ [6]वा बध्यमाने [7]तु [8]विघ्नः कार्यो निशा-[9]चराः ॥३०॥
साम्प्रतं त्व् आ-गते [10]सैन्ये [11]पुरस्ताद् [12]बलिनो वयम् ।
शस्त्राणां [13]कवचानां [13]च कृत्वा सम्यग् [14]उपाऽर्जनम् ।
[15]तेषां [15]दास्यामहे युद्धं [16]हनिष्यामश् च तान् मृधे ॥३१॥
एतस्मिन्न् अन्तरे वीरः प्र-गृह्य विपुलं भुजम् ।
अति-कायो [17]महा-वीर्यो रावणं वाक्यम् अब्रवीत् ॥३२॥
रक्षितव्या प्रजा [18]राज्ञा रक्षितव्या द्वि-जातयः ।
[19]दस्यवश् च नि-हन्तव्याः परि-पाल्याश् च साधवः ॥३३॥
अ-न्यायेन न [20]हर्त्तव्यं [21]पर-स्वं [22]राक्षसर्षभ ।
एवं यो [23]वर्तते राजा [24]चिरं पाति [25]वसुं-धराम् ॥३४॥
रामेण [26]विनय-ज्ञेन व्य्-अलीकं [26]किं कृतं हि नः ।
जनस्थान-गता येन तस्य भार्या त्वया [27]हृता ॥३५॥
पति-व्रता महा-[28]भार्गा [29]लंकां किं सा [29]प्र-वेशिता ।

---

१. रा ब ल$_1$–तत्रागमनं । २. आ–परगुप्तिर् । च–पुरं गुप्तिर् । रा प्र ब ल$_1$, ल$_2$ अ–पुरे गुप्तिर् । ३. प्र–एवम् । ४. रा–पारे । ५. च–सेतो । प्र–सेनो । ६. प्र–वार्धव्यमाने । च–वाध्यमाने । ७. रा ब ल$_1$, ल$_2$ अ–च । ८. रा ल$_1$–विघ्न कार्यो । प्र–विघ्नाकार्यो । ९. रा–निशाचरा । ल$_1$–निशाचरः। १०. फ–स्वागतं सैन्यं । ११. प्र–पुलस्त्याद् । १२. ब–वालिनो । १३. च–कवचाणां तु । १४. च–उपार्जितम् । १५. प्र–तेषामुपास्महे । १६. आ फ–हरिष्यामश् । १७. प्र ल$_1$, ल$_2$ अ–हवावीरो । १८. फ–राज्ञोथ । च प्र ब ल$_1$, ल$_2$ अ–राजन् । १९. रा–दस्यवश् ॥ २०. रा प्र ल$_1$, ल$_2$ अ–हन्तव्यं । २१. प्र अ–परं स्वं । २२. रा प्र ब ल$_1$, ल$_2$ अ–राक्षसेश्वर । आ–०र्षभा । २३. ब ल$_1$–यत्वन्तरे । २४. च–चिरे । २५. रा–सुमेदनीम् । प्र ब ल$_1$, ल$_2$ अ–स मेदिनीम् ॥ २६. रा ब–विनियज्ञेनं व्यलीकं हि । २७. फ–कृता ॥ २८. आ–०भाग । २९. रा ब प्र ल$_1$ अ–लंकायां किं प्र० । ल$_2$– लंकायां किं स प्रवेषिता ।